हे स्तोतारः सखायः मा अन्यत् किंचिदपि देवतान्तरं शंसत विविधाभिः स्तुतिभिः । मा च रिषण्यत चेतसा मा गच्छतान्यदेवतान्तरम् । किं तर्हि । इन्द्रमेव वृषणं वर्षितारं स्तुत सचा सहभूताः एतस्मिन् सुते सोमे । मुहुर्मुहुश्च हे होतारः उक्थानि च शंसत ।

५ 'क्रीळं वः शर्धो मारुतमनर्वाणं रथेशुभम् । कण्वा अभि प्र गायत' (ऋ० सं० १ । ३७ । १ ) ॥ कण्वस्येयमार्षम् । क्रैळिनस्य हविषो याज्या ( मैत्रा० सं० १ । १० । १ ॥ १ । १० । १६ ॥ ४ । १० । ५ ॥ मान० श्रौ० १ । ७ । ५ । ३१ ) । शत्रूनपि दृष्ट्वा यत्क्रीडनशीलमेव मारुतं शर्धो बलम् अनर्वाणम् अनाश्रितं क्वचिदन्यत्र । स्वप्रभावयुक्तमेवेत्य-

१० भिप्रायः । रथेशुभं रथेस्थितं शोभिष्ठं हे कण्वा मेधाविन ऋत्विज एतत् अभिप्रगायत । एतद्वो ब्रवीमि ।

'उप प्रेत कुशिकाश्चेतयध्वमश्वं राये प्र मुञ्चता सुदासः । राजा वृत्रं जङ्घनत्प्रागपागुदगथा यजाते वर आ पृथिव्याः' ( ऋ० सं० ३ । ५३ । ११ ) ॥ विश्वामित्रस्येयमार्षम् । हे कुशिकाः स्तुतिक्रोष्टार ऋत्विजः

१५ उपप्रागच्छत । चेतयध्वं विजानीध्वमेतद्यथैव राजा वृत्रं शत्रुं जङ्घनत् हतवान् सर्वासु दिक्षु । अथ एवं सर्वहतामित्रो भूत्वा वरे श्रेष्ठे प्रदेशे पृथिव्याः यजते । ते यूयमेतद्विज्ञाय उपप्रगच्छत । उपप्रगम्य चैतमाश्वमेधिकमश्वं मुञ्चत उत्सृजत विधानतः प्रोक्ष्याश्वमेधयागार्थे योऽयमेतस्मिन्सुदासे कल्याणदाने यजमाने वर्तते ।

२० एवमेतेषु युष्मद्गुणप्रयोगेषु संबद्धाः स्तोतारः स्तोतव्यानि यानि देवतान्तराणि तानि परोक्षकृताभिसंबन्धीनीत्येवलक्षणं मन्त्रजातमुपेक्षितव्यम् ।

---

१ क. ख. घ. झ. ट. ठ. ड. ' दवतान्तर ' नास्ति. २ ध. ' मा ' नास्ति. ३ घ. झ. ट. ठ. ड. सुते सुते सोमे. ४ घ. ट' मुहु २ श्च. ५ क. ख. च. ज. घ. क्रीलं; ग. क्रीळं वंः । कण्व'. ६ घ. झ. ट. ठ. शर्धो० प्र गायत. ७ ट.

२५ ठ. ड. कैळिनस्य. ८ ग क्रीडिनशीलनमत'; ब. झ. ठ. क्रीलनशीलमेव, ज. क्रीडिनशलनमेव; च. क्रीडनशीलि [ ल ] नमेव; ट. क्रीळनशीळमेव; ठ. ड. क्रीळनशीलमेव. ९ क. ख घ. झ. ट. ठ. ड 'क्वचित्' नास्ति १० क. ख. घ. झ. ट. ठ. ड. रथेस्थितं°. ११ ग. प्रेत० । विश्वा; घ. झ. ट प्रेत कुशिका० वर आ°. १२ क. ख. घ. झ. ट. ठ. ड उपाग'; च. उपप्राग' प्र. १३ ट. ड. °यागाय । राये धनाय । यो' (अत्र 'राये धनाय' ट. पुस्तके प्रान्ते लिखितम्) १४ क. ख. घ. झ. ट. ठ. ड 'व्यानि तु यानि. १५ क. ख. घ. झ. ट. ठ. ड. ' इति '

३१ नास्ति.

'अथाध्यात्मिक्यः'[1]। उत्तमेन पुरुषेण या ऋचो युक्तास्ता आध्यात्मिक्यः। 'अहमिति चैतेन सर्वनाम्ना' या युक्ताः ताश्चाध्यात्मिक्यः। अत्रापि[2] यत्राहमित्येतत्सर्वनाम श्रूयते तत्राविद्यमानमप्युत्तमपुरुषसंबद्धमाख्यातपदमध्याहर्तव्यम्[3]। यत्र चोत्तमपुरुषसंबद्धमाख्यातपदं श्रूयते[4] तत्राविद्यमानमप्यहमित्येतत्सर्वनामाध्याहर्तव्यं[5] संबन्धिशब्दत्वादनयोः[6]।

आध्यात्मिकीनामृचां लक्षणम्

'यथैतत्' उदाहरणत्रयमाध्यात्मिकम् 'इन्द्रो वैकुण्ठमिति' एवमादि एवमप्यन्येऽप्याध्यात्मिका मन्त्रा उपेक्षितव्याः।

विकुण्ठा नामासुरी बभूव। तस्याः किल तपसः प्रभावेणापत्यत्वमिन्द्र आजगाम। वैकुण्ठो[7] नाम बभूव। तस्याःमस्तुतिर्भियुक्तमेवमादि[8] ब्रह्म प्रादुरभूत्[9]।

वैकुण्ठनाम्न इन्द्रस्य सूक्ते प्रथमा ऋक्

'अहं भुवं[10] वसुनः पूर्व्यस्पतिरहं धनानि सं जयामि शश्वतः। मां हवन्ते पितरं न जन्तवोऽहं दाशुषे वि भजामि भोजनम्' (ऋ० सं० १०।४८।१)॥ अहम् एव अभूवं[11] वसुनो धनस्य पूर्व्यः प्रथमः पतिः। किंच। सांप्रतमप्यहमेव पतिः। अहमेव च[12] शत्रुभ्यः सकाशात्समस्तानि धनानि जयामि शश्वतो नित्यकालमेव। किंच। मामेव हवन्ते आह्वयन्ति पितरं न पितरमिव तासु तास्वार्तिषु जन्तवो मनुष्याः। किंच। अहमेव दाशुषे दत्तवते हवींषि यजमानाय विभजामि यथार्हं भोजनम्। धनमित्यर्थः।

लवसूक्तस्था

'इति वा[13] इति मे मनो गामश्वं सनुयामिति। कुवित्सोमस्यापामिति' (ऋ० सं० १०।११९।१)॥ लवसूक्ते[14] स एव लवो[15] ब्रवीति। एवं चैवं च मे मनो वर्तते। आह। कथमिति। उच्यते। गामश्वम् गा वा[16] अश्वं वा सनुयां संभोजयेयमेनान्[17]

---

१ क. ख. ग. ज. घ. झ. ञ. ट. ड. °त्मिक्य उत्तमपुरुषयोगाः। उत्त°; च. °त्मिक्यः। उत्त° उत्तमपुरुषयोगाः २ क. ख. घ. झ. ट. ठ. ड. °मपि ह्युत्त°. ३ ग. ज. °संबन्ध°; च संबंधमा° बद्ध. ४ ग. ज. चोत्त°; च. चोत्त° चो. ५ क. ख. घ. झ. ट. ठ. ड. ध्याहार्य. ६ क. ख. ग. °नयोः। २। यथै°. ७ क. ख. घ. झ. ट. ठ. ड स वैकु°. ८ क. ख. घ. झ. ट. ठ ड. °स्तुतिसंयुक्त°. ९ घ. झ ट. ठ. ड. °भूदित्यनन्तरं खण्डसमाप्तिः १० ग. भुवं०। अहमेवाभुवं; ज. भुवं यजमानस्य०। अहमेवाभूवं; घ. झ. ट. ठ. भुवं वसुनः० वि भजामि°. ११ ग. अभुवं°; च. अभुवं० भू १२ च. 'च' नास्ति १३ ग. वा०। लव°; घ. झ. ट. वा इति० स्यापामिति. १४ घ. लवसू° १५ ग. घ. झ. लवो. १६ क. ख. घ. झ. ट. ठ. ड. चाश्वं च स°; च. वाश्वं वा° चाश्वं च. १७ क. ख. घ. झ. ट. ठ. ड. °मेतान्°, च. °मेनान्° ता.

यजमानानिति । अथैवमतितरां प्रत्युपकाराभिप्राये सति किमर्थं ब्रूते । कुवित् बहु अहं सोमस्यापामिति ।

'अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः । अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा' (ऋ० मं १० । १२५ । १)॥ वागाम्भृणीये वागेव ब्रवीति । अहम् एव रुद्रैः वसुभिः आदित्यैः विश्वैश्च देवैः सहभूता चरामि[3] । स्तुतिरूपेण अहमेव मित्रावरुणौ उभावपि इन्द्राग्नी अश्विनौ च उभावपि बिभर्मि हविषा । मत्पूर्वकं हविःसंप्रदानं सर्वदेवताभ्य इत्यभिप्रायः[4] ॥ २ ॥

वागाम्भृणीसूक्तस्था वागाम्भृण्या आध्यात्मिकी ऋक्

---

परोक्षकृताः प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठा अल्पश आध्यात्मिका अथापि स्तुतिरेव भवति नाशीर्वाद इन्द्रस्य नु वीर्याणि प्र वोचमिति यथैतस्मिन्त्सूक्तेऽथाप्याशीरेव न स्तुतिः 'सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासमिति' (मान० गृ० १।९। २५।) तदेतद्बहुलमाध्वर्यवे याज्ञेषु च मन्त्रेष्वथापि शपथाभिशापौ । अद्या मुरीय यदि यातुधानो अस्मि । अधा स वीरैर्दशभिर्वियूया इत्यथापि कस्यचिद्भावस्याचिख्यासा । न मृत्युरासीदमृतं न तर्हि । तम आसीत्तमसा गूळ्हमग्रे । अथापि परिदेवना कस्माच्चिद्भावात् । सुदेवो अद्य प्रपतेदनावृत् । न विजानामि यदि वेदमस्मीत्यथापि निन्दाप्रशंसे । केवलाघो भवति केवलादी । भोजस्येदं पुष्करिणीव वेश्मेत्येवमक्षसूक्ते द्यूतनिन्दा च कृषिप्रशंसा चैवमुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति ॥ ३ ॥

---

१ ग रुद्रेभिः । वागा°; घ. झ. ट. ठ. रुद्रेभिः ० माश्विनोभा. २ च. °म्भृणीये. ३ क. ख. घ झ. ट. ठ ड. चरामि स्तुतिरूपेण । अग्ने° ४ ठ ड. °प्रायः । इति निरुक्तवृत्तौ उत्तरषट्के ( ड. निरुक्तोत्तरषट्के ) प्रथमाध्याये आदितः सप्तमे ( ड. 'आदितः सप्तमे' नास्ति ) द्वितीयः खण्डः । २ । ( ड. '२' नास्ति ). ५ छ. त. थ. द. °स्मि सू°. ६ क. ख. छ. त. द. गूल्हम°.

'परोक्षकृताश्च प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठाः'। शाखान्तरेषु बहवः।

**आध्यात्मिका मन्त्राः**

'अल्पशः' क्वचित् क्वचित् 'आध्यात्मिकाः' लक्ष्यन्ते। आत्मानमेव स्तोतव्यमधिकृत्य येऽभिव्यक्तास्त इह शास्त्रे आध्यात्मिका उच्यन्ते।

'अथापि' क्वचित् 'स्तुतिरेव भवति नाशीर्वादः'। तत्र पुनराशीर्योज्या। किं कारणम्। आशिषो ह्यर्थे स्तुतिः

**स्तुतिपरेषु मन्त्रेष्वाशीर्योज्या**

प्रयुज्यते। आह। किमुदाहरणमिति। उच्यते। 'इन्द्रस्य नु वीर्याणि प्रवोचमिति यथैतस्मिन्सूक्ते' (ऋ० सं० १।३२।१)। अत्र हि स्तुतिरेव श्रूयते नाशीः। सा पुनर्योज्येति प्रतिपादितम्। 'अथापि' क्वचित् 'आशीरेव न स्तुतिः'। तद्यथा। 'सुचक्षा अहमक्षीभ्यां भूयासमिति'।

**आशिष आध्वर्यवे बहुला याज्ञेषु च मन्त्रेषु**

'तदेतत्' एवंलक्षणं मन्त्रजातम् 'आध्वर्यवे' वेदे 'बहुलं' प्रायेण पठ्यते। 'याज्ञेषु च मन्त्रेषु' कर्मकरणेषु। इतरयोरपि वेदयोरिष्टाशीरेव भवति न स्तुतिरेव केवला। यत्राप्याशीरेव केवला तत्रापि तस्यार्थस्य या देवतेष्ट तस्याः स्तुतिर्योज्या। किं कारणम्। न ह्यनभिष्टुता देवताशिषं समर्धयति। 'अथापि शपथाभिशापौ' भवतः। 'अद्या मुरीय' इत्येकमुदाहरणं द्वयोरपि। वसिष्ठः किल राक्षसस्त्वमित्यभियुक्तः।

**शपथाभिशापौ**

सोऽनयर्चा शपथं प्रतिपेदे परं चाभिशशाप।

'अद्या मुरीय यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य। अधा स वीरैर्दशभिर्वि यूया यो मा मोघं यातुधानेत्याह' (ऋ० सं० ७।१०४।१५)॥

**वसिष्ठोऽनृतशंसमभिशपति**

अद्यैवाहं म्रिये यदि यातुधानः स्याम्। यदि वा आयुः ततप तप्तवानहं कस्यचिदपि पुरुषस्य पुरुषस्य। अथ पुनरयातुधानमेव मां सन्तं यो मोघमनृतं यातुधानस्त्वमित्येवमाह स वीरैः पुत्रैः दशभिः वियुयाः। वियुज्यतामित्यभिशापः।

---

१ क. ख. ग. ज. घ. झ. ट. ठ. ड. 'क्वचित्' सकृदेव. २ ग. च. °तस्मिन्सू°, ज. °तस्मिन्सू°. ३ क. ख. घ. झ. ट. ठ. ड. दृश्यते. ४ क. ख. घ. झ. ट. ठ. ड. देवतेष्टा. ५ ग. मुरीयं। अद्या°; घ. झ. ट. ठ. मुरीय यदि यातुधाने°. ६ क. ख. घ. झ. ट. ठ. ड. 'पूरुषस्य' नास्ति, च. पूरुपस्य. ७ क. ख. घ. झ. ट. ठ. ड. °यूयाः वियूयात् वियु°; च. 'यूयाः' वियु° वियूयात्.

'अथापि कस्यचिद्भावस्याचिख्यासा' मन्त्रेषु[1] भवति। अथापि कस्यचिदर्थस्याचिख्यासा मन्त्रेषु भवति। 'न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः। आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास' (ऋ० सं० १०।१२९।३२)॥

केषुचिद्भावकथनम्

प्रजापतेः परमेष्ठिन आर्षम्। तम आसीद्वितीय चै[3] (ऋ० मं० १०। १२९। १)। प्रागुत्पत्तेरस्य जगतो नापि[4] मृत्युरित्ययं व्यपदेश आसीन्मर्त्यस्याभावात्। न अपि अमृतम् इत्ययं व्यपदेश आसीन्मृत्योरभावादेव। इतरेतरापेक्षा हि मृत्युश्चामृत च व्यपदिश्येते। न एव रात्र्याः प्रज्ञानम आसीत् इय रात्रिरिति। नापि अह्नः। एते अपि ह्यहोरात्रे यतो भगवतो विवस्वत उदयास्तमयाभ्यामुपलक्ष्येते तदभावे ह्येते[6] अपि नास्तामित्येतदुपपद्यते। आह। अथ किम सीदिति। उच्यते। अविशिष्टमप्रज्ञातम् एकम् एव सर्वशक्तिमद्ब्रह्मासीत्। तत्कार्यकारणाभावात् अवातम् अनिति। प्राणितीत्यर्थः। सति हि कार्यकारणभावे परमात्मनि या प्राणनशक्तिः सा पञ्चधा भिद्यमाना प्राणापानादिभावमापद्यते। तदभावे न वातोऽस्तीत्यवातमनितीत्युपपद्यते। स्वधया अन्नेन। तस्मिन्नेव परमात्मनि यान्नशक्तिस्तया निमित्तभूतया प्राणितीत्यवशिष्यते तद् ब्रह्म। आह। किमन्यदपि ततः परस्तात्किंचिदासीदिति[7]। नेत्युच्यते। तस्माद्धान्यन्न परः परस्तात्किंचिदप्यासीत्। इदमेव तावदतिक्रान्तसर्वविशेषं ब्रह्म व्यपदेष्टुमशक्यम। अतोऽपि परस्तात्किमन्यद्भविष्यतीत्यभिप्रायः।

द्वितीयमुदाहरणमाचिख्यासायामेव। 'तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम्। तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिनाजायतैकम्' (ऋ० सं० १०।१२९।३)॥

भावाचिख्यासायां द्वितीयमुदाहरणम्

तम आसीत् अन्धेनैव तमसा निगूढम् अविशिष्टम् अप्रज्ञातम् अग्रे। प्राक् सृष्टेरित्यर्थः।

---

१ क. ख घ. झ. ट ठ ड. 'द्भावस्य कस्यचिदर्थस्याचिख्यासा मन्त्रेषु भवति। न मृत्यु°. २ च. मन्त्रेषु भवति. ३ ग. °रासीत्°। प्रजा°; घ. झ. ट. ठ. 'रासीद्० किं चनास. ३ क. ख घ. झ ट. ठ. ड च। त्रिष्टुप्। भाववृत्तम्। तर्हि प्रागु°. ४ क. ख. घ झ. ट ठ. ड. 'नापि' नास्ति. ५ क. ख. घ. झ. ट. ठ. ड. नासीत्. ६ घ. ट. ठ. ह्येते, च. ह्येते° ते. ७ क. ख. घ. झ. ट. ठ. 'इति' नास्ति. ८ ग. आसीत्°। तमः°; घ. झ. ट. ठ. आसीत्तमसा° महि°. ९ च. गूढम°.

तदा हि न द्रष्टा न दर्शनं नापि दृश्योऽर्थ आसीदित्यभिप्रायः । सांख्यास्तु प्रधानं[1] तमःशब्देनोपादानमुच्यमानमिच्छन्ति । ते हि पारमर्षं[2] सूत्रमधीयते । 'तम एव खल्विदमग्रे[3] आसीत्तस्मिंस्तमसि[4] क्षेत्रज्ञ एव प्रथमोऽध्यवर्तत[5]' इति । सलिलं सद्भावे लीनं सर्वमिदं जगत्सन्मात्रस्यैव भावस्योपरि लीनमासीत् । तुच्छ्येन[6] सूक्ष्मीभूतेन पटमण्डपस्थानीयेन कर्मणा[7] यदपिहितम् इव जगत् आसीत् सर्गकालापेक्षि तदिदमनादि[8]संसारस्य तपसः तस्यैव कर्मणो महिना महिम्ना महाभाग्येन[9] कारणावस्थायाम् एकम् अपि सद् अनेकधा उपस्थिते सर्गकाले प्रतिनियतकर्मोपभोगार्थम् अजायत इति । ५

'अथापि परिदेवना कस्माच्चिद्भावात्' । 'सुदेवो अद्य प्रपतेदनावृत् न विजानामि यदि वेदमस्मीति' एते उदाहरणे । १०

परिदेवना

'सुदेवो[10] अद्य प्रपतेदनावृत्परावतं परमां गन्तवा उ । अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः' (ऋ० सं० १० । ९५ । १४) ॥ पुरूरवस आर्षम्[12] । स शोभनो देवः स्यात् योऽद्य[13] तया प्रियया वियुक्त[14] उर्वश्या भृगुप्रपातम् अनावर्तमानः[15] प्रपतेत् । पतितश्च दूराद्दूरतरं गच्छेत् । अथ गत्वा शयीत मृतः सन् निर्ऋतेः भूमेः उपस्थे उपरि । अथैनं तामवस्थामापन्नं वृकाः विकर्तितारश्च[16] सृगालादयः रभसाः रभस्वन्तो वेगवन्तः अद्युः भक्षयेयुः । नाहं १५ २०

पुरूरवसः प्रियावियुक्तस्य परिदेवना

१ घ. झ. ट. ठ. ड तम.शब्देन प्रधानमुग्रा . २ ग. ज. पारमार्थ; घ. झ. ठ. परमार्थसूत्र; ट. परमार्थ पारम(र्ष). ३ क. ख. घ. झ. ट. ठ. °मग्रे; च. मग्रे' ग्रे. ४ ग. तस्मिंन्तमसि, च. ज. तस्मिन्तमासि. ५ ग. ज. °मो वावर्त इति. ६ घ. ट. तुच्छयोन; झ. (तु)च्छेन. ७ ठ. ड. कर्मणा 'आममन्नाद्भवतीत्याभुः अज्ञानं' । यद्° (' ' चिह्नस्थाः शब्दाः सायणभाष्याद्गृहीताः ट. पुस्तकप्रान्तभागे लिख्यन्ते). ८ क. ख ठ तमनादि°; च. 'नादि(स्)त्वा', म ड. 'तद्मनादि°. ९ ख. ज. महाभा°. १० ग. सुदवो० । पुरू°; च. सुदेवः । पुरू°. ११ घ. ट. °पतेत्० रभ(स)ा°. १२ क. ख. घ. ट. ठ. ड. आर्षम् । त्रिष्टुप् । परिदेवना । सुदेवः स°; च. आर्षम् । (स)स° सुदेवः. १३ क. ख. घ झ. ट. ठ. ड यो ह्यनया प्रि°; च. योद्य तया° ह्यन. १४ क. ख. घ. झ. ट ठ. ड उर्वश्या वियुक्तः. १५ क. ख. घ. झ. ट. °मानोऽद्य प्रप°; च. मानः(स) प्र° अद्य, ज ड. °मानोऽथप्रप°. १६ क. ख. घ. झ. ट. ठ. ड. °तारः श्वसृगा°. २५

मुदेवः किंतु न मुदेवः स्याद्यः प्रियाविमुक्त एतामवस्थामाप्नुयादित्येवमेषा परिदेवना।

' न वि जानामि यदिवेदमस्मि निण्यः संनद्धो मनसा चरामि । यदा मागन्प्रथमजा ऋतस्यादिद्वाचो अश्नुवे भागमस्याः ' ( ऋ० सं० १ । १६४ । ३७ ) ॥ दीर्घतमस ईर्षमार्षम् ।

5 जीवात्मनो द्वैताद्वैतविषये संशयः

अस्यवामीये । न एतदहं विस्पष्टं जानामि यदि वेदमस्मि कारणं परं ब्रह्माख्यम् अथवा इदं तत्कार्यं द्वैतमस्मीति । अनयोः कार्यकारणयोर्द्वैताद्वैतयोरन्तरा वर्तमानो निण्यः अन्तर्हितोऽविद्यया संनद्धश्चानेकैः संदेहग्रन्थिभिः मनसा उभे अपि द्वैताद्वैते चरामि । गच्छामीत्यर्थः । एवं सति यदा मा आगन् मामागच्छेत् प्रथमजा बुद्धिः । सा हि सर्वेन्द्रियेभ्यः प्रथमं जायते । ऋतस्य भगवत आदित्यस्य स्वभूता । तस्य हि प्रकृष्टा बुद्धिः प्रहीणसर्वसंशया । तया सर्वमिदमसंशयं परिज्ञाय किमहं कारणसतत्त्व उत वा द्वैतसतत्त्व इति । ततः अस्याः कृत्स्नप्रज्ञाताया वाचो भागम् अहम् अश्नुयाम् । यदियं कृत्स्ना वागभिवदति तत्सर्वमहमाप्नुयामित्यर्थः । एवमयमात्मनिन्दापूर्वको विलापः परिदेवनेत्युच्यते । यदि नामैव स्यात्साधु स्यादिति ।

' अथापि ' मन्त्रेषु ' निन्दाप्रशंसे ' भवतः । तद्यथा ' केवलाघो भवति केवलादी भोजस्येदं पुष्करिणीव वेश्मेति ' एते उदाहरणे ।

20 निन्दाप्रशंसे

' मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य । नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ' ( ऋ० सं० १० । ११७ । ६ ) ॥ भिक्षोराङ्गिरसस्येयमार्षम् । मोघं वितथम् अन्नं विन्दते प्राप्नोति । आह । क

अन्नमददतो निन्दा

25 १ क. ख. घ झ ट. ठ. ड. दुर्गो यस्तथा ( ठ. ड. यस्तथा ) वि°. २ क. ख. °देवना । संशयोत्थापरम् । न°. ३ ग. जानामि । दीर्घ°; घ. झ. ट. ठ. जानामि यदि ० अश्नु°, च. जानानि ! दीर्घ°. ४ क. ख. °तमस आर्षम् । अस्य°; घ. झ. ट. ठ. ड. °तमस आर्षम् । सशयोत्थापनम् । त्रिष्टुप् । अस्य°. ५ क. ख. घ. झ. ट. ठ. ड. ' वा ' नास्ति. ६ घ. झ. ठ. ड. ' अहं ' नास्ति, ट. भाग ० अश्नु° अहं. ७ म. °रणे । मोघ°. ८ ग. ज. °मन्नं । भिक्षो°; घ झ. ट. °मन्नं० केवलादी. ९ क. ख. घ. झ. ट. ठ. ड. भिक्षुर्नामाङ्गिरसस्तस्येदमार्षम् । त्रिष्टुप् । अददतो (ठ. ड. अदातृ) निन्दा । मोघं°.

३२

इति । उच्यते । यः अप्रचेताः अप्रवृद्धज्ञानः । सत्यम् अहं ब्रवीमि वध इत्स तस्य । वध एव सोऽन्नलाभस्तस्य । वरमलब्धं तेनान्नमित्यभिप्रायः । किं पुनः कारणं मोघमन्नमाबन्नं विन्दते[1] इति । उच्यते । न असौ अर्यमणम् आदित्यं पुष्यति नापि सखायं समानख्यानं मनुष्यम् । न देवान् पुष्णाति न[2] मनुष्यानित्यभिप्रायः । यत एवमतः केवलाघो भवति स केवलादी । आत्मनैव केवलं योऽन्नमत्ति न देवपितृमनुष्येभ्यो ददाति स कवलमघमेव प्राप्नोति । तदुक्तमन्यत्रापि ' भुञ्जते ते त्वघं[3] पापा ये पचन्त्यात्मकारणात् ' ( भग० ३ । १३ ) इति । तस्माद्वध एव स तस्यान्नलाभ इत्युपपद्यते । न ह्यसत्यन्ने प्रत्यवेयाददददन्नमित्यभिप्रायः । अन्नसंयोग एव ह्यत्र वधोऽभिप्रेतः । १०

केचित्त्वेनमनध्यात्मविदमप्रचेतसं मन्यन्ते । स ह्यस्मिञ्छरीरे[4] विवक्षितः ।

केषांचिन्मते आध्यात्मिकीयमृक्

नार्यमणम् आदित्यान्तरपुरुषं[5] भोक्तारं पश्यति नापि सखायं प्राणं वायुम्[6] । स हि भुज्यमानेऽन्ने करणभावं पुष्णातीति सखा । केवलं त्वसावविद्वानात्मानमेव भोक्तारमत्र पश्यति । अतः स केवलाघो भवति । यदि हि स देवताः पश्येद्देवता अन्नभोक्त्रीः[7] स हि तत्र भुक्तेन न केवलाघः स्यादिति । १५

भोजेन दत्ताया दक्षिणायाः प्रशंसा

' भोजायाश्वं[8] सं मृजन्त्याशुं भोजायास्ते कन्या३ शुम्भमाना । भोजस्येदं पुष्करिणीव वेश्म परिष्कृतं देवमानेव चित्रम् ' ( ऋ० सं० १० । १०७ । १० ) ॥

दक्षिणा नाम प्रजापतेर्दुहिता । तया सूक्तमात्मनः स्तुतिसंबद्धं दृष्टम् । तत्रैषा जगती[9] । भोजाय राज्ञे अश्वम् आशुं शीघ्रं संमृजन्ति संमार्जयन्ति स्नापयन्ति[10] भृत्याः । किंच । २०

---

१ च. विन्दति° ते. २ क. ख. व झ ट. ठ. ड. नापि. ३ ट त्विं° ह्य. ४ क. ख. घ. झ. ट. °स्मिन् शरी°; ग. च. ज. °स्मिंछरी°; ठ. ड. °स्मिञ्छरी°. ५ क. ख. घ. झ. ट. ठ. ड. °न्तरपुरुषं. ६ क. ख. घ. झ. ट. ठ. ड. प्राणवायुं; च. प्राण वायुं° ण. ७ ग. ज. देवता अन्नभोक्त्रीः स हि' नास्ति. ८ ग. °याश्व० द°; घ. झ ट. ठ. याश्वं सूसंजन्त्याशु० देव°. ९ क ख घ. झ. ट. ठ ड जगती (क. ख. त्रिष्टुप्) । दातृप्रशंसा । भो°; च. जगती ॰ भो° दातृप्रशंसा. १० च. °र्जयन्ति॰भृत्याः °स्नापयन्ति. २१

भोजाय उद्वहनार्थमन्यान्वरानपास्य स्वलंकृता शोभमाना कन्या आस्ते । स हि तामर्हतीत्यभिप्रायः । किंच । भोजस्य इदं वेश्म गृहं परिष्कृतं संस्कृतं पुष्करिणीव पुष्करैर्देववतं विमानमिव चित्रम् । चायनीयमित्यर्थः । तदेतत्सर्वमप्यस्य जन्मान्तरप्रतिविशिष्टदक्षिणासहितात्कर्मणोऽन्येभ्यः कर्मभ्यः ५ सकाशात्फलातिरेक्यमित्येवमेषा दक्षिणाप्रशंसा ।

यथैवमिह मन्त्रद्वये निन्दा च[1] प्रशंसा च ' एवमक्षसूक्ते द्यूतनिन्दा च कृषिप्रशंसा च ' भवतीति विषयोपप्रदर्शनार्थमाह ।

' अक्षैर्मा दीव्यः[3] कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः । तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः ' ( ऋ० सं० १० । ३४ । १३ ) ॥

१० द्यूतनिन्दा कृषिप्रशंसा च

मूजवान्नामाक्षपुत्रस्तस्यैतदार्षम्[4] । अक्षैर्मा दीव्यः इत्यक्षदेवनप्रतिषेधः । तत्र हि बहवोऽनर्थाः सन्ति । कृषिमित्कृषस्वेति कृषिविधानम् । तस्या[5] बहवो गुणाः सन्ति । वित्ते रमस्व । स्वत एवोपार्जिते बहु एतदेवेति मन्यमानो मा १५ वित्तलोभेन दीव्यः । निजमपि वित्तं हारयिष्यसि । कृषिं पुनरेतस्मात्कारणात्कृषस्व । हे कितव तत्र तस्यां कृषौ गावः सन्ति । तस्यां च जाया । तत्पुनर्ममैतत्सविता[6] देवः अर्यः ईश्वरः श्रुतिस्मृत्यनुशासनद्वारेण विविधमनेकप्रकारम् आचष्ट । उभे अपि हीमे श्रुतिस्मृती मन्त्रादिद्वारेणादित्यान्तरपुरुषप्रभवे एव । अत इदमुक्तं सवितैव ममेदं[7] विचष्ट इति ।

२० ' एवम् ' अनेन प्रकारेण ' उच्चावचैरभिप्रायैः ' बहुभिः अथवा प्रकृष्टाप्रकृष्टमध्यमैः मन्त्राभिव्यक्तिनिदानभूतैः ' ऋषीणां मन्त्रदृष्टयो ' मन्त्रदर्शनानि ' भवन्ति ' । विद्यमानानामेव[8] मन्त्राणामृषयो येन केनचि-

---

१ क. ख. घ. झ. ट. ठ. ड. °निरुक्त°. २ क. ख. घ. झ. ट. ठ. ड. ' च ' नास्ति. ३ ग. दीव्य । मू°, घ. झ. ट. दीव्यः ० सविता°. ४ क. ख. घ. झ. ट. ठ. ड. °मार्षम् । त्रिष्टुप् । अक्षै°. ५ क. ख. घ. झ. ट. ठ. ड. तस्यां हि ब°. ६ क. ख. घ. झ. ट. ठ. ड. तत्पुनरेतन्मम मवि° ( ठ. ड. ' तत् ' नास्ति ). ७ क. ख. घ. झ. ट. °तदेतन्मम वि°, च. °तदेव मे' वेतन्म. ८ क. ख. घ. झ. ट. ठ. ड. °मेव हि म°, च. °मेव म° हि.

न्निमित्तेन निदानभूतेन हर्षशोकनिन्दाप्रशंसादिना[1] मन्त्राणां द्रष्टारो भवन्ति न तु कर्तार इत्यभिप्रायः । तदध्यायार्षानुक्रमण्यां

अनादिमन्त्राणामृषयो द्रष्टारो न तु कर्तारः

निदानमार्षं चोभयमुपेक्षितव्यम् । परिज्ञातार्षनिदानो हि सुखेमनेकविषयं[2] मन्त्रार्थमवबोद्धुं शक्नोति[3] । तदेतदिह लक्षणोद्देशतो भाष्यकारेण प्रदर्शितम् ॥ ३[4] ॥ ५

---

तद्येऽनादिष्टदेवता मन्त्रास्तेषु देवतोपपरीक्षा यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्त्यथान्यत्र यज्ञात्प्राजापत्या इति याज्ञिका नाराशंसा इति नैरुक्ता अपि वा सा कामदेवता स्यात्प्रायोदेवता वास्ति ह्याचारो बहुलं लोके देवदेवत्यमतिथिदेवत्यं पितृदेवत्यं याज्ञदैवतो मन्त्र इत्यपि ह्यदेवता देवतावत्स्तूयन्ते यथाश्वप्रभृतीन्योषधिपर्यन्तान्[5]यथाप्यष्टौ द्वन्द्वानि ( निघ० ५ । ३ । २९—३६ ) । स न मन्येतागन्तूनिवार्थान्[6]देवतानां प्रत्यक्षदृश्यमेतद्भवति[7] माहाभाग्याद्देवताया एक आत्मा बहुधा स्तूयत एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्त्यपि च सत्त्वानां प्रकृतिभूर्मभिर्[8]ऋषयः स्तुवन्तीत्याहुः प्रकृतिसार्वनाम्न्याच्चे[9]तरेतरजन्मानो भवन्तीतरेतरप्रकृतयः कर्मजन्मान आत्मजन्मान आत्मैवैषां रथो भवत्यात्माश्वा[10] आत्मायुधमात्मेषव आत्मा सर्वं देवस्य देवस्य[11] ॥ ४ ॥ १० १५ २०

---

[1] क. ख. घ. झ. ट. ठ. ड. निन्दाहर्षशोकप्रशं°. [2] च. सुखेन° ख. [3] क. ख. घ. झ. ट. ठ. ड. शक्नोतीति. [4] ठ. ड. ३ ( ठ. '३' नास्ति ) निरुक्तवृत्तौ उत्तरषट्के ( ड. निरुक्तोत्तरषट्कभाष्ये ) प्रथमाध्याये तृतीयः खण्डः. [5] क. ख. छ. त. द. °न्तानि । ४ । अथा°. [6] छ. थ. ध. ड. °वार्थां देव°; ठ. °वार्थाद्देव°; त. द. °वार्थानां देव°. [7] ठ. ड. °वन्ति । अपि°. [8] त. °तिर्भूम°. [9] क. ख. ड. थ. ध. ड. °नाम्न्याच्चे°; त. °नाम्न्यॊच्चे° म्न्या. [10] क. ख. छ. त. द. °त्माश्व आ°. [11] क. ख. देवस्य । ५ । इति सप्तमाध्यायस्य प्रथमः पादः; छ. त. द. ५.

' तद्येऽनादिष्टदेवता मन्त्राः ' । इहैतदुक्तम् । ' यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति ' इति । तदेतत्प्रकटदेवतालक्षणेषु मन्त्रेषु मन्त्रदेवतालक्षणमुपपद्यते । ये त्वनादिष्टदेवतालिङ्गा मन्त्रास्तेषु देवता कथमन्वेष्येति तदेतद्विचार्यत इत्युपयुक्तस्तच्छब्दः । येऽनादिष्टदेवतालिङ्गा मन्त्राः ' तेषु ' देवताया अतः परं परीक्षा उपपत्तितो भविष्यतीति वाक्यशेषः ।

**अनादिष्टदेवतेषु मन्त्रेषु देवतोपपरीक्षा**

' यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्ति' । यद्देवतः स यज्ञो यस्मिन्यज्ञे तेऽनाविष्कृतदेवतालिङ्गा मन्त्रा विनियुज्यन्ते तद्देवता एव हि ते भवन्ति । तद्यथा । ' आग्नेयोऽग्निष्टोमः ' इति श्रूयते । तत्र योऽनाविष्कृतदेवतालिङ्गो मन्त्रः स्यात्स आग्नेय एव स्यात् । प्रकरणाद्धि संदिग्धदेवतेषु देवतानियम इति न्यायः । ' यज्ञाङ्गं वा ' । प्रातःसवने यो विनियुज्यते स आग्नेयो यो माध्यन्दिने स ऐन्द्रस्तृतीयसवने यः स आदित्यः । आह । अथान्यत्र यज्ञात् कथं मन्त्रेषु देवतापरिज्ञानमिति । अथ पुनरन्यत्र यज्ञाद्ये वर्तन्ते येषामुत्सन्नः प्रयोगः । ' उत्सन्नयज्ञो वा एषः ' ( मैत्रा० सं० १ । ११ । ६ ॥ ४ । ३ । ३ ॥ तै० स० ४ । ३ । ४ ) इत्युत्सन्नतामपि दर्शयत्येव ब्राह्मणम् । तेषूत्सन्नप्रकरणप्रयोगेषु वाचस्तोमप्रयोगविनियोगकल्पेषु ' किं ब्राह्मणस्य पितरं पृच्छसि किं नु मातरम् । श्रुतविदस्मिन् वेद्यं स पितामहः ' इत्यादिषु कथमन्वेष्या देवतेति । शृणु ' प्राजापत्याः ' ते मन्त्रा. ' इति

**यज्ञप्रकरणाद्यज्ञाङ्गप्रकरणाद्वा देवतानिर्णयः**

**यज्ञादन्यत्र प्राजापत्या इति याज्ञिकमतम्**

---

१ ग. च. ज. घ. झ. ट. ठ. ड. °च्छंस्तु°. २ क. ख. घ. झ. ट. ठ. ड. वार्निष्यत इति°. ३ क. ख. व. झ. ट. ठ. ड. ऐन्द्रो यस्तृतीयसवने स°. ५ ग. ज. कल्पेषु कथमन्वेष्या°. ६ च. °किन्तु; ठ. ड. °किं मात°.

याज्ञिकाः' मन्यन्ते । किं कारणम् । 'अनिरुक्तो हि प्रजापतिः' (मैत्रा० सं० ३ । ६ । ५) अनिरुक्तदेवतालिङ्गाश्च मन्त्रा इत्येतस्मात्सामान्यात् । 'नाराशंसाः' ते इति 'नैरुक्ताः' मन्यन्ते । नराशंसोऽग्निर्यज्ञो वा । वक्ष्यति हि 'यज्ञ[2] इति[3] कार्थक्योऽग्निरिति शाकपूणिः' (निरु० ८ । ६) इति । यज्ञशब्देन च विष्णुरुच्यते । 'विष्णुर्वै यज्ञः' (मैत्रा० सं० ४ । ३ । ७ ॥ ऐ० ब्रा० ३ । ४) इति हि विज्ञायते । 'अग्निर्हि भूयिष्ठभाग्देवतानाम्' (मैत्रा० सं० ४ । ७ । ८) इति । अतोऽनाविष्कृतदेवतालिङ्गो मन्त्र आग्नेयः स्यात् । सर्वदेवताश्रयणाच्च 'अग्निर्वै सर्वा देवताः' 'अत्र वै सर्वा वसति देवता' इति[6] विज्ञायते । यस्मिन्नपि पक्षे नराशंसो यज्ञस्तस्मिन्नपि पक्षे यज्ञप्रभवत्वादस्य जगतो यज्ञस्यैव श्रैष्ठ्यम् । 'अपरिग्रहं च श्रेष्ठगामि' इति न्यायः । केचित्तु येन नराः प्रशस्यन्ते स नाराशंसो मन्त्र इति हि[9] पश्यन्तो मनुष्यस्तुतयस्ता इत्येवं मन्यन्ते । तदयुक्तम् । न हि मनुष्याणामनाविष्कृतलिङ्गैर्मन्त्रैः स्तुतिरुपपद्यते दुर्बोध्यत्वात्तेषामल्पबुद्धित्वाच्च मनुष्याणामिति ।

> नाराशंसा इति नैरुक्तमतम्

> नराशंसशब्दस्य व्युत्पत्त्या अनाविष्कृतदेवता मन्त्रा मनुष्यस्तुतिपरा इत्ययुक्तम्

'अपि वा सा कामदेवता स्यात्' । अपि वैवमन्यथा[10] स्यात् । सा ऋक् स मन्त्रो योऽनाविष्कृतलिङ्गः स कामदेवतः स्यात् । कामतो ह्यीच्छातस्तस्मिन्देवता[11] कल्पयितव्येत्यभिप्रायः । किं कारणम् । गुणपदमयो हि सः । न हि तत्र देवतासंविज्ञा[12]नपदमन्यत[13]मदेवताविशेषप्रत्यापकमस्ति यतो विशेषात्कस्यांचिदेकस्यां देवतायामन्याभ्यो व्यावृत्त्यावतिष्ठेत । गुणपदानां च सर्वेषां सर्वदेवताश्रयत्वादैश्वर्ययोगात्सर्वासां देवतानामिति ।

> कामदेवता वा

१ ग. च. ज. नारा°. २ ठ. ड. नराशसो यज्ञ°. ३ ग. ज. इति ह का°; च. इति ह का° हि. ४ क. ख. ठ ड. कात्थक्यो; घ. झ. ट. कत्थक्यो°; ग. कार्थक्यो° थ; ज. कार्थक्यो°; च. कात्थक्यो°. ५ क. ख. घ. झ. ठ. ठ ड. ह. ६ क. ख. घ. झ. ट. ठ. ड. इति ह वि°. ७ क. ख. ग. च. ज. घ. झ. ट. नारा°. ८ घ. झ. ट. ठ. ड. यज्ञश्रैष्ठ्यम्. ९ क. ख. घ. झ. ट. ठ. ड. 'हि' नास्ति. १० ग. ज. चैव°. ११ ठ. ड. हीच्छा अत°. १२ ग. ज. °ज्ञातप°; च. 'ज्ञातप° न. १३ ग. घ. झ. ट. ठ. ड. °तमदेव°.

**प्रायोदेवता वा**

'प्रायोदेवता वा' तस्मिन्मन्त्रे स्यादिति वाक्यशेषः। प्राय इति ह्यधिकार उच्यते। यद्देवताधिकारे ह्यध्ययनपाठानुक्रमे योऽनाविष्कृतदेवतालिङ्गो मन्त्रो भवति स तद्देवत एवेति बोद्धव्यम्[1]। तद्यथा। अग्न्यधिकारे[2] वर्तमाने आग्नेय एव मन्त्रो भवतीन्द्राधिकारे चैन्द्र एवेति। अथवा।

**अधिकारार्थे प्रायःशब्दः**

प्राय इति बाहुल्यमुच्यते। तद्यथा। अनृतप्रायो देवदत्त इत्युक्तेऽनृतबहुल इत्येवं[3]गम्यते। एवमिहापि प्रायोदेवतेत्युक्ते बहुलदेवतेति स्यात्। किं कारणम्। 'अस्ति ह्याचारो बहुलं लोके'। अस्ति हीयं लोके बहुलस्य[4] भूयस्त्वेन प्रसिद्धिः।

**बाहुल्यार्थे वा**

निर्दिष्टेभ्यो द्रव्येभ्यो यदन्यदवशिष्यते तत्साधारणम्[5]। तद्यथा। कश्चिद्गृही निर्दिशतीदं मे 'देव देवत्यं'[6] द्रव्यमिदम्[7] 'अतिथिदेवत्यम्' इदं[8] 'पितृदेवत्यम्' इति। तत्रैवं निर्दिष्टे ततो राशेर्यदन्यदवशिष्यते तद्देवपितृमनुष्याणां साधारणं भवति।

**द्वितीयमर्थं लोकाचारः समर्थयति**

तथा च[9] निर्वपणकर्मणीदं देवानामि[10]ति निरुप्तमभिमृश्येदं नः सहेति शेषमभिमृश्यते[11] साधारणत्वप्रख्यापनार्थम्। एवमिहाप्यादिष्टदेवतालिङ्गान्मन्त्रराशेर्योऽन्योऽनाविष्कृतदेवतालिङ्गो मन्त्रराशिः स्यात्[12]साधारण्याद्बहुदेवतो विश्वे[13]देव एव स्यादिति। आह। कः पुनरस्मि[14]न्विचारे निश्चयः। उच्यते।

**याज्ञदैवतो मन्त्र इति निर्णयः**

'याज्ञदैवतो मन्त्रः' इति[15]। योऽनाविष्कृतदेवतालिङ्गो मन्त्रः स याज्ञो वा स्याद्दैवतो वा। 'विष्णुर्वै यज्ञः' इति हि[16] विज्ञायते। विष्णुश्च[17]

---

१ घ. ट. बोद्धव्य.; ठ. ड. बोद्धव्यः. २ घ. ट. अग्निधिका°; ठ. अग्निराधि°; ड. अग्नेराधि°. ३ घ. झ. ट. ठ. ड. इत्येव ग°. ४ च. बहुलास्य° ल. ५ क. ख. घ. झ. ट. ठ. ड. °रणं भवति। त°. ६ क. ख. घ. झ. ट. ठ. ड. इदं मे अति°. ७ क. ख. घ. झ. ट. ठ. ड. इदं मे पि°. ८ क. ख. घ. झ. ट. ठ. ड. चरुनिर्व°. ९ क. ख. घ. झ. ठ. ड. देवताना°; ट. देवताना° वा. १० क. ख. घ. झ. ट. ठ. ड. °मृशति सर्वसाधा°; च. मृश्यति साधा° शति सर्व. ११ क. ख. घ. झ. ट. ठ. ड. °नादिष्टदे°. १२ क. ख. घ. झ. ट. ठ. ड. स्यात्सर्वसाधारणत्वाद्ब°; च. स्यात्सा° त्सर्वसा. १३ क. ख. घ. झ. ट. ठ. ड. वैश्वदेवः स्या°; च. विश्व° वै. १४ ग. ज. पुनरास्मि°. १५ क. ख. घ. झ. ट. ठ. ड. 'इति' नास्ति. १६ क. ख. घ. झ. ट. ठ. ड. ह. १७ क. ख. घ. झ. ट. ठ. ड. 'च' नास्ति.

पुनरादित्य एव नैरुक्तानां द्युस्थाने समाम्नानात् ( निघ० ५ । ६ ) ।

याश्च आदित्यदेवतः

'यत्तु किंचित्प्रवल्हितमादित्यकर्मैव तत्' ( निरु० ७ । ११ ) इति [1]वक्ष्यति । तस्मादादित्यदेवतः स मन्त्र इति स्यात् ।

अथवा दैवतः स मन्त्रः । देवतास्मिन्देवतेति दैवतः । अविशिष्टं हि 5

दैवत आग्नेयः

देवतात्वमग्नावेव सर्वदेवताभिवादात् । 'अग्निर्वै सर्वा देवताः' ( काठ० सं० १० । १ ) ।

इति हि [2]विज्ञायते । 'अग्निर्वै देवतानां भूयिष्ठभाक्' इति च । 'अपरिग्रहं च प्रधानगामि' इति न्यायः । तस्मादाग्नेयः स मन्त्रः स्यादिति । तद्यदुपोद्घात उक्तं 'नाराशंसा इति नैरुक्ताः[3]' तदेव का[4]र्थक्यशाकपूणिमतेनावधृतं यज्ञोऽग्निर्वेति तौ हि नैरुक्ताविति । 10

'य[5]द्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्ति' इत्येवमादीनामपरो

'यद्देवतः' इत्यादेरपरा व्याख्या

व्याख्यामार्गः । 'यद्देवतः स यज्ञः' । यद्देवतं प्रधानं हविः । तद्यथा । प्रकृतावैन्द्रं सान्नाय्यं माहेन्द्रं वा ( तै० सं० २ । ५ । ३—४ ) । तत्संस्कारपरा इषेत्वादयः ( सर्वासु 15

यजुःसंहितासु ) । तेऽनाविष्कृतदेवतालिङ्गा ऐन्द्रा एव भवन्ति माहेन्द्रा वा । यद्देवते वाधिकारे चोदकेन प्रदिश्यन्ते तद्देवता एव भवन्ति । तद्यथा । 'कुविदङ्ग' ( ऋ० सं० १ । १३१ । २ ) इति प्रा[6]जापत्यग्रहणे विनियोगात्प्रा[7]जापत्य एव भवति ( मैत्रा० सं० १ । ११ । ४ ) । 20
'यज्ञाङ्गं वा' इत्याघाराद्यभिप्रायेण । 'ऋत्भोऽसि शाकरः' ( मैत्रा० सं० १ । १ । १२ ) इत्यनाविष्कृतदेवतालिङ्गः पू[8]र्णस्रुवासादनमन्त्रः स्रौवे विनियोगात् । तस्य च प्राजापत्यत्वात्प्रा[9]जापत्यः ।

---

१ क. ख. घ. झ. ट. ठ. ड. 'इति हि व°. २ क. ख. घ. झ. ट. ठ. ड. ह. ३ क. ख. घ. झ. ट. ठ. ड. नैरुक्ता इति तदे°. ४ ग. ज. कार्थक्य°. ५ ग. ज. यद्दैवतः. ६ ग. ज. प्रजा°; च. प्रजा० पा. ७ ग. ज. प्रजा°. ८ ग. ज. पूर्णः स्रुगासा°; च. पूर्णः स्रुगासा° वा. ९ च. प्रजा० पा.

'अथान्यत्र यज्ञात्' । क्वान्यत्र यज्ञान्मन्त्राणां विनियोगः । उपाकरणब्रह्मयज्ञजपप्रायश्चित्तेषु नैष्ठिकब्रह्मचारिणश्च । 'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणु वर्च्छति गर्तं वा पतति प्र वा मीयते यातयामान्यस्य छन्दांसि भवन्ति ' ( आर्षेयब्राह्मणम् ) इति प्रत्यवायश्रवणात्सर्वत्रान्वेष्या देवतेत्यारभ्यमथान्यत्र यज्ञादिति ।

'अथान्यत्र यज्ञात्' इत्यस्य

'प्राजापत्या इति याज्ञिकाः' । प्रजापतिस्तेषूपाकरणादिकर्मसूपास्य इति याज्ञिका मन्यन्ते स ह्यनिरुक्त इत्यनिरुक्ततासामान्यात् । 'नाराशंसा इति नैरुक्ताः' । सौर्या वा आग्नेया वेति । 'अपि वा सा कामदेवता स्यात्' । अनाविष्कृतदेवतालिङ्गे मन्त्रे या विचार्यते देवता कस्मिन् देवता स्यादिति सा कामतः कल्प्या । इच्छात इत्यर्थः । गुणपदमयत्वात्तस्य । न मन्त्रवाक्यसामर्थ्याद्देवता नियम्यते तत्र । किं तर्हि । प्रयोक्तुरिच्छासामर्थ्यात् । अथवा । प्रयोक्ता यत्कामस्तं मन्त्रं प्रयुङ्क्ते तस्य कामस्य या देवताधिपतिस्तामेव तस्मिन्नभिसंदधीत । 'प्रायोदेवता वा' इति समानमेव पूर्वेण ।

'प्राजापत्या इति याज्ञिकाः'
'नाराशंसा इति नैरुक्ताः'
'अपि वा कामदेवता'

'अपि ह्यदेवता देवतावत्स्तूयन्ते' । 'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते' इति मन्त्रदेवतालक्षणमुक्तम् । तदुपपद्यते देवतानामार्थपत्यसंबन्धात् । अनाविष्कृतदेवतेष्वपि संविज्ञातपदाभावात्कल्प्यते देवता कामस्याधिपतिरपि । यत्र तु स्फुटमदेवता देवतावत्स्तूयन्ते ननु तत्रैतल्लक्षणं व्याहन्यते । तद्यथा । 'अश्वप्रभृतीन्योषधिपर्यन्तानि' ( निघ० ५ । ३ ) । एतस्मिन्वर्गे कानिचित्सत्त्वानि कानिचिद् द्रव्याणि । अश्वादीनि सत्त्वान्यक्षादीनि द्रव्याणि । तानि च पुनरासन्नमर्थं चेतयन्ते नातीतं नानागतमिति । आत्मनेऽपि च हिताहितं न प्रतिपद्यन्ते । तानि कथमभिष्टुतानि स्तोतुरभिमतस्यार्थस्य

अदेवता देवतावत्स्तूयन्ते

१ क ख. ध. झ. ट. ठ. ड. यज्ञात्कर्मणो मन्त्रा°. २ च. यजति याज°. ३ ग. च. ज. वा पतति. ४ ग. ज. गर्तं वा पद्यति; च. गर्तं वा पतति. ५ ठ. ड. 'वा' नास्ति. ६ ग. च. ज. 'तामेव' नास्ति. ७ ग. च ज. थ. झ. ट. ठ. ड. °मिच्छस्तु°. ८ ग. °न्तानि । एत°. ९ च. °पद्यंति० ते.

पतित्वं करिष्यन्ति । न हि तानि स्तुतिनिन्दे विशेषतो विदुः । अपि चाश्वादिषु चित्तिरपि[1] काचिदस्ति । न त्वक्षादिष्वसावस्ति[2] । तस्माच्छिष्यो[3] मेधावी 'न मन्येत' न जानीयात्सम्यगविरुद्धमेतल्लक्ष्येण लक्षणमुच्यत इति । अपि च सुतरां न मन्येत 'आगन्तूनिवार्थान्[4]देवतानां' मन्यमानः । लोके तावदेते मनुष्याणामनित्यानामश्वादयोऽर्था आगन्तवोऽपायिनश्चानित्याः । तद्यदि देवतानामप्येवमेव ततस्तासां तेषां चानित्यत्वात्स्तुतिरनर्थिका । अपि च । 'प्रत्यक्षदृश्यमेतद्भवति' । प्रत्यक्षत एवैतद्दृश्यते । यथोपकरणमश्वादय उपकर्तव्या मनुष्याः । देवतानामपि चेन्द्राग्निसूर्यप्रभृतीनामुपकरणं हरिरोहिद्धरित्प्रभृतयोऽश्वाः । तस्मादुभयेषामुपकरणोपकर्तव्यतासामान्यान्मनुष्याश्ववदनित्यत्वमिति युक्तम् । यस्य शिष्यो न मन्यते नैतत्सम्यगभिधीयत इति तस्मात्प्रतिसमाधातव्यमेतदित्युपोद्घात्योत्तरमुच्यते । 'माहाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते' यस्मात्तस्मात्सर्वमेतत्सम्यगिति । भज्यत इति भागः । सेव्यत इत्यर्थः । तच्च[5] पुनरैश्वर्यं महत् । 'अणिमा महिमा लघिमा प्राप्तिः प्राकाम्यमेव च[6] । ईशित्वं च[7] वशित्वं च यत्र कामावसायिता' इत्येवमनेन महतैश्वर्येण[8] भज्यते महदेतदैश्वर्यं भजत इति वा महाभागा देवता । तद्भावो माहाभाग्यम् । तस्मान्माहाभाग्याद्धेतोरेकोऽपि सन्देवतात्मा बहुधा स्तूयते प्रकृतिभेदेनाप्रकृतिभेदेन[9] वा वर्धमानः । निगमोऽपि हि भवत्यैश्वर्यप्रख्यापको 'रूपंरूपं मघवा बोभवीति' ( ऋ० सं० ३ । ५३ । ८ ) यथा[10] । यथा च लक्ष्यं तथा लक्षणं प्रवर्तितुमर्हति दृष्टानुविधानाच्छन्दसः । छन्दसि हि[11] लक्ष्ये

(मार्जिने:) आगन्तव एतेऽर्था अश्वादयः । तस्मात्स्तुतिरयुक्ता — नायुक्ता देवतानां माहाभाग्यात् — देवतानानात्वं निगमेन प्रख्याप्यते

५ १० १५ २०‌ २५

१ च. विति°. २ क. ख. °वस्ति । ४ । अथा°; ग. ज. °वस्तीत्युक्तं तस्मा°. ३ क. ख. घ. झ. ट. ठ. ड. तस्मात्स शिष्यो°. ४ ग. च. ज. ड. °र्थो दे°; ठ. °र्थादेव°. ५ क. ख. घ. झ. ट. 'च' नास्ति. ६ ग. ज. वा; च. वाँ° च. ७ च. 'च' नास्ति. ८ क. ख. घ. झ. ट. ठ. ड. महदैश्व°; च. महतैश्व° दे. ९ क. ख. घ. झ. ट. °देन वा अप°. १० क. ख. घ. झ. ट. ठ. ड. °वीति । यथा यथा°; ग. ज. °वीति यथा । यथा च°; च. °वीति॰ । यथा च° यथा. ११ घ. ट. ठ. ड. 'हि' नास्ति.

नानात्वे देवतासंवादः प्रमाणम् । हविर्वहनादिकर्माणि च

यावदभिधानं देवतानानात्वविधिर्व्यवस्था । संवादसूक्तानि च कयाशुभादीनीन्द्रमरुदादिसंवादव्यपदेशहेतुना गमयन्ति । तदशक्यमपासितुम् । तथा त्रिस्थानानां यान्यसंकरवर्तीनि हविर्वहनरसानुप्रदानरसादानलक्षणान्यग्नीन्द्रसूर्याणां कर्माणि लिङ्गान्यर्थदर्शनहेतूपबृंहितानि त्रित्वं गमयन्ति तदशक्यमपासितुम् ।

नानात्वनिरासादैकात्म्यम्

तथा चैकात्म्यम् ' इन्द्रं मित्रं वरुणमग्निमाहुः ' ( ऋ० सं०१ । १६४ । ४६ ) इत्येवमादयो गमयन्ति निगमाः । तदप्यशक्यमपासितुम् ।

त्रिष्वपि चैतेषु पक्षेष्वैश्वर्यमपरिहीणं देवतायाः । तत्रैवं सत्यैकात्म्यं तावदाश्रित्य प्रतिसमाधानम् । माहाभाग्यादेकस्य देवतात्मनः प्रकृतिभेदेन वाप्रकृतिभेदेन वेति । चेतनाचेतनविकरणधर्मित्वादात्मानं विकुर्वतोऽस्यान्ये देवाः प्रत्यङ्गानि भवन्ति । अग्नीन्द्रसूर्याणा परस्परापेक्षमन्यत्वम् । अनन्यत्वमेकेन देवतात्मना महता सह । यथा घटादीनां मृदा । न ह्यङ्गिनमङ्गानि व्यतिरिच्यन्ते भेदेनाग्रहणात् । न

अङ्गाङ्गित्वं नानात्वस्य हेतुः

एकत्वस्य च

वाङ्गान्यनपेक्ष्य प्रत्यङ्गानि भवन्ति । न ह्यधिष्ठानमनपेक्ष्य प्रत्यधिष्ठानं नाम भवति । तस्मादग्नीन्द्रसूर्या एकस्य देवतात्मनोऽङ्गानि जातवेदोवायुभगप्रभृतीनि शकुन्यश्वप्रभृतयश्च प्रत्यङ्गानि । स एष महानात्माग्नीन्द्रसूर्याद्यङ्गप्रत्यङ्गभावेन व्यूहमनुभवन्नेकोऽपि सन् बहुधा स्तूयते ।

कान्यङ्गानि कानि प्रत्यङ्गानि च

---

१ क. ख. घ. झ. ट. ठ. ड. तदपि चाश°; च. तदप्यश° पि चा. २ क. ख. घ. झ. ट. ठ. ड. °मग्निमित्यादयो°. ३ क. ख. घ. झ. ट. ठ. ड. °धानम् । एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति । माहा°; ग. ज. °धानम् । महा°; च. °धानम् । महा° एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति ।°. ४ क. ख. घ. झ. ट. ठ. ड. °न्यत्वं त्वेके° ५ क. ख. घ. झ. ट. ठ. ड. °ङ्गान्यति°. ६ क. ख. ग. ज. घ. झ. ट. ठ. ड. °न चाङ्गा°; च. न वाङ्गा° न्या.

'अपि चै' एवं कृत्वा 'सत्त्वानाम्' अश्वादीनां 'प्रकृतिभूमभिः ऋषयः स्तुवन्तीत्याहुः' । प्रक्रियन्तेऽस्यां सर्वे विकारा इति प्रकृतिः सत्तालक्षणो महानात्मा हिरण्यगर्भ इति । वक्ष्यति हि । 'स एष महानात्मा सत्तालक्षणस्तत्परं तद्ब्रह्म स भूतात्मा सैषा भूतप्रकृतिः' (निरु० १४।३) इति । तस्या भूमा बहुत्वम् अनेकधा विपरिणामः स्थावरजङ्गमभावेन । प्रकृतेर्भूमानि बहुत्वानि यानि सत्त्वानां तैरनन्यविषयत्वं पश्यन्तः कार्यकारणयोरनन्यत्वात्कारणमहिमभिस्तान्यश्वादीन्यभिष्टुवन्तीत्याहुरात्मविदः । तद्यथा । 'द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षम्' (मैत्रा०सं०२।७।२)इत्येवमादीनि । आत्मैव सर्वं स्थावरजङ्गममित्यत्रेत्याश्वमेधे 'मूलेभ्यः स्वाहा शाखाभ्यः स्वाहा' (मैत्रा० सं० ३।१२।७) इत्येवमादिभिस्तेन तेन वैशेषिकेण स्थावरजङ्गमात्मना प्रकृतेरभिन्नेनावस्थानेनावस्थितो महानेवात्मेज्यते । न ह्यदेवता यागमर्हति । यावच्चान्यदपि किंचिदेवंप्रकारमदेवताभिमतमिज्यते गृह्ये च बलिप्रभृतिकर्मादौ सर्वत्र स एवेत्युपेक्ष्यम् ।

सत्त्वानां स्तवैः प्रकृतिरेव स्तूयते यस्मात्तानि प्रकृतेरभिन्नानि

'प्रकृतिसार्वनाम्याच्च' एतदुपपन्नं नैता अदेवता देवतावत्स्तूयन्ते किंतु महान्देवो विविधरूपः स्तूयत इति । प्रकृतिसार्वनाम्यादिति । नतिमात्रं नाम नमनं संज्ञा । सर्वत्वेन नाम सर्वनाम । प्रकृतेः सर्वनाम प्रकृतिसर्वनाम । तद्भावः प्रकृतिसार्वनाम्यम् । तस्मात्प्रकृतिसार्वनाम्याद्धेतोः । यस्मान्माहाभाग्ययुक्ता देवता प्रकृतिर्यस्माच्च सर्वत्वेन नता तस्माद्धेतोर्नैता अदेवता देवतावत्स्तूयन्ते ।

प्रकृतिसार्वनाम्यादेतदुपपद्यते

अपि चैतद्यदभिहितम् 'आगन्तुनिवार्थान्मन्यमानो हरिरोहिद्ब-

१ च °अपि चैवं० चै. २ क. ख. घ. झ. ट. ठ. ड. °कृतिः स सत्ता°. ३ ग. ज. °कृतिर्भू°; च. °कृतिभू° ते ४ च. कार्यकर°. ५ क. ख. घ. झ. ट. ठ. ड. शरीरमात्मा°; च. सेनैस्थैमा° शरीर. ६ ग. ज. 'तेन' सकृदेव; च. °स्तेन० वै० तेन. ७ ग. ज. °कृतिर°; च. °कृतिर० ते. ८ ग. ज. °त्युत्प्रेक्ष्यं तत् । प्रकृ°; °त्युत्प्रेक्ष्यंते । प्र° पेक्ष्यं. ९ क. ख. घ. झ. ट. ठ. ड. °नाम्न्यात्°. १० क. ख. घ ट. ठ ड. महानेवायमात्मा विश्वरूपः स्तू°. ११ च. °नमनं न संज्ञा. १२ क. ख. घ. झ ट. ड. नाम्न्यम्. १३ क. ख. ग. ज. घ. झ. ट. ठ. ड. 'यद्' नास्ति.

रितादीनीन्द्रादीनां मनुष्याश्ववदनित्यत्वमवेत्य न सम्यगभिधीयत इति स न मन्येत ' इत्यत्र ब्रूमः । मनुष्यधर्मविपरीता हि देवताधर्मोऽनैश्वर्यान्मनुष्याणामैश्वर्याच्च देवतानाम् । तत्कथमिति । यतो भेदमाश्रित्य प्रतिसमाधीयते । ' इतरेतरजन्मानो भवन्ति ' ।

देवताधर्मो मनुष्यधर्माद्भिन्नः

इतरेतरप्रकृतयो देवा ऐश्वर्यात् । न मनुष्याणामियं शक्तिरस्त्यनैश्वर्यात् । मनुष्याणां हि पिता पुत्रं जनयतीति पिता प्रकृतिः । न पुनरिच्छन्नपि पुत्रः पितरं जनयति । दे[1]वतानां त्वग्नेः सूर्यो जा[2]यते । ' एष प्रातः प्रसु[3]वति ' ( मैत्रा० सं० १ । ५ । ७ ) इति [4] विज्ञायते । तस्मात्सूर्यस्याग्निः प्रकृतिः । सूर्याच्चाग्निः सायं जा[5]यते । तस्मादग्नेः सूर्यः प्रकृतिः । [6]अदितेर्दक्षो दक्षाच्चादितिरिति (ऋ०सं०१० । ७२ । ४) । अथा[7]ध्यात्मेऽपि 'कोष्ठ्यादग्नेर्नाद इन्द्रो बलादिन्द्रान्मध्यमानोऽग्निः' इत्येवमादि । स एष सर्वथाप्यचिन्त्यो देवताधर्मः । तासामानन्त्यान्म[8]हाभाग्यस्य । तत्रैवं सत्यशक्यमध्यवसातुं यथा मनुष्याणामागन्तवोऽश्वादयस्तथैव दे[9]वानामपीति । तस्माद्दोषानुपपत्तिरनागन्तुत्वाद्देवाश्वादीनामिति ।

देवताधर्मो इतरेतरजन्मानो भवन्ति

देवाश्वादयो नागन्तवः

अथ किमर्थमीश्वराः सन्तो दे[10]वा जायन्त इति । कर्मजन्मानः । कर्मफलसिद्धये लोकस्याग्निवायुसूर्या जायन्ते । न ह्येतेभ्य ऋते लोकस्य कर्मफलसिद्धिः स्यात् । विद्यमानमपि चैश्वर्यमैश्वर्यवति न प्रख्यातिमियादीशितव्यमर्थमप्रतीत्य । तस्मादैश्वर्यप्रख्यापनाय जायन्ते कर्मफलसिद्ध्यै लोकमनुजिघृक्षन्तः । कुतः पुनर्जायन्त । ' आ[11]त्मजन्मानः ' । योऽसौ ' एक आत्मा बहुधा स्तूयते ' इ[12]त्युक्त उपात्तसर्वमूर्तिः स्थितावुपरतसर्वमूर्तिः प्रलये भावाख्यः सन्मात्रः सर्गकाले षोढात्मानं विभज्य जगद्भावं बिभर्ति

देवताना जन्म कर्मसिद्ध्यर्थम्

देवता आत्मनो जायन्ते

---

१ क ख. घ झ. ट. ठ. ड. दवाना. २ क. ख. व झ. ट. ठ. ड. सूर्योऽजायत; च. जायते° अजायत. ३ घ. प्रसुसव°; ट. प्रसुवति° स, ग. च. ज. ठ. ड. प्रसवति ४ च. हि. ५ च. संजायते. ६ ठ. ड. अदितेर्दक्षो अजायत दक्षाद्वदितिः परीति श्रुत्यन्तरात् । अथाध्या°. ७ ग. ज. अथाध्यात्मनेपि कोष्ठ्यात्°; घ. झ. ट. ठ. ड. ' अथ ' नास्ति. ८ क. ख. च. °न्त्यान्महा°. ९ क. ख. घ. झ. ट. ठ. ड. देवताना°. १० क. ख. घ. झ. ट. ड. देवता. ११ ग. ज. आत्मनः १२ क. ख. घ झ. ट. ठ. ड. इत्युपात्त. सर्व°; ग. ज. इत्युपरतः (ज. इत्युपात्तः) सर्वमूर्तिः स्थिता°, च. इत्युक्तःपात्त० उ.

तस्माज्जायन्त इत्यात्मजन्मानः । क एव तस्मान्न जायत इति चेत्सत्यं सर्वं तस्माज्जायते । न कामकारेण । देवास्तु तमात्मानं पश्यन्तो योगेन ततः कामकारतो जायन्ते । किमेषां जन्म । यदेषामिच्छतां संकल्पानुविधायिकर्मानुरूपं यथाकालमात्मनः कार्यकारणमुत्पद्यते तदेषां जन्म । तदनीश्वराणां नास्ति । यतश्चेश्वरास्ते तस्मादात्मनस्तत्संकल्पानुविधायित्वात् 'आत्मैवैषां रथो भवत्यात्माश्वा आत्मायुधमात्मेषव आत्मा सर्वं देवस्य देवस्य'। तत्र यदुक्तम् 'अश्वादीनि सत्त्वान्यक्षरथप्रभृतीनि च द्रव्याण्यदेवताः' इत्येतदयुक्तम् । देवता एवेमाः । रथादिरूपेण हि देवतैवात्मानं विकृत्य प्रकृतिभेदेन रथादिसाध्यमर्थं साधयति । सा तद्रूपा सती रथादिस्तुल्या स्तूयते सा तत्स्तुतिसमवेतमर्थमाशासितं स्तोतुस्तेनैव रूपेण साधयितुमलमिति ।

> कामकारेण देवतानां जन्म अकामकारेणेतरेषाम्

> रथादि सर्वमात्मैव

तस्मात् 'महाभाग्यादेकैकस्या अपि बहूनि नामधेयानि' (नि० द० ७ । ५)। तासामेव तिसृणामग्न्यादीनां महाभाग्यादैश्वर्ययोगादात्मानमनेकधा विकुर्वतीनामेकैकस्याः प्रतिविकारं नामधेयप्रतिलम्भात्तेनैव रूपेण धारयन्त्यात्मानमिति 'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते' इत्यस्य लक्षणस्याव्याघातः । तस्मात्सम्यगेवोक्तमिति । अथवा । स्तुतिसंक्रमन्यायेन चतुर्दशेऽध्याये 'यज्ञसंयोगाद्राजा स्तुतिं लभेत' (निरु० ९ । ११) इत्यत्र पुनः प्रतिसमाधास्यामहे ॥ ४ ॥

> एकैकस्य महाभाग्याद्बहुनामधेयत्वम्

> तेन 'यत्कामः०' इति लक्षणं युक्तम्

द्वादशाध्यायस्य प्रथमः पादः ।

---

१ क. ख. घ. झ. ट. तद्देतेषां. २ क. ख. झ. 'देवस्य' सकृदेव. ३ ग. ज. विष्कृत्य. ४ क. ख. घ. झ. ट. ठ. ड. सा च स्तु°. ५ च. महा°. ६ ग. ज. विकुर्वन्ती°. ७ ग. घ. झ. ट. ठ. ड. °मिच्छंस्तु°. ८ घ. झ. ट. निरुक्तटीकायां द्वादशस्य प्र°, ठ. इति निरुक्तवृत्तौ आदितो द्वादशस्य उत्तरषट्कप्रथमाध्यायस्य चतुर्थः खण्डः ॥४॥, ड. इति निरुक्तटीकायां द्वादशाध्यायस्य प्रथमः पादः । इति नैरुक्तोत्तरषट्के प्रथमाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

तिस्र एव देवता इति नैरुक्ता अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानस्तासां माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्त्यपि वा कर्मपृथक्त्वाद्यथा होताध्वर्युर्ब्रह्मोद्गातेत्यप्येकस्य सतोऽपि वा पृथगेव स्युः पृथग्घि स्तुतयो ५ भवन्ति तथाभिधानानि यथो एतत्कर्मपृथक्त्वादिति बहवोऽपि विभज्य कर्माणि कुर्युस्तत्र सस्थानैकत्वं संभोगैकत्वं चोपेक्षितव्यं यथा पृथिव्यां मनुष्याः पशवो देवा इति स्थानैकत्वं च संभोगैकत्वं च दृश्यते यथा पृथिव्याः पर्जन्येन च वाय्वादित्याभ्यां च संभोगोऽग्निना चेतरस्य लोकस्य तत्रैतन्नरराष्ट्रमिव ॥ ५ ॥

१०

---

'तिस्र एव देवता इति नैरुक्ताः'। अत्रोपोद्घातः[1]। 'सैषा देवतोपपरीक्षा' इत्यधिकारे वर्तमाने 'यत्काम ऋषिः'[3] इत्येवमादि मन्त्रदेवतालक्षणमुक्तम्। तत्पुनरदेवतात्वादश्वादीनां 'मा नो मित्रो वरुणो अर्यमायुः'[4] (ऋ० सं० १ । १६२ । १) इत्येवमादिषु व्याहन्यमानमपेक्ष्य 'स १५ न मन्येत' इत्येवमादिनाक्षिप्ते 'महाभाग्याद्देवताया[5] एक आत्मा बहुधा स्तूयते' इत्येवमादिना 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्' (ऋ० सं० १० । ९० । २) इत्येवमादिभ्यो मन्त्रवाक्येभ्यः 'अथातो विभूतयोऽस्य पुरुषस्य' (ऐत० आ० २ । १ । ७) इत्येवमादिभ्यश्च ब्राह्मणेभ्यः 'एष इन्द्र एष प्रजापतिः' (ऐत० २० उ० ३ । ३) इत्येवमादिभ्यश्चैकात्म्ये सामर्थ्यमुन्नीयात्मवित्पक्षेणात्मैवेदं सर्वमित्यैकात्म्यमुक्तम्। आत्मविदां ह्यात्मन्युपजातविशिष्टभावनानामात्मशरीरस्थानामात्ममयमेवेदं सर्वमनुपश्यतामात्मार्थः सर्वो वेदोऽन्या[6] च सर्वा वाक्। न ह्यात्मनोऽन्यद्व्यतिरिक्तम-

(आत्मवित्पक्षेणैकात्म्यम्)

१ क. ख. १ (५); छ. त. द. ६. २ क. ख. ब. झ. इत्युपोद्वा°; ग. ज. 'अत्र' नास्ति, च. 'रुक्ताः। ~ उपो° अत्र; ट. रुक्ताः इत्युपो° अत्रो. ३ क. ख. घ. झ. ट. ठ. ड. ऋषिर्यस्यामित्ये°. ४ क. ख. घ. झ. ट. ठ. ड. अर्य- २८ मेत्ये°. ५ ग. च. महा°. ६ ग. ज. °त्मन्युपनोऽन्य°.

भिधेयमस्ति सत्त्वाविशेषाद्यदभिधानमभिदध्यात् । अथ पुनरुपक्रमः

पुरुषार्थस्योपक्रमो यज्ञेन । याज्ञिकपक्षे देवतानानात्वम्

पुरुषार्थस्य प्रथमनिश्रेणी[1]फलकस्थानीयेन केवलेनाधियज्ञेन । तत्र चावधानेऽधिदैवता । अध्यात्मज्ञानं किंचिद्विदुषः[2] पृथगात्मनो देवताः पश्यतः परिच्छिन्नफलाभिप्रायस्याधियज्ञं प्रयुयुक्षमाणस्य[3] पूर्वजन्माविद्यावासितान्तःकरणस्याभिधानस्तुतिभेदाभ्यां विधिमन्त्रार्थवादविद्यावशेन यथाग्रहं पृथगिव देवताः प्रकाशन्ते । तदुक्तम् 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद' (बृह० उ० १ । ४ । १०) इति । तदाहुः 'आत्मयाजी श्रेया३न् देवयाजी३ ईत्यात्मयाजीति ह ब्रूयात्' (शत०ब्रा० ११ । २ । ६ १३) इति । तदेवं ब्रह्म देवतावृक्षस्य मूलमैकात्म्यमात्मविदः प्रत्यवभासते ।

नैरुक्तपक्षे त्रित्वम्

यावदभिधानं तु याज्ञिकान्प्रति विधिमात्रप्रधानान् । यच्चावशिष्यते तन्नैरुक्तान्प्रत्यवभासते । अत इदमुच्यते 'तिस्र एव देवता इति नैरुक्ताः' । तिस्र इति संख्या । एवेत्यवधारणमितरौ पक्षावपेक्ष्य । कतमास्ता इति । 'अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः' ।

त्रित्वं स्थानभेदात् श्रुतिलिङ्गाच्च

कयोपपत्त्या त्रित्वं परिजगृहुः । स्थानभेदात्प्रत्यक्षलिङ्गादन्यार्थदर्शनाच्च । लिङ्गं[10] हि भवति 'विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभवद्द्वितीयः । तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात्पुरुत्रा (य० वा सं० १७ । ३२ । तै० सं० ४ । ६ । २ ) इति[12] 'अजस्य

१ ग. ज. °निश्रयणी°; च. °निश्रेयणी°; ठ. ड. निःश्रेणी २ ग. ज. किंचाविदुषः. ३ घ ट. प्रयुयुमाणस्य; ठ ड प्रमुमुक्षमाणस्य. ४ क. ख. घ. झ. ठ. ड. °विद्यारसेन; ट. °विद्यारसेन वशे. ५ क. ख. घ. झ. ट. °याजीवेत्या°; च. इवेत्या°; ठ. ड. °याजी चेत्या°; नैकस्मिन्नपि पुस्तके प्लुतिचिह्ने विद्येते. ६ ग. ज. 'इति' नास्ति. ७ ग. ज. °तिविधमात्र°. ८ क. ख. घ. झ. ट. ठ. ड. °प्रधानात्; ग ज. °प्रधानान्मध्यमोऽवशि°; च. °प्रधानान्° त्. ९ ग. ज. स नैरु°. १० क. ख. घ. झ. ट. ठ. ड. लिङ्गं त्रिधा हि; च. लिङ्गं हि॰भ° त्रिधा. ११ ग. ज. अभवो द्वि°. १२ क. ख. घ. झ. ट. ठ. ड. इत्यत्र । अज°; च. इति । अज° त्यत्र.

नाभावध्येकमर्पितम् ( ऋ० सं० १० । ८२ । ६ ) इति । अन्यार्थदर्शनाच्च । ' प्रजापतिर्वै त्रीन्महिम्नोऽसृजताग्निं वायुं सूर्यम् ' ( मैत्रा० सं० ४ । २ । १२ ) इति । ' प्रजापतिर्लोकानभ्यतपत्तेभ्योऽभितप्तेभ्यो

अन्यार्थदर्शनाच्च

५ रसान्प्रावृहदग्निं पृथिव्या वायुमन्तरिक्षात्सूर्यं दिवः ' ( छान्दोग्योप० ४ । १७ । १ ) इति । ' अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः ' । ' तिस्रः ' इति प्रकृतेः स्वरूपग्रहणात्स्थानभेदं त्रित्वे हेतुमुपसंसूचयति । कुतो नियमोऽग्न्यादीनां पृथिव्यादिषु । निगमेभ्यः । ' पृथिव्यासि जन्मना

अग्न्यादीनां स्थानवैशिष्ट्ये निगमः

१० वशा साग्निं गर्भमधत्थाः अन्तरिक्षमासि जन्मना वशा सा वायुं गर्भमधत्थाः द्यौरसि जन्मना वशा सादित्यं गर्भमधत्थाः ' ( मैत्रा० सं० २ । १३ । १९ ) इत्येवमादिभ्यो निगमेभ्यः ।

' वायुर्वेन्द्रो वा ' इति किमेकस्य पर्यायवचनावेतौ शब्दावुताभिधेयौ भिद्येते इति । कुतः संदेहः । उभयथा हि प्रसिद्धिः । प्रत्यभिधानं चार्थभेदो दृष्टो गौरश्व इति यथा । अभिधानभेदेऽपि चैकार्थता दृष्टा

१५ वायुर्वेन्द्रो वेति किमर्थो विकल्पः ।

हस्तः करः पाणिरिति यथा । अतो युक्तः संशय इति । याज्ञिकपक्षे तावददोषः । अर्थभेदेऽपि तेषां यावन्त्यभिधानानि तावत्यो देवताः । अस्य

२० पुनराचार्यस्य स्वसिद्धान्तावलम्बिनः ' तिस्र एव देवताः ' इति प्रतिज्ञा । ततः कुतो वाय्विन्द्रशब्दयोरर्थभेदः । भेदे हि प्रतिज्ञाहानिः स्यात् । अपि च भेदेऽभिप्रेते नैकवचनेन निरदेक्ष्यदन्तरिक्षस्थान इति । अभिधानमात्रभेदेऽप्यभिधेयस्य चाभेदेऽन्तरिक्षमस्य स्थानमित्युपपत्तषष्ठ्येकवचने विशेष्योऽन्तरिक्षस्थानशब्देन विशेष्यते । इतरथा ह्यन्तरिक्षस्थानावित्यव-

२५ क्ष्यद्द्वयोर्विशेष्ययोः । अपि च ' वायवा याहि दर्शत ' ( ऋ० सं०

---

१ क. ख. ग. ज. ढ 'न्प्रावृह , च. 'न्प्रावृंह° बृ. २ क. ख घ. झ. ट. ठ. ड. °स्थान इति । तिस्र', च. °स्थान^ तिस्र' इति. ३ ग ज प्रकृतिः; ख. प्रकृतस्वरू°. ४ ग. च. ज. तृत्वे. ५ ग. ज. तावन्त्यो, च तावत्यो° वं. ६ घ. झ. ट. ठ. ड. °ज्ञातवतः कु°; च. °ज्ञा तं॑न·° व. ७ क. ख. घ. झ. ट. ठ. ड. °मात्रे भिन्नेऽप्य°. ८ क. ख. घ झ. ट. ठ. ड. 'त्युपपत्तेःषष्ठ्ये'; च. °त्युपर्त्तेष° पपत्तेः. ९ क. ख. ग. ज. घ. झ. ट. ठ. ढ. 'वचनो वि°. १० क. ख. ग. ज. °त्यवक्षद्द्व', च. 'त्यवक्ष्यद्द्व' श्य.

१ । २ । १ ) इति वायोः प्राधान्यस्तुतिमुदाहृत्य ( निरु० १० । २ ) तां निरुच्य तस्यां सोमपानसंबन्धमुपलक्ष्यैन्द्रत्वं च सोमस्यावेत्य 'अंशुरंशुष्टे'

पर्यायौ वाय्विन्द्रशब्दौ

इत्येतस्मिन् 'आ त्वमिन्द्राय प्यायस्व । तुभ्यमिन्द्रः प्यायताम् ' ( मैत्रा० सं० १ । २ । ७ ) इति नान्यत्रेन्द्रशब्दान्मुख्याभिसंबन्धिनो मध्यमात्सोमपानं संभवतीति प्रतीत्य वायुशब्दस्येन्द्रशब्देन समानार्थतां दृढमवधार्यामृष्यमाणो वायुशब्दस्य मध्यमादर्थान्तरे वृत्तिमपर्यायशब्दवादिनमाक्षिपन्नाह 'कमन्यं मध्यमादेवमवक्ष्यत्' ( निरु० १० । २ ) इति । उत्तरमपि च यमुदाजहार निगमं ' तस्यैषा परा भवति ' ( निरु० १० । २ ) इत्युपोद्धत्य तस्मादैन्द्रादेव सूक्तात् ' अस्येन्द्रस्य वायोर्यथा भक्षो न विदस्येत्तथैनमेवमभिवहेयुः ' ( निरु० १० । ३ ) इति वायुशब्दस्येन्द्रविशेषणत्वं प्रतीत्येन्द्रप्रधानत्वात्सूक्तस्य ' वेन्द्रैः ' उपात्तस्तस्मादाचार्यस्य मध्यमपर्यायवचनावेतौ शब्दाविति । सत्यपि पर्यायवचनत्वे मुख्यतरः संबन्धो मध्यमस्येन्द्रशब्देन न तथा वायुवरुणरुद्रादिभिः । तत्कुतः ।

मध्यमस्य मुख्यतरः संबन्ध इन्द्रेण न वाय्वादिभिः

तथा निगमे दर्शनात् । ' सा प्रथमा संस्कृतिः' ( मैत्रा० सं० १ । ३ । १२ ) इत्येतस्मिञ्छुक्रामन्थिनोर्हवनमन्त्रे ' यो मध्यमो वरुणो मित्रोऽग्निस्तस्मा इन्द्राय सुतमा जुहोत ' ( मैत्रा० सं० १ । ३ । १२ ) इति वरुणादीननुक्रम्य विशेषतश्चतुर्थ्यन्तेनेन्द्रशब्देन संप्रदानेन संबध्नाति 'तस्मै ' मध्यमाय इन्द्राय इति । तस्मात्संप्रदानेन सामानाधिकरण्यान्मन्त्रान्ते मध्यमशब्देन्द्रशब्दयोर्मुख्यतरः संबन्ध इति गम्यते । यथास्य मध्यमस्य ज्योतिषो मुख्यः संबन्ध इन्द्रशब्देन तथेतरयोरपि पार्थिवोत्तमयोरग्निसूर्यशब्दाभ्याम् । प्रसिद्धतरत्वात्संबन्धस्य । न तथेतरैर्जातवेदःप्रभृतिभिः । सति गौणमुख्यत्वे युक्तं

---

१ क. ख. घ. झ. °शब्दस्य; ट °शब्दस्य' ब्देन. २ ग. °मचक्षादि°; च. °मवक्षादि' क्ष्य; ज. °मवक्षादि°. ३ क. ख. व. झ. ट. ठ. ड. एतस्मा°; च. ˇतस्मा° ए. ४ क. ख. घ. झ. ट. ठ. ड. अस्येन्द्र°. ५ क. ख. घ. झ. ट. चेन्द्रः; च. वेन्द्रः° चे. ६ ग. ज. मम प°. ७ क. ख. घ. झ. ट. ठ. ड. सत्यपि तु प°. ८ ग. ज. ममस्ये.° ९ क. ख. घ. झ. ट. ठ. ड. सा प्रथमा संस्कृतिर्विश्ववारा स प्रथमो मित्रो वरुणो अग्निः । स प्रथमो बृहस्पतिश्चिकित्वास्तस्मा ३ इन्द्राय सुतमाजुहोत स्वाहा । सा प्रथ°. १० क. ख. घ. झ. ट ठ. ड. ' अस्य ' नास्ति; च. अस्य. ११ क. ख. ग. ज. घ. झ. ट. ठ. ड. सति च गौ°; च. सति ˇ गौ° च.

यदग्न्यभिधानेन प्रसिद्धतरसंबन्धेन पार्थिवस्य ज्योतिष उपदेशः क्रियते न जातवेदःप्रभृतिभिः । तथोत्तमस्य सूर्यशब्देन न सवितृभगप्रभृतिभिरिति ।

कस्मात्पुनर्मध्यमस्य शब्दद्वयेनोपदेशः क्रियते पार्थिवोत्तमयोरेकैकेनेति ।

*मध्यमस्य शब्दद्वयेनोपदेशे प्रयोजनम्*

मध्यमस्य हि द्वौ कर्मात्मानौ विद्युद्वाय्वाख्यौ । तयोरनित्यदर्शन एको विद्युदाख्यो नित्यदर्शनस्तु वाय्वाख्यस्त्वगिन्द्रियप्रत्यक्षः । तत्कथं नाम त्रिष्वपि स्थानेष्वभिमानिन्यो देवताः कर्मात्मभिरवैषम्येण प्रत्यक्षत उपदिष्टाः स्युरित्यतो ' वायुर्मध्यमस्थानः ' इति वाय्वाख्येन कर्मात्मना मध्यमस्थानमुद्दिश्यामुख्यत्वाद्यभिधानस्य मुख्यत्वाच्चेन्द्राभिधानस्य ' इन्द्रो वा ' इत्याह । एवमुभयं कृतं भविष्यति । अनुपरतक्रियाव्यापारता च मध्यमस्य वाय्वाख्येन कर्मात्मनेतरज्योतिर्वद्दर्शिता भविष्यति मुख्येन चेन्द्रशब्देन मुख्यसंबन्धोऽपरिहापितो भविष्यतीत्युभयमुक्तं ' वायुर्वेन्द्रो वान्तरिक्षस्थानः ' इति । न तु पार्थिवोत्तमयोर्द्वौ कर्मात्मानौ स्तो यथा मध्यस्थानस्य । तस्मान्न दोषो मध्यस्थानस्याभिधानद्वयोक्ताविति ।

*अभिधानद्वयेन हेतुद्वयसिद्धिः*

आह । यदिदमभिधानबहुत्वं जातवेदो वैश्वानर इत्येवमादि त्रित्वे सत्येतत्किंकृतमिति । उच्यते ' तासां माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति ' । तासामेव तिसृणामग्न्यादीनां माहाभाग्यादैश्वर्ययोगेनैकात्मानमनेकधा विकुर्वतीनामेकैकस्यां प्रतिविकारं जातवेदो वैश्वानरो वरुणो रुद्रोऽश्विनावुषा इत्ये-

*अभिधानबहुत्वस्य कारणम्*

---

१ क. ख. घ. झ. ट. ठ. ड °शब्देनोपदेशः क्रियते न स°; च. °शब्दे उपदेशः क्रियत इत्यर्थ. न स°; २ क. ख. घ. झ. ट. ठ. ड. °क्षत एवोप°; च. °क्षत ~ उप° एव. ३ घ. झ. ट. ठ. ड. °युर्मध्यस्था°. ४ च. मध्यस्था°. ५ क. ख. ग. ज. घ. झ. ट. ठ. ड. °योर्द्वौ द्वौ कर्मा°; च. °योर्द्वौ ~ कर्मा° द्वौ. ६ ठ. ड. मध्यमस्थान°. ७ क. ख. घ. झ. ट. ठ. ड. तस्माददोषो मध्य°. ८ क. ख. घ. झ. ट. मध्यमस्या°; ठ. ड. मध्यमस्थानस्या°. ९ ग. ज. तृत्वे. १० ख. °कस्य बहू°. ११ ठ. ड. तासा माहाभाग्येति । तासामेव तिसृणा°. १२ ग. च. ज. °भाग्यत्वेन ऐश्व°. १३ क. ख. घ. झ. ट. ठ. ड. ° योगादेका°.

वमादीनि बहूनि नामधेयानि भवन्ति प्रतिस्थानं स्वप्रकृत्यभेदादेकात्म्यत्वदेवैकत्वं न जहाति सा सा देवतेति ।

' अपि वा कर्मपृथक्त्वात् ' । अपि चैवं विकरणधर्मित्वाद्भिन्नप्रकृतीनां बहुनामता । अपि वा स्वं स्वमात्मानमविकुर्वतीनामेवानेककर्मयोगात्पृथक्कर्महेतुको नामधेयलाभः स्यात् । को दृष्टान्तः । ' यथा होताध्वर्युर्ब्रह्मोद्गातेत्यप्येकस्य सतः ' कुण्डपायिनामयने । तत्र हि सप्त दीक्षन्ते । त एव च स्वयं कर्म कुर्वते । तेषां षट् षोडशानां पर्यायेण कर्म कुर्वते । तत्कर्म कुर्वाणास्तदाख्या भवन्ति । यथा लोके लावकाः पाचकादयः । तदेतत्प्रदर्शितं भवति । न किंचिदप्यत्र गौणमभिधानम् । संविज्ञातपदत्वे त्वग्न्यादीनां संज्ञाशब्दानां कारकादिशब्दैरेष विशेषो यदग्रनयनादिगुणयोगेऽप्यसति नाग्न्यादीन् जहति । कारकादिशब्दास्तु करणादिवियोगसमनन्तरमेव कारकादीन् जहति । एवमेतदगौणत्वमभिधानानामपेक्ष्योक्तम् ' अपि वा कर्मपृथक्त्वात् ' इति । अपि वैश्वर्यात् । उभयथापि शक्त्यप्रतीघातादुपपद्यत एकैकस्या अपि बहुनामतेति ।

एकस्य बहुनामता कर्मपृथक्त्वात्

यथा कुण्डपायिनामयने

अत्र लौकिकदृष्टान्तः

' अपि वा पृथगेव स्युः पृथग्घि स्तुतयो भवन्ति ' । अपि चैवं यथोक्तमेकैकस्या माहाभाग्यात्कर्मपृथक्त्वाद्वा बहुनामता । अपि वा पृथक्पृथगत्यन्तभिन्ना एवौत्पत्तिकेन भेदेन स्युरिति याज्ञिका आहुः ' पृथग्घि स्तुतयो भवन्ति ' इति । कुत एतद्याज्ञिका आहुरिति । अधियज्ञे हि स्तुतिनियमो भवत्यभिधाननियमश्चेति । अधियज्ञमिति व्याख्येयम् । पृथग्घि स्तुतयो भवन्तीति हेतौ । यस्मात्पृथ-

अथवा पृथक्स्तुतित्वात्पृथक्स्युः

१ क ख. घ. झ. ट. ठ ड. कारकलावकपाचका°; ग. ज °लोके लावकाः पाचका°; च. °लोके लावकाः° कारक. २ च. पावका° च. ३ क. ख घ. झ. ट. ठ. ड. °ज्ञानप°; च. ज्ञातप° न. ४ क. ख. घ. झ. ट. ठ. ड. °ब्दानां तेषां का°. ५ ग. ज. जहाति, च. जहीति° ह. ६ क. ख. घ झ. ट. ठ. ड. °णादियोग°; च °णादिविनियोग° वियो. ७ ट. ठ. ड. चैश्व°. ८ घ. झ. ट. °नामेति, ड. बहुनामेति. ९ च. °ख्येय याज्ञिमि(ति) वे (चे) पृ°. १० क. ख. घ. झ. ट. ठ. ड. °न्ती ति । हीति हेतौ°; च. न्तीति हेतौ° हीति.

पृथगग्न्यादीनां स्तुतयो भवन्ति । पृथगग्नेः ' अग्निमीळे ( ऋ० सं० १ । १ । १ ) इत्येवमाद्याः । पृथग्जातवेदसोऽनग्निलिङ्गं सूक्तं ' प्र नूनं जातवेदसम् ' ( ऋ० सं० १० । १८८ । १ ) इति । पृथगिन्द्रस्य हरिभ्याम् । पृथग्वायोर्नियुद्भिः । पृथक्सूर्यस्य हरिद्भिः । ५ पूष्ण इत्यजाभिः । अरूणीभिर्गोभिरुषसाम् । स्तुतिव्यभिचारे च प्रायश्चित्तम् । तदनुपपन्नं च पर्यायवचनत्वे । ते वयं स्तुतिनियमात्पश्यामः पृथक्पृथगग्निवैश्वानरप्रभृतय इति ।

' तथाभिधानानि ' । यथैव हि स्तुतिभेदात्स्तुत्यभेद एवमेवाभिधानभेदादभिधेयभेदोऽपि भवितुमर्हति । प्रसिद्धतरं चेदं लोके प्रत्यभिधानमर्थभेद

१० अभिधानपृथक्त्वाच्च — इति । न तथैकस्यानेकाभिधानता । तस्मात्पृथगग्निजातवेदोवैश्वानरादिशब्दानामभिधेया इति स्थितिः । स्तुतिष्वेव ह्यभिधानभेद इति समानार्थता हेत्वोरिति चेन्न विधावप्यभिधाननियमदर्शनात् । ' आग्नेयमष्टाकपालं निर्वपेत् ' ( मैत्रा० सं० २ । ३ । १ ॥ २ । ३ । ५ ॥ १५ २ । ४ । ६ ॥ २ । ५ । ९ ) इति येनैवाभिधानेन चोद्यते तेनैव निर्वपणादारभ्य समाप्यते तस्मादसमानार्थतेति ।

' यथो एतत् ' यत्पुनरेतदुक्तं ' कर्मपृथक्त्वात् ' इत्यनेकान्त एषः ।

कर्मपृथक्त्वादित्यनेकान्तः — दृष्टो हि प्रकृतिभेदात्प्रतिकर्म भेदः । सा च पृथक्त्वादिव्यवस्था माहाभाग्यादित्याचार्येणात्र २० पृथक्त्वहेतुर्न प्रयुक्त इष्ट एव हि याज्ञिकपक्षे प्रत्यभिधानमर्थभेद इति । तत्किमेकत्वं नास्त्येव ।

---

१ च 'त्पृथक्पृथगग्न्या' क. २ क ख ग. च. ज. घ. 'मीले. ३ च. 'वेदसो ऽग्नि' अ ४ क ख घ झ ट. ठ ड. ' इति ' नास्ति; च. इत्यजा°. ५ च स्तुतिर्व्यभि'. ६ क. ख. घ झ. ट. ठ. ड. °न ( घ. झ. ट. ड. नं; २५ ठ. ने ) त्वे तेषाम् । ते°; च. 'नत्वे ~ । 'ते' तेषां. ७ ग. ज स्तुतिभिदा स्तु°. ८ क. ख. घ. झ. ट, ठ ड. °त्पृथक्पृथ'; च त्पृथग° क्पृथ. ९ क. ख. घ. झ. ट. ठ. ड. °त्यनैकान्तिक एष दृष्टान्तः । दृष्टो'; च °त्यने ( नै ) कान्त एष ~ दृष्टो° दृष्टान्तः. १० च. भेदैर्ता । सा' दः. ११ ग. ज. पृथक्त्वादेति व्य°. १२ ग. ज. घ. झ. ट. ठ. ड. ' पृथक्त्व ' नास्ति; च. पृथक्त्वहे° क्त्वे. १३ ठ. ३० ड. प्रयुक्तः । एष एव°.

एकत्वं स्थानेन संभोगेन च

तत्र । अस्ति गुणतः । कथम् । 'तत्र सस्थानैकत्वं संभोगैकत्वं चोपेक्षितव्यम्' । तत्र तस्मिन्पृथक्त्वे सति स्थानैकत्वं संभोगैकत्वं चोपपत्तित ईक्षितव्यम् । तत्र दृष्टान्तः । 'यथा पृथिव्यां मनुष्याः पशवो

अत्र लौकिको दृष्टान्तः

देवा इति स्थानैकत्वं संभोगैकत्वं च दृश्यते' । सहस्थानतया एकत्वं स्थानैकत्वम् । पृथिवीत्युक्ते यावतां सहभावेन समानं स्थानं ते तद्ग्रहणेन गृह्यन्ते । एवमितरयोरपि स्थानयोरेकत्वम् । संभोगहेतुकमेकत्वं संभोगैकत्वम् । संभोगो नामेतरेतरोपकारित्वम् । समानकार्यतेत्यर्थः । तच्च पुनर्भिन्नस्थानानामपि भवति किमङ्ग पुनः समानस्थानानामिति । 'यथा पृथिव्याः पर्जन्येन च

संभोगैकत्वे उदाहरणम्

वाय्वादित्याभ्यां च संभोगः' । कथम् । पृथिव्योषध्युत्पत्तौ स्वकार्यारम्भे पर्जन्यवाय्वादित्यकृतमुपकारमपेक्षते । तदुक्तम् 'त्रयस्तपन्ति पृथिवीमनूपाः' ( निरु० २ । २२ ) इति । 'अग्निना चेतरस्य

एकत्वं नाम समानकार्यत्वम्

लोकस्य' । तदप्युक्तम् 'अग्निर्वा इतो वृष्टिं समीरयति' 'दिवं जिन्वन्त्यग्नयः' ( ऋ० सं० १ । १६४ । ५१ । ) इति च । तदेवप्रकारमेकत्वं कार्यैकत्वात्स्थानैकत्वाद्वा भाक्तं न प्रतिषिध्यते । लोकेऽपि समानकार्यता भवति येषां तेषामैक्यमित्युच्यते ।

कः पुनरत्राविरोधी भेदाभेदे दृष्टान्त इति । उभये हि प्रमाणं भेदाभेदवा-

---

१ क. ख. ग. च. ज. तत्रास्ति; घ. झ. ट. ठ. ड. तच्चास्ति. २ ठ. ड. °नैकत्वमिति तत्र सस्था°. ३ क. ख. घ. झ. ट. ठ. ड. संस्थानै°; च. सति स्था°सं. ४ घ. झ. ट ठ. ड. संस्थानै; च. स्थानै स. ५ क. ख. घ. झ. ट. ठ ड एवमुत्तर; च एवमितैर मुत्त. ६ क. ख. घ. झ. ट. ठ. ड. स्थानयोरेवंप्रकारमेकत्वं, च स्थानयोरेकत्वं रेवंप्रकारमे. ७ क. ख. घ. झ. ट. ठ. ड. °कत्वं ( घ. ट. त्वं । ) संभोगैकत्वं चो–( ठ. ड. त्वो– ) पेक्षितव्यं । संभोग°. ८ ठ. ड. चेति । कथं°. ९ घ. ट ठ. °रोधी भेदेद°.　　२८

दिन आत्मविन्नैरुक्तयाज्ञिकाः । न हि ते स्वमनीषिकया भेदाभेदौ प्रकल्पयन्ति । किं तर्हि । मन्त्रार्थमुद्दिश्य । तस्माद्युक्तव्यः समञ्जसो

भेदाभेदे दृष्टान्तः

दृष्टान्तः । उच्यते 'तत्रैतन्नरराष्ट्रमिव[1]' । यथा राष्ट्रमित्यभेदो नरा इति भेदः । एवं पृथिव्यग्निरित्यभेदो जातवेदा वैश्वानर इति भेदः । एवमुत्तरयोरपि स्थानयोः । तथात्मेत्यभेदो लोकाश्च लोकिनश्चेति भेदः । सर्वत्रैव सामान्यविशेषधर्मो द्रष्टव्यः । पुरुषबुद्ध्यपेक्षातश्च गुणप्रधानतोऽपेक्षा पुरुषानुरागविशेषात् । तत्रैवं सत्यात्मविद आत्मनि त्रित्वनानात्वे गुणीकृत्य तदङ्गप्रत्यङ्गभावेन कल्पयित्वैकमात्मानं पश्यन्ति । तथा नानात्वैकत्वे

एकत्वे त्रित्वनानात्वयोर्गौणत्वम् । त्रित्वे इतरयोर्द्वयोः । तथा नानात्वे

नैरुक्ता इति त्रित्वे[3] । तथा त्रित्वैकत्वे[4] याज्ञिका नानात्वे । एवमेषामविरोधः । अस्ति हि शब्दार्थयोर्वक्तृप्रतिपत्तृवशेन तद्बुद्ध्यपेक्षयान्वयव्यतिरेकाभ्यां वर्तितुं शक्तिः । न तु स्वाभाविकमभिधानाभिधेयसंबन्धमकृतकमप्रच्याव्यमानावभिधानाभिधेयौ जहीतः । न ह्यग्नेरवभास्यं प्रत्यवभासनशक्तिरवभास्यस्य चावभास्यमानताशक्तिर्व्यवधानमन्तरेण विहन्यते । न ह्यकृतकं स्वयमप्यधीतं को विकल्पते वैदिकानां पदवाक्यप्रमाणानाम् । आत्मभावानुशयवशेनात्मविन्नैरुक्तयाज्ञिका वेदस्याविपर्यासिनीमप्यध्यात्माधिदैवाधियज्ञविषयनियतामर्थाभिधानशक्तिं विपर्यासिनीमिव मन्यमानाः परस्परतो विपर्यस्यन्ते ।

वक्तृप्रतिपत्तृवशेनाभेदाभेदौ

तदेतत्सर्वथापि भेदाभेदवर्ति देवतासतत्त्वं यथाग्रहं वक्तृप्रतिपत्तृ[11]वशेन प्रख्यातिमुपयन्[12]स्तुतिरूपकेणात्मनोऽर्थसतत्त्वं तथाभूतं मन्त्रैरा[13]विष्क्रियते । तदुक्तम् 'तत्रोपमार्थेन युद्धवर्णा भवन्ति'

---

१ ड. 'मिव । ५ । यथा°. २ क. ख. घ. झ. ट ठ. ड. °विशेषतः. ३ ग. च. ज तृत्वे. ४ ग. च ज. तृत्व°. ५ क. ख. ग. ज. व. झ. ठ. ड. °प्रतिवक्तृवशे'; च ट. 'प्रतिवक्तृवशे पत्तृ. ६ क. ख. घ. झ. ट. ठ ड. °प्रच्यवमा°; च. °प्रच्याव्य° च्य. ७ ग. क ख ज जहीताम्. ८ ग. क. ख. ग. ज. घ झ. ट. ठ. ड. स्वयमप्यर्धतको वि' ( ग. °तको किल्प्यते' विक; ज. 'तको किल्प्यते); च स्वयमप्य (' प्य ' अस्पष्टं ) थ धि ( ' वि ' अस्पष्टं ) ' धी ' ( अस्पष्टं ) नै (तं). ९ ग. ज. 'दैवविषय°. १० घ. ट. °रयन्ति रूपके°. ११ क. ख. झ. °प्रतिवक्तृवशे°; च. वक्तृप्रतिवक्तृप्रतिपत्तृव°. १२ क. ख. झ. °मुपनयन्स्तु°. १३ ग. च. ज. °राविःक्रिय°.

( निरु० २ । १६ ) इति । दर्शितं चैतन्मन्त्रेण ' न त्वं युयुत्से ' ( शत० ब्रा० ११ । १ । ६ । १० ) इति ।

परमार्थत ऐकात्म्यम्

निश्चितरूपत्वेन स्वे स्वे विषयेऽध्यात्मादौ परमार्थतयैकात्म्ये निष्ठा तदन्तत्वाद्वाचः । तदुक्तम् ' यतो वाचो निवर्तन्ते ' ( तै० उ० २ । ४ ) ५

इति ॥ ५ ॥

---

अथाकारचिन्तनं देवतानां पुरुषविधाः स्युरित्येकं चेतनावद्वद्धि स्तुतयो भवन्ति तथाभिधानान्यथापि पौरुषविधिकैरङ्गैः संस्तूयन्ते । ऋष्वा त इन्द्र स्थविरस्य बाहू । यत्संगृभ्णा मघवन्काशिरित्ते । अथापि पौरुषविधिकैर्द्रव्यसंयोगैः । आ द्वाभ्यां हरिभ्यामिन्द्र याहि । कल्याणीर्जाया सुरणं गृहे ते । अथापि पौरुषविधिकैः कर्मभिः । अद्धीन्द्र पिब च प्रस्थितस्याश्रुत्कर्ण श्रुधी हवम् । अपुरुषविधाः स्युरित्यपरमपि तु यद् दृश्यते ॥ ६ ॥ १०

---

१५

' अथाकारचिन्तनं देवतानाम् ' । आह । महाभाग्याद्देवताया विकरणधर्मित्वादनियम आकारे । अथ नियमो नन्वैश्वर्यव्याघातान्महाभाग्याद्देवताया इत्येतद्व्याहन्यते । तस्मात् ' अथाकारचिन्तनं देवतानाम् ' इत्येतदनारभ्यम् । उच्यते । आरभ्यमेव । प्रकृतिसत्तामनपेक्ष्य विकरणं नाम देवताधर्मो नास्ति । तस्मात्प्रकृतिश्चिन्त्यते देवतायाः । अपि च यत एवेश्वरा देवास्तत एवोभयभागित्वात्किमाकारवत्त्वं स्वभावो देवताया अथवा निराकारत्वमिति सतत्त्वपरिज्ञानाय चिन्त्यते ।

देवताकारविचारः

२०

---

१ ग. ज. °कात्म्यनिष्ठा. २ ठ. ड. °तन्ते अप्राप्य मनसा सहे. ३ क. ख. १; ग. ६; ठ इति निरु० उत्तरषट्के प्रथमाध्याये पञ्चमः खण्डः । ५ ।; ड इति निरुक्तटीकायां नैरुक्तोत्तरषट्के प्रथमाध्याये पञ्चमः खण्डः. ४ ङ. °विधाः; छ. त. °विधा स्यु°ः. ५ क. ख. छ. त. द. °तस्य । आश्रु°. ६ क. ख. °हवम् । २ (६) । अपु°; छ. त. द. °हवम् । ७ । अपु°. ७ क. ख. छ. त द ' ६ ' नास्ति. ८ ग. ज. महा°. ९ च. °तान्महा°. १० क. ख. घ. झ. ट. ठ. ड. भावित्वा°; च. °भागित्वा° वि. ११ क ख. घ. झ. ट. ठ. ड. °कारवत्त्वं. २५ ३०

अस्तु तावदियं चिन्ता। किमिदमविशेषेण पक्षत्रयमस्याश्चिन्ताया विषय उत वा कस्मिंश्चिदेवैकस्मिन्पक्षे द्वयोर्वैतैश्चिन्त्यत इति। इह तावदात्मविदामेक आत्मा। स प्राग्विकारापत्तेः सन्मात्र उदस्तसर्वाकृतिः सर्गस्थित्योरुपात्तसर्वाकृतिः। तदेवमसावनाकृतिः सर्वाकृतिर्वेत्यनास्पदभूतोऽस्याश्चिन्ताया आत्मवित्पक्षः। अथ पुनर्यदासावुपात्तत्रिस्थानावस्थो नैरुक्तपक्षाभिमतमग्निवायुसूर्यभावं बिभर्ति तदापि प्रत्यक्षत्वादविषयमस्याश्चिन्तायाः। प्रत्यक्षत्वात्तेषामपौरुषविध्यस्य तत्पक्षेऽप्याकारचिन्ता विषयाभावादुदस्यत एव। अथ पुनर्याज्ञिकाना यावदभिधानं देवतापक्षवादिनामग्निवायुसूर्याभिधानानि प्रत्यक्षार्थाभिसंबन्धीनि जातवेदोरुद्रेन्द्रपर्जन्याश्विप्रभृतीन्यप्रत्यक्षार्थाभिसंबन्धीनि। शब्दमात्रं प्रत्यक्षम्। अभिधानानां च लोके दृष्टमाकृतिपदार्थवत्त्वमनाकारार्थवत्त्वं च। रुद्रेन्द्रादीनां शब्दानां मन्त्रगतानां लौकिकैर्मनुष्यैश्चवाय्वात्माकाशादिभिरभिधानत्वं तुल्यम्। तत्रैतद्भवति। अप्रत्यक्षत्वाद्रुद्राद्यभिधानानामर्थस्य किं नु खल्वमी रुद्रादिशब्दा मनुष्यादिशब्दवदाकारवतार्थेनार्थवन्त उत वाय्वात्माकाशादिशब्दवदनाकारेणेति। एवमयमस्याश्चिन्ताया याज्ञिकपक्षो विषयः। 'अपि वा पृथगेव स्युः' इत्यत एव याज्ञिकपक्षादनन्तरमिदमारब्धम् 'अथाकारचिन्तनम्' इति।

आत्मैक्यपक्षे आकारचिन्तनं नोद्भवति

नापि त्रित्वपक्षे

याज्ञिकपक्षेऽयं विचार आवश्यकः

किमाकारस्य चिन्त्यते। किमस्ति नास्तीति यद्यस्ति कीदृशः। इह द्विविधा आकारिणोऽर्थाश्चेतनाश्चाचेतनाश्च। चेतनाश्च मनुष्यादयः।

---

१ ग. ज. 'वैतश्चिन्त्यते, च. 'वैतश्चिन्त्यते' चि. २ क ख. घ. झ. ट. ठ ड 'पयत्वम°. ३ क. ख. ग. ज. घ. झ. ट. ठ. ड. 'भिधानसंब°; च. 'भिधानैसब'. ४ क ख. घ. झ. ट. ठ. ड. 'च' नास्ति. ५ क. ख. घ. झ ट ठ ड. 'मनुष्यादिशब्दैर्वाय्वा'; च 'मनुष्यैश्चवाय्वा' मनुष्यादिशब्दैर्वा. ६ क. ख. घ झ. ट ठ. ड. 'धानवत्वं; ग. ज. धावनत्वं. ७ ग. ज. घ झ. ट ठ ड किं तु. ८ क. ख. घ. झ. ट. ठ. ड 'मस्ति उत ना'; च. 'मास्ति ˇ ना° उत ९ ग. ज कीदृशाः; च. कीदृशाः° शः. १० ग. ज. 'र्थाः। चेतना मनु°. ११ क. ख. घ झ. ट. तत्र चेतना°; च. °नाश्च। ˇ चेत° तत्र. १२ क. ख. घ. झ ट. ठ. ड. 'च' नास्ति.

अचेतनाश्च पाषाणादयः । तत्रैतद्भवति किममी मनुष्यादिवच्चेतना उत पाषाणादिवदचेतना द्रव्यमात्रं प्रत्यक्ष[1]मित्येवमुपोद्धृत्य[2] संशयं[3] तदृन्युदासाय पक्षः परिगृह्यते । ' पुरुषविधाः[4] स्युरित्येकम् ' इति । मन्त्रप्रत्ययमस्तित्वं देवताया अभ्युपगतं ' यत्कामः ' इत्युपक्रम्य ' तद्दैवतः स मन्त्रो भवति ' इति । सति हि देवतास्तित्वे तद्देवतत्वं[5] मन्त्रस्य । यदि चैवमाकारोऽपि तत्प्रत्यय एव भवितुमर्हति । अस्ति चेदं पौरुषविध्यं मन्त्रेषु देवतासंविज्ञातपदसंबन्धीति । यत उच्यते ' पुरुषविधाः[6] स्युरित्येकम् ' मन्त्रेषु दर्शनमिति वाक्यशेषः । पुरुषविधाः पुरुषप्रकाराः । पुरुषविग्रहा इत्यर्थः ।

देवताः पुरुषविधाः स्युरित्येकं मतम्

को[7] हेतुः । ' चेतनावद्वद्धि स्तुतयो भवन्ति ' । हिशब्दो हेत्वर्थः । यस्माच्चेतनावतामिव स्तुतयो मन्त्रा अभिधायका भवन्ति । पूर्वो वतिर्मत्वर्थे । उत्तरस्तुल्यार्थे । तस्मात्पुरुषाकारविग्रहा इति ।

यस्मात् चेतनावतामिव तेषां स्तुतिः

ननु चैतन्यमपुरुषाकारविग्रहाणामपि हि[8] गवादीनामस्ति । न । नास्ति । न तु ते[9] विवेकक्षमाः । आसन्नचेतनाः । लोकेऽपि हि यस्य हिताहितविवेकलक्षणं[10] विशिष्टं संविज्ञानं न भवति तमधिकृत्य ब्रुवते निश्चेतनोऽयमिति । एवमेते च गवादयः सन्त्यपि चैतन्य आसन्नचेतनत्वात् । ' न विदुः श्वस्तनं न लोकालोकौ ' ( ऐ० आ० २ । ३ । २ ) इति ह[11] विज्ञायते । तस्मादचेतना इवोपेक्ष्यन्ते । पुरुषस्तु ' वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतत्वमीप्सति ' ( ऐ० आ० २ । ३ । २ ) इति । तस्माद्धिताहितपरिज्ञानात्पौरुषविध्यस्यै[12] च सिसाधयिषितत्वादनपेक्ष्य सामान्यं विशिष्ट-

---

१ च. ट. प्रत्यक्षं. २ ग. पोद्धृत्य` द्धृ, च. °पोद्धृत्य` द्ध; ज. पोधृत्य. ३ क. ख. घ. झ. ट; संशय`. ४ क. ख. घ. झ. ट. ठ. `विधाः. ५ क. ख. घ. झ. ट. ठ. ड. तद्देव°. ६ क. ख. घ. झ. ट. ठ. ड. °विधाः. ७ क ख. घ. झ ट. ठ. ड. कोऽत्र हे°. च. को ^ हे° त्र. ८ क. ख. घ. झ. ट. ' हि ' नास्ति. च. हिं. ९ क. ख. घ. झ. ट. ठ. ड. ' हि ' नास्ति. १० ग. ज. °क्षणविशिष्टसंवि°। ११ क. ख. घ. झ. ट. ठ. ड. ' ह ' नास्ति; ग. ज. हि. १२ क. ख. घ. झ. ठ. ढ. ड. °विध्यस्यैव सि°; च. `विध्यस्यं चं` स्यैव.

चैतन्यः पुरुषो नियम्यते । यथैव चेतयमाना अर्थान्पुरुषाः स्तूयन्ते तथैव देवता अपि । तस्मात् ' पुरुषविधाः ' इत्युपपन्नम् ।

' तथाभिधानानि ' । यथैव पौरुषविध्ये स्तुतिः कारणं भवति तथैव संवादसूक्तेषु परस्परमभिधानान्युक्तप्रत्युक्तानि संबद्धार्थानि परस्परतः कयाशुभीयादिषु ' कुतस्त्वमिन्द्र ' ( ऋ० सं १ । १६५ । ३ ) इत्येवमादीनि । तस्मात्पौरुषविध्यं देवतानाम् ।

५ अभिधानतश्च पौरुषविध्यम्

अथाप्ययमपरो हेतुः पौरुषविध्ये देवतानाम् ' पौरुषविधिकैरङ्गैः संस्तूयन्ते ' । पौरुषविधिकैर्यान्यङ्गानि तैः संस्तूयन्ते । तद्यथा ' ऋष्वा त इन्द्र स्थविरस्य बाहू ' ' यत्संगृभ्णा मघवन्काशिरित्ते ' ।

१० देवतानामङ्गानि स्तूयन्ते

' उरुं नो लोकमनु नेषि विद्वान्स्वर्वज्ज्योतिरभयं स्वस्ति । ऋष्वा त इन्द्र स्थविरस्य बाहू उप स्थेयाम शरणा बृहन्ता ' ( ऋ० सं० ६ । ४७ । ८ ) ॥ शयोरार्षम् । एकादशिन्यामैन्द्रस्य पशोर्वपाया याज्या ( आश्व० श्रौ० ३ । ७ ) । उरुं लोकं विस्तीर्णं यस्त्वम् अस्मान् अनुनेषि अनुनयसि । स्वेन सुकृतेन कर्मणा गच्छतां गमनानुग्रहे वर्तसे । स्वर्वज्ज्योतिः आदित्यसमानप्रकाशं लोकम् । अभयं स्वस्ति स्वस्त्ययनाय । तस्य तव वयम् इन्द्र ऋष्वौ एतौ रेषणौ शत्रूणां स्थविरस्य महतः बृहन्तौ महान्तौ शरणौ आश्रयणीयौ नित्यम् उपस्थेयाम उपतिष्ठेमेत्येतदाशास्महे ।

१५ अस्यामृचि इन्द्रस्य बाहू स्तूयेते

२०

१ ग. ज. °मानार्था पु°. २ क. ख. घ. झ. ट. ठ. ड. श्रूयन्ते; ग. ज. सूयन्ते; च. स्तूँयन्ते° श्रू. ३ क. ख. झ. ट. ठ. ड. °विधाः स्युरित्युप'; च. विधा ˇ इ' स्युः. ४ क. ख. घ. झ. ट ठ. ड. 'विध्यमुपपद्यते चेतनावत्सदृशस्तुतिभिः तत्प्रति ताः कारणं भवन्ति, ट. पुस्तके ' 'विध्ये स्तुतिः कारण भवति ' अयं पाठो प्रान्ते दीयते. ५ क ख. ग. ज. घ. झ. ट. ठ. °विधत्वे; च. विधित्व° ध. ६ ठ. ड. इन्द्र इति । उरु°. ७ ग. उँरुं°. ८ घ. झ. ट. °मनु० शरणा०. ९ क. ख. घ. झ. ट. ठ. ड. °षम् । त्रिष्टुबैन्द्री । ए°; च. °र्षम् । ˇ ए' त्रिष्टुबैन्द्री ।. १० क. ख. घ. झ. ट. ठ. ड. °मानं प्रकाशेन लो°; च. °मानि (नं) प्रकाशं (शेन) ११ क. ख. महतः बाहू हस्तौ बृह°; च महतः ˇ बृह' बाहू हस्तौ.

२५

३१

'यत्संगृभ्णा मघवन्काशिरित्ते' ( ऋ० सं० ३ । ३० । ५ ) इति । व्याख्यातः शेषः ( निरु० ६ । १ ) । एवमस्मिन्मन्त्रद्वये बाहुमुष्टिसंबन्धदर्शनात्तत्तुल्यस्येन्द्रस्य पौरुषविध्यम् । अन्यथा हि वितथाभिधानत्वं मन्त्रयोः । तथा च सत्यानर्थक्यं मन्त्राणां सर्वेषां शास्त्रस्य च तदर्थलक्षणभूतस्य । तस्मा भूदित्यवश्यमेष्टव्यं पौरुषविध्यं देवतानामिति । ५

द्रव्यसंयोगोऽपि पुरुषविधत्वे कारणम्

'अथापि' अयमप्यपरो हेतुः पौरुषविध्ये देवतानाम् । 'पौरुषविधिकैर्द्रव्यसंयोगैः' । तद्यथा 'आ द्वाभ्यां हरिभ्यामिन्द्र याहि' 'कल्याणीर्जाया सुरणं गृहे ते' ।

'आ द्वाभ्यां हरिभ्यामिन्द्र याह्या चतुर्भिरा षड्भिर्हूयमानः । आष्टाभिर्दशभिः सोमपेयमयं सुतः सुमख मा मृधस्कः' ( ऋ० सं० २ । १८ । ४ ) ॥ १०

इन्द्रस्य हरिनामभ्यामश्वाभ्यां योगः

हे भगवन् इन्द्र यदि तावत्तव द्वौ हरी संनिहितौ ततस्तावेव युक्त्वा ताभ्याम् आयाहि । अथ चत्वारस्ततस्तैः । अथ षट् ततस्तैः । अथाष्टौ ततस्तैः । अथ दश ततस्तैः । आयाहि इदं सोमपेयं सोमपानकर्म प्रति । किमित्येवं ब्रूमहे । अयं सुतः सोमः अभिषुतस्त्वदर्थम् । स त्वं हे सुमख सुधन मा अन्तरा केनचिन्मृधः संग्रामं कार्षीः । अविलम्बितमागच्छेत्यभिप्रायः । १५

तस्य गृहं जाया च

'अपाः सोममस्तमिन्द्र प्र याहि कल्याणीर्जायाः सुरणं गृहे ते । यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो दक्षिणावत्' ( ऋ० सं० ३ । ५३ । ६ ) ॥ २०

विश्वामित्रस्यार्षम् । हारियोजनस्यानुवाक्या ( आश्व० श्रौ० ६ । ११ ) । हे भगवन् इन्द्र पीतवानसि सोमम् एतस्मिन्कर्मणि । स त्वं पुनः अस्तं गृहं

---

१ ठ. ड. 'उताभये°' इति सर्वा ऋक् पठित्वा यत्संगृ°. २ च. तथा ˇसत्या° च. ३ ग. औं द्वा०; ब. झ. ट. आ द्वाभ्यां० मृधस्कः. ४ क. ख. घ. झ. ट. ठ. ड. गृत्समद ( क. ख. °मद ऋषिः ) । ऐन्द्री । त्रिष्टुप् । हे°; च. ˇहे° गृत्समद ऋषिः । ऐन्द्री । त्रिष्टुप्°. ५ क. ख. घ. झ. ट. रथे युक्त्वा; च. °वेव ˇयुक्त्वा° रथे. ६ च. ज. सुतः. ७ ग. च. ज. °भिष्टुत°. ८ ग. अपाः. ९ घ. झ. ट. °मस्तं० वाजिनो०. १० ग. सुरणं ० । विश्वा°. ११ क. ख. घ. झ. ट. ठ. ड. °र्षम् । त्रिष्टुप् । हा°; च. र्षम् । ˇहा° त्रिष्टुप् । २५ ३०

प्रयाहि । यस्मात्तत्र कल्याणीर्जाया तत्र । बृहतः च रथस्य निधानं रथशाला । विमोचनं च वाजिनो जित्वा संग्राममागतस्य । दक्षिणावत् अन्यदपि यद्यद्रमणीयं तत्तत्सर्वं तव गृहे वर्तते । तस्मात्पुनरस्तं प्रयाहि ।

एवमेतयोर्मन्त्रयोर्हरिगृहजायारथाभिसंबन्धात्पौरुषविध्यमिन्द्रस्य । न ह्यपौरुषविध्ये सति संबन्धो जायादिभिरस्ति ।

५

' अथापि ' अयमपरो हेतुः पौरुषविध्ये । कतमः । ' पौरुषविधिकैः कर्मभिः ' संस्तूयन्ते देवताः । तद्यथा । ' अद्धीन्द्र पिब च प्रस्थितस्य ' ' आश्रुत्कर्ण श्रुधी हवम् ' ।

कर्माण्यपि पुरुषविधत्वे कारणम्

१० ' इदं हविर्मघवन्तुभ्यं रातं प्रति सम्राळ्हृणानो गृभाय । तुभ्यं सुतो मघवन्तुभ्यं पक्वो३ द्धीन्द्र पिब च प्रस्थितस्य ' ( ऋ० सं० १० । ११६ । ७ ) ॥ अग्नियुतो नाम स्थूरपुत्रस्तस्यार्षम् । हे मघवन् इन्द्र हविः आज्यादिकं तुभ्यं रातं मनसास्माभिः पूर्वनिर्वपणादौ संस्कारकाले हे सम्राट् प्रतिगृहाण । अपि च । तुभ्यं त्वदर्थमेवायं सुतः अभिषुतः सोमः । अपि च । हे मघवन् त्वदर्थमेवैष पुरोडाशः पक्वः । स त्वमस्य सोमस्य प्रस्थितस्य अद्धि पिब च स्वमंशमिति शेषः ।

इन्द्रोऽत्तुं पातुं च प्रार्थ्यते

१५

' आश्रुत्कर्ण श्रुधी हवं नू चिद्दधिष्व मे गिरः । इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम् ' ( ऋ० सं० १ । १० । ९ ) ॥ मधुच्छन्दस

२०

---

१ क ख. घ झ. ट ठ ड. °दपि सुरण यद्य°; च. °दपि ˇ यद्य° सुरणं. २ ग. हवम् । २५ । इदं° ३ ग °वन्० । अग्नि°; घ झ. ट. °वन् ० पिब°. ४ क. ख. च. सम्राडहृ°; ज. सम्रालहृ°. ५ क. ख. घ झ ट. ठ. ड. °र्षम् । त्रिष्टुप् । ऐन्द्री । हे°, च. °र्षम् । ˇहे° त्रिष्टुबेन्द्री । . ६ क. ख. घ. झ. ट. ठ. ड इदं हवि°. ७ क. ख. घ. झ. ट ठ ड. °स्माभिर्निरुप्तं पूर्वं नि°; च. °स्माभिः पूर्वं° निरुप्तं पूर्वं. ८ क ख. घ. झ ट. ठ. ड. तदिदानीं हे; च. ˇ हे° तदिदानीं. ९ क. ख. घ. झ. ट. ठ ड °म्राट् अहृणानः प्रति°; च. °म्राट् ˇ प्रति° अहृणान्. १० ग. शेषः । २६ । आ°. ११ ग. °त्कर्ण० । मधु°; घ. झ. ट. °त्कर्ण० युज°.

२९

आर्षम्[1] । श्रोतारौ यस्य कर्णौ अप्रतिहतश्रवणौ सर्वत्र स भवति श्रुत्कर्णः । तस्य संबोधनम् । हे श्रुत्कर्ण आभिमुख्येन श्रुधि शृणु त्वमाह्वानमस्माकम् । श्रुत्वा च नू चित् पुराण इव दधिष्व धारयस्व एता अस्मद्गिरः हृदयेन । किंच । हे मघवन् इन्द्र मेम[2] इमं स्तोमं युजः त्वद्युक्तस्य त्वां प्रत्याहृतस्य पुनःपुनरपि ब्रुवतः कृण्व कुरुष्व श्रोतुम् अन्तरम् । क्षणमित्यर्थः ।

श्रोतुं च

एवमनयोर्मन्त्रयोरर्थ्यौ[3]शृणुहीत्यामन्त्रणपूर्वकमदर्नैश्रवणपूर्वको विनियोगः । स न संभवत्यपौरुषविध्ये । न हि गवादयोऽर्थ्यौ[5]शृणुहीत्युक्ताः किंचित्प्रतिपद्यन्ते । तस्मात्कार्यकरणसंनिवेशो मनुष्यवद्देवतानाम् । कार्यकर्[6]रणापेक्षं च विज्ञानम् । तदेवमेतेभ्यो मन्त्रदर्शनेभ्यः स्थितं पौरुषविध्यं मन्त्रे देवतानामितिं[7] ।

एवं देवतानां पौरुषविध्यम्

अपुरुषविधा स्युरित्यपरम् ' । दर्शनमिति वाक्यशेषः । तदुक्तम् । ' अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्ति ' ( निरु० २ । १६ ) इति । विज्ञायते 'तदाहुर्नैतदस्ति यद्दैवासुरम्' ( शत० ब्रा० ११ । १ । ६ । ९ ) इति चैं[8] ' न त्वं युयुत्से ' ( शत० ब्रा० ११ । १ । ६ । १० ) इति । अपि चैतदुक्तमेव ( निरु० ७ । ५ ) ।

अपुरुषविधा देवताः स्युरित्यपरं मतम्

' अपि तु यद्दृश्यते[9] ' देवानां किंचित् ॥ ६ ॥[10]

---

१ क. ख. घ. झ. ट. ठ. ड. °आर्षम् । अनुष्टुबैन्द्री । श्रो°; च. आर्षम् । ४ श्रो° अनुष्टुबैन्द्री । . २ ग. च. ज. मे मम°. ३ क. ख. ग. ज ठ. अध्याशृ°; च. अर्ध्यौशृ° द्वया. ४ घ. झ. ट. ठ. ड. 'र्वकादनश्च°'. ५ ' अध्याशृ° ' इति सर्वेषु पुस्तकेषु. ६ क. ख. घ. झ. ट. ठ. ड. कार्यकार°. ७ क. ख. °मिति । २ ( ६ ) । अपु°; ग. °मिति । ७ । अपु°; घ. ट. च ज. ' मिति ' इत्यस्यानन्तरं खण्डसमाप्तिद्योतकं चिह्नम्. ८ क. ख. घ. झ. ट. ठ. ड. 'च' नास्ति; च. चं. ९ च. °श्यते° । दे°. १० ठ. इति निरुक्त० उत्तर० प्रथ० आदितः सप्त० षष्ठः खण्डः । ६ । ; ड. इति नैरुक्तटीकायामुत्तरषट्के प्रथमाध्याये षष्ठखण्डः । ६ ।; इतरेष्वङ्को नास्ति.

अपुरुषविधं तद्यथाग्निर्वायुरादित्यः पृथिवी चन्द्रमा इति यथो एतच्चेतनावद्वद्धि स्तुतयो भवन्तीत्यचेतनान्यप्येवं स्तूयन्ते यथाक्षप्रभृतीन्योषधिपर्यन्तानि ( निघ० ५ । ३ । ४—२२ ) यथो एतत्पौरुषविधिकैरङ्गैः संस्तूयन्त इत्यचेतनेष्वप्येतद्भव-
५ त्यभि क्रन्दन्ति हरितेभिरासभिरिति ग्रावस्तुतिर्यथो एतत्पौरुष-विधिकैर्द्रव्यसंयोगैरित्येतदपि तादृशमेव सुखं रथं युयुजे सिन्धु-रश्विनमिति नदीस्तुतिर्यथो एतत्पौरुषविधिकैः कर्मभिरित्येतदपि तादृशमेव होतुश्चित्पूर्वे हविरद्यमाशतेति ग्रावस्तुतिरेवापि वोभय-विधा स्युरपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युर्यथा
१० यज्ञो यजमानस्यैष चाख्यानसमयः[1] ॥ ७ ॥

सप्तमाध्यायस्य प्रथमः पादः ॥

---

'अपुरुषविधम्[2]' । अपुरुषप्रकारं तदित्यर्थः । 'तद्यथाग्निर्वायुरादित्यः पृथिवी चन्द्रमा इति' । प्रत्यक्षत एतान्यपुरुषप्रकाराणीति । एतेषामतोऽन्यथाभ्युपगमे दृष्टहानिः स्यात् । न चैतदिष्टम् । तस्मादपुरुषविधा अग्न्यादयः । तत्सामान्याददृष्टा इन्द्रादयोऽप्यपुरुषविधाः । न हि मनुष्यत्वे तुल्ये केचिदाकारिणः केचिदनाकारिण इति । तथैव देवतानामपि हि न्यायः । तस्मादपुरुषविधा इति ।

यथाग्न्यादयोऽपुरुषविधास्तथेन्द्रादयोऽपि

'यथो एतच्चेतनावद्वद्धि स्तुतये भवन्तीति' । अचेतनान्यप्येवं स्तूयन्ते 'यथाक्षप्रभृतीन्योषधिपर्यन्तानि' । तस्माच्चेतनावत्स्तुतिमत्त्वमहेतुः पौरुषविध्ये देवतानामचेतनेष्वप्यक्षादिषु चेतनावत्स्तुतेर्दृष्टत्वादिति ।

२० चेतनावत्स्तुतिमत्त्वमहेतुः पौरुषविध्ये

'यथो एतत्पौरुषविधिकैरङ्गैः संस्तूयन्त इति' । अयमप्यहेतुर्व्यभिचारितत्वात्[3] । 'अचेतनेष्वप्येतद्भवति' । तद्यथा 'ग्रावस्तुतिः[4]' । 'एते

---

१ क. ख. इति सप्तमाध्यायस्य द्वितीयः पादः; छ. ॥८॥ प्रथमः पादः ॥ तिस्र°; त. ॥८॥ सप्तमोध्यायः प्रथमः पादः । तिस्र°; द. ८ इति नैरुक्ते उत्तरार्धस्य प्रथमाध्यायस्य प्रथमः°; ड. थ. ध. 'सप्त० पादः' नास्ति. २ ठ. ढ. विधमिति । अपुरुषप्रकारं°. ३ क. ख. ग. ङ. ट. 'भिचारितत्वात्; च. °भिचा (च) रि॰त्वात्° त, ठ ढ. °भिचारत्वात् ४ म. °स्तुतिः । २५ । एते°.
२१

वदन्ति शतवत्सहस्रवदभि क्रन्दन्ति हरितेभिरासभिः । विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया होतुश्चित्पूर्वे हविरद्यमाशत ' ( ऋ० सं० १० । ९४ । २ ) ॥

अचेतना ग्रावादयोऽपि पौरुषविधिकैरङ्गैः संस्तूयन्ते

अर्बुदस्यार्षम् । ग्रावस्तुतिः । एते ग्रावाणः अभिषवकर्म कुर्वाणा वदन्ति । कथम् । शतवत् शतमिव । सहस्रवत् सहस्रमिव । शब्दबाहुल्याभिप्रायम् । अभिक्रन्दन्ति आह्वयन्ति सोमपातॄन् आगच्छतास्माभिरभिषुतं सोमं पातुमिति । तत्र येयं विष्ट्वी ग्राव्णाम् एतया सुकृत्या शोभनया क्रियया एते सुकृतः शोभनस्य कर्मणः कर्तारो होतुश्चित्पूर्वे होतुरप्यग्नेः मनुष्यहोतुर्वा पूर्वं प्रथमतरं हविः एतत्सोमाख्यम् अद्यम् अदनीयम् आशत अश्नन्ति । अभिषवे सोमसंयोगमात्रमशनमुपचर्यते ग्राव्णाम् । तस्मादपौरुषविध्यमिति । न हि ग्राव्णां यथाभूतान्यास्यानि सन्ति यैत्संयोगेन च स्तूयन्ते । तद्वदिन्द्रादीनामप्ययथाभूतैर्बाहुमुष्ट्यादिभिः स्तुतिः स्यात् । तस्मादहेतुरयं यत् ' पौरुषविधिकैरङ्गैः संस्तूयन्ते ' इति । तस्मादपुरुषविधाः ।

'यथो एतत्पौरुषविधिकैर्द्रव्यसंयोगैरिति । एतदपि तादृशमेव ' । औपचारिकम् । रूपकमात्रमित्यर्थः । यथैव ह्यास्यादिकल्पना दृष्टव्यभिचारित्वाद् ग्रावप्रभृतिषु न संभवति । रूपकमात्रं स्तुत्यर्थम् । संकल्पतो बाह्वादिकार्यसिद्धिः । एवं हारिरथजायादिस्तुतयो रूपकमात्रमिति । अपि च । ' सुखं रथं युयुजे सिन्धुरश्विनमिति नदीस्तुतिः ' । न चास्यां स्तुतौ यथाभूता रथोऽश्वोपपत्तिरस्त्यसंभवात् ।

द्रव्यसंयोग औपचारिकः

१ क. ख. घ. झ. ट. ॑दन्ति शतवत् ० हवि॑; ग. ॑दन्ति० । अर्बु॰. २ क. ख. घ. झ. ट. ठ. ड. ॑र्षम् । जगती । ग्रा॰; च. 'र्षम् ⌄ । ग्रा॰ जगती । . ३ ठ. ड. आगता॰. ४ ' हरितेभिरासभिः ' इत्यस्य सायणकृतं विवरणं ट. पुस्तके प्रान्ते लिखितम् । तत् ' पातुमिति ' इतस्यानन्तरं क ख. ट. ठ ड पुस्तकेषु लिख्यते । तद्यथा । ' पातुमिति । हरितेभिः सोमसंसर्गात् हरिद्वर्णैः आसभिः आस्यैः ' तत्र॰. ५ क. ख. घ झ. ट. ठ. ड. विष्ट्वी व्याप्तिः ग्रा॰; च. विष्ट्वी ⌄ ग्रा॰ व्याप्तिः. ६ ग. ज. घ. झ. ट. ठ. ड. तत्सं॰; घ. यैत्सं॰ त. ७ क. ख. घ. झ. ट. ठ. ड. भूतार्थत्वेोपप॰; च. भूता रथाश्वोप॰ र्थत्वो.

कथमसंभवः । न ह्युदकात्मिकाया नद्या वहन्त्या रथेऽवस्थानं संभवतीति ।

'सुखं रथं युयुजे सिन्धुरश्विनं तेन वाजं सनिषदस्मिन्नाजौ । महान्ह्यस्य महिमा पनस्यतेऽदब्धस्य स्वयशसो विरप्शिनः' ( ऋ० सं० १० । ७५ । ९ )॥ सिन्धुक्षिन्नाम प्रियमेधमः पुत्रः । तस्येयमार्षम् ।

5 यथा नदीस्तुतौ — सुखं सुखहेतुं लोकस्य रथं रहणम् उदकं युक्तवती सिन्धुः नदी अश्विनम् अशनेन व्यापनेन तद्वन्तम् उदकरथम् । तेन वाजम् अन्नं सनिषत् संभक्तवती उत्पादितवती अस्मिन्नाजौ आजवने संग्रामे । यतो यतो गच्छति ततस्ततो व्रीह्याद्यन्नमभिनिष्पादयतीत्यर्थः । यस्माद्वायमुदकरथोऽन्नमभिनिष्पादयति तस्मात्तस्य महान्महिमा माहाभाग्यं पनस्यते स्तूयते स्तोतृभिः । 10

अदब्धस्य अनुपदस्तस्य विरप्शिनो विरपणशीलस्य । शब्दकारिण इत्यर्थः । रथमिवाश्विनमिति केचित् ।

तदेवमादिष्वसंभवान्मुख्यार्थकल्पनायाः सर्वत्र रूपकप्रवादाः स्तुतय इत्युपेक्ष्यम् ।

15 'यथो एतत्पौरुषविधिकैः कर्मभिरिति । एतदपि तादृशमेव' । 'होतुश्चित्पूर्वे हविरद्यमाशतेति' अशनशक्तिक्रियया ग्रावाणः स्तूयन्ते । न च पुनर्ग्राव्णां यथाभूतमशनमस्ति । तस्मादिदमपि रूपकमेव । 'एते वदन्ति' इत्यत्र ( पत्रं ६५३ ) व्याख्यातम् ।

पौरुषविधिकानि कर्माण्यप्यौपचारिकाणि

20 'अपि वोभयविधा स्युः' उभयहेतुप्रामाण्यात् । 'अपि वा पुरुषविधानामेव सतां' पृथिव्यादीनां 'कर्मात्मान एते स्युः' । अपुरुषविधाः क्षितिजलादयः । परे त्वधिष्ठातारः पुरुषविग्रहाः । एवमुभयोः प्रत्यक्षागमयोरप्यनुग्रहः कृतो भविष्यति । 'यथा यज्ञो यजमानस्य' कर्मात्मा । 25

अथवा देवता उभयविधाः स्युः

---

१ ग. °वति । २८ । सुखं°. २ ग. रथं ० । सिन्धु°; घ. ट. रथं युयुजे० विरप्शिनः. ३ क ग. घ. ट. ठ. ड. °र्षम् । जगती नदीस्तुतिः । सुखं°; च. °र्षम् । ४ सुख° जगती नदीस्तुतिः । . ४ ग. ज. ससनिषत्; च. ससनिषत्. ५ क. ख. घ. झ. ट. ठ. ढ. °स्तस्य स्वयशसः स्वायत्तकीर्तेः विर°; च. °स्तस्य ४ विर° स्वयशसः स्वायत्तकीर्तेः. 30

अथवा देवताः कर्मात्मानः स्युः

'इदमेतेनो[1]ङ्गं संम्क्रियते इदमेतेनोङ्ग[2]मुपधीयैं[3]न इति (शत० ब्रा० ११।२।६।१३) 'संस्कृतममुष्मिँल्लोके उँपैति' (मैत्रा० सं० ४।१।८) इति वि[4]ज्ञायते।

'एष चाख्यानसमयैः[5]'। भारते चाख्यानसमयः। एष एव सिद्धान्त इत्यर्थः। पृथिवी स्त्रीरूपेण भारावतैरणाय[6]

एष महाभारतादीनां सिद्धान्तः

ब्रह्माणं ययाचे (महाभा० आदि० ६४)। अग्निश्च ब्राह्मणरूपेण वासुदेवार्जुनावुभौ खाण्डवं ययाचे (महाभा० आदि० २२४—२२५)। पुरुषरूपेण (महाभा० आदि० २३०) अग्निरूपेण (महाभा० आदि० २२७) च खाण्डवं ददाह इत्येवमादिनाँ[7]।

तदेतच्चतुर्धा भिद्यते मन्त्रार्थदर्शनादेव पौरुषविध्यमपौरुषविध्यं कर्मार्थौभयविध्यं[8] नित्यमौभयविध्यमेवेति। सर्वं चैतदुपपद्यते। माहाभाग्ये

एवं देवताकारविचारे चत्वारि मतानि सर्वाण्यविरुद्धानि च

सत्यैश्वर्योत्कथमिव देवता न स्यादमूर्ता मूर्ता एकधा द्विधा बहुधा वे[9]ति। यथा तु वर्तमानामपश्यन् मन्त्रदृशस्तथा तथास्तुवन्। सर्वथैवादोषः फलदर्शनान्नानावस्थादर्शनवदाख्यातृणाम्। परिदेवनानिन्दादिष्वपि वेन्द्रादीनां काममेतस्तद्रूप[10]मवस्थितानां सा सा स्तुतिरेव न निन्दा। उक्तं च 'हीना न निन्दा स्तुतिरेव सा[11]स्यां देवान्मर्त्यः सम्यगभिष्टुयात्कः। शक्तिक्षयेऽप्यध्यवस्यन्ति शिष्टाः स्तोतुं न पश्यन्ति गतिं यतोऽन्याम्' इति॥ ७[12]॥

---

१ घ. झ. ट. ठ. ड. इदमेनेना°; च. इदमेतेना° दं मेने. २ ग. च. ज. °नागमु°. ३ क. ख. घ. झ. ट. ठ. ड. °मुपचीय°. ४ क. ख घ. झ. ठ. ड. परैतीति च वि°; ठ. परैतीति च वि° उपै. ५ ड. °समयः। ७। भार°. ६ क. ख. घ. झ. ट. ठ ड. °वतार°. ७ क. ख. घ. झ. ट. ठ. ड. °मादि। त°. ८ क. ख. घ. ट. ठ. ड. कर्मार्थात्मोभय°; ग. ज. कर्मार्थभय°; च. कर्मार्थौभ° र्थात्मो. ९ क. ख. घ. झ. ट. ठ. ड. चेति. १० क. ख. घ. झ. ट. ठ. ड. कामकारतस्त°; ग. ज. कामयतस्त°; च. कामन्त° कार ११ क. ख. घ. झ. ट. सास्याद्देवा°; च. सास्याँद्देवा° स्या दे; ठ. ड. सास्य. १२ क. ख. ३ (७); घ ८; इतरेष्वङ्को नास्ति.

द्वादशाध्यायस्य द्वितीयः पादः।[1]

---

तिस्र एव देवता इत्युक्तं पुरस्तात्तासां भक्तिसाहचर्यं व्याख्यास्यामोऽथैतान्यग्निभक्तीन्ययं लोकः प्रातःसवनं वसन्तो गायत्री त्रिवृत्स्तोमो रथन्तरं साम ये च देवगणाः समाम्नाताः प्रथमे स्थानेऽग्नायी पृथिवीळेति[2] स्त्रियो[3]ऽथास्य कर्म वहनं च हविषामावाहनं च देवतानां यच्च किंचिद्दार्ष्टिविषयिकमग्निकर्मैव तदथास्य संस्तविका देवा इन्द्रः सोमो वरुणः पर्जन्य ऋतव आग्नावैष्णवं[4] हविर्नत्वृक्संस्तविकी दशतयीषु विद्यतेऽथाप्याग्नापौष्णं हविर्न तु संस्तवस्तत्रैतां विभक्तै[5]स्तुतिमृचमुदाहरन्ति ॥ ८ ॥[6]

---

आकार[7]चिन्तनव्यवधानाद्देवतात्रयाधिकारस्य तद्विशेषस्यै[8] विवक्षया तदनुस्मृतये तत्प्रकरोति[9] ' तिस्रः एव देवताः इत्युक्तं पुरस्तात् ' इति । यः पुनस्तत्र विशेषो विवक्षितः स उच्यते । ' तासां भक्तिसाहचर्यं व्याख्यास्यामः '।[10] तासामेव तिसृणाम् । भक्तिश्च साहचर्यं च भक्तिकृतं वा साहचर्यमिति । लोकादीनामे[11]वाग्न्यादिभिः भजनं भक्तिः । सहचरभावः साहचर्यम् । तत्किमर्थमुच्यते । असंविज्ञातदेवता[12]पदे मन्त्रे भक्त्या साहचर्येण वा यथा देवता गम्येतेत्येवमर्थं भक्तिसाहचर्यमुच्यते ।

**तिसृणां देवतानां भक्तिसाहचर्यम्**

---

१ क. ख. इति निरुक्तवृत्तौ द्वाद°; ग झ. ट. इति द्वादशस्य द्वि°; ठ. इति निरुक्तवृत्तौ निघण्टुभा ० द्वादशस्य आदितः सप्तमस्योत्तरषट्कप्रथमाध्यायस्य सप्तमः खण्डः । ७ । द्वितीयः पादः; ड. इति निघण्टपञ्चकेन सह द्वादशाध्यायस्य द्वितीयः पादः । इति नैरुक्तोत्तरषट्के प्रथमाध्याये सप्तमः खण्डः । ७ ।. २ क. ख. छ. त. द. °वीलेति. ३ ठ. ड. स्त्रियः । अथा°. ४ क. ख. छ. त. द. °ष्णव च हवि°. ५ क. ख. ठ. ड. °भक्तिस्तु°. ६ क. ख. १ ( ८ ); छ. ९; त. द. १. ७ क. ख. घ. झ. ट. ठ. ड. अथाकार°; ग. ज. आत्यंतकार°; च. ˇ आकार° अथ. ८ क. ख ग. ज. घ. झ. ट. ठ. ड. °शेषविव°; च. शेषस्यै° ९ क. ख. घ. ट. ठ. ड. °तये च स एतत्प्र°; ग. ज. °तये स एतत्र°; च. °तये तत् प्र° च स एत; झ. °तये च एतत्प्र. १० क. ख. घ. झ. ट. तिसृणां भक्तिसाहचर्यं भक्तिश्च°; च. तिसृणां ˇ भक्तिश्च° भक्तिसाहचर्यं; ठ. ड. °तासां भक्तिसाहचर्यं व्याख्यास्यामः। तासामेव तिसृणां भक्तिसाहचर्यं भक्तिश्च°. ११ च. लोकादिनीना° दी. १२ क. ख. ग. ज. ' देवता ' नास्ति.

यद्येवमुष्यतां तर्हि कानि किंभक्तीनीति । तदुच्यते । अथैतान्यग्निभक्तीनि । अथेति विशेषाधिकारे । अग्निं भजन्ते अग्निना वा भज्यन्ते इत्यग्निभक्तीनि । कतमानि । ' अयं लोकः '

पृथिव्यादीन्यग्निभक्तीनि

इत्येवमादीन्यग्निभक्तीन्यवगन्तव्यानि । ' ये च देवगणाः समाम्नाताः प्रथमे स्थाने ' तद्यथा ५ 'आप्रियः' ( निघ० ५ । २ ) ' अक्षाः ग्रावाणोऽभीशवः ' ( निघ० ५ । ३ ) इत्येवमादीनि ' अग्नायी पृथिवी इळा इति स्त्रियः ' । इळा पृथिवी अग्नायी इति क्रमेण वक्तव्ये क्रमभेदः । अग्नायी तत्समाख्यानात्संनिकृष्टतरा न तथा पृथिवीति तस्मात्प्रथममुच्यते । ततः पृथिव्याश्रयसंबन्धादग्नेः । न तथेळा पारोक्ष्यादभिधेयस्य । आप्रीमध्ये ' तिस्रो देवीः ' इत्यत्र इळा भारत्या द्युस्थानाया अनन्तरं श्रूय- १० माणा ' आ नो यज्ञं भारती तूयमेत्विळा

इळा कथं पृथिवीस्थाना

मनुष्वत् ' ( ऋ० सं० १० । ११० । ८ ) इति । कथं पृथिवीस्थानेति । उच्यते । अनुयाजेषु सामर्थ्यात् । ' द्यां भारत्यादित्यैरस्पृक्षत्सरस्वतीमं रुद्रैर्यज्ञमावीदिहैवेळया वसुमत्या ' ( मैत्रा० सं० ४ । १३ । ८ ॥ १५ तैत्ति० ब्रा० ३ । ६ । १३ । ७ ) इत्यतः सामर्थ्यमुन्नीय वसुसाहचर्यात् 'इहैवेळया' इति चाग्निभक्तिरिळेत्याह । रुद्रैः साहचर्यात्सरस्वती मध्यस्थाना । आदित्यैः साहचर्याद्भारती द्युस्थानेति ।

' अथास्य कर्म ' । अथास्याग्नेः कर्म सहभावि अनन्यदेवतागामि २० यत्संयोगादसत्यप्यग्निशब्दे आग्नेय एव मन्त्रो

अग्नेः कर्म

भवति । ' वहनं च हविषाम् ' इत्येवमादि । ' दार्ष्टिविषयिकम् ' । दृष्ट्यनुग्रहो यस्य विषयस्तद्दार्ष्टिविषयिकम् । प्रकाशादि कर्मेत्यर्थः । ' अग्निकर्मैव तत् ' इति प्रकृते पुनर्वचनमादरार्थमध्यात्मेऽपि यावान्कश्चित्प्रकाश इति ।

---

१ क. ख. ग. च. ज. घ. झ. इला. २ क. ख. घ. झ. इडा; ग. च. ज. इडा. ३ क. ख. घ. झ. ट. ठ. ड. तत्समानाख्या°. ४ क. ख. घ. झ. ग. च. ज. इला. ५ क. ख. घ. झ. इवेळया; ग. च. ज. इवेडया. ६ च. दृष्ट्यनुग्र° इच. ७ च. प्रकृतिपुन° ते. ८ च. °त्प्रकाशादिकर्मेत्यर्थः । अग्निकर्मैवतदिति° श इ. २१

'अथास्य संस्तविका देवाः' यैः सहाग्निः स्तूयते । तद्यथा 'इन्द्रः सोमः' इत्येवमादयः । मन्त्रस्वभावोपदर्शनाय संस्तवोदाहरणम् । अग्नेः पूर्वनिपाताद्देवताद्वन्द्वे मुख्यता ।

अग्नेः संस्तविका देवाः

५ 'अग्न इन्द्रश्च दाशुषो दुरोणे सुतावतो यज्ञमिहोप यातम् । अमर्धन्ता सोमपेयाय देवाः' ( ऋ०सं०३ । २५ । ४ ) इति ॥ विश्वामित्रस्येयमार्षम् । आग्रायणे विनियोगः ( मैत्रा० सं० २ । ६ । २ ॥ ४ । ३ । २ ) । हे भगवन् अग्ने त्वम् इन्द्रश्च अस्य दाशुषो दत्तवते हवींषि यजमानस्य दुरोणे यज्ञगृहे सुतावतः अभिषुतवतः सोमं मृधं संग्रामम् अकुर्वाणौ अन्तरा केनचित्सह सोमपेयाय सोमपानार्थम् उपयातमित्येतदाशास्महे ।

१० इन्द्रेण सह स्तवः

'अग्नीषोमाविमं सु मे शृणुतं वृषणा हवम् । प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः' ( ऋ० सं० १ । ९३ । १ ) ॥ सोमेन सह संस्तवः । गोतमस्यार्षम् । पौर्णमास्येऽग्नीषोमीयस्यानुवाक्या ( काठक सं० ८ । १० ) । हे अग्नीषोमौ युवामुच्येथे । इमं हवम् आह्वानं मे सुष्ठु शृणुतं वृषणौ वर्षितारौ । श्रुत्वा चागच्छतमागत्य च प्रतिहर्यतं प्रतिप्रेप्सतम् । मया पूर्वं प्रेप्सितौ प्रतिकामयेथामिमानि सूक्तानि श्रोतुम् । श्रुत्वा चेमानि भवतं दाशुषे युवां हविर्दात्रे मयः । सुखावित्यर्थः ।

१५ सोमेन सह

२०

---

१ च. संस्तविका° सां २ क. ख. घ. झ. ट. ठ. ड. °भावोपप्रद°. ३ ग. इन्द्रश्च । २८ । इति । वि°; घ. झ. ट. इन्द्रश्च दाशुष इति वि°. ४ घ. ट. [ठ. ड. 'इति' नास्ति. ५ क. ख. घ. झ. ट ठ. ड. °र्षम् । विराडनुष्टुप् । आग्रय°; च. °र्षम् । आग्रय° विराडनुष्टुप् । . ६ क. ख. घ. झ. ट. ठ ड. °न्द्रश्च देवा देवो अस्य; च. °न्द्रश्चाँ स्य श्चदेवा देवो अ. ७ क. ख. घ. झ. ट. ठ. ड. °वतः यज्ञं सो°. ८ ग. °स्महे । २९ । अग्नी°. ९ ग. ज. °विमामिति । सो°; घ. झ. ट. °विमं सु मे दाशुषे मयः। सो°. १० क. ख. घ. झ. ट. °र्षम् । अनुष्टुप् । पौ°; च. °र्षम् । पौ° अनुष्टुप् ।. ११ क. ख. घ. झ. ट. ट. ड. °मासे अग्नीषोमस्या°; च. मास्येऽग्नीषोमीय° सेऽग्नीषोम. १२ घ. ठ. ठ. ड. °ह्वानं मया पूर्वं प्रे° १३ ग. °त्यर्थः । ३० । तं°.

२५

३०

'त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेळोऽव यासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत्' ( ऋ० सं० ४ । १ । ४ ) ॥ वरुणेन संस्तवः । वामदेवस्यार्षम् । अवभृथे विनियोगः ( आश्व० श्रौ० ६ । १३ ) । हे भगवन् अग्ने त्वम् अस्मान् यथावत् विद्वान् जानानो भक्ता ममैत इति वरुणस्य देवस्य योऽस्मान्प्रति हेळः क्रोधः तमनेनावभृथकर्मणा अवयासिसीष्ठा अपगमय । किं च । यस्त्वं यजिष्ठो यष्टृतमो देवानां होतृत्वे वर्तमाने वह्नितमो वोढृतमश्च हविषां स त्वं पुनः पुनः शोशुचानो देदीप्यमानः तेषु तेषु कर्मसु विश्वानि सर्वाणि द्वेषांसि द्वेष्याणि प्रकर्षेण अस्मत् अस्मत्तो मुमुग्धि मुञ्च । वियोजयेत्यर्थः ॥ १०

वरुणेन सह

'अग्नीपर्जन्याववतं धियं मेऽस्मिन्हवे सुहवा सुष्टुतिं नः । इळामन्यो जनयद्गर्भमन्यः प्रजावतीरिष आ धत्तमस्मे' ( ऋ० सं० ६ । ५२ । १६ )॥ पर्जन्येन संस्तवः । भरद्वाजस्यार्षम् । हे अग्नीपर्जन्यौ युवामुच्येथे । अवतम् आगच्छतम् इमां धियम् इदं कर्म प्रति मे मम अस्मिन् हवे अस्मिन्नाह्वाने सुहवौ स्वाह्वानौ सुष्टुतिं शोभनामिमां स्तुतिं श्रोतुम् । आगत्य च श्रुत्वेमाम् इळाम् अन्नम् अन्य एको जनयतु । गर्भमन्यः । गर्भमेको जनयतु । तौ युवामेवं प्रतिसंवत्सरं प्रजावतीः प्रजासंयुक्ता इषः अन्नानि आभिमुख्येन स्थित्वा धत्तं दत्तम् अस्मे । अस्मभ्यमित्यर्थः । १५

पर्जन्येन सह

---

१ ग. च. ज. °णस्येति वरुणे°; घ. झ. ट. 'णस्य० ग्ध्यस्मत् । वरुणे° २ क. ख. हेलोऽव°. ३ क. ख. घ. झ. ट ठ. ड. °र्षम् । त्रिष्टुप् । अव°; च. °र्षम् । ॰ अव° त्रिष्टुप् ।. ४ क. ख. ग. च. ज. घ. झ. हेलः. ५ ग. च. ज. 'सः' नास्ति. ६ घ. ठ. ड 'पुनः' सकृदेव. ७ क. ख. घ. झ. ट. ठ. ड. अवयो°; च. वियो° अव. ८ ग. 'त्यर्थः । ३१ । अग्नी°. ९ ग. 'वतं° । पर्ज°; घ. झ. ट. वतं० इष°. १० क. ख. च. ज. इलाम°. ११ क. ख. घ. झ. ट. ठ. ड. 'र्षम् । त्रिष्टुप् । हे°; च. °र्षम् । ॰ हे° त्रिष्टुप् ।. १२ क. ख. घ. झ. ट. ठ. ड. °इडाम्. १३ क. ख. घ. झ. ट. ठ. ड. जनयत् जनयतु; च. जन-यत् ॰ । गर्भ° जनयतु. १४ ग. °त्यर्थः । ३२ । अग्ने°. २० २५

' अग्ने देवाँ इहा वह सादया योनिषु त्रिषु । परि भूष पिब ऋतुना '

( ऋ० सं० १ । १५ । ४ ) ॥ ऋतुभिः संस्तवः । मेधातिथेरार्षम् । ऋतुयाजेषु विनियोगः ।

ऋतुभिः सह

हे भगवन् अग्ने देवान् इह अस्माकं कर्मणि आवह आह्वय । आहूय देवान् सादय योनिषु त्रिषु । सवनेषु त्रिष्वेतान्यथाकालं यज । अमुना प्रकारेण परिभूष सर्वतो देवयागेनालंकुरुष्वैतं यज्ञम् । आत्मना पिब चैतं सोमम् ऋतुना सह ।

' आग्नावैष्णवं च हविः ' । हविर्ग्रहणाद्धविष एव संप्रदानार्थं या ऋचस्ताः संस्तवेनाग्नाविष्ण्वोः सन्ति । तद्यथा ।

' अग्नाविष्णू सजोषसेमा वर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरा गतम् '

आग्नावैष्णवं हविः

( मैत्रा० सं० ४ । १० । १ ॥ ४ । ११ । २ ॥ तैत्ति० ४ । ७ । १ ) इत्येवमाद्या ॥ वामदेवस्येयमार्षम् । आग्नावैष्णवे हविषि विनियोगः ( मैत्रा० सं० १ । ४ । १४ ॥ २ । १ । ७ ॥ २ । ३ । ५ ॥ तैत्ति० ४ । ७ । १ ) । हे अग्नाविष्णू सजोषसा सजोषसो नित्यं समानप्रीती युवामुच्येथे । एताः अस्मद्गिरः अस्मत्स्तुतयः वर्धन्तु वर्धयन्तु युवाम् । वृद्धौ च सत्यामस्मत्संप्रदेयैः द्युम्नैः द्योतनवद्भिः वाजेभिः अन्नैः अभ्युद्यतैः अस्मान्प्रति आयातम् ।

' न त्वृक्संस्तविकी दशतयीषु विद्यते ' । ' न ' इति प्रतिषेधः ।

अग्नाविष्ण्वोः संस्तविकी ऋग्दशतयीषु न विद्यते

' तु ' शब्दोऽवधारणार्थः । ऋक् संस्तविकी संस्तवयुक्ता । दशतयीषु । दशमण्डलावयवप्रविभागेन तायत इति दशतयः ऋग्वेदः तस्य शाखाः दशतय्यः तासु तासु सर्वास्वपि शाखासु एकापि हविषि अविनियुक्ता शस्त्रमध्यपातिनी ऋग-

---

१ ग. सादय० । ऋतु°; घ. झ. ट. सादय० ऋतुना. २ क. ख. घ. झ. ट. ठ. ड. °र्षम् । गायत्री । ऋतु°; च° र्षम् । ~ ऋतु° गायत्री ।. ३ क. ख. घ. झ. ट. ' तद्यथा ' नास्ति; ग. तद्यथा. ४ ग. ज. °जोषसेत्येवमाद्या । वा°; घ. झ. ट. सजो० वाजेभिरागतं । वामदेवः । गायत्री । आ°. ५ ठ. ड. °रा गतम् । वामदेवः गायत्री । आ°. ६ च. °र्षम् । ~ आ° गायत्री ।. ७ क. ख. घ. झ. ट. ठ. ड. नित्यं सहजोषणौ नित्यं समा°; च. नित्यं ~ समा° सहजोषणौ. ८ क. ख. ठ. ड. °प्रीतौ वां युवा°; ग. ज. °प्रीतां युवा°; घ. झ. ट. °प्रीती वा यु°; च. °प्रीती ~ यु °वा. ९ ग. ज. सास्त°; च. सांस्त° सं. १० क. ख. घ. झ. ट. ठ. ' अपि शाखासु ' नास्ति; च. सर्वास्वपि शाखासु.

ग्राविष्ण्वोः संस्तविकी नास्ति । स्यादप्यन्यत्र संस्तविकी न तु दशतयीषु । असंस्तवेन वा दशतयीष्वपीत्युत्सर्गं दर्शयत्येवमेतन्मया निपुणमान्विष्यत इति ।

अथाप्ययमपर उत्सर्गः । ' अथाप्याग्नापौष्णं हविः ' एव ' न तु संस्तवः ' । तस्मिंस्तु हविषि किंतु पृथक्पृथगेवाग्निः स्तूयते पूषा च । ' तत्र ' तस्मिन्संस्तवे अग्नापूष्णोः ' एतां विभक्तस्तुतिमृचमुदाहरन्ति ' नैरुक्ताः ॥ ८ ॥   ५

आग्नापौष्णं हविरेव न तु संस्तवः

पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः । स त्वैतेभ्यः परि ददत्पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः ( ऋ० सं० १० । १७ । ३ ) ॥ पूषा त्वेतः प्रच्यावयतु विद्वाननष्टपशुर्भुवनस्य गोपा इत्येष हि सर्वेषां भूतानां गोपायितादित्यः स त्वैतेभ्यः परिददत्पितृभ्य इति सांशयिकस्तृतीयः पादः पूषा पुरस्तात्तस्यान्वादेश इत्येकमग्निरुपरिष्टात्तस्य प्रकीर्तनेत्यपरम् । अग्निर्देवेभ्यः सुविदत्रियेभ्यः । सुविदत्रं धनं भवति विन्दतेर्वैकोपसर्गाद्ददातेर्वा स्याद्द्व्युपसर्गात् ॥ ९ ॥   १०   १५

पूषा त्वेतं इति । देवश्रवसो यामायनस्यार्षम् । शवस्य कर्णे प्रमीतानुमन्त्रणे विनियोगः ( आश्व० श्रौ० ६ । १० ) । प्रमीत उच्यते ।   २०

१ ग. ज. सांस्त; च सांस्त °सं. २ ग. च. ज. सांस्त°. ३ ग. ज. पौष्णवं, च. पौष्णवं °ष्णं. ४ ग. ज. ट. तस्मिन्संस्त°; घ. तस्मिन्संस्त° . ५ ठ. ड. विभक्तिस्तु°. ६ क. ख. १ (८) ; ग. ९; ठ. ८ । इति निरु० उत्तरषट्के प्रथमाध्याये अष्टमः खण्डः । ८ । ; ड. ८; इतरेष्वङ्को नास्ति. ७ क. ख. °च्यवते°; छ. त. °च्यावते°; द. च्यावते दा. ८ क. ख. २ (९) ; छ. १०; त. द. २. ९ म. त्वेत इति; ज. पूषा त्वेत इति सर्वा ऋगुदीयते. १० घ. ट. °श्रवणे या°. ११ क. ख. घ. झ. ट. ठ. ड. °र्षम् । त्रिष्टुप् । श°; ग. ज. °र्षम् । शुनस्कर्णे; च. °र्षम् । ˇ शवस्य° त्रिष्टुप् ।. १२ क. ख. घ. झ. ट. ठ. ड. सप्रमी°; च. ˇ प्रमी° स.   २१

पूषा भगवान् आदित्यः पथामधिपतिः । सः त्वाम् इतो मनुष्यलोकात् विशिष्टेन पथा प्रच्यावयतु प्रगमयतु विद्वान् अव्यवहितज्ञानः । सर्वत्र ज्ञानाव्यवधानादेव च अनष्टपशुः । भुवनस्य गोपाः । भुवनस्य भूतजातस्य गोपाः रक्षिता उपर्यवस्थितः । स पूषा एवंलक्षणः त्वां प्रगमय्य एतेभ्यश्चन्द्रमण्डलोपान्तवासिभ्यः पितृभ्यः परिददातु । तदुक्तम् । 'दक्षिणायनात्पितृलोकम्' ( निरु० १४ । ८ ) इति । अग्निः अपि चैतेभ्य उत्कृष्य देवेभ्यः सुविदत्रियेभ्यो ये विद्युतो मध्ये निवसन्ति तेभ्यः परिददातु । तदुक्तम् । 'चन्द्रमसो वैद्युतम्' ( छान्दो० उ० ५ । १० । २ ) इति । स त्वमेवमुभावपि देवलोकपितृलोकावभ्यश्नुहीत्याशीः प्रमीतस्य । उक्तं च 'ये देवयानाः पितृयाणाश्च लोकाः सर्वांस्ताननृणाः संचरेम' ( मान० श्रौ० २ । ५ । ५ । २२ ) इति ।

अग्नापूष्णोर्विभक्तस्तुतेरुदाहरणम्

'स त्वैतेभ्यः इति सांशयिकस्तृतीयः पादः' । संशयोऽस्मिन्नस्तीति सांशयिकः तृतीयः पादोऽस्या ऋचः । कथं कृत्वा । यथा 'पूषा पुरस्तात्' 'पूषा त्वेतश्च्यावयतु' इति । 'तस्यान्वादेश इत्येकं' सामर्थ्यादर्शनम् । तथा व्याख्यातमेव । त्रयः पौष्णाः पादा एक एवाग्नेयः । एवमियं विभक्तस्तुतिः । अथवा । द्वावुत्तरावाग्नेयौ । तत्रार्थयोजना । पूष्णा प्रच्यावितं सन्तं सोऽग्निर्वक्ष्यमाणस्त्वामेतेभ्यः पितृभ्यो देवेभ्यः सुविदत्रियेभ्यः परिददातु । मा पितृभ्यः प्रेतेभ्य इत्यभिप्रायः । 'तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति' ( छा० उ० ५ । ९ । २ ) इत्यपेक्ष्य सर्वनाम्नश्चोत्तरेणाप्यग्निशब्देन संबन्धमविरुध्यमानं व्यपेक्ष्याकल्पयत् 'अग्निरुपरिष्टात्तस्य प्रकीर्तनेत्यपरम्' इति ।

स्तुतिविभागे द्वे मते

'सुविदत्रं धनं भवति' 'विन्दतेर्वा' 'सु' इत्येतेन एकेन उपसर्गेण उपसृष्टात् । 'ददातेर्वा' 'सुविभ्यां' द्वाभ्यामुपसर्गाभ्यां युक्तात् । तद्येषामस्ति ते सुविदत्रियाः ॥ ९ ॥

सुविदत्रशब्दस्य व्युत्पत्तिः

---

१ ग. ज. भूतस्य. २ क. ख. घ. झ. ट. ठ. ड. तद्प्युक्तं. ३ च. °कल्पय°. ४ क. ख. २ ( ९ ); ग. १०; ठ. °येभ्यः । इति निरुक्त० उत्तरषट्कप्रथमाध्याये नवमः खण्डः । ९ ।; ड. ९ इति निरुक्तोत्तरषट्कटीकायां प्रथमाध्याये नवमः खण्डः । ९ ।; इतरेष्वङ्को नास्ति.

अथैतानीन्द्रभक्तीन्यन्तरिक्षलोको माध्यंदिनं सवनं ग्रीष्मस्त्रिष्टुप्पञ्चदशस्तोमो बृहत्साम ये च देवगणाः समाम्नाता मध्यमे स्थाने याश्च स्त्रियोऽथास्य कर्म रसानुप्रदानं वृत्रवधो या च का च बलकृतिरिन्द्रकर्मैव तदथास्य संस्तविका देवा अग्निः सोमो वरुणः पूषा बृहस्पतिर्ब्रह्मणस्पतिः पर्वतः कुत्सो विष्णुर्वायुरथापि मित्रो वरुणेन संस्तूयते पूष्णा रुद्रेण च सोमोऽग्निना च पूषा वातेन च पर्जन्यः ॥ १० ॥ ५

---

'अथैतानीन्द्रभक्तीनि'। पूर्ववत्सर्वम् 'अन्तरिक्षलोकः' इत्येवमादि । 'ये च देवगणाः समाम्नाताः' (निघ० ५।५।८—१५) मरुदादयः 'याश्च स्त्रियः' (निघ० ५ । ५ । १६—३६) अदित्याद्याः । १०

'अथास्य कर्म रसानुप्रदानम्' अवश्यायवर्षादि 'वृत्रवधो' मेघवधः । 'या च का च बलकृतिः' अन्यापि 'इन्द्रकर्मैव तत्' इत्यादरार्थं पुनर्वचनम् । अपि कीटपिपीलिकादिषु यद्बलेन क्रियते सर्वमिन्द्रकर्मैव तदिति । १५

इन्द्रकर्म

संस्तविका देवाः

'अथास्य संस्तविकाः देवाः अग्निः' इत्येवमादयः ।

अग्निना संस्तवः

'इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद्वां चेति प्र वीर्यम्' (ऋ० सं० ३।१२।९) इति ॥ २०

विश्वामित्रस्येयमार्षम् । ऐन्द्राग्ने हविषि विनियोगः (मैत्रा० सं० २ । १ । १) । हे इन्द्राग्नी रोचना रोचनौ दीपनौ हविषा च उदकेन च दिवः परिभूषथो वाजेषु अस्मान् सर्वतः ।

---

१ छ. त. द. काचिद्बल°. २ द. °णेन च संस्तू°. ३ छ त. द. सोमो वायुना च पू°. ४ क. ख. ३ (१०); छ. ११; त. द. ३. ५ ग. च. ज. 'च' नास्ति. ६ क. ख. घ. झ. ट. ठ. ड. °दयः। तद्यथा । इन्द्रा°; ग. °दयः। ३५। इन्द्रा°; च. °दयः। ~ इन्द्रा° तद्यथा।. ७ ग. ज. दि इति । विश्वा°; घ. झ. ट. दिवः । विश्वा°. ८ ठ. ड. 'इति' नास्ति. ९ घ. झ. ट. ठ. ड. °मित्रः । गायत्री । ऐ°; च. °त्रस्येयमार्षं । ऐ° त्रः । गायत्री ।. २५ ३०

येनाजेषु स्वामित्वेन भवेमहि तथा कुरुतम् । तद्वीर्यं भवतोः प्रकृष्टम् अहं चाति जाने येन परिभावयथो वाजेषु स्तोतॄन् । अत एवमाशास्महे ।

सोमेन — सोमेन संस्तवः 'इन्द्रासोमा समघशंसम्' इत्यत्र । व्याख्यातः ( निरु० ६ । ११ ) ।

५ वरुणेन — वरुणेन संस्तवः 'इन्द्रावरुणा युवमध्वराय नः' इति । व्याख्यातः शेषैः ( निरु० ५ । २ ) ।

'इन्द्रा नु पूषणा वयं सख्याय स्वस्तये । हुवेम वाजसातये' (ऋ० सं० ६ । ५७ । १ ) इति ॥ पूष्णा संस्तवः ।

१० पूष्णा — भरद्वाजस्येयमार्षम् । ऐन्द्रापौष्णे हविषि विनियोगः ( मैत्रा० सं० २ । ६ । ४ ॥ ४ । १२ । ६ ) । हे इन्द्रापूषणौ सख्याय समानख्यानाय स्वस्तये स्वस्त्ययनाय च वाजसातये च वाजस्यान्नस्य सननाय हुवेम आह्वयामहे युवां वयम् । नित्यं यज्ञेष्विदमाशास्महे इति ।

१५ 'इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती । उक्थं मदश्च शस्यते' ( ऋ० सं० ४ । ४९ । १ ) ॥ बृहस्पतिना

बृहस्पतिना — संस्तवः । वामदेवस्येयमार्षम् । ऐन्द्राबार्हस्पत्ये हविषि विनियोगः ( मैत्रा० सं० २ । १ । १२ ॥ २ । २ । ३ ) । हे इन्द्राबृहस्पती इदं हविः यद्वयं दद्मः

२० तत् प्रियम् इष्टम् आस्ये वाम् अस्तु । यच्चेदम् उक्थं शस्यते मदः च प्रतिगरेण सह तच्च वां प्रियमस्त्वित्येतदाशास्महे ।

---

१ क. ख. च. झ. ट. ठ. ड. यायेषु; च. वाजेषु° यागे. २ क. ख. घ. झ. ट. ठ. ड. स्तोतॄन् पुरः । अत°; च. स्तोतॄन् । ˇ अतः° पुरः।. ३ ग. शेषः । ३६ । इन्द्रा. ४ ग. ज. घ. झ. ट. पूषणेति । पूष्णा°. ५ ठ. ड. 'इति' नास्ति. ६ घ. २५ झ. ट. ठ. ड. भरद्वाजः । गायत्री । ऐन्द्रा°. ७ च. °र्षम् । ˇ ऐन्द्रा° गायत्री ।. ८ क. ख. घ. झ. ट. ठ. सातये च अन्नसननाय च हु°; ग. ज. वाजसननाय हु°. ९ क. ख. घ. ट. ठ. ड. 'इति' नास्ति; ग. इति । ३७ । . १० क. ख. घ. झ. ठ. हविरिति बृह°; ठ. ड. इदं वामास्ये हविरिति बृहस्पतिना संस्तवः । इदं वामास्ये हविः°. ११ क. ख. वामदेवस्यार्षम् । गायत्री । ऐन्द्रा° ; घ. झ. ड. ठ. ड. वामदेवः गायत्री । ऐन्द्रा°. १२ च. °र्षम् । ˇ ऐन्द्रा° गायत्री ।. १३ ग. ३१ °स्महे । ३८ । विश्वे°.

'विश्वं सत्यं मघवाना युवोरिदापश्चन प्र मिनन्ति व्रतं वाम् । अच्छे-न्द्राब्रह्मणस्पती हविर्नोऽन्नं युजेव वाजिना जिगातम्' ( ऋ० सं० २ । २४ । १२ ) ॥

बृहस्पतिना

इति ब्रह्मणस्पतिना संस्तवः । गृत्समदस्येयमार्षम् । विश्वं सर्वं जगत् सत्यं यावदिदमस्ति किंचित् हे मघवाना मघवानौ धनवन्तौ इन्द्राब्रह्मणस्पती युवामुच्येथे युवोः युवयोः सर्वमेतत्त्वभूतम् । किंच । यतः सर्वस्येशानौ स्थः अतः आपोऽपि न प्रमिनन्ति न हिंसन्ति व्रतं कर्म वां युवयोः । यथासंकल्पं वर्तन्ते । यौ युवामेवमतिमहानुभावौ तौ अस्माकम् आभिमुख्येन इदं हविः जिगातम् आगच्छतं भोक्तुं युजाविव सहचारिणौ वाजिनौ रथाद्विमुक्तौ बुभुक्षू स्वम् अन्नम् । इत्येतदाशास्महे ।

'इन्द्रापर्वता बृहता रथेन वामीरिष आ वहतं सुवीराः । वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिळया मदन्ता' ( ऋ० सं० ३ । ५३ । १ ) ॥ पर्वतेन

पर्वतेन

संस्तवः । विश्वामित्रस्यार्षम् । हे इन्द्रापर्वतौ देवौ युवामुच्येथे । बृहता महता रथेन महता उदकरंहणेन उदकदानेन वामीः वननीया इषः अन्नानि आवहतम् ईरयतम् । व्रीह्यादीनि प्रेरयतम् । सुवीराः शोभनवीराः । ततः स्वे काले ईजानानामस्माकं वीतं भक्षयतं हव्यानि अध्वरेषु पुरोडाशादीनि वर्धेथां च गीर्भिः स्तुतिभिः पुनः पुनः प्रतिकर्म इळया अन्नेन मदन्तौ तृप्यन्तौ । इत्येतदाशास्महे ।

१ ग. ज. सत्यमिति ब्रह्म°; घ. झ. ट. सत्यं मघ० वाजिना जिगातं । ब्रह्म°. २ ठ. ड. 'इति' नास्ति. ३ घ. झ. ट. ठ. ड. गृत्समदः । त्रिष्टुप् । विश्वं;°. ४ च. °र्षम् । ~ विश्वं° त्रिष्टुप् ।. ५ ग. ज. सत्यं वा यदिदमस्ति°. ६ क. ख. ग. ज. घ. झ. ट ठ. ड. किंच; ७ च. किंचित्° च. ८ घ. झ. ट. ठ. ड. यतः. ९ क. ख. घ. झ. वर्तते. १० ग. °स्महे । ३९ । इन्द्रा°. ११ ग. °र्वता ० । पर्वतेन°; घ. झ. ट. °र्वता ० मदन्ता. १२ क. ख. च. ज. °रिलया. १३ घ. झ. ट. ठ. ड. °मित्रः । त्रिष्टुप् । हे°; च. मित्रस्यार्षं । ~ हे° त्रिष्टुप् ।. १४ ठ. ड. पुरोळाशा°. १५ क. ख. ग. च. ज. झ. इरया; घ. ठ. ड. इच्छया. १६ ग. °स्महे । ४० । इन्द्रा°.

'इन्द्राकुत्सा वहमाना रथेना वामत्या अपि कर्णे वहन्तु ।
निः षीमद्भ्योर्धमथो निः षधस्थान्मघोनो हृदो
कुत्सेन वरथस्तमांसि ' ( ऋ० सं० ५ । ३१ । ९ ) ॥

कुत्सेन संस्तवः । अवस्योरार्षम् । हे इन्द्राकुत्सौ वहमानौ उह्यमानौ रथेन

५ युवां ब्रुवे । आवहन्तु वाम् अत्याः अश्वाः अपि कर्णे नित्यं कर्मणे । ततश्च कर्मणा परितोषितौ अस्माभिः निः षीम् अद्भ्यो निर्धमथः सर्वतः अरीन् निः षधस्थात् समानस्थानादन्तरिक्षाददृयः अपः । तत ओषध्या-द्युत्पत्त्या सुकालं कुर्वाणौ मघोनः महान्त्येतानि तमांसि हृदो हृदयस्य छाद-कानि अनाकालभयकृतानि वरथः वारयथ इत्येतदाशास्महे ।

१० 'इन्द्राविष्णू दंहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम् । शतं
वर्चिनः सहस्रं च साकं हथो अप्रत्यसुरस्य
विष्णुना वीरान् ' ( ऋ० सं० ७ । ९९ । ६ ) ॥
विष्णुना संस्तवः । वसिष्ठस्यार्षम् । त्रैधातव्यां

विनियोगः ( मैत्रा० सं० २ । ४ । ४ ) । हे इन्द्राविष्णू युवां दंहिताः

१५ स्थिरीकृताः शम्बरस्य मेघस्य असुरस्य वा स्वभूताः पुरः श्नथिष्टं हत-वन्तौ स्थः । तांश्च हत्वा मेघान्तर्गतान् शतं वर्चिनः दीप्तिमतोऽन्नवतो वा सहस्रं च साकम् अवस्थितान् सहभावेन एकनिश्चयान् हथो हतवन्तौ स्थः अप्रति वीरान् असुरस्य शम्बरस्य स्वभूतान् । यौ युवा-मेतदतिदुष्करमकार्ष्टं तावस्माकमपि शत्रून् हथ इत्येतदाशास्महे ।

---

२० १ ग. °कुत्सा० । कुत्सेन°; घ. झ. ट. °कुत्सा व० वरथ°. २ च. निः षीम°. ३ च. निः सध°. ४ क. ख. घ. झ. ट. ठ. ड षम् । त्रिष्टुप् । हे°; च. °षम् । ~ हे° त्रिष्टुप् । ५ ग. °स्महे । ४१ । इन्द्रा°. ६ ग. °हिता० । विष्णु°; घ. झ. ट. °हिताः ० अप्रत्यसु°. ७ घ. झ. ट. ठ. ड. वसिष्ठः । त्रिष्टुप् । त्रै°, च. वसि-ष्ठस्यार्षम् । ~ त्रै° त्रिष्टुप् । ८ क. ख. घ. झ. ट. ठ. ड. शंबरस्य नवतिं नव च पुरः मेघ°; च. शम्बरस्य ~ मे° नवतिं नव च पुरः. ९ ग. ज. वा भूताः. १० क. ख. घ. झ. ट ठ ड. अप्रति अप्रतीकारान् वी°; च. अप्रति ~ वी° अप्रतीका-

२७ रान. ११ ग. °स्महे । ४१ । इन्द्र°.

'इन्द्रवायू इमे सुता उप प्रयोभिरा गतम् । इन्दवो वामुशन्ति हि' ( ऋ० सं० १ । २ । ४ ) ॥ वायुना संस्तवः । मधुच्छन्दस आर्षम् । उपात्तद्विकर्मात्मनो हि मध्यमस्य एकस्यापि वाय्विन्द्रभावेन विकरणधर्मित्वाद्द्वित्वं बिभ्रतो नैरुक्तपक्षेऽपि द्विवचनसंस्तुतिरविरुद्धा यथैकस्योदकस्य द्विपात्रस्थस्य द्विवचनेनोक्तिः । ऐन्द्रवायवस्य ग्रहस्य पुरोनुवाक्येयम् ( मैत्रा० सं० १ । ३ । ६ ) । हे इन्द्रवायू युवामुद्दिश्य ये । इमे सुता अभिषुताः इन्दवः । सोमाः इत्यर्थः । सुसंस्कृताः सोमा यस्मात् उशन्ति कामयन्ते युवामात्मनः पानाय तस्मादुपागच्छतं पातुमेतान् । कथं च पुनरुपागच्छतम् । प्रयोभिः अन्नैरस्मत्संप्रदेयैरभ्युद्यतैरित्येतदाशास्महे ।

वायुना

'अथापि मित्रो वरुणेन संस्तूयते' । 'अथ' शब्दः प्रकृतादिन्द्राद्विशेषतो मित्रादीन्प्रकरोति । 'अपि' इति संभावने । प्रकृताभ्यरितसृभ्यो देवताभ्यः पराण्यपरेणाभिधानेन संस्तवयुक्तानीति भेदपक्षे अविरुद्धमेव । नैरुक्तपक्षे यद्विरुद्धाभासमिव किंचिदत्र तदिन्द्रवायुसंस्तवे प्रतिसमाहितम् । 'मित्रो वरुणेन' इत्येवमादिषु या प्रथमया निर्दिश्यते सा मुख्यस्तुतिः या तृतीयया सामुख्या । सा च निर्दिष्टा ।

इतराः का देवता काभिः संस्तूयन्ते

१ ग. च. ज. घ. झ. ट. सुता इति वायुना°. २ क. ख. हि । इति । वायु°. ३ घ. झ. ट. ठ ड. °च्छन्दा गायत्री । उपा°. ४ क. ख. घ. झ. ट. ठ. ड. °त्मनोऽपि हि°; च. °त्मनो॰ हि° पि. ५ क. ख. घ. झ. ठ. ड. °चनोक्तिः; ट. च॰ नोक्ति° ने. ६ ग. ज. °यन्ति; च. °यन्ति यु न्ते. ७ क. ख. ग. ज. घ. झ. ट. °मात्मपाना°; च. °मात्मनः पा°. ८ क. ख. घ. झ ट. 'च' नास्ति; च. च. ९ क. ख. ग. ज. ट. ठ. 'विरोध एव°; च. अविरुद्धं एव° रोध. १० क. ख. घ. झ. ट. ठ. ड. मुख्यास्तु °; च. मुख्यस्तु° स्या ११ क. ख. घ. झ. ट. ठ. ड. °यया निर्दिष्टा साऽमुख्या । आ नो°; च. °यया सा अमुख्या सा च नि- र्दिष्टा° निर्दिष्टा सामुख्या. १२ ग. °ष्टा । ४३ । आ°.

‘ आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजांसि सुक्रतू ’ ( ऋ० सं० ३ । ६२ । १६ ) इति ॥ विश्वामित्रस्यार्षम् । मैत्रावरुण्याः पयस्यायाः पुरोनुवाक्या ( मैत्रा० सं० २ । ३ । १ ) । हे

मित्रो वरुणेन संस्तूयते

५ मित्रावरुणौ सुक्रतू शोभनकर्माणौ युवामुच्येथे । गव्यूतिं गोयूतिं यवसोदकोत्पत्तये रजांसि च गोयूतेर्यान्यन्यानि व्रीह्यादिधान्योत्पत्तिक्षेत्राणि तानि च व्रीह्याद्युत्पत्तये मध्वा मधुरेण सस्यसंपत्करेण उदकेन अस्माकम् उक्षतम् आ सिंचतमित्येतदाशास्महे ।

‘ सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः । जातौ

१० विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम् ’ ( ऋ० सं० २ । ४० । १ )॥ पूष्णा सोमस्य संस्तवः । गृत्समदस्येयमार्षम् । सौमापौष्णस्य चरोः पुरोनुवाक्या ( मैत्रा० सं० २ । १ । ४—५ ॥ २ । २ । ४ ) । सोमापूषणौ चन्द्रसूर्यौ ।

पूषा सोमेन संस्तूयते

१५ तावुच्येते । सोमापूषणा हे सोमापूषणौ युवां जननौ जनयितारौ रयीणां धनानां जनयितारौ च स्वेनोपकारेण दिवो जनयितारौ पृथिव्याः जातौ जातमात्रावेव युवां विश्वस्य सर्वस्य भुवनस्य भूतजातस्य गोपौ गोप्तारौ बभूवथुः । देवाश्च रश्मयो युवामेव अमृतस्य उदकस्य नाभिं नहनं बन्धनम् आधारं सार्वलौकिकस्य अकृण्वन् सदा कुर्वन्ति । युवामिदं नामास्माकं

२० कुरुतमित्याशिषा निराकाङ्क्षम् ।

---

१ ग. च. ज. ॰रुणा घृतैरिति विश्वा॰; घ. झ. ट. ॰वरु० रजांसि सुक्रतू । विश्वा॰. २ ठ. ड. ‘ इति ’ नास्ति. ३ घ झ. ट. ठ ड. ‘मित्रो गायत्री । मैत्रा॰; च. ॰मित्रस्यार्षम् । ॱ मैत्रा॰ गायत्री ।. ४ घ. झ. ट. ठ. ड ‘थे । घृतैः उदकैर्गव्यू॰. ५ क. ख. घ. झ. ट. ठ. ड. ॰न्यानि स्थानानि व्री॰; च. ॰न्यानि ॱ

२५ व्री॰स्थानानि. ६ क. ख. घ. झ. ट. ठ. ड. ॰क्षतं सि॰; च क्षतं आसि’. ७ क. ख. घ. झ. ट. ठ. ड. ॰स्महे । पूष्णा रुद्रेण च सोमः । सोमा॰; ग. ॰स्महे ।४४। सोमा॰; च. ॰स्महे ॱ सोमा॰ पूष्णा रुद्रेण च सोमः ८ ग. ॰नना० । पूष्णा॰; घ. झ. ट. ॰नना०मृ॰. ९ घ. झ. ट. ठ. ड. ॰मदः । त्रिष्टुप् । सो॰; च. ‘मदः । ॱ सो॰ त्रिष्टुप् । . १० क. ख. घ. झ. ट. ठ. ड. सोमा॰; ग. ज. सोमापूष॰. ११ घ. झ. ट. ठ. ॰तारौ च पृ॰ च. तारौ ॱ पृ॰ च. १२ ग. ज. ‘थिव्या । जनयितारौ च । जातमात्रा॰; च. ॰थिव्याः । जनयितारौ च । जा॰. १३ ग.

३२ ॰काङ्क्षम् । ४५ । सोमा॰.

'सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् । अव स्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत्'

सोमो रुद्रेण

( ऋ० सं० ६ । ७४ । ३ ) ॥ रुद्रेण संस्तवः । भरद्वाजस्येयमार्षम् । सौमारौद्रस्य चरोः पुरोनुवाक्या ( मैत्रा० सं० २ । १ । ५—६ ) । हे सोमारुद्रौ युवामुभ्येथे । एतानि सर्वाणि भेषजानि अस्मे अस्माकं तंनूषु शरीरेषु धत्तम् । किंच । अवस्यतं नित्यमस्मानवितुं रक्षितुमिच्छतम् । किंच । यत् अस्माकं मनोवाक्कायैः कृतम् एनः किंचिदस्ति तनूषु बद्धं तन्मुञ्चतम् अस्मत्तः । 5

'अग्निना च पूषा' । मध्यमेन च द्युस्थानेन च संस्तव इति 10

अग्निना च पूषा

पार्थिवेन प्रतिषेधात् । ऋचं नोदाहरन्ति । मृग्यमुदाहरणम् । वायुना संस्तवः । 'वातेन च पर्जन्यः' ।

'धर्तारो दिव ऋभवः सुहस्ता वातापर्जन्या महिषस्य तन्यतोः । आप ओषधीः प्र तिरन्तु नो गिरो भगो रातिर्वाजिनो यन्तु मे हवम्' ( ऋ० सं० १० । ६६ । १० ) ॥ वसुकर्णस्यार्षम् । धर्तारो दिवः इति ऋभवः शोभनहस्ताः वातापर्जन्यौ च आपश्च ओषधयश्च भगश्च रातिः दाता वाजिनश्च धारयितारो द्योतनवन्तो ये उक्ताः अस्य उदकस्य महिषस्य महतः तन्यतोः 15

वातेन च पर्जन्यः

---

१ ग. 'मेतानि° । रुद्रे°; घ. झ. ट. 'मेता ० कृतमेनो°. २ घ. झ. ट. ठ. ड. °द्वाजः । त्रिष्टुप् सो°. ३ च. 'र्षम् । ~ सो° त्रिष्टुप् ।. ४ क. ख. ग. ज. घ. झ. ट. ड. सोमारौ°; ठ. सोमारुद्र°; च. सोमारुद्र° सौमारौ°. ५ ग. ज. 'शरीरेषु' नास्ति. ६ क. ख. घ. ट. ठ. ड. 'ञ्चतं अस्मत् अस्मत्तः. ७ क. ख. मध्यमस्थानेन; घ. झ. ट. ठ. ड. मध्यस्थानेन; ग. ज. मध्यमेन च द्यु°. ८ क. ख. घ. झ. ट. ठ. ड. °हरति. ९ ग. ज. 'स्तवः । सप्त ऋषय इत्यत्र तत्र जागृते । अस्वप्नजाविस्येतस्मिन्पादे वाय्वादित्याविति वक्ष्यति । वातेन°. १० ग. °न्यः । ४६ । धर्ता°. ११ ग. °भव० । वसु°; घ झ. ट. °भवः ० यन्तु°. १२ ग. ज. ठ. °कर्मस्या°; घ. झ. ट. ड. °कर्णस्यार्षम् । त्रिष्टुप । घ°; च. °कर्णस्यार्षम् । ~ ध° त्रिष्टुप् । . १३ क. ख. घ. झ. ट. ठ. ड. 'इति' नास्ति. १४ क. ख. घ. झ. ट. 'अस्य' नास्ति; च. अस्य. १५ ग. ज. 'उदकस्य' नास्ति. 20 25 30

सर्वार्थेतनितुः हवम् आह्वानम् अस्माकम् आयन्तु आगच्छन्तु आगम्य च प्रतिरन्तु प्रतीर्णाः कुर्वन्तु एता अस्मद्गिरः। वर्धयन्त्वित्यर्थः। वातापर्जन्याविल्यत्र संस्तवः ॥ १० ॥

---

**अथैतान्यादित्यभक्तीन्यसौ लोकस्तृतीयसवनं वर्षा जगती सप्तदशस्तोमो वैरूपं साम ये च देवगणाः समाम्नाता उत्तमे स्थाने याश्च स्त्रियोऽथास्य कर्म रसादानं रश्मिभिश्च रसधारणं यच्च किंचित्प्रवल्हितमादित्यकर्मैव तच्चन्द्रमसा वायुना संवत्सरेणेति संस्तवं एतेष्वेव स्थानव्यूहेष्वृतुच्छन्दःस्तोमपृष्ठस्य भक्तिशेषमनुकल्पयीत शरदनुष्टुबेकविंशः स्तोमो वैराजं सामेति पृथिव्यायतनानि हेमन्तः पङ्क्तिस्त्रिणवः स्तोमः शाक्वरं सामेत्यन्तरिक्षायतनानि शिशिरोऽतिच्छन्दास्त्रयस्त्रिंशः स्तोमो रैवतं सामेति द्युभक्तीनि ॥ ११ ॥**

---

'अथैतान्यादित्यभक्तीनि'। पूर्ववत् 'असौ लोकः' इत्येवमादि। 'सूर्यो द्युस्थानः' ( निरु० ७।५ ) इति पूर्वमधिकृत्य 'आदित्यभक्तीनि' इहाब्रवीद्विशेषतः स्वपक्षोद्योतनानुस्मृतये।

'ये च देवगणाः समाम्नाता उत्तमे स्थाने आदित्यादयः' ( निघ० ५।६।२४–२९ )। 'याश्च स्त्रियः' उषाः सूर्या वृषाकपायी सरण्यूः (निघ० ५।६।२–५) देवपत्न्यः ( निघ० ५।६।३१ ) इति।

आदित्यकर्म

'अथास्य कर्म' रसादानादि। 'यच्च किंचित्प्रवल्हितमादित्यकर्मैव तत्'। 'चन्द्रमसा वायुना संवत्सरेणेति संस्तवः'। अल्पत्वात्स्वशब्दैरेव ब्रवीति नाधिकारवचनं करोति 'अथास्य' इति।

---

१ च. हवनम्. २ क. ख. घ. झ. ट. ठ. ड. °गत्य. ३ क. ख. ७( १० ); ग. ११; ठ. ड. १०। इति निरु० ( दु निरुक्तटीकायां ) उत्तरषट्के प्रथमाध्याये दशमः खण्डः। १०।. ४ ङ. थ. ध. ठ. ड. रसाधा°. ५ छ. त. द. यत्तु. ६ क. ख. त. द. °स्तवः। ४। एते°; छ. °स्तवः। १२। एते°. ७ छ. °ह्वक्तिस्तृण°. ८ क. ख. ५ ( ११ ); छ. १३; त. द. ५. ९ क. ख. घ. झ. ट. ठ. ड. °क्तीनीति। पू°. १० क. ख. घ. झ. ट. ठ. ड. °कृत्य अथैतान्यादि°; च. °कृत्य ˇ आदि° अथैतानि. ११ क. ख. घ. झ. ट. ठ. ड. इतीहाब्र°; च. °क्तीनि ˇ इहा° इति. १२ च. शरण्यू°. १३ ग. च. ज. यत्तु. १४ ग. °स्येति। ४ '। पूर्वा°.

'पूर्वापरं चरतो माययैतो शिशू क्रीळन्तौ परि यातो अध्वरम् । विश्वान्यन्यो भुवनाभिचष्ट ऋतूँरन्यो विदधज्जायते पुनः' ( ऋ० सं १० । ८५ । १८ ) ॥

चन्द्रमसा संस्तवः

चन्द्रमसा संस्तवः । सूर्यायाश्चार्षम् । राजयक्ष्मेष्ट्यां वैश्वदेवस्य चरोः पुरोनुवाक्यैषा ( मैत्रा० सं० २ । २ । ७ ) । पूर्वापरं चरतः सूर्याचन्द्रमसौ । पूर्वपक्षे पूर्वः सूर्योऽपरश्चन्द्रमाः । अपरपक्षे पुनरपरः सूर्यः पूर्वश्चन्द्रमाः । एवम् एतौ चरणम् अनुपरैतं चरन्तौ सर्वदा चरतः । तौ पुनः मायया योगैश्वर्यकृतया कयापि प्रज्ञयेति । कस्तत्वं वेद । न ह्ययोगिनायेवं शक्तौ चरितुमिति । अपि चैतदतिचित्रं यदपरिखिद्यमानौ आभूतसंप्लवात् शिशू इव क्रीळन्तौ अध्वरं यज्ञं निष्पादयन्तौ सर्वमिदं परियातः परिगच्छतः । तत्कथमिति । विश्वान्यन्यो भुवनाभिचष्टे । विश्वानि भुवनानि भूतानि अन्यः अभिचष्टे अभिपश्यति आदित्यः । यथैतान्यभिद्रष्टव्यानि उपकारकत्वेन तथा स एव तानि पश्यति । ऋतूँरन्यः चन्द्रमाः विदधत् अभिनिष्पादयन्स्वगत्या पुनः पुनः प्रतिमासं जायमान उदेत्यस्तमेति च । असंस्तवेनोत्तरोऽर्धर्चः । यावेतदेवमत्यद्भुतं किमपि चरणं चरतस्तावेतौ अगदमस्मद्यजमानं कुरुतमित्याशिषा निराकाङ्क्षः ।

वायुना संस्तवः । सप्त ऋषयः प्रतिहिताः इत्यत्र । तत्र 'जागृतो अस्वप्नजौ' इत्यस्मिन्पादे 'वाय्वादित्यौ' इति वक्ष्यति ( निरु० १२ । ३७ ) ।

वायुना संस्तवः

संवत्सरेण च संस्तवः । 'पञ्चपादं पितरम्' इति व्याख्यातम् ( निरु० ४ । २७ ) ।

संवत्सरेण च

१ ग. चरतः । चन्द्र ; घ. झ. ट. चरतः ० जायते. २ क. ख. च. कीडन्तौ; ज क्रीलन्तौ. ३ घ. झ. ट. षम् । जगती । राज ; च. षम् । ० राज जगती. ४ क. ख. घ. झ. ट. ठ. ड. परतौ, च. परतं तौ. ५ घ. झ. ट. वेधं. ६ क. ख. क्रीडन्तौ ; ग. च. ज घ. झ. क्रीलन्तौ. ७ क. ख. घ. झ. ट. ठ. ड. यज्ञमभिनिष्पा. ८ घ. झ. ट. ठ. ड. विश्वा विश्वानि ; च. ० विश्वा विश्वा. ९ क. ख. घ. झ. ट. ठ. ड. 'अन्यः' नास्ति. १० क. ख. घ. झ. ट. ठ ड. अथै ; च. यथै अ(य) ; ट. अथै य. ११ क. ख. घ. झ. ट. ठ. ड. तथैव स तानि. १२ क. ख. घ. झ. ट. ठ. ड. इत्येतस्मि. १३ क. ख. ख्यातः । ४ । एते ; च. ख्यात तः ; ग. ख्यातं । १२ । एते ; च. ज. ख्यातमित्यनन्तरं खण्ड समाप्तिः ; घ. झ. ट. ठ. ड. ख्यातः.

' एतेष्वेव स्थानव्यूहेष्वृतुच्छन्दःस्तोमपृष्ठस्य भक्तिशेषमनुकल्पयीत ' ।

ऋतवश्च छन्दांसि च स्तोमाश्च पृष्ठानि च ऋतुच्छन्दःस्तोमपृष्ठम् । तस्य ऋतुच्छन्दःस्तोमपृष्ठस्य । ऋतुभक्तिशेषं छन्दोभक्तिशेषं स्तोमभक्तिशेषं पृष्ठभक्तिशेषं च । तद्यथा । ' शरदनुष्टुबेकविंशः स्तोमः वैराजं सामेति पृथिव्यायतनानि ' । अनग्निलिङ्गेऽपि चेन्मन्त्र एतेषामन्यतमं स्यात्स आग्नेय इति प्रतिपत्तव्यः । एवमेवोत्तरयोरपि स्थानव्यूहयोः । व्यूहो नाम विस्तरः । ' हेमन्तः पङ्क्तिस्त्रिणवः स्तोमः शाक्वरं सामेत्यन्तरिक्षायतनानि ' । ' शिशिरोऽतिच्छन्दाः त्रयस्त्रिंशः स्तोमो रैवतं सामेति द्युभक्तीनि ' । द्यां भजन्त इति द्युभक्तीनि द्यौरपि चादित्यं भजत इति । भक्तिग्रहणं प्रणाडिकोपप्रदर्शनार्थं यैतेषां स्तुतिः सा स्तुतिसंक्रमन्यायेन स्थानाधिपतेः सूर्यस्य स्तुतिरिति । सर्वत्रैवम् ।

अन्येषामृतुच्छन्द-आदीनां स्थानानि

आह । सर्वमेतन्मन्त्राश्रयमुक्तम् । त एव तावन्मन्त्राः कस्मान्मन्त्रा इति उच्यन्ते । यत आह ॥ ११ ॥

---

**मन्त्रा मननाच्छन्दांसि छादनात्स्तोमः स्तवनाद्यजुर्यजतेः साम संमितमृचास्यतेर्वर्चा समं मेन इति नैदाना गायत्री गायतेः स्तुतिकर्मणस्त्रिगमना वा विपरीता गायतो मुखादुदपतदिति च ब्राह्मणमुष्णिगुत्स्नाता भवति स्निह्यतेर्वा स्यात्कान्तिकर्मण**

---

१ क. ख. ठ. तर्म; ग. च. ज. ड. °तमस्या°; घ. झ. ट. तर्म स्या°. २ क. ख. ग. ज. घ. झ. ट. ठ. ड. °तव्यम्. ३ च. विस्तीरः° स्त. ४ ग. ज. °ङ्क्तिस्तृण°. ५ क. ख. °रिक्षायतनानि । अन्तरिक्षलोकायतनानि । शिशि°; घ. झ. ट. °रिक्षलोकायत°. ६ क. ख. घ. झ. ट ठ. ड. इति द्युभक्तीनि । भक्ति°; च. इति ~ । भक्ति' द्युभक्तीनि. ७ क. ख. घ. झ ट. ठ. ड. °संक्रमणन्या°. ८ क. ख. °त्रैवम् । ५ ( ११ ) । सर्वमे°. ९ च. आह । स°. १० क. ख. घ. झ. ट. ठ. ड. °श्रयमित्युक्तं; ठ. °श्रयमित्युक्तं । ११ । इति निरुक्तवृत्तौ उत्तरषट्के प्रथमाध्याये निघण्टुमारभ्य द्वादशे एकादशः खण्डः ।११। मन्त्रा°. ११ ग. १३; इतरेष्वङ्को नास्ति. १२ क. ख. छ. त. द. ' स्तोमः स्तवनात् ' नास्ति. १३ क. ख. त. द. °णम् । ६ । उष्णिग°; छ. °णम् । १४ । उष्णि°.

उष्णीषिणी वेत्यौपमिकमुष्णीषं स्नायतेः ककुप् ककुभिनी भवति ककुप् च कुब्जश्च कुजतेर्वोब्जतेर्वानुष्टुबनुष्टोभनाद्गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभतीति च ब्राह्मणं बृहती परिबर्हणा-त्पङ्क्तिः पञ्चपदा त्रिष्टुप् स्तोभत्युत्तरपदा का तु त्रिता स्यात्तीर्ण-तमं छन्दस्त्रिवृद्वज्रस्तस्य स्तोभतीति वा यत्त्रिरस्तोभत्तत्त्रिष्टुभस्त्रि- ५
ष्टुप्त्वमिति विज्ञायते ॥ १२ ॥

---

'मन्त्राः मननात्'। ऐभ्यो ह्यध्यात्माधिदैवाधियज्ञादि मन्तारो मन्यन्ते। तदेषां मन्त्रत्वम्। ते पुनश्छन्दोमयाः 'नाच्छन्दसि वागुच्चरति' इति। अथ 'छन्दांसि' कस्मात्। 'छादनात्'। 'यदेभिरात्मानमाच्छा- १०
दयन्देवा मृत्योर्बिभ्यतस्तच्छन्दसां छन्दस्त्वम्' इति विज्ञायते। अथ 'यजुः' कस्मात्। 'यजतेः' धातोः। तेन हि विशेषत इज्यते सर्वत्र याज्यान्ते वषट्कारविधानात्। अथ 'साम' कस्मात्। 'तद्धि संमितमृचा'। यावती ऋक्तावदेव परिमाणतः। 'अस्यतेर्वा' क्षेपणार्थस्य (धा० ४। १०३)। प्रक्षिप्तमिव हि तदृचि भवति। विज्ञायते च 'तस्मादृच्यध्यूढं १५
साम गीयते' (छा० उ० १। ६–७)। अथवा 'स्यतेर्वा' इति। 'षो अन्तकर्मणि' (धा० ४। ४१)। अन्त्यं तत्कर्म भवति संहिता पदं सामेति। 'ऋचा समं मेने इति नैदानाः'। ऋचा एतत् समम् इत्येवं प्रजापतिर्मेने ज्ञातवान्। अथवा। आत्मानमेव ऋचा समं मेने ज्ञातवान्। तस्मात्साम्नः सामत्वमित्येवं नैदाना मन्यन्ते। निदान- २०
मिति ग्रन्थः। तद्विदो नैदानाः।

'छन्दांसि छादनात्' इत्युक्तम्। तानि च पुनरमूनि गायत्रीप्रमुखानि। यतो गायत्रीं निराह। 'गायत्री गायतेः स्तुतिकर्मणः'। तया हि गीयन्ते स्तूयन्ते देवताः। अतः परमुष्णिगादीनि छन्दांसि चतुरुत्तराणि। तानि तत्प्रसङ्गेनैव निराह। तत्र तावत् 'उष्णिगुत्स्नाता' २५

---

१ क. ख. °णम्। ७। बृह°; छ °णम्। १५। बृह°; त. द. °णम्। ७। बृह°. २ क. ख. छ. त. द. °भनीति ३ क. ख. ८ (१२); छ. १६; त. द ८. ४ क. ख. घ. झ. ट. ठ. ड. तेभ्यो°; च. एभ्यो° त. ५ ग. ज. °ध्यात्माधियज्ञादि°. ६ ग. घ. झ. ट. षोऽन्त°. ७ क. ख. घ. झ. ट. ठ. ड. ज्ञानवत् तत्साम्नः°; च. ज्ञातवान्° वन्. ८ ग. °राह। १४। गाय°. ९ क. ख. °षताः। ६। अतः°. ३१

गायत्रीतश्चतुर्भिरक्षरैरधिकैरुद्देष्टितेव ' भवति ' । ' उष्णिग्गायत्रौ जागतश्च ' ( पिङ्गलछन्दःसू० ४ । १८ ) इति । ' स्निह्यतेर्वा स्यात्कान्तिकर्मणः ' । स्निग्धम् इष्टं देवतानां कान्तमेतच्छन्दः । ' उष्णीषिणी-वेत्यौपमिकम् ' । चत्वार्यक्षराण्यस्या उष्णीषमिव लक्ष्यन्ते । तेनोष्णिक् ।
५ अथोष्णीषं कस्मात् उष्णीषम् । ' स्नायतेः ' शौचार्थस्य ( धा० २ । ४२ ) । शुद्धं हि तद्भवति शुक्लम् ।

' ककुप् ककुभिनी भवति ' । सैवोष्णिग्जागतेन पादेनोपहितेन मध्यतः ककुबित्युच्यते । स तस्याः ककुबिव मध्यतो भवति । तेन ककुभिनीव ककुप् । अथ ' ककुप् ' कस्मात् । ' कुजतेर्वा ' कौटिल्यार्थस्य ( धा०
१० १ । १९९ ) ' उब्जतेर्वा ' न्यग्भावार्थस्य ( धा० ६ । २३ ) । नतं हि तद्भवति । कुब्जोऽप्यनयोरेवान्यतरस्मात् । ' अनुष्टुबनुष्टोभनात् ' । किमियमनुष्टोभति । ' गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभतीति च ब्राह्मणम् ' । स्वमतं चशब्देन समुच्चिनोति । गायत्री त्रिभिरष्टाक्षरैः पादैः समाप्यते । तस्याश्च पुनरपरश्चतुर्थः पादो भवति येन तामे-
१५ वानुष्टुबनुष्टोभति[१] । तस्मादनुष्टुप्[२] ।

' बृहती परिबर्हणात् ' । परिबृढासौ भवत्यनुष्टुभश्चतुर्भिरक्षरैः । उक्तं हि ' बृहती जागतस्त्रयश्च गायत्राः ' ( पिङ्गल० सू० ५ । ६ ) इति । ' पङ्क्तिः पञ्चपदा ' । पञ्चभिः पादैः पङ्क्तिरित्युच्यते । अथ ' त्रिष्टुप् ' कस्मात् । ततो विगृह्योत्तरं पदं निराह ' स्तोभत्युत्तरपदा ' । स्तोभति-
२० धातुरुत्तरं पदं यस्याः सेयं स्तोभत्युत्तरपदा । अथ[३] पुनः पूर्वपदे येयं त्रिता त्रित्वं श्रूयते ' त्रि ' इति एतत्किमर्थमिति । ' तीर्णतमं ' विस्तृततममेतत्[४] ' छन्दो ' गायत्र्यादिभ्यो बहुत्वात् । सेयं तीर्णतमा च स्तोभनी चेति[५] त्रिष्टुप् । ' त्रिवृद्वज्रस्तस्य स्तोभनीति[६] वा ' ।

---

१ च. ज. °नुस्तोभ°. २ क. ख. °ष्टुप् । ७ । बृह°; ग. °ष्टुप् । १५ । बृह°.
२५ ३ क. ख. घ. झ. ट. ठ. ड. °पदा । का तु त्रिता स्यात् । अथ°; च. पदा । ॰अथ° का तु त्रिता स्यात् ।. ४ क. ख. घ. झ ट. ठ. ड. °तमं स्तुततममिदं छ°; ग. ज. स्तुतत°. ५ क. ख. स्तोभति च त्रिष्टुप्; ग. ज. स्तोभती चेति°; च. स्तोभनी चेति' तीवे, घ. ट स्तोभनी वेति, ठ. ड. 'सेयं तारातिमा च स्तोभनीति वेति त्रिष्टुप्. ६ क. ख. ग. ज. स्तोभतीति; घ. ट. स्तोभवीति; च.
३० स्तोभनीति° ती.

वज्रमायुधम् । तच्च पुनः प्रायः त्रिसन्धि[1] । 'शरो वेणुः शृङ्गं शल्यम्' इति विज्ञायते । तस्य स्तोभनी[2] स्तुतिः । अथवा ऐन्द्रमेतच्छन्दः । वज्रश्चेन्द्रभक्तिः[3] । तस्मादुपपद्यते[4] ॥ १२ ॥

---

जगती गततमं छन्दो जलचरगतिर्वा जल्गल्यमानोऽसृजदिति च ब्राह्मणं विराड्विराजनाद्वा विराधनाद्वा विप्रापणाद्वा विराजनात्संपूर्णाक्षरा विराधनादूनाक्षरा विप्रापणादधिकाक्षरा पिपीलिकमध्येत्यौपमिकं पिपीलिका पेलतेर्गतिकर्मण[5] इतीमा देवता अनुक्रान्ताः सूक्तभाजो हविर्भाज ऋग्भाजश्च भूयिष्ठाः काश्चिन्निपातभाजोऽथोताभिधानैः संयुज्य हविश्चोदयतीन्द्राय वृत्रघ्न इन्द्राय वृत्रतुर इन्द्रायांहोमुच इति तान्यप्येके समामनन्ति भूयांसि तु समाम्नानाद्यत्तु संविज्ञानभूतं स्यात्प्राधान्यस्तुति तत्समामनेऽथोत कर्मभिर्ऋषिर्देवताः स्तौति वृत्रहा पुरन्दर इति तान्यप्येके समामनन्ति भूयांसि तु समाम्नानाद् व्यञ्जनमात्रं तु तत्तस्याभिधानस्य भवति यथा ब्राह्मणाय बुभुक्षितायौदनं[6] देहि स्नातायानुलेपनं पिपासते पानीयमिति ॥ १३ ॥

---

'जगती गततमं छन्दः' । आप्तमित्यर्थः । अतःपरमतिच्छन्दांसि । 'जलचरगतिर्वा' । जलोर्मिप्रकारो हि तस्याः प्रस्तारः । 'जल्गल्यमानोऽसृजदिति च ब्राह्मणम्' । 'ग्लै हर्षक्षये' (धा० १ । ९२९) । क्षीणहर्ष इव किलैतां प्रजापतिः ससृजे । ददर्शेत्यर्थः । न हि छन्दांसि

---

१ ग च. ज 'सन्धिः. २ ग. च ज. स्तोभनीति स्तु°. ३ क. ख. घ. झ. ट. ठ. ड. वज्र चेन्द्रभक्ति. ४ क. ख. घ. झ. ट. 'घते । यत्त्रिरस्तोभत्तत्त्रिष्टुभस्त्रिष्टुप्त्वमिति विज्ञायते [ क. ख. °यते ८ ( १२ )]; ठ. ड. °घते इत्यादि ( क ख. घ झ. ट. वत् ) ० यते । ( ड. ०यते । १२ ) इति निरुक्त० उत्त० ( ड. निरुक्तटीकायामुत्तरषट्के ) प्रथमेऽध्याये द्वादशः खण्डः । १२ । ( ड. '१२' नास्ति ); च. °घते ४ । १२ । जग° यत्त्रिरस्तोभत्तत्त्रिष्टुभस्त्रिष्टुप्त्वमिति विज्ञायते; ग. १६. ५ क. ख. त. द. °र्मणः । ९ । इती; छ. 'र्मणः । १७ । इती°. ६ क. ख. १० ( १३ ); छ । १८ । द्वितीयः पादः ।; त. १० । ७ । द्वितीयः पादः ।, द. । १० । इति नैरुक्ते उत्तरार्धस्य प्रथमाध्यायस्य द्वितीयः पादः. ७ क. ख. घ. झ. ट. ठ. ड. अन्त्यामि°; च. आप्तमि° अन्त्य°.

क्रियन्ते नित्यत्वादेव छन्दसाम् । विराजः पुरस्तात्त्रिष्टुब्निरुक्ता बाहुल्याद-धियज्ञे च प्रयोगभूयिष्ठत्वात्[1] । अधुना[2] विराजं निराह । ' विराड्विराजनाद्वा विराधनाद्वा विप्रापणाद्वा ' । ' विराजनात्संपूर्णाक्षरा ' । साकल्याद्वि-राजत इवै[3] । ' विराधनादूनाक्षरा ' । वैकल्याद्विराध्यतीव हि सा । ' विप्रापणादधिकाक्षरा । ' विप्लुतेव[4] हि सा स्वरूपात् । ' पिपीलिक-मध्येत्यौपमिकम् ' । मध्याल्पाक्षरपादा या सा पिपीलिकमध्येवै[5] भवति पिपीलिकसंरूपा[6] । ' पिपीलिका ' कस्मात् । ' पेलतेः ' गत्यर्थस्यै[7] ।

इतिकरणः प्रकरणपरिसमाप्त्यर्थः । अथवा । इतिकरणेनाभिनयेन दर्शयन्निव ब्रवीति । एवमनेन प्रकारेण यथापरिभाषितेन ' यत्काम ऋषिः ' इत्येवमादिना इमा देवता अनुक्रान्ताः । ' अग्निर्जात-वेदा वैश्वानरः ' ( निघ० ५ । १ )[8] इत्येवमाद्याः । समासतो निर्णीता

**देवताः सूक्तभाजो हविर्भाजश्च**

इत्यर्थः । ताः पुनः ' सूक्तभाजो हविर्भाजः ' । काश्चिद्धविर्भजन्ते न सूक्तं काश्चित्सूक्तं भजन्ते न हविः काश्चिदुभयं भजन्ते । वक्ष्यति हि । ' इतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रा-न्तानि सूक्तभाञ्जि हविर्भाञ्जि तेषामेतान्यहविर्भाञ्जि ' ( निरु० १० । ४२ ) इति । ' ऋग्भाजश्च भूयिष्ठाः ' ।

**भूयिष्ठा ऋग्भाजः ।**

प्रायेणेत्यर्थः । तद्यथा । आप्रीसूक्ते एकैकामृचं भजन्ते लक्षणभेदादिभिः ( निरु० ८ । ४-२१ ) । अर्धर्चभाजोऽपि कचिदुपेक्षितव्याः । तद्यथा । ' ऋचः सूर्याय गीयन्त उद्वेतीत्यर्धपञ्चमाः ' । ' यत्रा चक्रुः '

**काश्चिदर्धर्चभाजः**

इत्यस्याः पूर्वोऽर्धर्चः[9] सौर्यः शौनकस्य । उत्तरो मैत्रावरुणः ( निरु० ६ । ७ । ) । पादभाजोऽपि

---

१ क. ख. घ. झ. ट. ठ. ड. °भूयस्त्वात्. २ क. ख. घ. झ. ट. ठ. ड. अथ पुनर्विरा°. ३ ठ. ड. एव. ४ क. ख. घ. झ. ट. ठ. ड. विप्रुतेव. ५ घ. झ. ट. ठ. ड. °मध्ये भ°. ६ क. ख. घ. झ. ट. ठ. ड. °कस्वरूपा. ७ क. ख. घ. झ. ट. ठ. ड. °र्थस्य ( क. ख. °र्थस्य । ९ । ) इतीमा देवता अनुक्रान्ताः । इतिक°; ग. °र्थस्य । १७ । इतिक°; च. °र्थस्य । ४ इतिक° इतीमा देवता अनु-क्रान्ताः।. ८ क. ख. घ. झ. ट. ठ. ड. ' परि ' नास्ति. ९ च. पूर्वार्धे°.

कश्चिदुपेक्षितव्याः । तद्यथा । ' नवो नवो भवति जायमानः ' ( ऋ० सं० १० । ८५ । १९ ) इत्यस्या आदित्यदैवतो द्वितीयः पादो भवति ( निरु० ११ । ६ ) । भूयिष्ठग्रहणाच्च दर्शयत्यसमाम्नाता अपि सन्ति ता अप्युपेक्षितव्याः[1] । यथालक्षणं त्रिषु स्थानेषु कल्प्याः । तद्यथा । परमेष्ठिग्रहनक्षत्रसर्पलाङ्गलकुसुम्भ[2]प्रभृतीनि ।

पादभाजोऽपि काश्चित्

' काश्चिन्निपातभाजः ' इति । निपातो हि द्विविधः । देवतान्तरैः सह साधारण्येनोपस्तुतौ[3] नैघण्टुकत्वेन च । तत्र साधारण्यं[4] नाम । तद्यथा । ' विधाता धात्रा व्याख्यातस्तस्यैष निपातो भवति बहुदेवतायामृचि ' ( निरु० ११ । ११ ) । ' सोमस्य राज्ञो[5] वरुणस्य ' ( ऋ० १० । १६७ । ३ ) इत्यस्या सोमप्रभृतिभिः सह विधाता स्तूयते[6] साधारण्येन ( निरु० ११। १२ ) । नैघण्टुकत्वेन पुनः । तद्यथा । ' पृथिवी व्याख्याता तस्या एष निपातो भवत्यैन्द्राग्न्यामृचि ' ( निरु० १२ । ३० ) ' यदिन्द्राग्नी परमस्यां पृथिव्याम् ' ( ऋ०सं०१।१०८।१० )इति (निरु० १२ । ३१) । ' पृथिव्याम्[7] ' इति ताभ्यामिन्द्राग्निभ्यां सह साधारण्येन[8] न पृथिवी स्तूयते। किं तर्हि । लक्षणत्वेनेन्द्राग्न्योरे[9]वोपादीयते । एवं तावदयमिहाधिकारे काश्चिन्निपातभाज इति द्विप्रकारो निपात उक्तः ।

निपातभाजः काश्चित् । निपातो द्विविधः

अथ पुन[10]रयमपरो निपातप्रकारो[11] उपेक्ष्यः । तद्यथा । अत्यन्तनैघण्टुकं देवताभिधानमनत्यन्तनैघण्टुकं च । तत्रात्यन्तनैघण्टुकं नामात्यन्तमदृष्टस्वप्रधानस्तुति[12] । तद्यथा । आदित्यस्य स्वःपृश्निप्रभृतिभिः । अथ पुनर्दृ

अपरो निपातप्रकारः

१ क. ख. घ. झ. ट. ठ. ड. 'तव्या इति । ताश्च यथा°; च. °तव्याः ✓ । यथा° इति । ताश्च. २ क. ख. कुसुम्भकप्र'; घ. झ. ट. ठ. ड. °कुसुम्भकप्र°; च. 'कुसुम्भ✓प्र° क ३ क. ख. ज 'स्तुतो ने°. ४ क. ख. घ. झ. ट. ठ. ड. साधारणं; ग. ज. तत्र साधारनोपस्तुतौ ण्यं तद°.५ क. ख. घ. झ. ट. ठ. ड. राज्ञ इत्य°. ६ क. ख. घ झ. ट. ठ. ड. श्रूय°. ७ क. ख. घ. झ. ट. ठ. ड. ' पृथिव्यां इति ' नास्ति; ग. ज. पृथिव्या इति. ८ क. ख घ. झ. ट. ठ. ड. °ण्येन पृथिवी न स्तू'. ९ क. ख. घ. झ. ट. ठ. ड. 'त्वेनै· न्द्राग्न्यो°. १० क ख. घ. झ. ट. ठ. ड. ' पुनः ' नास्ति. ११ ग. ज. °कारमुपेक्ष्यः. १२ क. ख. ठ. ड. °स्तुतिः; च. °स्तुति° तिः.

स्तुत्वप्रधानस्तुति यद्देवतापदं वाक्यार्थोपजनितपारतन्त्र्यमाक्षिप्तस्वाभिधेयसामर्थ्यमुपमानशब्देन स्वमर्थमन्यस्मिन्देवतापदे प्रधाने वाक्यार्थसामर्थ्योपजनितप्राधान्यसामर्थ्ये निगमयत्यनत्यन्तनैघण्टुकं भवति । तद्यथा ।' अग्निरिव मन्यो ' ( ऋ० सं० १० । ८४ । २ )

अत्यन्तनैघण्टुकं देवताभिधानं

५

इत्यग्निशब्द इवेत्यनेनोपमाशब्देन वाक्यार्थोपजनितसामर्थ्येनाक्षिप्तस्वाभिधेयसामर्थ्यो विशेष्यमाकाङ्क्षन् संबोधनान्तं मन्युशब्दं वाक्यगतैः पदैरुन्नीयमानसामर्थ्यमर्थिनि विशेषणापेक्षे स्वमर्थं मन्युशब्दे विनिगमयन्निपततीति

अनत्यन्तनैघण्टुकं

१० नैघण्टुकं तदिति । एवमनेकप्रकारो निपात उपेक्ष्यः ।

' अथोताभिधानैः संयुज्य हविश्चोदयति ' । ' अथ ' इति विशेषाधिकारे । ' उत ' इत्यप्यर्थे । अपरमपरमभिधानमपेक्ष्यापेक्ष्य । तद्यथा । अभिधानैः संयोज्य विशेषणशब्दैस्तत्रैतदभिधानमिन्द्रादि संविज्ञानाद्रूढमिन्द्रादौ देवतार्थे आम्नायविधौ प्रयोगे च

विशेषणयुक्ताभ्यो देवताभ्यो हविश्चोद्यते

१५

हविश्चोदयति । तद्यथा ' इन्द्राय वृत्रघ्न एकादशकपालं निर्वपेत् ' ( मैत्रा० सं० २ । २ । ११ ) इति । तथा ' इन्द्रायांहोमुच इति ' । ' इन्द्रायांहोमुच एकादशकपालं निर्वपेत् ' ( मैत्रा० सं० २ । २ । १० ) इति । ततः किम् । ' तान्यप्येके समामनन्ति ' । एके नैरुक्तास्तान्यपि गुणपदानि वृत्रहांहोमुक्प्रभृतीनि अग्न्यादौ देवतापदसमाम्नाये पृथक्पृथक्समामनन्ति । अहं तु न समामने । कस्मात् । ' भूयांसि तु समाम्नानात् ' । यानि तु

२० केचित्तानि विशेषणपदानि निघण्टौ समामनन्ति

---

१ ठ. ड. °स्तुतिः । यद्दे°; च. °स्तुति यद्दे° ये. २ क. ख. 'मर्थ्यं यत् निग°; २५ घ. झ. ट. ठ. ड. 'मर्थ्ये यन्निग°; च. 'मर्थ्ये ⌄ नि° यत्. ३ क. ख. घ. झ. ट. °ण्टकं तद् भ°; च. 'ण्टुकं ⌄ भ° तत्. ४ क. ख. घ. झ. ड. विशेषमा°; ट विशेषं° ष्य. ५ क. ख. घ. झ. ट. ठ. ड. °शब्दे निग°. ६ ठ ड. 'मुचप्रभृ°. ७ ग. ज. ' समाम्नानात् । ००० ततोऽन्यान्यपि भूयांसि ' नास्ति. ८ क. २९ ख. घ. झ. ट. ठ. ड. तेषु; च. तु° तेषु.

गुणपदानि वृत्रहांहोमुक्प्रभृतीनि तान्यप्येके समामनन्ति । ततोऽन्यान्यपि भूयांसि बहुतराणि सन्त्येव माहाभाग्याद्देवताया गुणानामियत्ता नास्तीति[3]। तेषां च सर्वेषां समाम्नाने समाम्नायस्यापरिनिष्ठैव स्यात् । तथा च सति तेषां शास्त्रेऽपरिसमाप्तिः । तन्ममापि मा भूदित्यतो ' यत्तु संविज्ञानभूतं स्यात्प्राधान्यस्तुति तत्समामने ' इति ।

*तानि न समाम्नातव्यानि यस्मात्तेषामियत्ता नास्ति*

5

यदेतत्संविज्ञानभूतं रूढमगौणं केवलमपि निर्विशेषणं लब्धप्रधानस्तुति देवतापदमग्न्यादि तत्समामने न गौणं व्रतभृद्व्रतपत्यादि ।

*यत्संविज्ञानभूतं स्यात्प्राधान्यस्तुति च तदेव समाम्नातव्यम्*

अथवा ' तान्यप्येके समामनन्ति ' इत्यत उत्तरस्य ' भूयांसि तु समाम्नानात् ' इत्यस्यापरोऽर्थः । भूयांस्येव तेषां समाम्नानात्समाम्नातानि स्युः । न किंचिदतिरिक्तं प्रयोजनं वचनात् । केवलं गुरु शास्त्रं संपद्यते । तन्मा भूदित्यर्थः ।

10

' अथोत कर्मभिर्ऋषिर्देवताः स्तौति वृत्रहा पुरन्दर इति ' स वृत्रहा शतक्रतुः पुरन्दरो गोत्रभिद्वज्रबाहुरिति । तान्यप्येके कर्मनामधेयानि समामनन्ति । को विशेषः पूर्वेभ्यः समाम्नातृभ्यः । विधिदर्शनात्पूर्वे ' हविश्चोदयति ' इति वचनात् । स्तुतिदर्शनादिमे 'कर्मभिर्ऋषिर्देवताः स्तौति ' इति वचनात् । ' भूयांसि तु समाम्नानात् ' इति स एव दोषः ।

*कर्मनामान्यपि समामनन्ति ।*

15

' व्यञ्जनमात्रं तु तत्तस्याभिधानस्य भवति ' । वृत्रहा पुरन्दर इति यदेवमादि गुणपदं तत्तस्यैवेन्द्रादेः संविज्ञानपदस्य व्यञ्जनमात्रं विशेषणमात्रं भवति । न पृथक्प्रधानं केवलस्यासंबन्धात्तुल्या । यथा लोके ' ब्राह्मणाय बुभुक्षितायौदनं देहि स्नातायानुलेपनं पिपासते पानीयमिति ' । यो बुभुक्षितस्तस्मा इति ।

*यस्मात्तानि मुख्याभिधानस्य विशेषणान्येव*

20

25

---

१ क. ख. घ. झ. ट. ठ. ड. ' तान्यप्येके ' नास्ति; च. तान्यप्येके. २ ग. ज. महा°; च. महा° मा. ३ क. ख. घ. झ. ट. ' इति ' नास्ति. ४ क. ख. घ. झ. ट. ठ. ड. शास्त्रेऽसमा°. ५ ग. ज. तेषां समाम्नानानि स्युः; च. तेषां ˇ समा° समाम्नानात्. ६ क. ख. घ. झ. ट. तान्यप्येके समामनन्ति । तान्यप्येके कर्म°; च. ˇ तान्य° तान्यप्येके समामनन्ति. ७ क. ख. घ. झ. ट. ठ. ड. °लस्य संब°; च. °लस्यासं° स्य. ८ ग. ज. °तस्मायेति.

यथा तु बुभुक्षितशब्दो विशेषणं केवलस्य बुभुक्षितशब्दस्य विशेषणः क्वचिदनवस्थानादेवं वृत्रहा पुरन्दर इत्येवमादीनां विशेष्यमप्राप्यानवस्थानाद्व्यञ्जनमात्रता न स्वप्रधानता । तस्मान्नैनान्यहं समामने ॥ १३ ॥[1]

यथा बुभुक्षितस्नातपिपासच्छब्दा विशेषणत्वान्न स्वतन्त्रा एवमेतानि कर्मनामानि

५

इति निरुक्तभाष्यार्थनिबन्धपद्धतौ द्वादशस्य तृतीयः पादः ।[2]

---

**अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामोऽग्निः कस्मादग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयतेऽङ्गं नयति संनममानोऽक्नोपनो भवतीति स्थौलाष्ठीविर्न क्नोपयति न स्नेहयति त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिरितादक्ताद्दग्धाद्वा नीतात्स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परस्तस्यैषा भवति ॥ १४ ॥**[3]

१०

---

१५ 'अथातोऽनुक्रमिष्यामः' । सामान्यतः परीक्षितोऽग्न्यादिर्देवपत्न्यन्तो[4] देवतापदसमाम्नायः । विशेषेण इदानीं प्रतिपदमनुव्याख्यास्यते । तदर्थमधिकारवचनम् 'अथ' इति । 'अतः' इत्यानन्तर्ये । सामान्यात्पारिभाषिकाद् व्याख्यानादनन्तरमानुपूर्व्येण यथासमाम्नातं क्रमिष्यामः । कथयिष्यामो वर्णयिष्यामो व्याख्ययेति वाक्यशेषः । सा

२० च पुनर्व्याख्याभिधानाभिधेयाभिधानव्युत्पत्तिप्राधान्यस्तुत्युदाहरणतन्निर्वचनविचारोपपत्त्यवधारणक्रमलक्षणा । तद्यथा ।'अग्निः' इत्यभिधानम् । अयं 'पार्थिवः' इत्यभिधेयम् । 'अग्रणीर्भवति' इत्यभिधानव्युत्पत्तिः । 'अग्निमीळे' इति प्राधान्यस्तुत्युदाहरणम् । 'अग्निमीळे[5] अग्निं याचामि' ( निरु० ७ । १५ ) इति तन्निर्वचनम् । 'स न मन्येतायमेवाग्निः'

विशेषव्याख्याया लक्षणम्

२५ उदाहरणं च

---

१ क. ख १० ( १३ ); ग. १८; घ. ट. ठ. ड. ज. अङ्को नास्ति. २ घ. झ. ट. इति द्वादशस्य°; ठ. °मने इति नि० उत्तरष० प्र० त्रयोदशः खण्डः । १३ । आदितो द्वादशाध्यायस्य तृतीयः पादः; ड. °मने । इति द्वादशस्य तृतीयः पादः । इति निरुक्तटीकायामुत्तरषट्के प्रथमाध्याये त्रयोदशः खण्डः. ३ क. ख. १ ( १४ ); छ. १९; त. द. १. ४ क. ख. घ. झ. ठ. ड. परिख्यातो°; ग. ज. पारिभाषितो°; च. परीक्षितो;° ट. परिख्यातो° रीक्षि. ५ क. ख. ग. ज. घ. झ. °मीले.

( निरु० ७।१६ ) इति च विचारः । ‘ यस्तु सूक्तं भजते यस्मै हविर्निरुप्यते ’ ( निरु०७ । १८ ) इतीयमुपपत्तिः [1] । ‘ अयमेव सोऽग्निः ’ ( निरु० ७।१८ ) इत्यवधारणम् । एवंप्रकारया व्याख्यया प्रतिपदमनुक्रमिष्यामः ।

आत्मविद्याज्ञिकनैरुक्तानामग्निविषये मतानि

तत्रैतद्भवति कोऽयमग्निरिति । आत्मेत्यात्मविदः । ‘ एकं सद्विप्रा बहुधा वदन्ति ’ ( ऋ०सं० १ । १६४ । ४६ ) इति मन्त्रदर्शनात् । अविवक्षितस्थानविशेषो निर्ज्ञातैतदभिधानो देवताविशेषो लोकवेदप्रसिद्धः कर्माङ्गमिति याज्ञिकाः । विवक्षितविशिष्टस्थानकर्मा [2] मध्यमोत्तमाभ्यां ज्योतिर्भ्यामन्यः पार्थिवोऽयमग्निरिति नैरुक्तसमयः । त्रित्वाभ्युपगमात्तत्संपिपादयिषयेदमारभ्यते । ‘ अग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामः ’ इति ।

अग्निः किमिति पृथिवीस्थानः

पृथिव्येवास्य विशेषतः स्थानं नान्तरिक्षं न द्यौरिति पृथिवीस्थानस्तत्र कर्माधिकारात्तस्य । तिष्ठत्यस्मिन्निति स्थानम् । यस्मात्पृथिव्यस्य स्थानं तस्मात्संनिकर्षाल्लोकानुक्रमाच्च न चासति कारणे प्रथमातिक्रमो न्याय्य इति तमेव प्रथमं व्याख्यास्यामः ।

‘ अग्निः ’ ( निघ० ५ । १ । १ ) कस्मात् । देवताभिधाने देवतात्मनः परोक्षीकृत्य परोक्षीकृतं तत्त्वमर्थितम् [3] । ‘ परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ’ ( शत० ब्रा० १४ । ५ । ६ । २ ॥ बृह० उप० ४ । २ । २ ) इति हि विज्ञायते । तन्निर्वचनादागमप्रामाणिकं देवतातातद्गाध्यमनुभवतीत्यवेत्य तन्निर्विवक्षया ‘ अग्निः कस्मात् ’ इत्युपोद्धृत्य ‘ अग्रणीर्भवति ’ इत्येवमादिनाग्निशब्दं निराह । सर्वत्रैवं देवतापदे उपोद्घातोपन्यासौ द्रष्टव्यौ । आत्मवित्पक्षे तु सर्वमभिधानमात्मार्थमेवेति सर्वावस्थमात्मानं सर्वाभिधानव्युत्पत्तितो निरुच्य याथात्म्यतः परिज्ञाय सर्वात्मनः आत्मनः सर्वावस्थं

देवतापदनिर्वचनस्य फलं देवतातातद्गाध्यम्

---

१ क. ख. घ. झ. ट. ठ. ड. इत्युपप°. २ क. ख. घ. झ. ट. ठ. ड. विवक्षितस्थानविशिष्टकर्मा; च. °विशिष्टस्थानि° स्थानविशिष्ट. ३ क. ख. ग. ञ. झ. ट. ठ. ड. °मर्पितम्.

विभूतिताद्भाव्यमनुभवतीति सर्वपदव्युत्पत्तिप्रयोजनम् । स्मर्यते हि ।
' शब्दब्रह्मणि निष्णातः परब्रह्माधिगच्छति ' इति ।

**अग्निशब्दस्य व्युत्पत्तयः तासामर्थः**

' अग्रणीर्भवति ' इत्यग्निशब्दं विगृह्य वाक्यीकृत्य कृत[1]वाक्यपदवर्णनिष्कर्षणसमुदायोपजनितस्याग्निशब्दस्याग्रशब्दा[2]त् ' अग' कारमुपलभ्य अग्रशब्दं कर्माभिधायिनं पूर्वपदत्वेन व्यवस्थाप्य नयति च [3]परमुत्तरप[4]दं कर्तव्यात्मनि अवस्थाप्याग्निशब्दं निराह । अथ कोऽर्थ इति । सर्वेष्वर्थेष्वसावात्मानमग्रं नयति । सर्वत्र तथोपकरोति यथाग्रं संपद्यत इत्यर्थः ।

१० अग्रशब्दः प्रधानवाची । स एव चाग्रं नयति । सेनां वा[5]ग्रे नयति सैनापत्येऽवस्थित इत्येके । विज्ञायते हि ' अग्निर्वै देवानां सेनानीः ' इति । अथवा । ' अग्रं यज्ञेषु प्रणीयते ' । प्रथमं यज्ञेषु प्रणीयते । न तावत्किंचि[6]दन्यत्क्रियते यावदयं न प्रणीयत इति । ततोऽस्मिन्व्रतमुपेत्यान्यानि कर्माणि क्रियन्त इति । अथवा । ' अङ्गं नयति संनममानः ' । [7]यत्रायं संनमयति साधनत्वेन
१५ वैदिके वा लौकिके वार्थे तत्र संनममान एवात्मानं प्रधानीकृत्य सर्वमन्यदात्मनोऽ[8]ङ्गता नयति । गुणीकरोतीत्यर्थः । अथवा । ' अङ्गं नयति संनममानः ' । [9]तृणे काष्ठे वा यत्र संनमन्याश्रयति तदात्मनोऽङ्गता नयति । आत्मसात्करोतीत्यर्थः ।

**स्थौलाष्ठीविमतेन व्युत्पत्तिः**

' अक्नोपनो भवतीति स्थौलाष्ठीविः ' । स्थूलाष्ठीवतः पुत्रः स्थौलाष्ठीविराचार्यः । स एवं मन्यते अयमक्नोपनो यस्माद्भवति तस्मादग्निरिति । किमिदमक्नोपन इति । यत आह ' न क्नोपयति ' । एवमपि न गृह्यते क्नोपयतेरप्रसिद्धार्थत्वात् । अतः पुनर्ब्रवीति प्रसिद्धेनार्थेन ' न स्नेहयति ' । विरूक्षीकरोतीत्यर्थः । स हि तस्य स्वभावः ।

---

२५ १ ग. ज. कृतं वाक्य°. २ क. ख. घ. झ. ट. ठ. ड. °शब्दाद्गका°; च. °शब्दाद्गका° त्. ३ क. ख घ. झ. ट. ठ ड. °च परमुत्तर°. ४ क. ख. घ. झ. ट. ठ ड. °पदस्थ कर्तव्यार्थात्मनेव व्यवस्था°; ग. ज. °पदं कर्तव्यात्मनावस्था°; च. °पदं कर्तव्यात्मन्य° र्या; ट. °पदस्थ कर्तव्यार्थात्मनेव व्यव° र्या (य) त्मन्य. ५ क. ख. घ. झ. ट. ठ. ड. वाग्रं. ६ क. ख. घ. झ. ट. ठ. ड. °चिदप्यन्य°. ७ घ. झ. ट. अत्रायं. ८ ग. ज. °नोऽङ्गं न°; च. °नोऽङ्ग न° ङ्गतां. ९ क.
२१ ख. ग. ज. घ. झ. ठ. ड. ढ. तृणे वा काष्ठे°.

'त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः' । त्रयाणामाख्यातानामभिधेयाः क्रिया अत्र लक्ष्यन्ते । ता शाकपूणिमतेन उपादाय हेतुत्वेनाग्निशब्द आत्मानं लभते । तद्यथा । 'इतात्' । 'इणः' इत्यर्थः ।[1] 'अक्ताद्दग्धाद्वा' । अनक्तेर्वा दहतेर्वा । विकल्प एतयोः । ततो 'नीतात्' इति । 'णीञ्[2] प्रापणे' ( धा० १ । ९२६ ) इत्येतस्मात् । धातवः केवलं निर्दिष्टाः । किं कुत आदत्ते इति । यत आह । 'स खलु' शाकपूणिः 'एतेः' धातोः[3] 'अकारमादत्ते' । नन्वेतेर्धातो-[4] रकार एव नास्ति । अतः किमादत्ते । सत्यं नास्ति । वर्णसामान्येन तद्विकारमादाय इणोऽर्थदर्शनादग्नौ शब्दार्थसंबन्धनित्यत्वादर्थे च गुणभूतत्वाच्छब्दस्य ततस्तं व्यापादयत्यकारत्वेन । अथवा । रूपानेकत्वादिणो यथावस्थितस्याकारो भवति तथा रूपमवस्थाप्य ततोऽकारमादत्ते । दर्शितं च[5] 'एतेः कारितं च यकारादिं चान्तकरणम्' इत्यत्र ( निरु० १ । १३ ) । भवति चास्य ण्यन्ते रूपम् 'आययति' इति । अतोऽकारं तत आदत्ते । 'गकारमनक्तेर्वा दहतेर्वा' कृतकुत्वजश्त्वयोर्विकल्पेन । 'नीः[6] परः' । एष ह्रस्वः । एति च व्यनक्ति च रूपाणि । अथवा । एति च[7] दहति च । नयति च हवींषि देवेभ्यः इति[8] साधीयस्तरा एतद्धातुवाच्याः क्रिया एष करोतीति 'अग्निः' । 'तस्य' एतल्लक्षितलक्ष्यप्रधानस्तुतिसंबन्धमभिधानमुपलक्ष्य देवतापदसमाम्नाये समाम्नातमग्निरिति । तस्य 'अग्निमीळे[9]' इत्येतत्प्रमुखा अग्निकर्मलिङ्गलिङ्गिताः सर्वा आग्नेय्य ऋच उदाहरणम् । न पुनरसति कारणे मुख्यातिक्रमो न्याय्य इति ऋग्वेदप्रथमामिमामृचमुदाजहार 'तस्यैषा भवति' इति[10] ॥ १४ ॥

---

१ क. ख. घ. झ. ट. ठ. ड. इण् गतावित्यस्मादित्यर्थः. २ ग. च. ज. णीङ् प्रा°. ३ क. ख. घ. झ. ट. ठ. ड. 'धातोः' नास्ति. ४ क. ख. घ. झ. ट. ठ. ड. चैतदेतेः; च. चैं एतै°: चैतदे. ५ क. ख. घ. झ. ट. ठ. ड. अत्राकारः। ततः°. ६ ग. ज. णीः. ७ घ. ट 'एति वहति नयति°; ठ. ड. 'एतिस्तरा एताधद्धातुवाच्याः°. ८ क. ख. घ. झ. ट इत्यग्निः साधीयस्तर । एता°. ९ क. ख. ग. च. ज. घ. झ. °मीळे. १० क. ख. १ (१४); ग. १९; घ. झ. ट. ज. अङ्को नास्ति.

अग्निमीळे[1] पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ( ऋ० सं० १ । १ । १ ) ॥ अग्निमीळेऽग्निं याचामीळिरध्येषणाकर्मा[2] पूजाकर्मा वा पुरोहितो व्याख्यातो यज्ञश्च[3] देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो देवः सा

५ देवता होतारं ह्वातारं जुहोतेर्होतेत्यौर्णवाभो[4] रत्नधातमं रमणीयानां धनानां दातृतमं तस्यैषापरा भवति ॥ १५[5] ॥

---

'अग्निमीळे[6]' इति[7] । मधुच्छन्दस आर्षम् । गायत्री । आश्विने[8] विनियोगः । यः अग्निः देवः पुरोहितः[9] अस्माकं यज्ञे यश्च ऋत्विक् होता यज्ञस्य रत्नधातमश्च दातृतमो रत्नानां तमहं रत्नानि याच इति समस्तार्थः ।

१० अग्निशब्दस्योदाहरणम्

अथैकपदनिरुक्तम् । 'ईडिः[10]' धातुः 'अध्येषणाकर्मा' याच्ञाकर्मेह । अन्यत्र 'पूजाकर्मा' अपि । 'पुरोहितो व्याख्यातः' 'पुर एनं दधति' ( निरु० २ । १२ ) इति । 'यज्ञश्च[11]' 'प्रख्यातं यजतिकर्म' ( निरु० ३।१९ ) इति । 'देवो दानाद्वा' ।

१५ ददाति ह्यसावैश्वर्यात् । 'दीपनाद्वा' । दीपयति ह्यसौ तेजोमयत्वात् । 'द्योतनाद्वा' । धात्वन्यत्वमर्थैकत्वम् । 'द्युस्थानो भवतीति वा' पक्षेऽर्थवत्त्वं निर्वचनस्य । अथवा । अग्नीन्द्रावपि द्युस्थानौ । सामान्यं हि द्यौः स्थानं देवतानाम् । तयोस्तु कर्माधिकारस्थाने विशिष्टे पृथिव्यन्तरिक्षे । होतारं ह्वातारं देवतानाम्[12] । 'और्णवाभः' तु 'जुहोतेः' 'हु'

२० दानादानयोः[13]' ( धा० ३ । १ ) इत्यस्य मन्यते 'होतेति' । रत्नधातमं रमणीयानां धनानां दातृतमम् ।

'तस्य' एवाग्नेः 'एषा परा' ऋक् 'भवति' । समानसंहितत्वादपरेति वा । द्वितीयेत्यर्थः । सा पुनः किमर्थमिति । अमुना प्रकारेण

---

१ क. ख. छ. त. द. °मीले. २ क. ख. छ. त. द. °मीलिर°. ३ छ.

२५ यज्ञस्य; त. यत्यस्यै° श्च, द यज्ञश्चै° स्य. ४ छ त द. °र्होतेरित्यौ°. ५ क. ख. २ (१५); छ. २०; त. द. २. ६ क. ख. ग. च. ज. घ. झ. °मीले. ७ ग. इति । म°. ८ ठ. ड. आश्विनशस्त्रे. ९ क. ख. घ. झ. ट. ठ. ड. °हितः पाकयज्ञे अ°; च. °हितः ~ अ° पाकयज्ञे. १० ग. च. ज. ईलिः°. ११ क. ख. घ. झ. ट. ठ. ड. यज्ञश्च व्याख्यातः । प्र°; ग. ज. व्याख्यातयज्ञश्च; च. यज्ञश्च ~ । प्र° व्याख्यातः ।. १२ क. ख. घ. झ. ट. देवाना. १३ घ. झ. ट. ठ. ड. दानादनयोः.

सर्वा एतस्यामुदाहरणं तत्कर्मयुक्ता ऋच उपेक्ष्या इत्युपप्रदर्शनार्थम्[2] ॥ १५ ॥

---

**अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत । स देवाँ एह वक्षति (ऋ० सं० १।१।२) ॥ अग्निर्यः पूर्वैर्ऋषिभिरीळितव्यो[3] वन्दितव्योऽस्माभिश्च नवतरैः स देवानिहावहत्विति स न मन्येतायमेवाग्निरित्यप्येते उत्तरे ज्योतिषी अग्नी उच्येते ततो नु मध्यमः[4] ॥ १६ ॥**

---

'अग्निः पूर्वेभिः' इति । पूर्वयैव समानार्षविनियोगच्छन्दस्का ।

द्वितीयमुदाहरणम् — तद्वृत्तमुत्तरत्रापेक्ष्य यद्वृत्तमध्याजहार भाष्यकारो यत्तदोर्नित्यः[6] संबन्ध इति दर्शयन् । अग्निः यः पूर्वेभिः पूर्वैः चिरंतनैः ऋषिभिः ईळितव्यः[7] ईळनं[8] पूजनमर्हति अस्माभिश्च नवतरैः ईळितव्य[9] इति वर्तते । स किं करोतीत्याकाङ्क्षिते[10] निराकाङ्क्षम्[11] । स देवानिह एतस्मिन्कर्मण्यस्माकम् आवहतु इति लोटा निराह भाष्यकार आशिषमाकाङ्क्षितामपेक्ष्य । ऋज्वेकपदनिरुक्तम् ।

संकीर्णत्वादग्न्यभिधानस्यातः परं विचारः । 'स न मन्येत' इत्येवमादिनाक्षिप्य विचारः ।

अग्न्यभिधानस्यार्थान्तरे वृत्तिः — ननु नित्ये स्वार्थाभिसंबन्धेऽभिधानानामर्थान्तरवृत्तितैव नास्ति कुतः संकर इति । अथास्त्यर्थान्तरवृत्तिता जहत्स्वार्थ[12]मर्थान्तरमुपसंक्रामद्[13]नित्यतां संबन्धस्य द्योतयति ।

---

१ क. ख. घ. झ. ट. ठ. ड. °रणमेतत्क°. २ क. ख. २(१५); ग. २०; ठ. ड. इति निरुक्तवृत्तौ (ड. निरुक्तटीकायां) उत्तरषट्के प्रथमेऽध्याये पञ्चदशः खण्डः (ठ. खण्डः । १५ ।). ३ क. ख. थ. °रीडितव्यो; छ. त. द. °रीलितव्यो. ४ क. ख. ३ (१६); छ. २१; त. द. ३. ५ ग. इति । पू°. ६ क. ख. घ. झ. ट. ठ. ड. °र्नित्यसं°. ७ क. ख. झ. ठ. ड. ईडित°; ग. च. ज. घ. ईलित°. ८ क. ख. ईडनं, ग. च. ज. झ. ईलनं. ९ क. ख. ईडित°; ग. च. ज घ. झ. ईलित°. १० घ. झ. ट. ठ. ड. करोत्वित्या°. ११ क. ख. घ. झ. ट. ठ. ड. °काङ्क्षं क्रियते । स°; च. °काङ्क्षं॰ । स° क्रियते. १२ ग. ज. जहन्स्वार्थ°; च. जहन्स्वाँ° त्स्वा. १३ च. वर्जं सर्वेषु पुस्तकेषु °क्रामन्नि°; च. °क्रामदंनि° न.

नैव जहत्स्वार्थमभिधानमभिधेयान्तरे वर्तते । किं तर्हि । द्वे ह्यभिधानस्य शक्ती गौणी मुख्या च । तयोर्गौणी गुणसाम्या-

अभिधानानां गौणी मुख्या इति द्वे शक्ती

द्यस्मात्कस्माच्चिद्गुणात्सर्वत्र वर्तते । तस्यास्तथा-विध एव संबन्धः सर्वार्थैर्नित्यं समर्थप्रकरणो-

५ पपदपरतन्त्रः । मुख्यौ त्वविनियोगेन लोकवेद-प्रसिद्धया स्व एवार्थे वर्तते । तदेवमसंकरेऽपि शब्दानां मुख्यगौणार्थ-वर्तिना संकर इवामेधसा प्रतिभाति ।

क कस्य शब्दस्य गौणी शक्तिः क कस्य मुख्येति तत्प्रविवेकार्थ-मिदमुपोद्घन्ति चोदकरूपेण ' स न मन्येत ' इति । स शिष्यो न

१० मन्येत न जानीयात्सम्यगेतदभिहितम् ' अयमेवाग्निः ' पृथिवीस्थानः ' इति ' । कस्मात्पुनर्न मन्येत । इतो यस्मात्

उत्तरे अपि ज्योतिषी अग्नी इत्युच्येते

' अप्येते उत्तरे ज्योतिषी ' मध्यमं चोत्तमं च ' अग्नी उच्येते ' । कथमिति । अत आह । एत-त्तावत्पार्थिवं ज्योतिरावहनक्रियायोगात् ' अग्नि-

१५ मीळे ' इत्येतस्यां यथा भवतोक्तं तथैवोच्यते । ' ततो नु ' वयमपि यथा ' मध्यमः ' अग्निशब्देनोच्यते तत्कर्मयोगाच्च स एवाग्निः-स्तथेमामृचमुदाहरिष्यामः ॥ १६ ॥

---

अभि प्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम् ।

२० घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ( ऋ० सं० ४ । ५८ । ८ ) ॥ अभिनमन्त समनस इव योषाः

---

१ ग. च. 'चित्' नास्ति. २ क. ख. घ. झ. ट. ठ. ड. सर्वार्थो नित्यः सम°; ग. सर्वार्थे नि°; च. सर्वार्थैर्नित्यं स° र्थो नित्यः. ३ क. ख. घ. झ. ट. ठ. ड. मुख्यत्वे वि°; च. मुख्यौ त्व° ख्यत्वे. ४ ग. ज. मन्यते; च. मन्यते° न्येत. ५ ग. ज. °रावहवनक्रिया°; च. °रावहनहवनक्रिया°. ६ क. ख. °मीडे; ग. च. ज. घ झ. °मीले. ७ क. ख. घ. झ. ट. ठ. ड. तस्यां च य°; ग. ज. °तस्या य°; च. तस्या ॰ य° च. ८ क ख. ३ ( १६ ); ग. २१; ठ. ड. इति निरुक्तटीकायामुत्तरषट्के ( ठ निरु० उत्त० ) प्रथमेध्याये षोडशः खण्डः

२१ ( ठ. खण्डः । १६ ). ९ ड. थ. ध. ठ. ड. °नवन्त.

**समनं समननाद्वा संमाननाद्वा कल्याण्यः स्मयमानासो अग्निमि-त्यौपमिकं घृतस्य धारा उदकस्य धाराः समिधो नसन्त नस-तिराप्नोतिकर्मा वा नमतिकर्मा वा । ता जुषाणो हर्यति जात-वेदाः । हर्यतिः प्रेप्साकर्मा विहर्यतीति । समुद्रादूर्मिर्मधुमाँ उदा-रदित्यादित्यमुक्तं मन्यन्ते समुद्राद्ध्येषोऽद्भ्य उदेतीति च ब्राह्म-णमथापि ब्राह्मणं भवत्यग्निः सर्वा देवता इति तस्योत्तरा भूयसे निर्वचनाय ॥ १७ ॥**　५

---

मध्यमस्य ज्योतिषोऽग्निशब्दत्वे उदाहरणम्

' अभिप्रवन्त ' इति । वामदेवस्यार्षम् । सप्तमेऽहनि दशरात्रस्याज्यशस्त्रे विनियोगः ( आश्व० श्रौ० ८ । ९ ) । अभिप्रवन्त आभिमुख्येन नमन्ति प्रह्वीभवन्ति । काः पुनस्ताः । घृतस्य उदकस्य धाराः । कमभिप्रह्वीभवन्ति । मध्यमम् अग्निम् । कथमिति । समनेव योषाः । समानमनसः । एकस्मिन् भर्तरि यासां मनांसि वर्तन्ते ताः समनसः । ता यथा कल्याण्यः रूपयौवनादिगुणसंपन्नाः स्मयमाना ईषद्धसन्त्यः हर्षमुपजनयन्त्यो भर्तुस्तं प्रति परिष्वजनायाभिनमेयुस्तथा मध्यमस्थानमग्निं घृतस्योदकस्य धाराः समिधः समिन्धयन्त्यो नसन्त । प्राप्नुवन्तीत्यर्थः । ताश्च पुनः स जातवेदाः मध्यस्थानो वैद्युतोऽग्निः जुषाणः प्रीयमाणो हर्यति पुनः पुनः प्रेप्सति अभिकामयते ।　१० १५ २०

अग्निशब्दस्य मध्यमत्वे कारणम्

एवमेतस्मिन्मन्त्रे युगपदविधानात्पार्थिवे घृताहुतिहवनस्योपमानोपमेयवैधर्म्याच्च युगपत्संभवाच्चोदकधाराणां वैद्युते तत्रोपमानोपमेयसामञ्जस्याच्च सामर्थ्यात्प्रसिद्धिमुपरुन्ध्य ' घृतस्य धारा ' शब्द उदकधारावचनः संपद्यते । पठितं चैतदेव सामर्थ्यमपेक्ष्योदकनामसु ' घृतं मधु ' ( निघ०

---

१ छ. त. द. °कर्माभिहर्य°. २ छ. त. द. उद्वेती°. ३ क. ख.४ (१७); छ २२; त. द. ४. ४ ग. इति । सप्तमे°. ५ च. भर्तुः ~ प्र° तं. ६ क. ख. ग. ज. ठ. ड. मध्यमस्था°. ७ क. ख. °दकस्य धारणं; घ. झ. ट. ठ. ड. °दकस्य धारा°. ८ क. ख. घ. झ. ट. घृतधारा°; ग. ज. घृतस्य धाराः श°.　२१

१ । १२ ) इति । एवंवेद्योऽयमग्निशब्दोऽत्र सामर्थ्यान्मध्यमं ज्योतिराह तस्मात्सुष्ठु ' स न मन्येतायमेवाग्निः पृथिवीस्थानः ' इति ।

' समनं समननाद्वा संमाननाद्वा ' इति । पूर्वम् अनितेः प्राणनार्थस्य ( धा० २ । ६० ) । उत्तरं मनोतेः ( धा० ८ । ९ ) । ऋज्वन्य-
५ न्निर्वचनम् ।

अथ खलु यथोक्तममपि ज्योतिर्भवत्याग्निस्तथोदाहारिष्यामः । ' समु-

उत्तमस्याग्निशब्दत्वे उदाहरणम्

द्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ' ( ऋ० सं० ४ । ५८ । १ ) ॥

१० ' आदित्यम् उक्तं मन्यन्ते ' । पूर्वयैव समानार्थविनियोगा । अनुक्रमण्यां नानादेवता । इह तु सौरीति कृत्वोदाहृता भाष्यकारेण । समुद्रात् उदकसंघातात् ऊर्मिः छादकः सर्वस्य प्रकाशेन मधुमान् उदकवान् उदारत् उदतीर्तत् उत्तरति उदेति अहन्यहनि । प्रथमं वास्य जन्माभिप्रेत्य । स पुनर्जातः सन् अमृतत्वम् अमृतभावम् अंशुना चन्द्रमसा उपसमानट्
१५ उपसंव्याप्नोति । सोऽस्यान्नं तेन न म्रियते । ' यमक्षितिमक्षितयः पिबन्ति ' इत्युक्तम् ( निरु० ५ । ११ ) । कथममृतत्वं तेन उपसमानडिति । घृतस्य उदकस्य हविषो वा यत् नाम नमनं गुह्यं रहस्यमविज्ञातं केनचिदपि यदत्र अस्ति विद्यते चन्द्रमसि तत्र देवानां रश्मीनां जिह्वा तदमृतं नित्यमास्वादयन्ति देवास्तेन न म्रियन्ते । तेषाम्
२० अमृतस्य अमरणस्य नाभिः नहनं सः । हेतुरित्यर्थः ।

---

१ घ. झ. ट. ठ. ड. एव चेद्यो°, च. एवं वेद्यो चे°. २ ग. °ष्यामः । समु°. ३ म. च. ज. घ. झ. ट ट. ड. दूर्मिरित्यादित्य°. ४ क. ख. घ. झ. ट. ठ. ड. °योगा । नानादेवताभिवादस्त्वस्यां देवतानुक्रमण्यां शौनकेनोक्तः ( ठ. ड. शौनकोक्तः ) । इह पुनः सौरी. ५ च. °देवता ✓ । इह° वताभिवादस्त्वस्यां देवतानुक्रमण्यां शौनकेनोक्तः. ६ क. ख. ग. ज. घ झ. ट. ठ ड. °रेण सूक्तं सकलं च । समु°; च. °रेण ✓ । समु° सूक्तं सकलं च; ठ. ड. °रेण सूक्तं सकलं च । समुद्रादूर्मिरिति सर्वा ऋक् पठ्यते. ७ क. ख. घ. झ. ट. ठ.
२८ रति वा उदे°. ८ क. ख. घ. झ. ट. ठ. ड. °मरणत्वस्या°; च. °मरण✓स्या° त्व.

अथ कुतः सूर्योऽयं[1] विशेषतोऽवध्रियते । न चात्राग्निशब्दोऽस्ति[2] यः

अस्यामृचि अग्नि-शब्दो न वर्तते । तेनाग्निशब्दोऽत्र सूर्य-पर इति कथमुच्यते

सत्यप्यादित्यदेवत्वेऽस्य मन्त्रस्याग्नित्वमादित्यस्य प्रख्यापयेत् । घृतस्तोत्र एता इति[3] विज्ञायते । यस्मादसमर्थमिदमुदाहरणम्[4] । न असमर्थम् । कस्मात् । सूक्तेऽग्निलिङ्गमेकेषां शाखिनामस्ति । 'इमं स्तनम्' इत्यत्र 'अपां प्रपीनमग्ने'[5] (य० वा० सं० १६ । ८७) इति । निविश्वास्मिन् सूक्ते धीयते । सा चाग्निलिङ्गा । आदित्यश्चायमनेन मन्त्रेणोच्यत इति स्फुटमस्यैव मन्त्रस्य "ब्राह्मणं 'समुद्राद्ध्येषोऽद्भ्य उदेति'[6] (कौषी० ब्रा० २५ । १) इति"[7] । न च पार्थिवः समुद्रादुदेति विरोधात्तस्योदकेन । तस्मादादित्योऽत्राग्निरभिप्रेत[8] इति नासमर्थमुदाहरणम् । "अथापि ब्राह्मणं भवति 'अग्निः सर्वा देवताः' (ऐ० ब्रा० ६ । ३ ॥ मैत्रा० सं० १ । ४ । १३ इत्यादि बहुकृत्वः ॥ शत० ब्रा० १ । ६ । २ । २० ॥ तै० सं० ६ । २ । २ ) इति" । अथ खल्वयमपरः संकरोऽग्निशब्दस्य । ब्राह्मणं हि[9] भवति 'अग्निः सर्वा देवताः' इति । अस्य[10] च ब्राह्मणस्य 'उत्तरा' ऋक् 'भूयसे' बहुतराय 'निर्वचनाय' ॥ १७ ॥[11]

---

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः (ऋ० सं०

---

१ क. ख. घ. झ. ठ. ठ. ड. सूर्योऽयमिति वि°. २ क.ख. घ.झ. ट. ठ. ड. न चैतास्मिन्नपि मन्त्रेऽग्निश°. ३ क ख. घ. झ. ट. ठ. ड. इति च वि°; च. इति˅ वि°च. ४ क. ख. ग. ज. घ. झ. ट. ठ. ड. तस्मा°; च. यस्मा° त. ५ ग. ज. प्रतीतमग्ने; च. प्रपीनमग्ने° त. ६ ग. ज. उद्वैति. ७ क ख. घ. झ. ट. ठ. ड. इति च । न°; च. इति˅ । न° च. ८ घ. 'अत्र' नास्ति. ९ क. ख. घ. झ. ठ. 'हि' नास्ति. १० क. ख. घ. झ. ट. तस्य. ११ क. ख. ४ (१७); ग. २२ (५३); ठ. ड. १७ इति निरुक्तटीकायामु (ठ. निरुक्त० उ) त्तरषट्के प्रथमेऽध्याये सप्तदशः खण्डः (ठ. खण्डः । १७); घ. ट. ज. अङ्का नास्ति.

१।१६४।४६ ) ॥ इममेवाग्निं महान्तमात्मानमेकमात्मानं बहुधा मेधाविनो वदन्तीन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तं दिव्यो दिविजो गरुत्मान् गरणवान् गुर्वात्मा महात्मेति वा यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते[2] ॥ १८ ॥

---

इन्द्रं मित्रमिति अस्यवामीय एषा । इन्द्रं मित्रं वरुणम् इत्येतैरभिधानैः

अग्निः इन्द्रादिभिर्नामभिरप्यभिधीयते

अग्निमाहुः सतत्त्वविदः । अथो अपि च योऽयमादित्यो दिवि जायते सुपर्णः सुपतनः गरुत्मान् गरणवान् । स्तुतिभिस्तद्वान् रसानां वा गरिता आदित्यः । अयमपि स एवाग्निरित्याहुः । किं बहुना । इममेवाग्निम् एकं महान्तमात्मानम् अनन्यत्वेन पश्यन्तो विप्रा मेधाविनः आत्मविदो बहुधा वदन्ति अग्निं यमं मातरिश्वानमित्येवम् । अन्यैश्चाभिधानैः[4] । ' एतस्यैव सा विसृष्टिः । एष उ ह्येव सर्वे देवाः ' ( बृह० उ० १ । ४ । ६ ) इति च विज्ञायते । तस्मायुक्तं यत् ' न मन्येतायमेवाग्निरिति ' ।

अत्र प्रतिसमाधानम् । सत्यमेतत्सर्व एतेऽग्निशब्देन स्तूयन्ते । न तु प्रधानतः । किं तर्हि । गुणतः स्तूयन्ते । यतो ब्रवीति । ' यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निः ' । तुशब्दः पूर्वपक्षव्यावर्तकः परमतव्युदासार्थः । यः सूक्तं भजते प्रधानतः । स्तुत्यत्वेनेत्यर्थः ।

पार्थिवोऽग्निः सूक्तभाग्घविर्भाक्च । इतरयोर्ज्योतिषोरग्निशब्दो गौणः

यस्मै च हविर्निरुप्यते चोदनासामर्थ्यात् ' आग्नेयमष्टाकपालं निर्वपेत् ' ( मैत्रा० सं० २ । २ इत्यादि ) इति ' अयमेव सोऽग्निः ' पार्थिवः । अग्निशब्दस्य विशेषतोऽत्र[5] लोकवेद[6]प्रसिद्धेः । ' अग्निमानय अग्निं प्रणय ' इत्येतमेव हि लोकः प्रतिपद्यते न मध्यमं नाप्युत्तमम् । न च प्रसिद्धिबाधो न्याय्यः । शास्त्रचोदिता[7] अपि खदिरपलाशादयो

---

१ छ त. द महान्तं-चात्मा'. २ क ख. ५ ( १८ ) । छ. २३। तृतीयः पादः ; त ५।७। तृतीय. पादः, । इति सप्तमाध्यायस्य चतुर्थः पादः ; व °भजेते। इति नैरुक्ते उत्तरार्धस्य प्रथमाध्यायस्य तृतीयः पादः. ३ क. ख. घ. झ. ट ठ. ढ. °षेऽयं दिव्यो दिवि'. ४ क. ख घ. झ. ट. ठ. ढ. °मिति एवमाद्यैश्चाभि°. ५ ग ज विशेषतः. ६ क. ख घ. झ. ट. ठ. ड. लोके वेदे च प्रसि'. ७ ग. ज. °दितानि ख'; च. °दिताःपि' अ.

लोकप्रसिद्धित एव प्रतीयन्ते । तस्माच्चाग्निशब्देन पार्थिवस्य ज्योतिषो मुख्यः संबन्धः । गौण इतरयोर्मध्यमोत्तमयोः । यथाग्निशब्देन न[2] तथा मध्यमोत्तमाभ्यां विद्युत्सूर्यशब्दाभ्यां लोकप्रसिद्ध्या मुख्यः संबन्धः । एवं चेत्सुष्टूक्तं 'यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निः' इति । एतदेव चात्र विचारप्रयोजन[3]माग्नेयेषु सूक्तेषु हविःसंप्रदानेषु स्तुत्यत्वेन भोक्तृत्वेन चोपासीतेति[4] । अथ पुनर्योऽयं मध्यमोत्तमयोर्ज्योतिषोरग्निप्रवादः स कथमिति । 'निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते'[5] । निपातो नाम अप्राधान्यं भक्तिरित्यर्थः[6] ॥ १८ ॥[7]

द्वादशस्य चतुर्थः पादः ॥[8]

---

जातवेदाः कस्माज्जातानि वेद जातानि वैनं विदुर्जाते जाते विद्यत इति वा जातवित्तो वा जातधनो[9] जातविद्यो वा जातप्रज्ञानो[10] यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वमिति[11] ब्राह्मणम् ( मैत्रा० सं० १ । ८ । २ )तस्मात्सर्वानृतून् पशवोऽग्निमभिसर्पन्तीति ( मैत्रा० सं० १ । ८ । २ ) च तस्यैषा भवति ॥ १९ ॥[12]

'जातवेदाः' ( निघ० ५ । १ । २ ) इति वक्तव्यम् । स

---

१ क. ख. घ. झ ट. ठ. ड 'च' नास्ति २ ग. ज. 'न' नास्ति. ३ क. ख. घ. झ. ट. ठ. ड. विचारे प्र°. ४ क. ख घ झ. ट. ठ. ड. चैतमेवोपासीं ; ग. चोद्यामीतेति. ५ ठ. भजेते । इत्यग्निशब्दस्य निर्वचनम् ॥ १८ ॥ निपा°. ६ क ख. घ झ ट ठ ड. °रित्यर्थः. ७ क. ख. ५(१८); ग. २३; इतरेष्वङ्को नास्ति. ८ क ख. इति निरुक्तवृत्तौ द्वादशाध्यायस्य [ सप्तमाध्यायस्य ] चतुर्थ पादः; ठ. इति निरु० उत्तर० प्रथ० अष्टादशः खण्डः । १८ ।; ड. इति जम्बूमार्गाश्रमनिवासिन आचार्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तटीकायां निघण्टपञ्चाध्यायेन सह द्वादशाध्यायोत्तरषट्के प्रथमाध्याये चतुर्थः पादः । इत्यष्टादशखण्डः समाप्तः । इत्यग्निशब्दस्य निर्वचनम् । अग्नये नमोऽस्तु. ९ °धनो वा जात° ( सायणभाष्ये निरुक्तम् ). १० °प्रज्ञो वा य° ( तथैव ) ११ °मिति हि ब्रा° ( तथैव ). १२ क. ख. १ ( १९ ); छ २४; त. द. १.

पुनरेष माहाभाग्यात्कर्मपृथक्त्वादग्निरेव । अथवा । पृथगभिधानस्तुत्यन्तरसंबन्धाद्देवतान्तरम् । 'जातवेदाः कस्मात्' ।

जातवेदाः स हि 'जातानि वेद' । न हि तदस्ति जातमस्मिंल्लोके यदसौ न वेद । सर्वज्ञ इत्यर्थः । 'जातानि वा एनं विदुः' । स एव धातुः । कारकान्यत्वं केवलम् । 'जाते जाते विद्यत इति वा' । विदेः सत्तार्थस्याधिकरणे कारके । न तदस्ति जातं यत्रासौ नास्ति । 'जातवित्तो वा जातधनः' । जातशब्दः पूर्वपदं वित्तशब्द उत्तरपदम् । जातमस्य वित्तमिति जातवेदाः । 'जातविद्यो वा जातप्रज्ञानः' । जातशब्द एव पूर्वपदं विदेर्ज्ञानार्थस्योत्तरपदम्[१] । निसर्गत एवास्य जातं प्रज्ञानमित्यर्थः । 'ब्राह्मणम्' अपि[२] भवति जनेर्विदेश्च जातवेदा इति । 'यत्तज्जातः पशूनविन्दतेति' । यत् असौ तत तदा जातमात्र एव निसर्गतः पशूनविन्दत अलभत[३] 'तज्जातवेदसो जातवेदस्त्वमिति' विज्ञायते । यतश्चैतदेवं 'तस्मात्' अद्यत्वेऽपि स्वाम्ययमस्माकमिति मन्यमानाः 'पशवः सर्वानृतून्' प्रति अपि ग्रीष्मे 'अग्निमभिसर्पन्ति' । 'तस्य' जातवेदसः प्राधान्यस्तुत्युदाहरणम् 'एषा' ऋग् 'भवति' ॥ १९[४] ॥

**प्र नूनं जातवेदसमश्वं हिनोत वाजिनम् । इदं नो बर्हिरासदे (ऋ० सं० १० । १८८ । १) ॥ प्रहिणुत जातवेदसं कर्मभिः**

---

१ क. ख घ झ. ट. ठ. ड °पदत्वम्. २ क. ख. घ. झ. ट. ठ. ड अपि च भ°. ३ क. ख. घ. झ. ट अलभत्; घ अलभतेम्. ४ क. ख. १ (१९), ग. २४।२५; ठ. ड. १९ । इति निरुक्तटीकायामुत्तरषट्के (ड. इति निरुक्तवृ० उत्त० ) प्रथमेध्याये ( ठ. प्र० ) एकोनविंशः खण्डः; इतरेष्वङ्को नास्ति. ५ क. ख. छ त. द. जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धु दुरितात्यग्निः (ऋ० सं० १ । ९९ । १ ) ॥ जातवेदस इति जातवेदसे देवजातवेदसेऽर्चाय सुनवाम सोममिति प्रसवायाभिषवाय सोमं राजानममूनमरातीयता यज्ञार्थमनिस्मो निदहाति ( त. निर्दहति° दहा ) निश्चयेन दहति भस्मीकरोति सोमो ददादित्यर्थः । स नः पर्षदति दुर्गाणि विश्वानि दुर्गमानि ( छ. दुर्गमानि णि; त. दुर्गमानि ) स्थानानि नावेव सिन्धु नावा सिन्धु सिन्धु नावा नदी जलदुर्गा महाकूला ( त. माहाकूला° कू ) तारयति दुरितात्यग्निरिति दुरितानि तारयति तस्यैषापरा भवति ॥ क. ख. त. द. २; छ. २५ ॥ प्र नून°.

समश्नुवानमपि वोपमार्थे[1] स्यादश्वमिव जातवेदसमितीदं नो बर्हि-रासीदत्विति तदेतदेकमेव जातवेदसं गायत्रं तृचं दशतयीषु विद्यते यत्तु किंचिदाग्नेयं तज्जातवेदसानां स्थाने युज्यते स न मन्येतायमेवाग्निरित्यप्येते उत्तरे ज्योतिषी जातवेदसी उच्येते ततो नु मध्यमः । अभि प्रवन्त समनेव योपा इति तत्पुरस्ताद्व्या-ख्यातम् ( निरु० ७ । १७ ) अथासावादित्य उदु त्यं जातवे-दसमिति तदुपरिष्टाद्व्याख्यास्यामो यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्जातवेदा निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते ॥ २०[3] ॥

इति सप्तमाध्यायस्य पञ्चमः पादः ॥

---

**जातवेदःशब्दस्योदाहरणम्**

प्र नूनं जातवेदसमिति[4] । श्येनस्याग्निपुत्रस्यार्षम्[5] । हे स्तोतारो यूयमुच्यध्वे । प्रहिणुत प्रेरयत स्तुतिभिरेतं जातवेदसम् अश्वं कर्मभिः सर्वमेतज्जगत् अश्नुवान व्यापयन्तं वाजिनं वेजनवन्तं चलनवन्तम-र्चिर्भिः[6] । अथवा । अश्वमिव इति वा[7] लुप्तोपमं रूढेर्बलीयस्त्वात् । वाजिनं वेजनवन्तं चलनस्वभावं शीघ्रम् । किमिति प्रहिणुतेति । इतः । इदं नो बर्हिरासदे । इदम् अस्मत्कर्म बर्हिषोप-लक्षितं बर्हिः कथं नामास्मदभिमतार्थसिद्ध्यर्थमाभिमुख्येन सीदेदित्येवमर्थं प्रहिणुत[8] ।

**जातवेदसं गायत्रं तृचमेकमेव**

इदानीमुत्सर्गं दर्शयति प्रयोजनार्थम् । ‘ तदेतदेकमेव[9] जातवेदसम्[10] ’ इति । तदिति दशतयीस्थस्यानुस्मृतये परोक्ष-निर्देशः । एतदिति प्रत्यक्षेण प्र नूनमित्येतया संनिधीकृत्योपदिशति । गायत्रमिति छन्दोनिर्देशो

---

१ छ. त. द ‘देकमिव. २ छ. त द. °वेदसा उ°. ३ क. ख. ३ (२०); २ छ. २६ । चतुर्थः पादः; त ३।७ । चतुर्थः पादः; द. = इति नैरुक्ते उत्तरार्धस्य प्रथमाध्यायस्य चतुर्थः पादः ४ ग. °मिति ५८ श्येन°. ५ क. ख. घ. झ. ट. ठ. ड. ‘र्षम् । गायत्री । हे; च. °र्षम् । ^हे° गायत्री ।. ६ क. ख. घ. झ. ट. ठ. ड चञ्चलमर्चिभिः; च. चलनवतम° नं अ. ७ क. ख. घ. झ. ट. ठ. ड. ‘ वा ’ नास्ति ८ क. ख. घ. झ. ट. ठ. ड. ‘णुतेति. ९ ग. ज. °देकमिव, च. ‘दे-कमिव° मे. १० क. ख. घ. झ. ट. ठ. ड. ‘वेदस्यं गायत्रं तृचमित्यादि, च. ‘वेद-सम्° स्य.

विवक्षितप्रयोजनार्थः । तृचमिति सूक्तस्य संख्यानिर्देशः । दशतयीषु सर्वास्वपीति निर्धारणे । विद्यते अस्ति । ततः किं यद्येतदेवैकं जातवेदसं गायत्रं तृचं दशतयीषु विद्यते । शृणु । बहुभिरेतैर्गायत्रच्छन्दोयुक्तैर्जातवेदसैर्मन्त्रैराधियज्ञे प्रयोजनमस्ति । न चैते बहवः सन्ति सर्वास्वपि दशतयीष्वेतदेवैकं तृचं मुक्त्वा । तत्र किं कर्तव्यमिति ।

५ यत्र गायत्रच्छन्दोयुक्तानां जातवेदसानां मन्त्राणां प्रयोजनं तत्राग्नेयास्तच्छन्दोयुक्ता मन्त्रा विनियुज्यन्ते १०

यत्तु किंचिदाग्नेयं मन्त्रजातं गायत्रच्छन्दस्यजातवेदोलिङ्गमपि 'तज्जातवेदसानां' मन्त्राणां 'स्थाने' विनि'युज्यते' शास्त्रेण । तेन किं स्थितं भवति । अग्निरेव जातवेदा इति कर्मपृथक्त्वान्माहाभाग्याद्वेति । इतरथा हि प्रयोगवैकल्यं स्यात् । न चान्यदेवतमन्यस्य स्थाने प्रयुज्यते । यथा चायमनर्थान्तरमग्निर्जातवेदैस एतस्माद्विधिलिङ्गात्तथा वैश्वानरप्रभृतयोऽपीत्युपेक्ष्यम् ।

'स न मन्येत' इति पूर्ववद्विचारः । केवलम् 'अभि प्रवन्त' इत्यत्राग्निपदविचारेऽग्निशब्दो विशेष्य आसीज्जातवेदःशब्दोऽस्य गुणपदमिति । इह तु जातवेदःशब्दविचारं पुनः 'अभि प्रवन्त' इत्यस्मिन्नेवोपात्ते मन्त्रे गुणपदमग्निशब्दो जातवेदःशब्दस्येत्येतावदुपेक्ष्यम् ।

१५ मध्यमोऽपि जातवेदा इत्यभिधीयते

२० यथा नु पूर्वस्मिन् 'समुद्रादूर्मिः' इत्यादित्यस्याग्नित्वोपपत्तावुदाहरणं तथेह 'अथासावादित्य उदु त्यं जातवेदसमिति' जातवेदस्त्वोपपत्तौ । तदेतत्प्रातिपदमुदाहरणम् 'उपरिष्टाद् व्याख्यास्यामः' (निरु० १२ । १५)।

तथोत्तमोऽपि

---

१ क. ख. घ. झ. ट ठ. ड. °मित्येतत्सूक्त°. २ क. ख. घ. झ. ट. ठ. ड. °रणे सप्तमी । वि°; च. °रणे । वि° सप्तमी. ३ घ. झ. ट. °वेदस्यं; च. वेदसां. ४ क. ख. घ. झ. ट. ठ ड. °वेदस्यैर्म°. ५ क. ख. घ. झ. ट. ठ. ड. गायत्र एव च्छन्द°. ६ ग. च ज. °क्त्वा महा°. ७ क. ख. घ. झ. ट. ड. °वेदाः ए°, ठ. °वेदा इत्यस्मा°. ८ क. ख. ग. ज. घ. झ ट. ठ. ड. तु.

२८

'जातवेदसं सूर्यमुद्वहन्ति' इति तु विशेषणविशेष्यसामानाधिकरण्यैकवाक्यप्रसिद्ध्यार्थं निगमसिद्धमस्मिन्मन्त्रे जातवेदाः सूर्य इति । तस्मात्सुष्ठूक्तं यत् 'स न मन्येतायमेवाग्निः' जातवेदा इति ।

'यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्जातवेदाः' इति पूर्ववत्प्रसिद्धिरेव विशेषहेतुः । यद्यपि मन्त्रदर्शनमविशिष्टं त्रयाणामपि ज्योतिषां जातवेदस्त्वे तथापि पार्थिवोऽग्निरितरयोः प्रसिद्ध्या विशेष्यते । जातवेदस्त्वं हि प्रसिद्धमस्मिन्नग्नौ न तथा वैद्युते नापि सूर्य इति । 'निपातमेवैते उत्तरे ज्योतिषी' जातवेदा इति 'एतेन नामधेयेन भजेते' इति व्याख्यातम् ॥ २० ॥ ५ १०

(तथापि जातवेदा अयमेव पार्थिवोऽग्निः)

द्वादशस्य पञ्चमः पादः ।

---

**वैश्वानरः कस्माद्विश्वान्नरान्नयति विश्व एनं नरा नयन्तीति वापि वा विश्वानर एव स्यात्प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरस्तस्यैषा भवति ॥ २१ ॥** १५

---

'वैश्वानरः' ( निघ० ५ । १ । ३ ) इति वक्तव्यम् । तदर्थमुपोद्घन्ति 'वैश्वानरः कस्माद्' इति । 'विश्वान्नरान्' इतो लोकादमुं लोकं नयति' यथा पञ्चाग्निविद्यायामुच्यते ( छा० उ० ५ । ४ । ९ ) । अपि वा सति तस्मिन्सर्वाः प्रवृत्तयः फलवत्यो नराणां भवन्तीति हेतुकर्तृत्वेन सर्वासु प्रवृत्तिष्वयमेव नरान्नयति प्रवर्तयतीति वैश्वानरः । अथवा । 'विश्वे एनं नरा नयन्तीति वा' कर्मकारकम् । स नीयमान- २०

(वैश्वानरः)

---

१क. ख. घ. झ. ठ. ठ. ड. 'च' नास्ति°. घ. झ. ट. 'न' नास्ति. ३ क. ख. घ. झ. ट. ठ. ड. अनेन. ४ क. ख. ३ ( २० ); ग. २६; इतरेष्वङ्को नास्ति. ५ घ. झ. टः इति द्वाद्°; ठ. °व्याख्यातम् । इति नि० उ० प्र० विंशतितमः खण्डः । २० । पञ्चमः पादः; ढ. व्याख्यातम् । इति निरुक्तटीकायामुत्तरषट्के प्रथमाध्याये पञ्चमः पादः । समाप्तं विंशतिः खण्डम्. ६ च. पादः समाप्तः । २० ।. ७ क. ख. १ (२१), छ २७; त. द. १. ८ क. ख. व. झ. ट. ठ. ड. °ति । हेतुकर्तृत्वेन सर्वासु प्रवृत्तिषु अयमेव नरान् नयति । यथा°. २५ ३०

स्तासु क्रियास्वङ्गभावं नरैः कर्म संपद्यते । 'अपि वा विश्वानर एव' कश्चित् 'स्यात्'। स पुनः कस्मात्। 'प्रत्यृतः सर्वाणि भूतानि'। विश्वानि ह्यसौ भूतानि प्रत्यृतः। प्रविष्ट इत्यर्थः। 'तस्य' अपत्यं विश्वानरस्य 'वैश्वानरः। तस्य' वैश्वानरस्य 'एषा' प्राधा-
५ न्यस्तुतिः 'भवति'॥ २१॥[3]

---

**वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः। इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण (ऋ० सं० १।९८।१)॥ इतो जातः सर्वमिदमभिविपश्यति वैश्वानरः**
१० **संयतते सूर्येण राजा यः सर्वेषां भूतानामभिश्रयणीयस्तस्य वयं वैश्वानरस्य कल्याण्यां मतौ स्यामेति तत्को वैश्वानरो मध्यम इत्याचार्या वर्षकर्मणा ह्येनं स्तौति॥ २२॥**[4]

---

वैश्वानरस्य सुमताविति कुत्सस्यार्षम्[5]। पृष्ठ्याभिप्लवयोश्चतुर्थपष्ठयो-[6]
१५ वैश्वानरशब्दस्योदाहरणम्
रह्नोराग्निमारुतस्य प्रतिपत् (आश्व० श्रौ० ८।८)। इतः पृथिवीलोकादोषधिवनस्पतिभ्यो[7] यो जातो विश्वमिदं विचष्टे सर्वमिदमभिविपश्यति[8] तथा दृष्ट्युपकारकत्वेन[9] दर्शयति वा प्रकाशकत्वेन। यश्च संयतते सूर्येण संगच्छते स्वेन भासा। राजा च यः सर्वेषा
२० भूतानाम् आश्रयणीयः[10]। तस्य वयम् एवंगुणयुक्तस्य वैश्वानरस्य नित्यं कल्याण्या मतौ उपकारप्रवृत्तायामात्मनो यथाभिमतार्थसाधिकाया स्याम इत्येतदाशास्महे। लोकेऽपि हि स्तूयत एव पूर्वं पश्चात्प्राथ्यंत

---

१ क. ख. घ. झ. ट. ठ. ड. °स्तासु तासु क्रि°. २ क. ख. घ. झ. ट. ठ. ड. °स्तुतिर्कर्मभव°. ३ क. ख. १ (२१); ग. २७; ठ. °वति। इति निरुक्त° उ० प्रथ० एकविंशतिः खण्डः; ड. °वति। इत्येकविंशतिः खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ४ क. ख. २ (२२); छ २८, त. द. २. ५ ग. विति ||'कु°. ६ क. ख. घ. झ. ट. ठ. ड. °र्थपञ्चमयो°. ७ च. °तिभ्यां यो°. ८ व. झ. ट. ठ. ड. °श्यति यच्चाभिवृष्ट्यमुपकार°. ९ ग. ज.
२१ °कारत्वेन; च. °कारन्त्वेन° क. १० ग. अभिश्र°.

इत्याचार्यः पश्यन्मन्त्रे[1]ऽप्ययमेव न्याय इत्युपदर्शनार्थं पदानां क्रमं बिभेद । कल्याण्यां मतौ स्यामेत्याशिषो[2] समापयांचक्रे । अनेकतिङि चैतस्मिन्मन्त्रे प्रतितिङ् वाक्यभेदे प्राप्ते यत्तदोरध्याहारेण ' राजा यः सर्वेषां भूताना-

अत्र यत्तदोरध्याहारेण भिन्नवाक्यान्येकीकृतानि

मभिश्रयणीयस्तस्य वयं वैश्वानरस्य कल्याण्यां मतौ स्याम ' इत्येकवाक्यतया सामर्थ्यमुद्भावयांचकारैकोऽत्रार्थपतिर्वै[5]श्वानरो यतः फलानी आशास्यते मतिस्तमभिसंतिष्ठते[3] स्तुतिरिति । अयमेकवाक्यतान्यायः प्रायशो मन्त्रेषु । क्वचित्पुनः प्रत्याख्यातमर्थमपेक्ष्यैकस्मिन्नपि मन्त्रे वाक्यभेदो भवत्येव । तद्यथा ।

क्वचिदर्थवशेनैकस्य वाक्यस्यानेकवाक्यानि

' ऋचां त्वः पोषम् ' इत्यत्र प्रतिपादं[4] वाक्यसमाप्तिः (निरु० १ । ८ ) । अनेकेषामपि च मन्त्राणामाकाङ्क्षिनार्थिनां परस्परमेकवाक्यता भवति । तदपि चोपप्रदर्शयिष्यति ' येना पावक चक्षसा' इत्यत्र ( निरु० १२ । २२–२५ ) ।

' तत्को वैश्वानरः ' इत्यतःप्रभृति विचारः । तदिति वाक्योपादाने । कोऽयं वैश्वानरः । कुतः संशयः । आगम-

को वैश्वानरः

आत्मेत्यात्मविदः

विप्रतिपत्तेः । वै[5]श्वानरविद्याया ( छा० उ० ५ । ११–२४ ) तावदात्मेत्यात्मविदः । इ[6]न्द्र आदित्यवाय्वाकाशोदकपृथिव्यादयश्च पृथक् पृथ[7]ग्वैश्वानरत्वेन विज्ञायन्ते । अपि च ' मध्यमो '

मध्यम इति नैरुक्ताः

वैश्वानरः ' इति ' नैरुक्ताः केचित् ' आचार्याः ' मन्यन्ते । कस्मात् । ' वर्षकर्मणा ह्येनं स्तौति ' इ[8]ति मन्त्रदृक् । हिशब्दो हेत्वर्थः । वर्षकर्मणैनं वैश्वानर यस्मान्मन्त्रदृक् स्तौति । कथमिति । यत आह ॥ २२ ॥[9]

---

१ क. ख. व झ. ट. ठ. ड. मन्त्रेष्वयम°. २ क ख. घ. झ. ट. °षा च स°. ३ क. ख. घ. ट. ठ ड. 'स्तमेभिः शब्दैरभिष्टौति संतिष्ठ°. ४ ग. घ. ज. घ. ट. ठ. ड. प्रतिपदं ५ क ख. घ. ट. ठ. ड. विश्वा°. ६ क. ख. घ. ट. ठ. ड. इन्द्रादित्य° ७ क. ख. घ. ट. ठ ड. °थगेव वैश्वा°. ८ क. ख. घ. ट. ठ. ड. ' इति ' नास्ति. ९ क. ख. २ ( १२ ); ग. २८; ठ. °इति नि० उ० प० द्वाविंशतिः खण्डः । २२ ।; ड. °आह । निरुक्तटीकायामुत्तरषट्के प्रथमाध्याये द्वाविंशतिः खण्डः; घ. झ. ट. ज. अङ्को नास्ति.

प्र नू महित्वं वृषभस्य वोचं यं पूरवो वृत्रहणं सचन्ते ।
वैश्वानरो दस्युमग्निर्जघन्वाँ अधूनोत्काष्ठा अव शम्बरं भेत्
( ऋ० सं० १ । ५९ । ६ ) ॥ प्रब्रवीमि तन्महित्वं माहाभाग्यं
वृषभस्य वर्षितुरपां यं पूरवः पूरयितव्या मनुष्या वृत्रहणं मेघहनं
५ सचन्ते सेवन्ते वर्षकामा दस्युर्दस्यतेः क्षयार्थादुपदस्यन्त्यस्मिन्नसा
उपदासयति कर्माणि तमग्निर्वैश्वानरो घ्नन्नवाधूनोदपः काष्ठा अभि-
नच्छम्बरं मेघमथासावादित्य इति पूर्वे याज्ञिका एषां लोकानां
रोहेण सवनानां रोह आम्नातो रोहात्प्रत्यवरोहश्चिकीर्षितस्त-
मनुकृतिं होताग्निमारुते शस्त्रे वैश्वानरीयेण सूक्तेन प्रति-
१० पद्यते ( ऐ० ब्रा० १२ । ३ ) सोऽपि न स्तोत्रिय-
माद्रियेताग्नेयो हि भवति तत आगच्छति मध्यस्थाना देवता
रुद्रं च मरुतश्च ततोऽग्निमिहस्थानमत्रैव स्तोत्रियं शंसत्यथापि
वैश्वानरीयो द्वादशकपालो भवत्येतस्य हि द्वादशविधं कर्मा-
थापि ब्राह्मणं भवत्यसौ वा आदित्योऽग्निर्वैश्वानर इत्यथापि
१५ निवित्सौर्यवैश्वानरी भवत्या यो द्यां भात्या पृथिवीमित्येष हि
द्यावापृथिव्यावाभासयत्यथापि छान्दोमिकं सूक्तं सौर्यवैश्वानरं
भवति दिवि पृष्टो अरोचतेत्येष हि दिवि पृष्टो अरोचतेत्यथापि
हविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवत्ययमेवाग्निर्वैश्वानर इति
शाकपूणिर्विश्वानरावेते उत्तरे ज्योतिषी वैश्वानरोऽयं यत्ताभ्यां
२० जायते कथं त्वयमेताभ्यां जायत इति यत्र वैद्युतः शरणमभिहन्ति
यावदनुपात्तो भवति मध्यमधर्मैव तावद्भवत्युदकेन्धनः शरीरो-
पशमन उपादीयमान एवायं संपद्यत उदकोपशमनः शरीरदीप्ति-
रथादित्यादुदीचि प्रथमसमावृत्त आदित्ये कंसं वा मणिं वा परि-
मृज्य प्रतिस्वरे यत्र शुष्कगोमयमसंस्पर्शयन्धारयति तत्प्रदीप्यते
२५ सोऽयमेव संपद्यतेऽथाप्याह । वैश्वानरो यतते सूर्येणेति । न च

---

१ छ. थ. ठ. ड. तन्महत्त्व°; थ. तन्महित्त्व° ह. २ क. ख. त द. °काः । ३ । ए°, छ. °काः । २९ । एषा°. ३ क. ख. त द. °सनि । ४ । अथा°; छ. °सति । ३० । अथा°. ४ छ °वति । ३१ । अय°; त. द. °वति । ५ । अय°. ५ छ. थ. ध. ठ. ड. °नरावित्यप्येते. ६ छ. °प्तिः । ३२ । अथा°; त. ३० द. °प्तिः । ६ । अथा°. ७ क. ख. छ. त. द. °ते तथा°.

पुनरात्मनात्मा संयततेऽन्येनैवान्यः संयतत इत इममादधात्यमु-
तोऽमुष्य रश्मयः प्रादुर्भवन्तीतोऽस्यार्चिषस्तयोर्भासोः संसङ्गं
दृष्ट्वैवमवक्ष्यदथ यान्येतान्यौत्तमिकानि सूक्तानि भागानि वा
सावित्राणि वा पौष्णानि वा वैष्णवानि वा तेषु वैश्वानरीयाः
प्रवादा अभविष्यन्नादित्यकर्मणा चैनमस्तोष्यन्नित्युदेषीत्यस्तमे- ५
षीति विपर्येषीत्याग्नेयेष्वेव हि सूक्तेषु वैश्वानरीयाः प्रवादा
भवन्त्यग्निकर्मणा चैनं स्तौतीति दहसीति वहसीति पचसीति
यथो एतद्वर्षकर्मणा ह्येनं स्तौतीत्यस्मिन्नप्येतदुपपद्यते। समान-
मेतदुदकमुच्चैत्यव चाहभिः। भूमिं पर्जन्या जिन्वन्ति दिवं
जिन्वन्त्यग्नयः (ऋ० सं० १।१६४।५१) इति॥ सा १०
निगदव्याख्याता॥ २३॥

---

प्र नू महित्वमिति। नोधस आर्षम्। प्रब्रवीमि अहं महित्वं महा-
भाग्यं स्तुत्यत्वम। कस्य। वृषभस्य वर्षितुरपाम्।
यम् अन्येऽपि पूरवः पूरयितव्या मनुष्याः कामैः १५
वृत्रहणं मेघहनं सचन्ते सेवन्ते वर्षकामाः स्तुति-
भिः। तन्माहाभाग्यं प्रब्रवीमि। यदसौ वर्षिता

मध्यमस्य वैश्वानरत्वे उदाहरणम्

वैश्वानरोऽग्निः दस्युं दासयितारमुपक्षयितारं रसानाम्। शुष्यन्ति हि तद-
नुद्गमे सस्यानि। कर्मणा वोपदासयितारमनावृष्टिद्वारेण। तं दस्युं शम्बरं
मेघम् उदकपूर्णं जघन्वान् हतवान् अभिनत् भृशं व्यदारयत् विदार्य २०
च अधूनोत् वर्षभावेनाकम्पयत् अक्षारयत् काष्ठा अपो यस्तस्याहं वर्ष-

---

१ ङ. थ. ध. ठ. ड नात्मानं सं. २ छ. °वक्षत्। २३। अथ°; त. द. °वक्षत्। ७। अथ°. ३ ङ. थ. ध. ठ ड. °त्तमिका°. ४ क. ख. ड. थ. ध. ठ. ड. वा सौर्याणि वा पौ°. ५ क ख. ङ. थ. ध ठ. ड. वा वैश्वदेव्यानि वा तेषु°. ६ ङ. थ. ध. °तीति वहसीति पचसीति दहसीति यथो°. ७ छ. °ते।३४।स°; त. द. °ते।८। स°. ८ छ. ३५। पञ्चमः पादः।; त. २५
९। इति पञ्चमः पादः।; द. ९। इति नैरुक्ते उत्तरार्धस्य प्रथमाध्यायस्य पञ्चमः पादः. ९ ग. मिति°। नो°. १० क ख. घ. ट. ठ ड °र्षम्। त्रिष्टुप्। वैश्वानरोऽग्निर्देवता। प्र°. ११ ठ. ड. महत्वं. १२ च. महा° मा. १३ क. ख घ. ट. ठ. ड. स्तुत्या। क°. १४ क. ख. घ. ट. ठ. ड. उदकवन्तमुदकपूर्णं. १५ क. ख. घ. ट. हतवानवाभिनत् भृ°; ग. ज हतवान भृश नभिनत व्यदार°. ३०

प्राप्त्यर्थं प्रावोचं महाभाग्यम् । स वर्धत्वस्माकमित्यभिप्रायः ।

एवमेतस्मिन्मन्त्रे वैश्वानरस्य वर्षकर्मणैकवाक्यसंबन्धान्नान्यो मध्यमाद्वैश्वानर इत्याचार्या मन्यन्ते । स्थितं तावदेवम् ।

'असावादित्य इति पूर्वे याज्ञिकाः' । असाविति कर्मात्मनैनमपदिशन् ब्रवीति । मा भूद्गौणः कस्मिंश्चित्प्रत्ययः । पूर्वे इति विधिमन्त्रार्थवादेभ्यो यज्ञसतत्त्वमुन्नीयैनं यज्ञं प्रयोगतः प्रथमं ये चक्रुस्ते पूर्वे याज्ञिकाः । साक्षात्कृतधर्माण इत्यर्थः । त एनमेवमाहुः 'असावादित्य इति' । कया पुनरुपपत्त्या त एवमाहुरिति । विध्यनुकरणप्रसिद्ध्या । कथमिति । यतस्तन्मतमाह ।

५ वैश्वानर आदित्य इति पूर्वे याज्ञिकाः

१० 'एषां लोकानां रोहेण सवनानां रोह आम्नातः' । य एव हि लोकानामारोहणक्रमः पृथिव्यन्तरिक्षं द्यौरिति स एव सवनानामपि क्रमः प्रातःसवनं माध्यंदिनं तृतीयसवनमिति । ततः किम् । कस्मिंश्चित्कर्मणि रोहप्रातिलोम्येन 'रोहात्प्रत्यवरोहश्चिकीर्षितः' कर्तुमीप्सितः । तदुपव्याचक्ष्महे । स एष होता प्रातःसवनं पृथिवीलोकभक्ति शंसित्वा ततो माध्यंदिनमन्तरिक्षलोकभक्ति शंसति संसृतत्वात् । प्रतिभक्ति संसृतवांश्च शंसन् पृथिवीलोकादन्तरिक्षलोकमारूढो भवति । स द्युलोकमारोहन् द्युलोकभक्ति तृतीयसवनं शंसति । तदपि च शंसन् द्युलोकमारूढो भवति ।

यस्मात् दिवि प्रत्यवरोहे वैश्वानरीयं सूक्तं शस्यते

१५

प्रत्यवरोहक्रमः । पठितव्यानि शस्त्राणि च

२०

सोऽग्निष्टोमसाम्नि यज्ञायज्ञिये यच्छस्त्रमाग्निमारुतं तत्सवनलोकप्रत्यवरोहा-

---

१ ग. च. ज. महा. २ क. ख. घ. ट. ठ. ड. °वाक्यतामव°. ३ क. ख. घ. ट. ठ. ड. °नैनमपदि°. ४ घ. ट. ठ. ड. °श्चित्पूर्वः प्रत्यय इति विधि°. ५ क. ख. °सिद्ध्या । ३ । कथ°. ६ ग. °माह । २९ । एषा°. ७ क. ख.
२५ घ. ट. ठ. ड. °हणानुक्रमः. ८ घ. ठ. ड. °दिन सवनं तृती°, ट. °दिनं सवनं तृती°. ९ क. ख. घ. ट. ठ. ड. एव. १० क. ख. घ. ट. ठ. °भक्ति. ११ क. ख. घ. ट. शंसति संसृतत्वात् ततो°. १२ क. ख. ग. ज. घ. ट. °भक्ति. १३ क. ख. घ. ट. ठ. ड. °त्वात् । ततस्तृतीयसवनं द्युलोकभक्ति शंसति संसृतत्वात् । प्रति°. १४ ग. ज. °भक्ति. १५ क. ख. घ. ट. ठ. ड. °सन्स पृथि°. १६ क. ख. घ. ट. ठ. ड. °वति । अन्तरिक्षलोकात् द्युलोकम् । स च द्यु°. १७ क. ख. घ. ट. ठ.
३१ ड. 'च' नास्ति.

नुकृतिं चिकीर्षञ्छस्त्रं 'वैश्वानरीयेण सूक्तेन प्रतिपद्यते' प्रारभते । तद्यथा 'वैश्वानराय पृथुपाजसे' ( ऋ० सं० ३ । १ । ३ ) इति प्रतिपत् ( ऐ० ब्रा० २० । २) । 'सोऽपि न स्तोत्रियमाद्रियेत' 'यज्ञायज्ञा वो अग्नये' ( ऋ० सं० ६ । ४८ ) इति । अय तावत्स्तोत्रियन्वेन प्रथममापद्यत एव हि स्तोत्रशस्त्राणां धर्म इति । कस्मात्पुनः स्तोत्रियं नाद्रियेते । 'आग्नेयो हि भवति' । प्रत्यवरोहे कर्तव्ये स च पुनराग्नेयो यः स्तोत्रियः । अग्निश्च पृथिवीस्थानः । तद्यदीदमाद्रियेत न प्रत्यवरोहानुकृतिप्रारम्भः कृतः स्यात् । अन्येषु तु शस्त्रेषु युक्तं यदूर्ध्वमारुरुक्षमाणः स्तोत्रियेण प्रतिपद्यते इह पुनरवरुरुक्षमाणो द्युस्थानाधिदेवताशंसनक्रमेण वैश्वानरीयेण सूक्तेन प्रतिपद्यत इति । तेन ज्ञायत आदित्यो वैश्वानर इति ।

यथा स्तोत्रं तथा शस्त्रमित्यस्योत्सर्गस्यात्रापवादो वैश्वानरीयशस्त्रपठने

अपि च । सुतरां प्रत्यवरोहणमेतदिति गम्यते येन 'तत आगच्छति मध्यस्थाना देवता रुद्रं च मरुतश्च' । 'ततः' वैश्वानरीयात्सूक्तात्प्रत्यवरोहानुकरणाभिप्रायेण शस्तात्प्रत्यवरुह्य 'मध्यस्थाना देवता आगच्छति' मध्यमस्थानेऽभिशंसितुम् । कतमाः । 'रुद्रं च मरुतश्च' । तद्यथा 'आ ते पितर्मरुतां सुम्नमेतु' ( ऋ० स० २ । ३३ ) इति ( ऐ० ब्रा० १३ । १० ) । ततो मध्यस्थानात्पृथिवीस्थानं प्रत्यवरुह्य 'अत्रैव तं स्तोत्रियं शंसति' 'यज्ञायज्ञा वो अग्नये' ( ऐ० ब्रा० १३ । ११ ) इति । तदेवमेतस्माद्विध्यनुकरणात्पश्याम आदित्यो वैश्वानर इति ।

ततो मध्यस्थानदेवताशंसनम्

पृथिवीलोकं प्रत्यवरुह्य यज्ञायज्ञियं शस्त्रं पठ्यते । तस्माद्वैश्वानर आदित्यः

---

१ ग. ज. स्तोतृय°. २ ग. च. ज. 'त्स्तोतृय'. ३ ग. ज स्तोत्रे शास्त्रा°. ४ घ. ट. ठ. ड. नाद्रियेत. ५ क. ख. घ. ट. 'योऽय स्तो°. ६ क. ख. घ. ट. तद्यदि तमाद्रि°. ७ क. ख. अन्येषु शस्त्रेषु च युक्तं°; घ. ट. ठ. ड. 'च'. ८ क. ख. घ. ट. ठ. ड. °वताः शंसमानः क्रमे°; च. °वता शसनाक्र° नु. ९ क. ख. घ. ट. ठ. ड. कथं पुनः ( क. ख. अपि च सुतरां ) प्रत्यवरोहानुकरणमेतदि°. १० क. ख. ग. च. ज. मध्यमस्था°. ११ क. ख. घ. ट. ठ. ड. मध्यस्था°. १२ क. ख. ग. ज. घ. ट. ठ. ड. ततोऽपि मध्य°. १३ क. ख. इति । ४ । अथापि'; ग. इति । १० । अथापि'.

' अथापि वैश्वानरीयो द्वादशकपालो भवति ' । देवतागुणसामान्येन हविर्यज्ञे गुणविधयः कल्प्यन्ते । वैश्वानरीयश्च सर्वत्र द्वादशकपालः । ' एतस्य ' च ' द्वादशविध ' द्वादशमासविभागाधिकारलक्षणं ' कर्म ' । तेनैतस्मादपि देवतागुणकपालविध्यनुकरणादादित्यो वैश्वानर इति । अथापि स्फुटमेव ब्राह्मणं भवति ' असौ वा आदित्योऽग्निर्वैश्वानरः ' ( मैत्रा० ब्रा० २ । १ । २ ) इति । तच्च नः परं प्रमाणम् । तस्मात्सूर्यो वैश्वानर इति ।

वैश्वानरीयपुरोडाशस्य द्वादशकपालत्वाच्च

' अथापि निवित्सौर्यवैश्वानरी भवति' इति । निविदित्याकृतिविशिष्टो मन्त्रः शस्त्रमध्यपाती । स तथा भवति यथा सूर्यो वैश्वानर इति । न पार्थिवो न मध्यम इति । कथमिति । भवति हि तत्रैतत्पदम् ' आ यो द्यां भात्या पृथिवीम् ' इति । न च पुनरादित्यादन्यो भासयते द्यावापृथिव्यौ । यत उच्यते ' एष हि द्यावापृथिव्यावाभासयति । '

निविदः सौर्यवैश्वानरीयत्वात्

' अथापि छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवति ' । कतमत् । ' दिवि पृष्टो अरोचताग्निर्वैश्वानरो बृहन् । क्ष्मया वृधान ओजसा चनो हितो ज्योतिषा बाधते तमः ' ( आश्व० श्रौ० ८ । १० ) इति ॥ न च पुनरादित्यादन्यो दिवि पृष्टो रोचते । यत उच्यते ' एष हि दिवि पृष्टो रोचते ' । दिवि स्पृष्टः द्युलोके स्पृष्टः । अवस्थित इत्यर्थः । अरोचत रोचते दीप्यते । कोऽसाविति । अग्निर्वैश्वानरः । बृहन् । महानित्यर्थः । स रोचमानः किं करोति । ज्योतिषा स्वेन बाधते तमः । नाशयत इत्यर्थः ।

छान्दोमिकसूक्तस्यापि तथात्वात्

---

१ क. ख. घ झ ट ठ. ड. 'मासप्रविभा' । २ क. ख. घ. झ. ट. ठ ड. 'रणात्तस्याम आदि°. ३ क. ख. घ. झ ट. ठ. ड. ' इति ' नास्ति. ४ ग ज भात्यामिति पृथि'; च भात्यौ पृ' त्या. ५ ग. °दन्यो वा भास°, ज °दन्योवभास°, च. °दन्योर्भवास° वभा. ६ च. छान्दोमि°. ७ ग. च. ज घ. झ ट. 'रोचतेति । न°; ठ. ड. °रोचतेति । 'दिवि पृष्टो' इति सर्वा ऋक् पठ्यते. ८ घ ट. ठ ड. य उच्य°. ९ ग. ज अरोचते.

' अथापि हविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवति ' । कथमिति । भवति[1] तत्र मन्त्रः सूर्यो वैश्वानर इति समर्थः[2] । तद्यथा । ' विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन् ( ऋ० सं० १०।८८। १२ ) इति । वैश्वानरं केतुं कर्तारमह्नामकृण्वन्निति । नैव तावदादित्यादन्यस्याह्नां कर्तृत्वमुपपद्यते पार्थिवे मध्यमे वा । आदित्य एव ह्युदयास्तमयाभ्यामहानि करोति । तेन वयमेतैर्हेतुभिः पश्यामः सूर्यो वैश्वानर इति[3] ।

तथा हविष्पान्तीयस्यापि

' अयमेवाग्निर्वैश्वानर इति शाकपूणिः ' । न मध्यमो न सूर्यः । किं तर्हि । अयमेव पार्थिवोऽग्निः । केन हेतुना । तद्धितोत्पत्तिसामर्थ्यात् । कथमिति । ' विश्वानरावेते उत्तरे ज्योतिषी '[4] । तदुक्तम् ' अपि वा विश्वानर एव कश्चित्स्यात्तस्यापत्यं वैश्वानरः ' ( निरु० ७ । २१ ) इति । तदिदमुपपद्यते ' वैश्वानरोऽयं यत्ताभ्यां जायते ' । तस्मात्तद्धितेन[5] व्यपदेशेन पार्थिवोऽग्निर्वैश्वानर इति ।

पार्थिवोऽग्निर्वैश्वानरः

यस्माद्विश्वानरौ उत्तरे ज्योतिषी ताभ्यां चाय जायते

' कथं न्वयमेताभ्यां जायते ' । यत उच्यते । ' यत्र वैद्युतः ' अग्निः ' शरणमभिहन्ति ' । आश्रयमात्मनो दारु अन्यद्वा अभिहन्ति निहन्ति अभिगच्छति । प्राप्नोतीत्यर्थः । किं तत्र । तत्प्रदीप्यते । स च पुनः ' यावदनुपात्तो भवति ' मनुष्यैरनुपस्पृष्टो[6] भवत्यपरिगृहीतो वा । किं तावत् । ' मध्यमधर्मैव तावद्भवति ' । कः पुनर्मध्यमस्य धर्मः । यदसौ ' उदकेन्धनः शरीरोपशमनः ' । उदकेनेध्यैते[7] दीप्यते रसस्वभावकेन । शरीरेण काष्ठेनान्येन वा प्रतिहतमूर्तिस्वभावकेन पार्थिवधातुबहुलेनोपशाम्यति । स मध्यमस्य धर्मः । तदेतत्स्थानजात्यादिकृतं स्वाभाव्यमहेतुकं ज्योतिषो न भवति

मध्यमात्पार्थिवाग्नेर्जन्म

मध्यमज्योतिषः स्वभावः

---

१ क. ख. घ. झ. ट. ठ. ड. भवति हि तत्र°. २ ग. ज. समर्थ. ३ क. ख. इति । ५ । अय'; ग. इति । २१ । अय'. ४ ठ. ड. °नरावित्यप्येते°. ५ च. वर्जं सर्वेषु ' तद्धितेन '. ६ क. ख. घ. झ. ट. ठ. ड. 'ष्यैरस्पृष्टो'. ७ क. ख. घ. झ. ट. ठ. ड. 'नेन्धते.

प्रथमस्य धर्मः । स च पुनः ' उपादीयमान एवायं ' पार्थिवोऽग्निः ' संपद्यते ' । कथम् । उपात्तो हि मनुष्यैः स्वजातिधर्मं हित्वा पार्थिवधर्मं

पार्थिवस्य च

प्रतिपद्यते । कथमिति । ' उदकोपशमनः शरीरदीप्तिः ' । विपर्यस्तधर्मा मध्यमेन संपद्यते ।

५ एवं तावन्मध्यमादयं विश्वानराज्जायते । तेनायं तदपत्यमिति भवति हि तद्धितार्थोपपत्त्या वैश्वानर इति । अथ पुनरादित्यात्कथं जायते । आह ।

' अथादित्यात् । उदीचि प्रथमसमावृत्त आदित्ये ' इत्येवमादि । ' अथ 'शब्द आनन्तर्ये प्रकृतार्थादर्थान्तरमधिकरोति । उदीचीं दिशं प्रति

१० आदित्यात्पार्थिवाग्नेर्जन्म

प्रथमसमावृत्त आदित्यः । ' तस्मिन्नुदीचि प्रथमसमावृत्ते ' । उदगयनादावित्यर्थः । कथमिति । ' कंसं वा मणिं वा परिमृज्य ' यमादित्यमणिमित्याचक्षते । ' प्रतिस्वरे ' प्रत्युपतापे । ' यत्र शुष्कगोमयमसंस्पर्शयन् धारयति तत्प्रदीप्यते ' । यैः शुष्कगोमयैऽग्निर्जायेते एवमयमादित्यादपि कंसाद्वा मणेर्वा जायते । असावपि च विश्वानर

१५

इत्याचक्षते । तदपत्यापेक्षयाप्यस्य वैश्वानरत्वमुपपद्यते ।

'अथाप्याह ' तद्धितविग्रहव्यपदेशात्तावदेवमुपपद्यते । अन्य आदित्यात्तावद्वैश्वानरः । ' अथापि ' अयमपरो व्यपदेश एकवाक्ये विभक्त्यन्तरकृतः

मन्त्रादपि सूर्यवैश्वानरयोर्भेदः

सूर्यवैश्वानरयोर्भेदं गमयति । तद्यथा । ' वैश्वानरो यतते सूर्येण ' ( ऋ० सं० १।९८ । १ ) इति मन्त्रदृगाह । प्रथमान्तस्य वैश्वानरशब्दस्य तृतीयान्तेन सूर्यशब्देन विभक्तिभेदाद्विशेषणविशेष्यभावेन सामानाधिकरण्यं नास्ति । एतदेवासामानाधिकरण्यमपेक्ष्यानेकत्वं

२०

१ क. ख. 'नर' । ६ । अथ°, घ. झ. ट. ' इति ' नास्ति, ग. ज. ' वैश्वानर इति ' नास्ति. २ ग. आह । ३२ । अथा°. ३ घ. झ. ट. ठ. ड. प्रकृतादर्थादर्था°. ४ च. उदीचीप्र० चि. ५ क. ख. घ. झ. ट. ठ. ड. °प्यते सोऽयमेव संपद्यते य.°; च. °प्यते य:' सोऽयमेव सपद्यते. ६ क. ख. घ. झ. ट. ठ. ड. °यते । स एवमादित्या°; च. यते । एवाय° स. ७ क. ख. घ. झ. ट. ठ. ड. वैश्वा°. ८ क. ख. घ. झ. ट. ठ. ड. इत्युच्यते.

२५

२९

वैश्वानरसूर्यशब्दयोर्ब्रवीति । ' न च पुनरात्मनात्मा संयतते ' । किं तर्हि । ' अन्येनैवान्यः संयतते ' संगच्छते यथा देवदत्तो यज्ञदत्तेन । तत्कथमयं संयतते सूर्येणेति । यत आह । ' इत इममादधाति ' । इतो लोकाद्दोपधीभ्यः शरादिभ्यो वनस्पतिभ्यो वा मथित्वा प्रत्यक्षत एवेममादधाति । अभ्यादधातीन्धनैः । ' अमुतो ' मण्डलात् कर्मात्मनः ' अमुष्यै ' च आदित्यमण्डलाधिष्ठातुः स्वभूता ' रश्मयः प्रादुर्भवन्ति ' । ५

अयं तयोर्भासोः संगमः

' इतः ' तेजःपिण्डात् ' अस्य ' तदधिष्ठातुः ' अर्चिषः ' प्रादुर्भवन्तीति वर्तते । ' तयोर्भासोः संसङ्गं दृष्ट्वैवमवक्ष्यत् ' मन्त्रदृक् ' वैश्वानरो यतते सूर्येण ' इति । १०

अथ यान्येतान्यौत्तमिकानि सूक्तानि । ' अथ ' इत्यधिकारान्तरे । यदि सूर्यो वैश्वानरोऽभविष्यन्ननु ' यान्येतान्यौत्तमिकानि सूक्तानि ' उत्तमस्थानदेवताविशेषस्तुत्यर्थानि । तद्यथा । ' भागानि वा सावित्राणि वा पौष्णानि वा वैष्णवानि वा ' । गुणपदत्वमभ्युपेत्य वैश्वानरशब्दस्य ब्रवीति । ' तेषु ' सूक्तेषु ' वैश्वानरीयाः प्रवादाः ' भगादीनां विशेषणत्वेन ' अभविष्यन् ' हे भग वैश्वानर हे सवितर्वैश्वानर इत्येवमादयः । १५

उत्तमस्थानस्थानां भगादीनां सूक्तेषु भगादयो वैश्वानर इति नोच्यन्ते

' आदित्यकर्मणा चैनमस्तोष्यन् ' । एव वैश्वानरीयेषु सूक्तेषु वैश्वानरमस्तोष्यन्मन्त्रदृशः । कथमिति । ' इत्युदेषीत्यस्तमेषीति विपर्येषीति ' । इतिकरण एवशब्दार्थे । एवमुदेषि त्वं वैश्वानर एवमस्तमेषि एवं विपर्येषीति । न च पुनरेतदुभयमप्यस्ति । न हि वैश्वानरीयाः प्रवादा औत्तमिकेषु सूक्तेषु सन्ति । नाप्यादित्यकर्मणा वैश्वानरं स्तुवते मन्त्रदृशः । २० २५

वैश्वानरसूक्तेषु वैश्वानर उदयादिभिरादित्यकर्मभिर्न संबध्यते

तस्मान्नैव सूर्यो वैश्वानर इति ।

---

१ ठ. ड. 'नात्मानं स°. २ ग. ज. वनस्पतिभ्यो वा शरादिभ्यो वा मथि°. ३ क. ख. व. झ. ट. °मुष्य च आदि°; च. °मुष्य° आदि° च. ४ क. ख. ग. च. ज 'वक्षत्. ५ क. ख. इति । ७, ग । ३४ । अथ'. ६ ग. झ. ठ. ठ. ड. 'त्तमिकानि'. ७ क. ख. ध. झ. ट. ठ ड. °ष्यत् ततो ननु°; च. 'ष्यत् ननु' ततो. ८ क. ख. ग. झ. ट. ठ ड. 'त्तमिका°. ९ ठ. ड. वा सौर्याणि वा पौष्णा°. १० ठ. ड. वा वैश्वदेव्यानि वा तेषु'. ११ ग. च. ज. 'पदमभ्यु'. १२ क. ख घ झ. ट. ठ, ड स्तुवंति, च स्तुवते' न्ति.

किंच। अयमपरो विशेषहेतुरग्नेर्वैश्वानर इति। 'आग्नेयेष्वेव हि सूक्तेषु वैश्वानरीयाः प्रवादाः भवन्ति' अग्निविशेषणत्वेन। 'वैश्वानरमृत आ जातमग्निम्' (ऋ० सं० ६।७।१) इत्येवमादयः। 'अग्निकर्मणा चैनं' वैश्वानरं प्रायेण 'स्तौति'। 'इति दहसीति[1] वहसीति पचसीति'। एवं वैश्वानर वहसि हवींषि पचसि पक्तव्यानि दहसि दग्धव्यानि। तस्मादग्निरेव वैश्वानर इति स्थितम्।

*अग्निसूक्तेष्वेव वैश्वानरीयप्रवादाः*

*वैश्वानरोऽग्निकर्मभिरेव संबध्यते*

तदेते षट् हेतवः तद्धितेन विग्रहव्यपदेशात् (१) एकवाक्ये विभक्त्यन्तरव्यपदेशात् (२) औत्तमिकेषु[2] सूक्तेषु अप्रवादात् (३) आदित्यकर्मणा चा[3]संस्तवात् (४) आग्नेयेषु सूक्तेषु प्रवादात् (५) अग्निकर्मणा च संस्तवात् (६) इति।

तत्पुनरेतदग्नेर्वैश्वानरत्वं[4] स्थितमप्यस्थितमिव परपक्षहेतुष्वनिराकृतेषु। यतस्तन्निराकरणाय[5] प्रस्तौति। 'यथो एतत्' इति। यत्पुनरेतदुक्तं वर्षकर्मणा यस्मात्स्तौति तस्मान्मध्यम इति (६९६।१२)। 'अस्मिन्नपि' पार्थिवेऽग्नौ 'एतदुपपद्यते' वर्षकर्म। कथमिति। यत आह[6]। 'समानमेतत्' इति[7]। समानम् एवं इदम् उदकम् उदकत्वेनाविशिष्टम्। उच्चैस्त्वव चाहभिः। उत् एति च ऊर्ध्वं चैति अहोभिर्निमित्तभूतैः। पुनश्च[9] अवाक् एति। दक्षिणोत्तरायणयो[10]र्व्यावृत्तिभिः प्रतिसंवत्सरमहान्यभिप्रेतानि। तदेतदेकमेवोदकम्[8]। पर्यायेण दक्षिणायनोत्तरायणयोः जगद्यात्रासिद्ध्ये तदुदेति चावैति च वर्षभावेन[11]। कथमिति। यत आह। अवाक्[12] तावदेति। भूमिं पर्जन्याः प्रार्जयितारो

*अग्नावपि वर्षकर्मोपपद्यते*

१ क. ख. घ. झ. ट. ठ. ड. इति वहसीति पचसीति दहसीति २ झ. औत्तमके°. ३ क. ख. घ. झ. ट. ठ ड. 'च' नास्ति. ४ ग ज. °दग्नेर्वै°; च. °दग्नेर्वै' ग्ने. ५ ग. च. ज. ठ. ड. यतस्तं नि°. ६ ग. आह। ३४। समा°. ७ ग. इति। १७। समा°. ८ क. ख. घ. झ ट. ठ ड. एकमेव. ९ क. ख. घ. झ. ट. ठ. ड. पुनश्चाहोभिरेवावाङेति; च. पुनश्चा॰ वा° होभिरे. १० क. ख. घ. झ. ट. ठ. ड. उत्तरायणदक्षिणायनयोः; च. दक्षिणायनोत्तरायणयोः °उत्तरायणदक्षिणायणयोः. ११ क. ख. घ. झ. ट. ठ. ड. वर्षकर्मभावेन. १२ क. ख. घ. झ. ट. ठ. ड. अवाङ्.

रसानां माध्यमिका देवगणा वर्षममुतो मुञ्चन्तो भूमिं जिन्वन्ति तर्पयन्ति ओषध्युत्पत्तये । एवं तावदर्वाङ् । अथ पुनरूर्ध्वं कथमिति । यत आह ।[2]
दिवं जिन्वन्त्यग्नय इति । यथैवामुतो वर्षेणेमां पर्जन्या जिन्वन्ति तथै-[3]
वाहुतिप्रभवेन वर्षेण दिवं जिन्वन्त्यग्नयः । आहुतयो ह्यग्नौ प्रक्षिप्तास्तेन
दग्धास्ता अर्चिभिः[4] कृत्वोदकभावमापाद्य परमं[5] सूक्ष्मं देवोपभोगयोग्यं द्यां ५
प्रति वर्षभावेनोन्नीयन्ते[6] तल्लोकनिवासिनां तृप्तये । ततस्त इह पुनर्वर्षं प्रति[7]
कल्पयन्ति । तदुक्तम् ' अमुष्य लोकस्य का गतिरित्ययं लोक इति
होवाच ' ( छ० उ० १ । ८ । ७ ) इति ।

एवं च सुतरामयमपि[8] वर्षवानाहुतिमूलत्वात्सर्वस्य वर्षस्य । स्मर्यते
च ' अग्नौ प्रास्ताहुतिः सम्यगादित्यमुप- १०
तिष्ठते ' ( मनुस्मृ० ३ । ७६ ) इति । तत्र
यदभूद्वर्षकर्मभावान्मध्यम इति तदेतदवैशेषिकम् ।
मध्यमस्य वैश्वानरत्वे न लक्षणम् ।

वर्षकर्म मध्यमस्य न वैशेषिकं लक्षणम्

अपि चायमपरो मन्त्रो यस्मिन्नग्निरादित्यो वर्षकर्मणा स्तूयते । तस्मा-
त्सुतरामनैकान्तो वर्षकर्माभिष्टवो मध्यमस्येति[9] । यत आह ' कृष्णं निया- १५
नम् ' इति[10] । २३ ।

द्वादशोऽध्यायस्य[11] षष्ठः पादः ॥

---

सप्तमः पादः ॥

कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति । २०

---

१ क ख. घ. झ. ट. ठ. ड. °वाङेति । अ°; च. °वाङ् । अ° एति.
२ क ख. घ. झ. ट ठ. ड. कथमेति । अत आह°. ३ क. ख. घ. झ. ट. ठ.
ड. 'इति' नास्ति ४ क. ख. घ. झ. ट. ठ. ड. स्वार्चिभिः कृतो ( क. ख.
कृत्वो ) दक°; च. अर्चिर्भि.°. ५ ग. ज. परमसूक्ष्मं. ६ क. ख. घ . झ. ट.
ठ. ड. °भावेन नीय°. ७ च. वर्जमितरेषु ' प्रकल्प°. ८ क ख. घ. झ. ट. ठ. २५
ड. °मपि च वर्ष°. ९ ठ. ड. °स्येति । इति निरु० उत्त० प्र० त्रयोविंशः खण्डः ।
२३ । इति द्वादशस्य षष्ठः पादः । यत°; ड. °स्येति । इति द्वादशस्य षष्ठः पादः ।
इति निरुक्तटीकायामुत्तरषट्के त्रयोविंशतिः खण्डः । यत°. १० क ख. ९ (२३);
ग. ३६; इतोऽग्रतो नास्ति. ११ क. ख. इति निरुक्तवृत्तौ द्वाद°; घ. झ. ट,
द्वादशस्य. ३०

त आववृत्रन्त्सदनादृतस्यादिद्घृतेन पृथिवी व्युद्यते ( ऋ. सं. १ । १६४ । ४७ ) ॥ कृष्णं निरयणं रात्रिरादित्यस्य हरयः सुपर्णा हरणा आदित्यरश्मयस्ते यदामुतोऽर्वाञ्चः पर्यावर्तन्ते सहस्थानादुदकस्यादित्यादथ घृतेनोदकेन पृथिवी व्युद्यते घृतमित्युदकनाम जिघर्तेः सिञ्चतिकर्मणोऽथापि ब्राह्मणं भवत्यग्निर्वा इतो वृष्टिं समीरयति धामच्छ[1]दिव भूत्वा वर्षति मरुतः सृष्टां वृष्टिं नयन्ति [2]यदासावादित्यो[3]ऽग्निं रश्मिभिः पर्यावर्तते[4]ऽथ वर्षतीति यथो एतद्रोहात्प्रत्यवरोहश्चिकीर्षित इत्याम्नायवचनादेतद्भवति यथो एतद्वैश्वानरीयो द्वादशकपालो भवतीत्यनिर्वचनं कपालानि भवन्त्यस्ति हि सौर्य एककपालः पञ्चकपालश्च यथो एतद्ब्राह्मणं भवतीति बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति पृथिवी वैश्वानरः संवत्सरो वैश्वानरो ब्राह्मणो वैश्वानर इति यथो एतन्निवित्सौर्यवैश्वानरी भवतीत्यस्यैव सा भवति यो विड्भ्यो मानुषीभ्यो दीदेदित्येष हि विड्भ्यो मानुषीभ्यो दीप्यते[6] यथो एतच्छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवतीत्यस्यैव तद्भवति जमदग्निभिराहुत[7] इति जमदग्नयः प्रजमिताग्नयो वा प्रज्वलिताग्नयो वा तैरभिहुतो[8] भवति यथो एतद्द्विपान्तीयं सूक्तं सौर्यवैश्वानरं भवतीत्यस्यैव तद्भवति ॥ २४ ॥

---

'कृष्णं नियानम्' इति[10] । दीर्घतमस आर्षम्[11] । वृष्टिकामस्य कारीर्यामग्नये धामच्छदेऽष्टाकपालं तस्य पुरोनुवाक्या ( मैत्रा० सं २ । ४ । ७ ॥ ४ । १२ । ५ ) । [12]मैत्रायणीयके अग्निरयमादित्यीकृत्य स्तूयत इति प्रकरणादध्यवसीयते । [13]कृष्णं निरयणं निर्गतिः ।

अस्यामपि ऋचि अग्नेर्वर्षकर्मणा संबन्धः

---

१ ङ. थ. ध. ठ. ढ. 'च्छादिव खलु वै भूत्वा'. २ ङ. थ. ध. ठ. ढ. यदा खलु वा असावादित्यो न्यङ् रश्मि°. ३ द. 'दित्योवाङ ग्निं र°. ४ छ. त. द. °वतन्तेऽ'. ५ छ. °तत् । ३६ । वैश्वा°; त. द. °तत् । १ । वैश्वा°. ६ छ त. द. दीदयति. ७ छ. त. द. °राहूतः. ८ छ. त, द. °भिहूतो°. ९ क. ख. २ (२४); छ. ३७; त. द २. १० ग. इति । दीर्घ°. ११ क. ख. घ, ङ. द. ठ. °र्षम् । त्रिष्टुप् । वृ°; च °र्षम् । वृ त्रिष्टुप् । १२ क. ख. घ, ङ, ठ, ढ. °क्या । तस्यां मै°; ग. ज. मैत्रावरुणीयके, च °क्या । मै°तस्यां. १३ क. ख. घ. ङ. ट. ठ. ढ, कृष्णं । किं पुनस्तत्कृष्णं नि°; च. कृष्णं नि° किं पुनस्तत्कृष्णं.

निर्गच्छतीत्येतदिति नियानं वर्त्म पन्थाः । तच्च पुनरेतत् रात्रिः आदित्यस्य । द्वे ह्ययने शुक्लं चोत्तरं कृष्णं च दक्षिणम् । सा हि देवी रात्रिरभिप्रेता । ततो ब्रवीति रात्रिरादित्यस्य ज्योतिषः । स एष भगवानादित्यो जगदनुग्रहाय गर्भमुदकमात्मन्याधित्सुरुत्तरायणं प्रति पद्यते । तदेते हरयो रसहरणाः सुपर्णाः तस्य रश्मयः सर्वस्मादस्माल्लोकात् अपो वसानाः आत्मन्याच्छादयन्तः आददानाः दिवं द्योतनवन्तमेतमादित्यं प्रति उत्पतन्ति तदुदकं निधित्समानास्तस्मिन्गर्भत्वेन । स एष आदित्य उत्तरायणं मासैः षड्भिराहितोदकगर्भः संपद्यते । स एष परिषिक्तोदकगर्भो दक्षिणेवर्त्म प्रति पद्यमानो नभस्यान्मासात्प्रभृति प्रसूयते । तदिदमुच्यते त आववृत्रन्त्सदनादृतस्य इति । ते रश्मयो यदा अमुतः अमुष्मादादित्यात् ऋतस्य उदकस्य सदनात् सहस्थानात् आववृत्रन् यदा पर्यावर्तन्ते अथ तदा वृत्तिसमनन्तरमेव घृतेन उदकेन पृथिवी व्युद्यते विविधमुद्यते । घृतमित्युदकनाम पृथिवी व्युद्यते इति सामर्थ्यात् । तत्पुनः जिघर्तेः सिञ्चतिकर्मणः ।

एवमेतस्मिन्मन्त्रे मन्त्ररूपादादित्यः प्रकरणादग्निः । उभयथाप्यन्यो मध्यमाद्वर्षकर्मणः कर्ता । 'अथापि ब्राह्मणम्' एतस्मिन्प्रकरणे यस्मिन्नयं मन्त्रो विनियुज्यते 'अग्निर्वा इतो वृष्टिं समीरयति' इत्येवमादि । अग्निरितो लोकाद्वृष्टिं समन्तत ईरयति धूमभूता आप ओषधिवनस्पतिभ्यो निर्वर्त्यमाना आहुतिभृताश्चामुं लोकमाविशन्ति । 'अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टिः' (शत० ब्रा० ५ । ३ । ५ । १७) इति हि विज्ञायते । ताः पुनरग्निः स्थानाभिसंप्रतिप्रनाडिकया धामच्छद् आदित्यो भूत्वा धाम्नां छादयिता रश्मिभिर्मेघरूपैर्मध्यमस्थानमापादयति । एवं तेन 'सृष्टां वृष्टिं' मध्यमैस्थानात् 'मरुतो'

अग्नेर्वर्षकर्मसंबन्धे ब्राह्मणमपि

१ क. ख. घ. झ. ट. ठ. ड. °च्छत्येतदि ; ग. ज. °च्छतीत्येनदि°. २ ग. ज. वार्त्मा. ३ घ. झ. ट. ठ. ड. 'नवत् तमेतमादि°. ४ क. ख. घ. झ. ट. ठ. ड. दक्षिणं वर्त्म. ५ ग. च. ज. 'वृत्रन्सद्°. ६ च. औष°. ७ क. ख. ठ. ड. विनिवर्त्य°; घ. झ. ट. विनिवर्त्यमाना°; ग. च. ज. निर्वर्त्य°. ८ च. ज. हि. ९ ग. च. ज. °भिसंप्रतिप्रना°. १० घ. झ. ठ. ड. 'प्रनालिकया; ट. °प्रनाळिकया. ११ क. ख. घ. झ. ट. मध्यस्था°.

वायवो मेघोदराणि विदार्य तेभ्यो विक्षिपन्तो वृष्टिमिमं लोकं 'नयन्ति'।

वर्षकर्म सर्वेषां समानम्

प्रापयन्तीत्यर्थः । अपरमपि ब्राह्मणं भवति 'यदासावादित्योऽग्निं रश्मिभिः' इत्येवमादि । तदेवमेतद्वर्षकर्म समानं सर्वेषामित्यहेतुर्मध्यमस्य

५ वैश्वानरत्वे भवति ।

आम्नायवचनात्प्रत्यवरोहे यः कोऽपि

१० मन्त्रः प्रयुज्येत

'यथो एतत्' । यत्पुनरेतदुक्तं याज्ञिकपक्षे 'रोहात्प्रत्यवरोहश्चिकीर्षित इति' अकारणमेतत्सूर्यस्य वैश्वानरत्वे । कस्मात् । यस्मात् 'आम्नायवचनादेतत्' एवं 'भवति'। रोहात्प्रत्यवरोह इत्यर्थवादमात्रमेव ।

यदपि चोक्तं 'वैश्वानरीयो द्वादशकपालो भवति' इत्येतदप्यकारणं

यस्माद्वैश्वानरीयः पुरोडाश एककपालः पञ्चकपालश्च तस्मा-

१५ द्वादशकपालत्व न सौर्यत्वे कारणम्

सूर्यस्य वैश्वानरत्वे । कस्मात् । व्यभिचारात् । व्यभिचार्येतदिति । यत आह । 'अस्ति हि सौर्य एककपाल. पञ्चकपालश्च' । यदि हि देवतागुणाभिप्रायमभविष्यद् द्वादशविधमस्य कर्म तस्माद् द्वादशकपाल इति नन्वेवं सति सौर्योऽपि द्वादशकपाल एवाभविष्यदभिधानमात्रं भिद्यते न कर्मेति । न च भवति सौर्यो द्वादशकपाल इति ।

तस्मादहेतुः कपालानि ।

येदप्युक्तं 'ब्राह्मण सौर्यवैश्वानरप्रवादं भवतीति' एतदप्यकारणम् ।

२० ब्राह्मणप्रवादो न प्रमाणं यस्माद्ब्राह्मणेऽन्येऽपि प्रवादा वर्तन्ते

कस्मात् । 'बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति' । यस्माद्बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति । भक्तिर्नाम गुणकल्पना । येन केनचिद्गुणेन ब्राह्मणं सर्वं सर्वथा ब्रवीति । तत्र तत्त्वमन्वेष्यमेव भवति । तद्यथा । 'पृथिवी वैश्वानरः' इत्येवमादि किमपि ब्राह्मणेन बहु वैश्वानरशब्देनोच्यते भक्त्या ।

---

१ क. ख. घ. झ. ट. ठ. ड. अथापर°. २ घ. झ. ट ठ. ड. यत्पुनस्तदु°. ३ क. ख. ग. ज. 'यस्मात्' नास्ति. ४ ग. °कम् । ३६ । वैश्वा°. ५ क. ख. घ. झ. ट. ठ. ड यथो एतत् । यद्°; च. ४ °यद् °यथो एतत्

२१ घ. झ. ट, ठ. ड.' हि ' नास्ति.

'यथो एतन्निवित्सौर्यवैश्वानरी भवतीत्यस्यैव' अग्नेः 'सा भवति'।

**निविदपि अग्नेरेव भवति**

कथमिति । तस्या हि पदं भवति 'यो विड्भ्यो मानुषीभ्यो दीदेदिति[2]' । 'एष हि विड्भ्यो मानुषीभ्यो दीप्यते' । 'अग्निर्वैश्वानरः सोमस्य मत्सत्[3] । विश्वेषां देवानां समित् । अजस्रं दैव्यं ज्योतिः । यो विड्भ्यो मानुषीभ्यो दीदेत् । द्युषु पूर्वासु दिद्युतानः । अजर उषसामनीके । आ यो द्यां भात्या पृथिवीम् । उर्वन्तरिक्षम् । ज्योतिषा यज्ञाय शर्म यंसत् । अग्निर्वैश्वानर इह श्रवदिह सोमस्य मत्सत् । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु चित्रश्चित्राभिरूतिभिः श्रवद्ब्रह्माण्यावसागमत्' । इतीयं निविदाग्निमारुते शंस्यते । 'निवित्पुरोरुचः प्रैषा विश्वामित्रस्य सर्वशः' इति[6] विश्वामित्रस्यार्षम् । अग्निर्वैश्वानरः सोमस्य मत्सत् तृप्यतु । तृप्तश्च प्रेमां देवो देवहूतिमवतु । प्रकर्षेण इमाम् अग्निर्वैश्वानरो देवो देवहूतिं देवानामस्माकमाह्वानम् अवतु रक्षतु । यो विश्वेषां देवानां समित् समिन्धनः स इदं करोतु । यश्च अजस्रं नित्यं ज्योतिः । यश्च विड्भ्यो मानुषीभ्यो दीदेत्[7] देदीप्यते । यश्च द्युषु पूर्वासु पूर्वेष्वहःसु दिद्युतानो दीप्यमान एवासीत् । यश्चासौ अजरो जरावियुक्तः उषसामनीके अग्निहोत्रेषु[8] द्योतते । यश्च आभासयति द्यां सूर्यात्मना आभासयति च पृथिवीम् अग्न्यात्मना उरु[9] वा अन्तरिक्षं मध्यमात्मना । एवं त्रिभिर्ज्योतिर्भिः । यश्च ज्योतिषा यज्ञियाय[10] शर्म यच्छति सुखं ददाति ।

---

१ क. ख. घ. झ. ट. तस्याके पद; ठ. ड. तस्या हि. २ क ख. घ. झ. ट. ठ. ड. °दिति । ततः किम् । ए ; च °दिति ~ । ए° ततः किम् ।. ३ ग. मत्सत् । इतीयं निवि°,च. अग्निर्वैश्वानरः सोमस्य मत्सत् । इतीयं निवि° (अग्निर्वै° इति सर्वा निवित् च. पुस्तके पत्रस्योपरितनभागे पठ्यते ).४ ट. उर्व° ओ. ५ ग. ज. °स्यते । अग्निर्वैश्वानर इत्यादि श्रवद्ब्रह्माण्यावसागमादित्यन्तं । निवि°; च. °स्यते । अग्निर्वैश्वानर इत्यादिश्रवद्ब्रह्माण्यावसागमादित्यन्त । निवि°. ६ क. ख. घ. झ. ट. ठ. ड. इति सर्वा वि°. ७ ग. ज. °देत् दीप्यते. ८ क. ख. घ. झ. ट. ठ. ड. होत्रादिषु; च. °होत्रेषु° त्रादि. ९ क. ख. घ. झ. ट. ठ. ड. च अन्त°. १० क. ख. घ. झ. ट. ठ. ड. यज्ञाय; च. यज्ञियाय° झा.

सः अग्निर्वैश्वानर इह श्रवत् शृणोतु अस्माकं स्तुतीः । इह कर्मणि सोमस्य मत्सत् तृप्यतु । किंच । प्रावत्विमां देवो देवहूतिं देव्या धिया । देवाना या दात्री धीः प्रज्ञा तया अवतु रक्षतु । प्रेदं ब्रह्म प्रेदं क्षत्रम् । इदं ब्रह्म प्रावतु । इदं क्षत्रं प्रावतु । प्रेमं सुन्वन्तम् अभिषुण्वन्तं यजमानम् ।
५ चित्रः चायनीयः पूज्यो वैश्वानरः चित्राभिरूतिभिः शोभनाभिर्गतिभिः प्रीतिभिर्वा शृणोत्विमानि ब्रह्माणि अस्माक नित्यं चास्मान् प्रत्यागच्छतु अवसा पालनाभिप्रायेण मनसा कर्मस्वित्येतदाशास्महे ।

'यथो एतत्' । यत्पुनरेतदुक्तं 'छान्दोमिकं' छन्दोमयज्ञेषु दाशरात्रिकेषु यत् 'सूक्त' तत् 'सौर्यवैश्वानरम्' इति 'तद् अस्यैव' अग्नेः 'भवति' । कथमिति । तत्र ह्येतद्विशिष्टं पार्थिवाग्नेर्वाचकं लिङ्गं भवति । 'जमदग्निभिराहुत.' ( आश्व० श्रौ० ८ । ९ ) इति । जमदग्नयो ह्येनमाहुतिभिर्जुह्वति नादित्यमविधानादसंभवाच्च । तस्मादत्रापि यद्वैश्वानरलिङ्गं तदप्येतस्य पार्थिवस्याग्नेर्ज्ञकं

१० छान्दोमिकं सूक्तमपि अग्नेरेव

१५ भवति । 'वृषा पावक दीदिहि' । वृषा वर्षिता हे वैश्वानर पावक द्युमत् दीप्तिमत् यस्त्वं जमदग्निभिराहुतः अभिहुतः स त्वमस्माकं कर्मसु नित्यं दीदिहि दीप्यस्व । इत्येतदाशास्महे । 'जमदग्नयः' नित्यं 'प्रजमिताग्नयः' प्रभूताग्नयः 'प्रज्वलिताग्नयो वा' ।

'यथो एतत्' । यदप्युक्तं 'हविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवतीति तत्' अपि 'अस्यैव भवति' । कथमिति । यतस्तस्य सूक्तस्य या प्रथमा ऋक् सा यथाग्नेयी भवति न सौरी तथा निराह । इदमाग्नेयं सूक्त न सौर्यमित्युपप्रदर्शनार्थम् ॥ २६ ॥

२० हविष्पान्तीय सूक्तमपि अस्यैव

---

२५ १ क. ख घ. झ. ट. ठ ड. इह च क°. २ घ. झ. ट. ठ. ड. °त्विम. ३ क. ख. घ. झ. ट. ठ. ड. ब्रह्म प्रावत्विदम् । क्षत्र प्रावत्विदम्. ४ क. ख. घ. झ. ट. ठ. ड. °मान प्रावतु । चि°; च. °माम ν । चि° प्रावतु ५ घ. झ. ट. ठ. ड. °नरः तस्य चि°. ६ क. ख. घ. झ. ट. ठ. ड. °स्मान् प्रत्यागमत् प्रत्यागच्छतु. ७ ठ. ड. दीदिह्यग्ने वैश्वानरं बृहत् । वृषा°. ८ ग. ज. नित्यप्रज°. ९ क. ख. २ ( २४ ), ग. ३७; ठ. °नार्थम् । इति निरु० उत्त० प्र० चतुर्विंशतिः खण्डः । २४ ।; ड. २४ । इति निरुक्तटीकायामुत्तरषट्के प्रथमाध्याये चतुर्विंशतिः खण्डः, इतरेष्वङ्को नास्ति.
१२

हविष्पान्तमजरं स्वर्विदि दिविस्पृश्याहुतं जुष्टमग्नौ । तस्य भर्मणे भुवनाय देवा धर्मणे कं स्वधया पप्रथन्त ( ऋ० सं० १० । ८८ । १ ) ॥ हविर्यत्पानीयमजरं सूर्यविदि दिविस्पृश्यभिहुतं जुष्टमग्नौ तस्य भरणाय च भावनाय च धारणाय चैतेभ्य: सर्वेभ्य: कर्मभ्य इममग्निमन्नेनापप्रथन्तेत्यथाप्याह　　५

॥ २५ ॥

---

हविष्पान्तमिति । सूक्तमेतन्मूर्धन्वत आङ्गिरसस्यार्षं वामदेवस्य वा ।

तत्सूक्तस्य प्रथमा ऋक् आग्नेयी एव व्यूढस्य दशरात्रस्य पञ्चमेऽहन्याग्निमारुतस्य प्रतिपत् । ( ऐ० ब्रा० २२ । ४ ॥ आश्व० श्रौ० ८ । ८ ) हवि: । कतमत् । यत् एतत् पान्तं पानार्हं पानयोग्यं च देवानां पुरोडाशादि निर्दग्धस्थूलभावमग्निना क्रियते । अजरम् । जरा विपारिणामः । यतः परं विपारिणामो नास्ति कश्चित्तत् । प्रविवेकमापादितमग्निना । यदेतत्स्वर्विदि । स्वः आदित्यः तं वेत्ति यथासौ वेदितव्य इति तदर्थं वा वेत्ति हविः । स्वर्विदयमग्निर्न सूर्यः । भाष्यकारोऽपि व्यपदेशेन निराह ‘ सूर्यविदि ’ इति । दिविस्पृशि द्यामसौ स्पृशत्यहन्यहनि हविरुपनयन्नादित्यम् । आहुतम् अभिहुतं विसृष्टम् । जुष्टं प्रियं देवानाम् । तस्य हविषः भर्मणे भरणाय संभरणाय बहुलीकरणाय । अपि नाम अयमग्निरेतद्बहु कुर्यादित्येवमर्थम् । भावनाय च । विभूतियुक्तमुपजायेतेत्येवमर्थमेव । तत्कथं नाम देवतातृप्तिसमर्थं कुर्यादिति । धर्मणे धारणाय अविच्छेदनाय । कथं नामैतद्देवताभ्यो नित्यं प्रापयेदिति । एतेभ्यः कर्मभ्यः अर्थाय इमम् एव अग्निं पृथिवीस्थानं साधयतः स्वधया अन्नेन हविषा　　१०　　१५　　२०

---

१ ङ. थ. ध. ठ. ड. °र्मभ्यो देवा इम°. २ ङ. थ. ध. ठ. ड. ‘ इति ’ नास्ति. ३ क. ख. ३ ( २५ ); छ. ३८; त द ३. ४ घ. झ. ट. ठ. ड. °वानां चरुपुरोडाशादिभिर्निर्दग्ध°; च. °वानां॰पुरो° चरु. ५ घ. झ. ट. ठ. ड. ‘ तत् ’ नास्ति. ६ क. ख. घ. झ. ट. ठ ड. स स्वर्वि°; च. स स्वर्वि°. ७ क. ख. घ. झ. ट. ठ. ड. °ग्निरित्येतद्ब°. ८ क. ख. घ. झ. ट. ठ. ड. विभूतियुक्त°. ९ क. ख. घ. झ. ट. ठ. ड. °मर्थमपि एतत्कथं°. १० क. ख. घ. झ. ट. ठ. ड. साधयते । स्व°; च. °स्थानं । साधयते । स्व°.　　२५　　३०

आज्येन पुरोडाशेन च । यदुक्तं निगमे ' घृतं चापां पुरुषं चौषधीनाम् ' ( ऋ० सं० १० । ५१ । ८ ) इति तदेतत् । अपप्रथन्ते । अवर्धयन्तेत्यर्थः ।

एवमेतस्मिन्सूक्ते प्रथमे मन्त्रे यदेतदग्निलिङ्गमस्पृष्टं वैश्वानरशब्देन तदसंशयमग्निवाचि । तत्पुनरेतत्सूक्तं हविष्पान्तीयं प्रागेवाग्नेयं करोति

५ यस्मात्प्रथमा ऋक् आग्नेयी तस्मात्सर्वं सूक्तमपि आग्नेयमेव

प्राथम्यात् । प्रथमं लोके हि[3] यो स्तूयते स स्वेनाभिधानेनाव्यभिचारिणोपक्रम्यते स्तोतुम् । ततोऽन्यैर्भाक्तैः स्तूयते त्व राजा त्वमिन्द्र इत्येवमादिभिः । तथैव[4] कृत्वास्मिन्सूक्ते यो वैश्वानरशब्द उत्तरत्र ( ऋ० सं० १० । ८८ । १२–१४ ) सोऽस्यैवाग्नेः[6] पृथिवीस्थानस्य व्यञ्जनमात्रं भवति ।

१० यथा चायमेव पृथिवीस्थानोऽग्निर्वैश्वानरो न मध्यमस्तथेममपरं मन्त्रं स्वपक्षोद्भिभावयिषया अन्यस्मात् सूक्ताद्विर्ज्योतिर्लक्षणमानीय मध्यमोत्तमयोर्ज्योतिषोरन्यत्वव्यपदेशवतो वैश्वानरस्य निर्णिनीषन्प्रकरोति ' अथाप्याह ' इति ॥ २५ ॥

---

१५ अपामुपस्थे महिषा अगृभ्णत विशो राजानमुप तस्थुर्ऋग्मियम् ।
आ दूतो अग्निमभरद्विवस्वतो वैश्वानरं मातरिश्वा परावतः
( ऋ० सं० ६ । ८ । ४ )॥ अपामुपस्थ उपस्थाने महत्यन्तरिक्षलोक आसीना महान्त इति वागृह्णत माध्यमिका[10] देवगणा विश इव राजानमुपतस्थुर्ऋग्मियमृग्मन्तमिति वार्चनीयमिति[11]

२० वाहरयं दूतो देवानां विवस्वत आदित्याद्विवस्वान्विवासन-

---

१ घ. झ. ट. पुरोलाशेन. २ क. ख. घ. झ ठ. ड. ढ. °थन्त देवाः । अव°; ग. °थन्त° । अव° देवाः. ३ क. ख. घ झ. ट. ठ. ढ. 'लोके यो हि भूयत'. ४ ग. स्तूय° भू. ५ क. ख. घ. झ. ट ठ ड. तथैवं, ग. तथैवं° वं. ६ क. ख. घ. झ. ट. ठ. ड. स तस्यैवा°. ७ ग. स्तथेमं पर°. ८ घ. झ. ट. ठ. ढ. °ग्निर्मे ज्यो°. ९ क. ख. ३ ( २५ ), ग. ३८, ठ. इति । इति निरु० उत्त० प० पञ्चविंशतिः खण्डः । २५ ।, ड. इति । इति निरुक्तटीकायामुत्तरषट्के प्रथमाध्याये पञ्चविंशतिः खण्डः. १० छ. त. द. माध्यमका°. ११ ढ. ध. घ. ड.

२८ ढ. 'मिति वा पूजनीयमिति वा°.

वान् प्रेरितवतः परागताद्वास्याग्नेर्वैश्वानरस्य मातरिश्वानमाहर्तारमाह मातरिश्वा वायुर्मातर्यन्तरिक्षे श्वसिति मातर्याश्वनितीति वाथैनमेताभ्यां सर्वाणि स्थानान्यभ्यापादं[2] स्तौति ॥ २६ ॥

---

अपामुपस्थे इति[3] । भरद्वाजस्यार्षम्[4] । प्रातरनुवाकाश्विनयोः शस्यते ।

पार्थिवोऽग्निरेव वैश्वानर इत्यर्थे ऋक्

अपामुपस्थे उपस्थाने । यत्रोपगम्य तिष्ठन्त्यापः सोऽपामुपस्थः अन्तरिक्षलोकः । तस्मिन्नपामुपस्थे महति विस्तीर्णे सन्ना महिषाः माध्यमिका देवगणाः । पथा वा । महिषाः त एव महान्तः । किमकुर्वन् । अगृभ्णत अगृह्णन् । गृहीत्वा च विश इव मनुष्या इव राजानं परिवार्य उपतस्थुः । ऋग्मियम् ऋग्भिः स्तुतिभिः तद्वन्तम् । अर्चनीयम् अर्चनार्हं वा । कमिति[8] । यम् आभरत् आहरत् दूतो देवानां मातरिश्वा वायुः अग्निं वैश्वानरम् । कुतः । परावतः प्रकर्षेण ईरितवतः प्रेरिततरात् परागताद्वा दूरतरात् विवस्वतः आदित्यात् विवेसक्रियया[9,10] तद्गतस्तं पर्यगृह्णन् अन्तरिक्षलोके[11] गृहीत्वा चोपतस्थुर्विश इव राजानम् । मातरिश्वा वायुः 'मातर्यन्तरिक्षे[12]' अप्रतिबध्यमानशक्तिः 'श्वसिति' गच्छति । अथवा । 'मातरि आशु अनिति' गच्छति ।

एवमेतस्मिन्मन्त्रे यत आह्रियते येन चाह्रियते यश्चाह्रियते सर्वे ते पृथग् व्यपदिष्टाः[13] । तत्र[14] विवस्वत आह्रियते मातरिश्वना वैश्वानर इति । तस्मादेतयोर्विवस्वन्मातरिश्वनोः संनिधानव्यपदेशे सति साक्षाद्वैश्वानरशब्देन पार्थिव उक्त इति व्यवतिष्ठते पार्थिवो वैश्वानर इति ।

एतस्मिन् मन्त्रे विवस्वान् वैश्वानरात् पृथक्

---

१ ङ. थ. ध. ठ. ड. °द्वापि वास्याग्ने°. २ क. ख. ३ ( २६ ); छ. ३९; त. द. ४. ३ ग. इति । भर°. ४ च झ. ट. ठ. ड. °र्षम् । वैश्वानरोऽग्निर्जगती । प्रा°. ५ घ. झ. ट. ठ. ड. 'अपां' नास्ति. ६ ग. ज. सति. ७ क. ख. घ. झ. ट. ठ. ड. ग. ज. अथवा°. ८ क. ख. घ. झ. ट. ठ. ड. कतमामिति. ९ क. ख. ग. ज. घ. झ. ट. ठ. ड विवासनक्रियया तमसां तद्ग°; च. विवेलक्रि° च सन. १० च. °क्रियया ^ त° तमसां. ११ क. ख. घ. झ. ट. °रिक्षे लो°. १२ क. ख. घ. झ. ट. °वायुः । महिमत°. १३ ग. ज. °पृथक् उपदिष्टाः; च. °पृथु व्य° थक्. १४ क. ख. घ झ. ठ. ठ. ड अत्र.

अथ पुनर्यदेतदभीकृत्य सूर्यादिसंबन्धि विशेषलिङ्गं हविष्पान्तीयस्य सौर्य-वैश्वानरत्वमुक्तं 'विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्' इति नान्यः सूर्यादह्नां कर्ता तस्मात्सूर्योऽत्र वैश्वानर इति । अत्र ब्रूमः । पार्थिव एवायमग्निः सूक्ते ( ऋ० सं० १० । ८८ ) प्रथमायामृचि प्रकृत्यैव सर्वास्वृक्षु एतस्मिन्सूक्ते प्रकृतिभूम्ना स्तूयते महत आत्मनो माहाभाग्यात् । अपि तर्हि सत्त्वान्यश्वप्रभृतीनि प्रकृतिभूमभिः स्तूयन्ते किमङ्ग पुनर्देवतास्तासामपि च विशेषतोऽग्निर्यस्य सर्वदेवतात्माभिवादः साक्षात् 'अग्निः सर्वा देवताः' ( ऐ० ब्रा० ६ । ३॥ मैत्रा० सं० १ । ४ । १२ इत्यादिबहुकृत्वः । शत० ब्रा० १ । ६ । २ । २०॥ तै० सं० ६ । २ । २ ) 'इन्द्रं मित्रं वरुणमग्निम्' ( ऋ० सं० १ । १६४ । ४६ ) इति । तदेतदेतस्मिन्नेव सूक्ते स्फुटतरमुपदिश्यते यथा पार्थिव एवायमग्निस्तेन तेन देवताविशेषेण देवतात्मना तत्स्थानमापन्नः स्तूयत इति । तदर्थमिदमाह । 'अथैनमेताभ्यां सर्वाणि स्थानान्यभ्यापादं स्तौति' । एताभ्यां ये एते वक्ष्यमाणे । सर्वाणि स्थानानि पृथिव्यन्तरिक्षद्युलक्षणानि । अभ्यापाद्य अभ्यापादं स्तौति मन्त्रदृक् ॥ २६ ॥

हविष्पान्तीये सूक्ते अग्निरेव माहाभाग्यात् तेन तेन रूपेण स्तूयते

---

**मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन् । मायामू तु यज्ञियानामेतामपो यत्तूर्णिश्चरति प्रजानन् ( ऋ० सं० १० । ८८ । ६ )॥ मूर्धा मूर्तमस्मिन्धीयते मूर्धा यः सर्वेषां भूतानां भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन्त्स एव प्रज्ञां त्वेतां**

---

१ घ. झ. ट. ठ. ड. °र्यदा अभीकृत्य°. २ क. ख. ग. झ. ट. ठ. ड. °प्रकृत्योत्तरासु ऋक्षु°; च. सर्वासु° उत्तरा. ३ च. महा°. ४ च. ज. इति च तद°. ५ क. ख. झ. °णान्यभ्यापाद्य । अभ्यापाद्य इत्यभ्यापादं°; घ. ट. ठ. ड. °णान्यभ्यापद्य । अभ्यापाद्य इत्यभ्यापादं°; च. °णानि॰ अभ्यापा° अभ्यापाद्य. ६ म. ३९; क. ख. ४ ( २६ ); ठ °दृक् । इति निरु० उ० प्रथ० षड्विंशतिः खण्डः । २६ ।, ड. °दृक्। इति निरुक्तव्याख्यायामुत्तरषट्के प्रथमाध्याये षड्विंशतिः खण्डः; इतरेष्वङ्को नास्ति. ७ छ. त. द. °यत्स°.

**मन्यन्ते यज्ञियानां देवानां यज्ञसंपादिनामपो यत्कर्म चरति प्रजानन्त्सर्वाणि स्थानान्यनुसंचरते त्वरमाणस्तस्योत्तरा भूयसे निर्वचनाय ॥ २७ ॥**

---

मूर्धा भुवो भवति नक्तमिति। मूर्धा मूर्तमस्मिन् सर्वं सत्त्वजातमुपनिबद्धं धीयते। यथा हि शिरसो वियोगे तद्वतोऽवश्यंभावि मरणमेवमग्नि- ५

अग्निरेव सूर्यो भवति

वियोगेऽप्यवश्यं म्रियन्ते भूतानि इत्यतः प्रधानम् अग्निः मूर्धा भुवो भूर्लोकस्य भवति। विशेषतस्तु नक्तं रात्रौ तत्कृतत्वादालोकस्य भूतानां ॱ ान्नपक्तेस्तत्कृतत्वात्। तत्किमयमन्योऽग्निरन्यः १० सूर्य इति। नेत्युच्यते। ततः सूर्यो जायते प्रातरुद्यन्। रात्रावग्नित्वेन लोकस्योपकारं कृत्वा ततः अनन्तरमेव प्रभातायां रात्र्यामाह्निकैरुपकारैरुपकरिष्यन् लोकस्य सूर्यो भूत्वा जायते प्रातरुद्यन् स एवाग्निः। तस्येयं माया। क एनां जानाति। मायां त्वेतां यज्ञियानां देवानां यज्ञसंपादिनां सतत्त्वविदो मन्यन्ते। यत्किमिति। अपो यत्कर्म स्वाधिकारप्रयुक्तमादि- १५ त्यात्मनाग्न्यात्मना च कर्तव्य प्रजानन् प्रकर्षेण जानन् सर्वाणि स्थानान्यनुसंचरते तूर्णिः त्वरमाणः। कर्मकालमपरिहापयन्नित्यभिप्रायः।

'तस्योत्तरा भूयसे निर्वचनाय'। यथा चैतदेवं तथेयमपरा ऋग्भूयस्तरमेतमेवार्थं वक्ति। किं पूर्वया नोक्त यदनया भूयस्तरं निरुच्यत इति। स्थानद्वयमभिसंपन्नः पूर्वया स्तुतः। मूर्धा भुवो भवत्यग्नि- २० र्नक्तं ततः सूर्यात्मना प्रातरसावुदेति। अथ पुनरुत्तरया स्थानत्रयमभिसंपन्नः स्फुटतरं स्तूयत इत्येतद्भूयस्त्वम् ॥ २७ ॥

---

१ छ. त. द. °जानंत्स°. २ ङ. थ. ध. ठ. ड. चराति. ३ क. ख. ५ (२७); ग. ४०; त. द. ५. ४ ग. °मिति ६१। मू°; घ. झ. ट ठ. ड. °भवति (ठ. २५ भवति इति)। मू°. ५ ग. ज °मस्मिं धीयते सर्वं°. ६ घ. झ. ठ. ड. °वश्यंभावी विनाश इत्य°; ट. 'वश्यं भावी विनाश इत्य° म्रियन्ते भूतानि. ७ ग. ज. 'मूर्धा भूर्लोकस्य°; घ. झ. ट. ठ. ड. भूर्लोक°. ८ क. ख. घ. झ. ट. ठ. ड. एवायमग्निः; च. एवाग्निः °यम. ९ क ख. घ. झ. ट. ठ. ड. °युक्तमात्माधिकारप्रयुक्तमादि°. १० घ. झ. ट. ठ. ड. चरति. ११ क. ख. ५ (२७); ग. ४०; ठ. °यस्त्वम्। इति निरुक्त० उ० प्र० सप्तविंशतिः खण्डः। २७।; ड. °यस्त्वम्। इति निरुक्तटीकायामुत्तरषट्के प्रथमाध्याये सप्तविंशतिः खण्डः. ३१

स्तोमेन हि दिवि देवासो अग्निमजीजनञ्छक्तिभी रोदसि-प्राम् । तमू अकृण्वन् त्रेधा भुवे कं स ओषधीः पचति विश्वरूपाः ( १० । ८८ । १० ) ॥ स्तोमेन यं हि दिवि देवासो अग्निमजनयञ्छक्तिभिः कर्मभिर्द्यावापृथिव्योरापूरणं तमकुर्वंस्त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिर्यदस्य दिवि तृतीयं तदसावादित्य इति[6] ब्राह्मणं तदग्नीकृत्य स्तौत्यथैनमेतयादित्यीकृत्य स्तौति ॥ २८ ॥

---

स्तोमेन हि दिवीति[8] । स्तुतिभिः शक्तिभि. कर्मभिः अग्निहोत्रादिभिः दिवि द्युलोके एतम् अग्निमादित्यात्मना रोदस्योः द्यावापृथिव्योः आपूरण देवाः अजीजनन् अजनयन्यजमानाः । ते हि हविषा[10] दातारः ।

अग्निः त्रिष्वपि लोकेषु वर्तते

'शश्वद्ध[11] वा एष नोऽदियाद्यदेतामग्नावाहुतिं न जुहुयादिति[12] आहुतिभिरेवैन जनयन्ति ' इति । तमकृण्वन्[14] तमेवाग्निं कृतवन्त. । त्रेधा भुवे कम् । कमित्यनर्थको निपातः । त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति[15] च । स एवमवस्थितो जगद्यात्रासिद्धये सर्वावस्थैः[16] सर्वावस्था ओषधीः[17] पचति सर्वरूपाः[18] । प्रकृतस्यैव शाकपूणेः पुनर्ग्रहणं स्वपक्षानुस्मृतये । संकरो ह्यस्मिन् सूक्त आत्मविन्नैरु-

१ ठ. ड. °नञ्छक्ति°. २ क. ख. छ. त. ड. हि य. ३ क. ख. छ. त. ड. देवा अ°. ४ क. ख. छ. त. ड. 'शक्तिभिः' नास्ति, ठ. ड. 'यञ्छक्ति°. ५ क. ख. छ. त. ड. द्या प. ६ क. ख. ड. घ. ध. ठ. ड. इति हि ब्रा°; छ. इति ब्रा. च. ७ क. ख. ६ ( २८ ). छ. ४८, त. ड. ६. ८ क. ख. घ. झ. ट. ठ. ड. 'दिवि' नास्ति, ग. 'वीति । स्तो°. ९ क. ख. घ. झ. ट. ठ. ड. स्तोमेन स्तु°, च. 'स्तु° स्तोमेन. १० क. ख. घ. झ. ट. ठ. ड. हविषा, च. हविषा° षा. ११ क. ख. घ. झ. ट. ठ. ड. शश्वत् श्रद्धया ए°; च. शश्वद्धं वा° त् श्रद्धया. १२ क. ख. घ. झ. ट. ठ. ड. °यदेता°; च. °यदेता° ये. १३ ग. ज. ना जुहु°. १४ घ. झ. ट. ठ. ड. तमु अकृ°. १५ क. ख. घ. झ. ट. ठ. ड. 'इति' नास्ति. १६ च. 'वस्थाः स° स्थः; ज. °वस्थाः स°. १७ ख. ओष°. १८ क. ख. ध. झ. ट. ठ. ड. °रूपा इति; च. °रूपाः । प्र° इति.

क्याज्ञिकानामिति। ब्राह्मणमपि चैतमेवार्थं दर्शयत्ययमेवाग्निरादित्यो भवतीति। 'यदस्य दिवि तृतीयं तदसावादित्य इति ब्राह्मणम्'। अस्य इति व्यपदेशात्पार्थिवस्याग्नेः प्राधान्यं दर्शयति। उभाभ्यां पक्षाभ्यां व्याख्याय स्वपक्षसाधनमुक्त्वा देवतासतत्त्वमालम्ब्योच्यते।

अग्नेस्त्रिधाभावे ब्राह्मणम्

एकमेवेदं ज्योतिर्ज्योतिष्ट्वाविशेषात्। तत्पुनरेतज्जगद्यात्रासिद्ध्ये त्रिधा विभक्तं पृथिव्यामन्तरिक्षे दिवि च। विभक्तस्याभिधानं संपद्यतेऽग्निर्विद्युदादित्य इति। तत्रैव सति ज्योतिषो दिवि तृतीयमादित्याख्यमस्मिन् सूक्ते सर्वासूक्षु 'हविष्पान्तम्' इत्येवमाद्यास्वग्नीकृत्य मन्त्रदृक् स्तौति। 'अथैनमेतया' पुनः आदित्यीकृत्य स्तौति ॥ २८ ॥

---

**यदेदेनमदधुर्यज्ञियासो दिवि देवाः सूर्यमादितेयम्। यदा चरिष्णू मिथुनावभूतामादित्प्रापश्यन्भुवनानि विश्वा (ऋ० सं० १०। ८८। ११)॥ यदैनमदधुर्यज्ञियाः सर्वे दिवि देवाः सूर्यमादितेयमदितेः पुत्रं यदा चरिष्णू मिथुनौ प्रादुरभूतां सर्वदा सहचारिणावुषाश्चादित्यश्च मिथुनौ कस्मान्मिनोतिः श्रयतिकर्मा थु इति नामकरणस्थकारो वा नयतिः परो वनिर्वा समाश्रितावन्योन्यं नयतो वनुतो वा। मनुष्यमिथुनावप्येतस्मादेव मेथन्तावन्योन्यं वनुत इति वाथैनमेतयाग्नीकृत्य स्तौति ॥ २९ ॥**

---

यदेदेनमदधुर्यज्ञियास इति। यदैनं सूर्यम् आदितेयम् अदितेः पुत्रं दिवि अदधुः द्युलोके स्थापितवन्तो देवाः यज्ञियासः यज्ञसंपादिनो यजमाना याज्ञेन कर्मणा। सर्वस्यास्यापूर्वकृतत्वाज्जगद्विरचनाप्रपञ्चस्य। रश्मयो वा देवाः सौर्या यदैनमुन्नीतवन्तः। यदा चैनौ चरिष्णू

अग्निरत्र आदित्य इति स्तूयते

---

१ ठ. ड. इति हि ब्रा°. २ क. ख. घ. झ. ट. ठ. ड. °लभ्य निरुच्यते; च. °लभ्य उ° निरु. ३ क. ख. घ. झ. ट. ठ. ड. विभक्ताभि°; च विभक्त्याभि° क्रा. ४ क. ख. घ. झ. ट. ठ. ड पूर्वास्वृ°. ५ क. ख. ६ (२८); घ. ४१; 'स्तौति। इति निरुक्त° ३० (ड. निरुक्तभाष्योत्तरषट्के) प्रथमाध्याये अष्टाविंशतिः खण्डः। २८। (ड. '२८' नास्ति) ६ छ. न द. सूर्यमादि°. ७ घ. द. ध. °रणः रथ°. ८ क. ग. '' (२३), छ ४२, त. द. ''. ९ ग. ड. यदेदेनोमिति.

सर्वदा सहचरणशीलौ मिथुनौ प्रादुरभूताम् उषाश्चादित्यश्च आत् अथ तदा प्रापश्यन् प्रकर्षेणापश्यन् भुवनानि भूतानि विश्वा सर्वाणि ।

' मिथुनौ कस्मात् ' । मिनोतिः तावदत्र ' श्रयतिकर्मा ' । मिथुनशब्दे पूर्वपदं ' मि ' इति । ' थु इति नामकरणः ' प्रत्ययः । ' थकारो वा ' नामकरणो विकल्पेन । ' नयतिः परः ' उत्तरपदे ' वनिर्वा ' विकल्पेन । यदा तावत ' थु ' इति नामकरणो नयतिश्च परस्तदा धातोः पूर्वत्वात्प्रत्ययस्य परत्वात् ' मि नि थुः ' इति प्राप्ते स्फुटेर्बलीयस्त्वान्मध्यान्तविपर्ययेण मिथुनावित्युक्तम् । अथ पुनर्यदा थकारो नामकरणस्तदा वनिरुत्तरः । तदा वकारस्य सम्प्रसारणम् । सम्प्रसारणपरपूर्वत्व मध्यान्तविपर्ययः । थकारे च यः स्वरस्तस्य लोपः । थकारोऽन्तस्य उकारमुपसंक्रमेत । एव मिथुनाविति सिध्यति । अथ कोऽर्थः । ' समाश्रितौ अन्योन्यं ' प्रति आत्मानं ' नयतः ' कालं वा । समाश्रितौ भवत परस्परं सभक्तौ । ' मनुष्यमिथुनावप्येतस्मादेव ' । अथवा । मेथतेर्मनुष्यमिथुनौ स्याताम् । तौ हि कर्मार्थं ' मेथन्तौ ' इव परस्परेण काल नयतः ।

> मिथुनशब्दव्युत्पत्तिः

' अथ ' पुनः ' एनम् ' आदित्यम ' एतया ' उत्तरयर्चा एतस्मिन्नेव सूक्ते होतृत्वेन ' स्तौति ' । होतृत्वं ह्यग्ने कर्म न सूर्यस्य । तस्मादिदमग्निर्वैश्वानरीयं सूक्तम् ॥ २९ ॥

---

१ घ. झ. ट ठ. ड. °र्षेण पश्यन. २ घ. झ. ट. ठ ड. विश्वानि. ३ ग. ज. ' मि इति ' नास्ति. ४ ग. ज. नियतिपरा वनिर्वा यदा°; च. नियतिः परो वनिर्वा । पर उत्तर°. ५ क. ख. घ. झ. ट. ठ. ड. °यस्य च प.° ६ क. ख. घ. ठ. ड. मिनथुः; झ. मिनंथुर्नारि; ट. न्मिर्नेथु° र्नी. ७ ग. ज. थकारसप्र°; च. वकारस्यै. ८ क. ख. घ. झ. ट. ठ. ड. थकारश्च उ°, च. थकारोऽन्तस्य उ° रश्च. ९ क. ख. घ. झ. ट. ठ. ड. °एतम्, च. °एनम्° त. १० क. ख. ७ (२९), ग. ४२, ठ. °सूक्तम् । इति निरु० उ० प्र० एकोनत्रिंशत्तमः खण्डः । २९ ।, ड. °सूक्तम् । इति निरुक्तटीकायामुत्तरषट्के प्रथमाध्याये त्रिंशत्खण्डः; च. वर्गसमाप्त्यङ्को नास्ति.

यत्रा वदेते अवरः परश्च यज्ञन्योः कतरो नौ वि वेद ।
आ शेकुरित्सधमादं सखायो नक्षन्त यज्ञं क इदं वि वोचत्
( ऋ० सं० १० । ८८ । १७ ) ॥ यत्र विवदेते दैव्यौ होतारावयं चाग्निरसौ च मध्यमः कतरो नौ यज्ञे भूयो वेदेत्याशक्नुवन्ति तत्सहमदनं समानख्याना ऋत्विजस्तेषां यज्ञं समश्नुवानानां को न इदं विवक्ष्यतीति तस्योत्तरा भूयसे निर्वचनाय ॥ ३० ॥ ५

---

' यत्रा वदेते ' इति । यत्र यस्मिन् कर्मणि विवदेते । वेरुपसर्गस्यापकृष्य यत्र क्रियापदेन सामर्थ्यं तत्रानयनम् । कौ पुनस्तौ विवदेते । १० अवरः परश्च दैव्यौ होतारौ । अयं चाग्निः पार्थिवः असौ च मध्यमो वायुः । कथं विवदेते । यज्ञन्योः यज्ञनेत्रोः । उभावप्यावां यज्ञस्य नेतारौ । तत्कतर आवयोः यज्ञे भूयो बहु वेद इति । तत्र य एते समानख्याना ऋत्विजो यज्ञे विनियुक्ताः समश्नुवते यज्ञम् । त एनं सधमादं सहमदनं सहर्षम् उपश्रुत्यानयोः आशेकुः न शक्नुवन्ति । अशक्नुवन्तश्च किं ब्रूयुः । को न इद विवक्ष्यति । कतर एनयोर्यज्ञे भूयो वेदेति । उभावप्येतौ यज्ञे भूयोविदावित्यभिप्रायः । १५

अत्र सूर्यो होतेति स्तूयते । होतृत्वं चाग्नेः । तस्मात्सूर्योऽग्निरेव

यथाग्निप्रधानमेतत्सूक्त होतृकर्मणोऽग्निसंबद्धत्वाद्विशेषलिङ्गेन न सूर्यप्रधानं ' तस्योत्तरा भूयसे निर्वचनाय ' बहुतराय निरुच्य वचनाय । पूर्वस्याः २० को विशेषः । अस्यां हि विभज्य वायोः केवलोऽग्निरेव स्तूयते । पूर्वस्यामुभावपि भूयोविदावित्युक्तम् ॥ ३० ॥

---

१ ङ. थ. ध. ठ. ड. समानाख्याना. २ क. ख. ८ (३०), छ. ४३; त द. ८. ३ ग. इति । यत्र°. ४ ग. ज. घ. झ. ट. ठ. ड. 'तत्रानयनं' २५ नास्ति. ५ ठ. ड. समानाख्याना. ६ क. ख. घ. झ. ट. ठ. ड. °युक्ताः नक्षन्त सम°; च. °युक्ताः स नक्षन्त ७ क. ख. घ. झ. ट. ठ. ड. एवं, च. एन घं. ८ घ. झ. ट. ठ. ड. सवर्ष, च सकर्ष ह. ९ क. ख. घ. झ. ट. ठ. ड. अथाशक्नु°; च. न्ति । शक्नु° अथा १० क. ख. घ. झ. ट. ठ. ड. °क्ष्यतीति. ११ ग. ज. संबन्धत्वा; च. संबन्धत्वा द्ध. १२ क. ख. घ. झ. ट. ठ. ड. तथैषपरा ऋक् भू°. १३ क. ख. ८ ( ३० ), ग. ४३; ठ. °त्युक्तम् । इति नि० उ० प्रथ० त्रिंशत्तमः खण्डः । ३० ; ड त्युक्तम् । इति निरुक्तटीकायामुत्तरषट्के प्रथमाध्याये त्रिंशत्खण्डः, च. वर्णितरेखाङ्को नास्ति. ३३

यावन्मात्रमुपसो न प्रतीकं सुपर्ण्यो३ वसते मातरिश्वः । तावद्दधात्युप यज्ञमायन्ब्राह्मणो होतुरवरो निषीदन् ( ऋ० सं० १० । ८८ । १९ ) ॥ यावन्मात्रमुपस प्रत्यक्तं भवति प्रतिदर्शनमिति वास्त्युपमानस्य संप्रत्यर्थे प्रयोग इहेव निधेहीति यथा
५ सुपर्ण्यः सुपतना एता रात्रयो वसते मातरिश्वञ्ज्योतिर्वर्णस्य तावदुपदधाति यज्ञमागच्छन् ब्राह्मणो होतास्याग्नेर्होतुरवरो निषीदन् होतृजपस्त्वनाग्निर्वैश्वानरीयो भवति देव सवितरेतं त्वा वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेणेतीममेवाग्निं सवितारमाह सर्वस्य प्रसवितारं मध्यमं वोत्तमं वा पितरं यस्तु सूक्तं भजते
१० यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्वैश्वानरो निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते भजेते ॥ ३१ ॥

---

'यावन्मात्रमुपसं.' । अत्र नकारः संप्रत्यर्थ एवोपमानासंभवात् । लोकेऽपि च 'अस्त्युपमानस्य संप्रत्यर्थे प्रयोगः इहेव निधेहीति यथा' ।
१५ इहे सम्प्रति निधेहीत्यर्थः । मातरिश्वना कश्चित्पृष्टो दैव्यस्य होतुः अग्नेः यद्विज्ञानं तत्किमयं ब्राह्मणो मनुष्यहोता यज्ञमुपायन् बिभर्तीति । स तं प्रत्याह । हे मातरिश्वन् यावन्मात्रम् उषसः प्रत्यक्तं प्रत्यञ्चितं प्रतिगतं प्रकाशम्य एताः सुपर्ण्यः रात्र्यः सुपतना रात्रय

(ज्ञाने होताग्निर्ब्राह्मणहोतुर्वर्ण्यान्)

२० आत्मन्यनुप्रविष्टं छादयन्ति । अभिभूय तमो वर्तते स्वयमेव । अथवा । वसतिर्दर्शनार्थः । यावन्मात्रमुपसो रात्रिषु दृश्यते तावदिति । एवमपि स्वल्पम् । एतावन्मात्रमयं स्वल्पविज्ञान उपायन् यज्ञं ब्राह्मणो होतृत्वे वृतो

---

१ छ त. द इहेव २ क. ख छ द. स्तमाग्नं . ३ क ख ९ ( ३१ ) । इति सप्तमाध्यायस्य सप्तमः पादः, छ ४४ त द ९, ठ. ३१ । इति नैरुक्तो-
२५ त्तरषट्के प्रथमाध्यायः, ड. ३१ । इति निरुक्तोत्तरषट्के प्रथमाध्यायः समाप्तः. ४ क. ख. घ. झ. ट. 'पसो न प्रतीकं' । अत्र°, ठ ढ. यावन्मात्रमिति. ५ ग. ज इहैव, च इहेव° हे, ध. ट. ठ ढ. इहेव नि° ६ ग. ज इहेव नि°, च. इहवें नि° ह सप्रति. ७ ठ ड. 'एता.' नास्ति. ८ क. ख. ग. ज. घ झ. ट. वर्तन्ते. ९ क. ख. घ. झ. ट. ठ. ड. दृश्यन्ते, ग. ज. दृश्यते । एवम°.
३० १० क. ख. घ. झ. ट. ठ. ड. स्वल्पमेव । ए°, च स्वल्पमेवेता° व । ५.

होतृषदने निषीदन् दधाति धारयति । दैव्यस्याग्नेः परस्य भूयोविदः अवरो-ऽन्यो[1]ऽल्पविदिति अनुकरोत्यल्पमिति । मानुषो ह्यग्न्यनुग्रहादेवायमल्पवि-ज्ञानोऽपि होता हौत्रं करोतीति पार्थिवोऽग्निर्विशेषतोऽभिष्टूयते ।

तदेतदेव कृत्वा सूक्तमाग्निप्रधानकर्मत्वाद्वैश्वानरीयम् । येऽत्र वैश्वानरश-ब्दास्तेऽग्निं[2] भजन्ति विशेषणत्वेन । 'होतृजपस्त्वनग्निर्वैश्वानरीयो[3] भवति'। एवमपि तु सत्ययम् अनग्निर्वैश्वानरो[4] होतृजपः 'देव सवितरेतं त्वा वृणते-ऽग्निं होत्राय सह पित्रा वैश्वानरेण' (आश्व० श्रौ० १।३) इति । एतमेवं[5] जपं वर्णयन्ति । 'इममेवाग्निं सवितारमाह' पार्थिवं 'सर्वस्य प्रस-वितार' यज्ञद्वारेण । 'मध्यमं नोत्तमं वा पितरम्' अस्य[6] वैश्वानरमाह । 'सह' तेन 'वैश्वानरेण पित्रा'।

किंतु होतृजपो नाग्निवैश्वानरीयो यस्मात्तत्र वैश्वानरोऽग्निः पितेत्युच्यते

एवं द्वौ पितापुत्राविति व्यपदेशात्पार्थिवादन्यो वैश्वानरः । स च पुनर्मध्य-मो[7] वोत्तमो वेत्येवमेवमयमनग्निर्वैश्वानरो[8] होतृजपः ।

अत्रापि 'यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्वैश्वा-नरः'। किं कारणम् । अनग्निर्वैश्वानरत्वेऽपि[9] सति होतृजपस्यायमेव पार्थि-वोऽग्निर्वैश्वानर इत्यवध्रियते[10] याज्ञिकपक्षे । आचार्यपक्षे चायमेवैको[11] मन्त्रो व्यपदेशहेतुरग्नेर्वैश्वानरत्वं[12] ब्रवीति । संप्रति मन्त्रे-णाग्नेर्व्यपदेशवतो[13] वैश्वानरत्ववाचिना 'आ दूतो अग्निमभरद्विवस्वतो वैश्वानर मातरिश्वा परावतः' (ऋ. मं. ६ । ८ । ४) इत्यनेन शाकपूणिपक्षे-णाव्यभिचारिणा[14] समीभवति । तद्भिन्नव्यपदेशा-दयस्तु पार्थिवस्य वैश्वानरत्वसाधका विशेषहेतवः षडव्यभिचारिणोऽति-

सूक्तभाक् हविर्भाक् च वैश्वानरः अयमेव पार्थिवाग्निः

---

१ ग. ज. °रोऽज्ञोऽन्°; च. °रोऽज्ञोऽल्प° न्यो २ क. ख. घ. झ. ट. ठ. ड.° स्ते पार्थिवाग्निं भजन्ते वै°. ३ क ख. ग. घ. झ. ट ठ. ड. °नग्निर्वैश्वा°; ट. °स्त्वनाग्नि° स्त्वयमग्निरिति विपरु एव पाठः. ४ क. ख. ग. ज. घ. झ. ट. ठ. ड. °नग्निर्वैश्वा°; च. °नाग्निर्वैश्वा° वे. ५ क. ख. एवमेत, ग. ज. एतदेव. ६ ग. ज. यस्य. ७ ग. ज. ठ. ड °ध्यम वो°; च. °ध्यम वो° मो ८ च. नग्निर्वैश्वा° वे. ९ क. ख. घ. झ. ठ. ड. °नरत्वेऽपि सति हो°, ट. °नरत्वेऽपि सति हो° रो. १० ग. ठ. ड. °नाग्निर्वैश्वा°. ११ ग. ज वाय°. १२ क. ख. घ. झ. ट. ठ. ड. °रग्नेर्वैश्वा°. १३ क. ख. घ झ. ट ठ. ड. °शवता अग्नेर्वैश्वा°; च. °शवतो वैश्वा° ता अग्ने-र्वै°. १४ क. ख. घ. झ. ट ठ. ड °क्षेण स्वेनाव्यभि°; च. °क्षणाव्य° ण स्वेना.

रिष्यन्ते । तस्माद्विशेषहेतुबाहुल्यादयमेव पार्थिवः सूक्तभाग्घविर्भाक् च[1] । 'निपातमेवैते उत्तरे ज्योतिषी' वैश्वानर इति 'एतेन नामधेयेन भजेते भजेते' इति । द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः[2] ।

इतरयोर्ज्योतिषोः वैश्वानर इत्यभिधानं गौणम्

तदेवमेतस्मिन्वैश्वानरपदविचारप्रसङ्गेन हविष्पान्तीयं सूक्तमुपक्षिप्य सूर्यो वैश्वानरोऽग्निर्वैश्वानर इत्येकमेवेदं ज्योतिस्त्रिधा वर्तत इति मन्त्रस्वभावोपप्रदर्शनार्थमुपवर्णितम् । ईदृशेषु शब्दार्थन्यायसंकटेषु मन्त्रार्थघटनेषु दुरवबोधेषु मतिमतां मतयो न प्रतिहन्यन्ते । वयं त्वेतावदत्रावबुद्ध्यामह इति ॥ ३१[4] ॥

इति ऋज्वर्थायां निरुक्तवृत्तौ
जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ
द्वादशोऽध्यायः समाप्तः[5] ।

---

× अथातो दैवतमिन्द्रादिव पराक्षकृतास्तद्येतिस्रोऽथाकारचिन्तनमपुरुषविधं तत्तिस्र एव देवता इत्युक्तं पूर्वांत्वाथैतानन्द्रिभक्तीन्यथैतान्यादित्यभक्तीनि मन्त्रो मननाज्जगती गततममथातोऽनुक्रमिष्याभोऽग्निमीळेऽग्निः पूर्वेभिरग्निमेवन्तेन्द्रमित्रं जातवेदाः कस्मात्प्रनूनं जातवेदसं वैश्वानरः कस्माद्वैश्वानरस्य प्रनूनमहित्वं कृष्णं नियानं हविष्पान्तमपामुपस्थे मूर्धा भुवस्तोमेनेदियदेदेनं यत्रावदेते यावन्मात्रमेकत्रिंशत् ॥

इति निरुक्ते उत्तरषट्के प्रथमोऽध्यायः ।

---

१ क. ख. घ. झ. ट ड ड. पार्थिवोऽग्निर्वैश्वानरः सू°, च पार्थिवः सू° अग्निर्वैश्वानरः. २ क. ख. घ. झ. ट. ठ. ड. 'सङ्ग ह°. ३ क. ख. घ. झ ट. ठ ड मन्त्रस्य भा°. ४ क. ख. ९ (३१), ग. ४४, च. वर्जमितरेष्वङ्को नास्ति. ५ म. इति द्वादशाध्यायस्य सप्तम पादः । इति ऋ°, च. ज. द्वादशोऽध्यायः समाप्तः । इति ऋ°, ठ. ड. इति श्री जम्बू°. ६ ठ ड 'कृतौ ऋज्वर्थाया निरुक्तटीकाया निघण्ट (ड निघण्ट) पञ्चाध्यायेन सह द्वादशेऽध्याये आदितः सप्तमे उत्तरषट्कस्य प्रथमाध्याये एकत्रिंशत्तम. खण्ड. । ३१ । (ड. 'द्वादशाध्यायोत्तरषट्के प्रथमाध्यायः समाप्त.) ७ ग. 'ध्याय. । खण्ड ४४ । पाद ७ । मन्त्र ६५ । श्लोकसंख्या १५०० × छ त. द. अथात इत्यादि न वर्तते ८ छ निरुक्ते सप्तमोऽध्यायः, त इति सप्तमोऽध्याय. समाप्तः, द इति सप्तमोऽध्यायः संपूर्णः; ठ. इति निरुक्तोत्तरषट्के प्रथमोऽध्याय. समाप्त.

## अथाष्टमाध्यायस्य

### प्रथमः पादः ।

द्रविणोदाः कस्माद्धनं द्रविणमुच्यते यदेनदभिद्रवन्ति बलं वा द्रविणं यदेनेनाभिद्रवन्ति तस्य दाता द्रविणोदास्तस्यैषा भवति ॥ १ ॥

'द्रविणोदाः' (निघ० ५ । २ । १) इत्येतद्देवताऽऽदं निर्वाच्यम् । तदर्थमुपोद्घातः 'द्रविणोदाः कस्मात्' इति । तत्र पूर्वपदमेव तावत्प्रथमं विगृह्य निराह । 'धनं द्रविणमुच्यते' इति । तत्कस्मात् । 'यदेनदभिद्रवन्ति' । कर्मकारकम् । यस्मादेतदाभिमुख्येन तदर्थिनोऽवश्य द्रवन्ति । 'बलं वा द्रविणम्' । करणकारके । 'यदेनेनाभिद्रवन्ति' । यस्मादनेन संयुक्ताः सन्तः परानभिद्रवन्ति । 'तस्य' धनस्य बलस्य वा 'दाता' यो भवति स द्रविणोदाः । 'तस्य' प्राधान्यस्तुतियुक्ता 'एषा' ऋक् 'भवति' यां दृष्ट्वा देवतापदसमाम्नाये[2] समाम्नातः[3] ॥१॥

द्रविणं धन बल वा तस्य दाता

द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे । यज्ञेषु देवमीळते ( ऋ० सं० १ । १५ । ७ ) ॥ द्रविणोदा यस्त्वं द्रविणस इति द्रविणसादिन इति वा द्रविणसानिन इति वा द्रविणसस्तस्मात्पिबत्विति वा । यज्ञेषु देवमीळते । याचन्ति स्तुवन्ति वर्धयन्ति पूजयन्तीति वा तत्को द्रविणोदा इन्द्र इति क्रौष्टुकिः स बलधनयोर्दातृतमस्तस्य च सर्वा बलकृतिरोजसो जातमुतमन्य एनमिति चाहाथाप्यग्निं द्रविणोदसमाहैष पुनरेतस्माज्जायते । यो अश्मनोरन्तरग्निं जजानेत्यपि निगमो भवत्यथाप्यृतुयाजेषु द्राविणोदसाः प्रवादा भवन्ति तेषां पुनः पात्रस्येन्द्रपानमिति भवत्यथाप्येनं सोमपानेन स्तौत्यथाप्याह द्रविणोदाः पिबतु द्राविणोदस इत्य-

१ क ख. छ 'देनमभि°, त. देनमभि° द. २ क. ख. घ. झ ट. ठ ड. 'म्नाये एष स°; च. 'म्नाये स° एष. ३ ठ. ड १ । इति निरुक्तटीकायामुत्तरषट्के द्वितीयाध्याये प्रथमः खण्डः. ४ क. ख. छ त द. °मीलते. ५ क. ख. छत. द. इति । २ 'अय'.

यमेवाग्निर्द्रविणोदा इति शाकपूणिराग्नेयेष्वेव हि सूक्तेषु द्राविणो-
दसाः प्रवादा भवन्ति । देवा अग्निं धारयन्द्रविणोदामित्यपि
निगमो भवति यथो एतत्स बलधनयोर्दातृतम इति सर्वासु देव-
तास्वैश्वर्यं विद्यते यथो एतदोजसो जातमुतमन्य एनमिति चाह-
त्ययमप्यग्निरोजसा बलेन मथ्यमानो जायते तस्मादेनमाह सह-
सस्पुत्रं सहसः सूनुं सहसो यहुं यथो एतदग्निं द्राविणोदसमाह-
त्यृत्विजोऽत्र द्रविणोदस उच्यन्ते हविषो दातारस्ते चैनं जन-
यन्ति । ऋषीणां पुत्रो अधिराज एष इत्यपि निगमो भवति
यथो एतत्तेषां पुनः पात्रस्येन्द्रपानमिति भवतीति भक्तिमात्रं
तद्भवति यथा वायव्यानीति सर्वेषां सोमपात्राणां यथो एतत्सो-
मपानेनैनं स्तौतीत्यस्मिन्नप्येतदुपपद्यते । सोमं पिब मन्दसानो
गणश्रिभिरिति[1] यथो एतद् द्रविणोदाः पिबतु द्राविणोदस इत्यस्यैव[2]
तद्भवति ॥ २ ॥

---

'द्रविणोदा द्रविणसः' इति[3] । मेधातिथेरार्षम् । 'द्रविणोदाः' इत्येतस्य प्रथमैकवचनान्तस्य कर्तृत्वेन श्रुतस्य क्रियापदेन बहुवचनान्तेन 'ईळते'[4] इत्यनेन वचनभेदादसामर्थ्यमपेक्ष्य स्तोतृत्वे चासंभवं द्रविणोदसो देवतात्वात्स्तुत्यत्वेन सामर्थ्यमुन्नीय द्रविणोदसो यद्वृत्तमध्याहृत्य द्रविणोदस्यर्थपदार्थाभिसंबन्धात्स्तुतेरकृतवाक्यतायां सामर्थ्यमुन्निनीषन्स्तुत्ये द्रविणोदसि द्रविणोदःशब्दं कर्मत्वेन नमयाचकार 'द्रविणोदा यो' देवस्तं द्रविणोदसमिति । इदानीं 'द्रविणसः' इत्यस्य 'ग्रावहस्तासः' इत्यनेन ऋत्विग्विषयेणासंदिग्धेन प्रथमाबहुवचनेन स्तुतिकर्तृत्वेन विशेषणविशेष्यभावेन सामानाधिकरण्यं सामर्थ्यमुन्नीय तयार्थोपपत्तिसामर्थ्यादेकवाक्यतयाभिसंबध्नाति । यं द्रविणोदसं देवम् अध्वरे यज्ञे अग्निष्टोमादौ यज्ञेषु यजतिषु हविःसंप्रदानेषु सवनेषु वा यागस्थानेषु द्रविणस ऋत्विजः । ते हि द्रविणं लप्स्यामह इति सीदन्ति कर्मणि । अथवा ।

'द्रविणोदाः' इत्यस्य 'ईळते' इत्यनेनान्वयाभावात् 'यः' शब्दोऽध्याहार्यः

'द्रविणसः' इत्यस्य 'ग्रावहस्तासः' इत्यनेनान्वयः.

---

१ क. ख. ङ. थ. ध. ठ. ढ. रित्यपि निगमो भवति यथो°. २ क. ख. छ. त. द. ३. ३ ग. इति मे°. ४ क. ख. ग. ज. झ. ईळते, च. इडते. ५ च. द्रविणसो. ६ ग. ज. 'द्रविणोदा यो देवस्त' नास्ति ७ ग. ज. °हस्ताइ°. ८ ग. ज. यज्ञियेषु सवनेषु द्रविणस ऋ°.

'द्रविणसानिनो' धनस्य गवादेर्हविषो वा देवतार्थस्य संभक्तारः। ग्रावहस्तासः इत्यभिषवाभिप्रायम्। यमेते द्रविणसो ग्रावहस्तास ऋत्विजोऽध्वरेषु यज्ञेषु द्रविणोदस देवम् ईळते 'याचन्ति स्तुवन्ति वर्धयन्ति पूजयन्तीति वा' स द्रविणोदा देवोऽस्मभ्यं द्रविणानि ददात्वित्येतदाशास्महे। आशिषमध्याहृत्य समाप्यते यमीडते स इति यत्तदोः परस्परापेक्षत्वात्। अथवा। एवमन्यथा निराकाङ्क्षतया परिसमाप्यते 'द्रविणमस्तस्मात्पिबत्विति'।

अथवा 'द्रविण.' पात्रं तस्मात्पिबतु इत्यन्वयः

द्रविणोदा इत्यतः प्रथमैकवचनादविपरिणतादेव द्रविणस इत्यस्य पञ्चम्येकवचनत्वेन सोमाभिधाने सामर्थ्यमुन्नीय पिबत्वित्याख्यातमध्याहृत्यात्रैव समापयाचकार भाष्यकार एवमप्यस्ति सामर्थ्यमित्युपप्रदर्शनार्थम्। तत्कथमिति। यं देवं द्रविणोदसमध्वरेषु यज्ञेषु यजतिषु ग्रावहस्ता ऋत्विज ईळते स देवः द्रविणोदाः द्रविणसोऽस्मात्सोमाद् द्राविणैसभक्तुरादाय स्वमंश पिबत्वित्येतदाशास्महे।

'तत्को द्रविणोदाः' इत्येवमादिविचारः। तत्र तावत् 'इन्द्र इति क्रौष्टुकिः' एवमाचार्यो मन्यते। केन हेतुना। 'स बलधनयोः' अतिशयेन दाति। 'तस्य च सर्वा बलकृतिः'। अभिधानविग्रहे हि बलं द्रविणमित्युक्तम्। बलकृतिश्चेन्द्रस्य सर्वा। तस्मादिन्द्रः। 'ओजसो जातमुत मन्य एनमिति चाह' मन्त्रदृक्। अभिपतित्वकृत एवास्य बलेनाभिसम्बन्धः। तस्म युक्तं यत्तस्य दाता स्यात्। कथमिति। यतो मन्त्र एव निर्वर्ण्यते।

को द्रविणोदाः

इन्द्रो यस्मात्स बलस्य दाता द्रविणं च बल

'अश्वादियायेति यद्वदन्त्योजसो जातमुत मन्य एनम्। मन्योरियाय हर्म्येषु तस्थौ यतः प्रजज्ञ इन्द्रो अस्य वेद॑' (ऋ० सं० १०। ७३। १०)॥ यद्वदन्ति यदा वदन्ति अशनवतो मेघात् अयम् इन्द्रः आगच्छतीति तत्र संनिधानमस्य प्रतीत्य। तत्तावदह न तथा मन्ये। कथं तर्हि ओजसो जातं बलराशेः कुतश्चिदतिमहतो जातम् अहम् एनं मन्ये यथायमतिबलवान् लक्ष्यते। अपि वा। मन्योः

इन्द्रो बलाज्जातस्तेनास्य बलेन सबन्धः

१ क. ख. ईडते, ग. च. घ झ. ईलते. २ घ. झ. ट. °हस्तास ऋ°; च. °हस्ताऽऋ° स. ३ ग. ज. द्रविणं सं°. ४ ग. वेद्वे। य°. ५ व. झ. ट. ठ. ड. तथा न.

क्रोधात् दीप्तिर्वा अयम् इयाय यतो हर्म्येषु उदकाहरणाधिकारयुक्तेषु मेघवधकर्मसु तस्थौ तिष्ठति । अथवा किं जानीमः कुतोऽप्ययमैश्वर्याज्जात इति । यतो ब्रूमः । यतः अयम् इन्द्रः प्रजज्ञे इन्द्र एव अस्य स्वजन्मनस्तत्त्वं वेद । न कोऽप्यन्यो ज्ञास्यतीत्यभिप्रायः ।

५ 'अथापि' अयमपरो हेतुरिन्द्रस्य द्रविणोदस्त्वे । 'अग्निं द्राविणोदसमाह' मन्त्रदृक् । स मन्त्रो मृग्यः । केचित्तु 'द्रविणोदाः पिबतु द्राविणोदस.' (ऋ० सं० २ । ३७ । ४) इत्येतमत्र मन्यन्ते । यस्यापत्य द्राविणोदसोऽग्निः स द्रविणोदा इति । कस्य च पुनरयमग्निः पत्यमिति । अत आह । 'एष पुनः' अग्निः 'एतस्माज्जायते' इन्द्रात् । कुत एतत् । ऐन्द्रे हि निगमे श्रूयते 'यो अश्मनोरन्तरग्निं जजान' इति ।

अग्निर्द्राविणोदस उच्यते इन्द्राच्चाग्निर्जातस्तस्मादिन्द्रो द्रविणोदाः

१०

'यो हत्वाहिमरिणात्सप्त सिन्धून्यो गा उदाजदपधा बलस्य । यो

१५ अश्मनोरन्तरग्निं जजान संवृक्समत्सु स जनास इन्द्रः' (ऋ० सं० २ । १२ । ३) ॥ तृतीयेऽहनि दशरात्रस्य निष्केवल्ये विनियोग (आश्व० श्रौ० ७ । ७)। गृत्समदो ब्रवीति ऐन्द्रं रूपमास्थितोऽसुरैर्हन्यमानः । किं मा हथ नाहमिन्द्र

इन्द्रोऽग्निं जनयामास

२० इति । कस्तर्हीन्द्र. । यो हत्वा अहिं मेघम् अरिणात्सप्त सिन्धून् स्यन्दना आकाशनदीः 'एला च इला च' इत्येवमाद्याः यश्च । गा. अपः उदाजत्

१ घ. झ. ठ. ड. हर्म्येषु तस्थौ तिष्ठति उद°; ट. हर्म्येषु तस्थौ तिष्ठति उद°. २ घ. झ. ठ ड °र्मसु । अथ°, ट. °र्मसु । अथ° तस्थौ तिष्ठति. ३ ग. ज. °इति ब्रूमः । यतो°. ४ क. ख. घ. झ. ट. ठ. ड. °ज्ञे इति । इ°; च. °ज्ञे । एव° इति इन्द्र. ५ ग. ज. °वेद् कोऽन्यो ज्ञा°; च. °वेद् न कोऽन्यो ज्ञा° प्ये. ६ क ख. घ. झ. ट. ठ. ड. स एव द्र°. ७ क. ख. घ. झ. ट. ठ. ड. °रयमग्निरप°. ८ ग. °त्वाहि तु°, घ. झ. ट. °त्वाहिमरि इन्द्रः । तु. ९ ग. °नदीरम्बा च दुला च°; ट. ठ. ड.°नदीः एळा च इळा च°; च. ट. अत्र बहुला

२१ पाठान्तरं. १० ग. ज. उदासत्; च. उदाजयत्

उदगमयत् अपधा अपधानेन उद्घाटनेन वेलस्य मेघस्य शिराणां छिद्राणाम् । यश्च अश्मनोः अशनवत्योः द्यावापृथिव्योः अन्तः मध्ये अग्निं जजान जनयति । यश्च समत्सु संग्रामेषु शत्रूणां संवृक् संछेत्ता । हे असुरजनाः स इन्द्रो नाहमिन्द्र इति ।

'अथापि' अयमपरो हेतुरैन्द्रस्य द्रविणोदस्त्वे । कतम इति । 'ऋतुयाजेषु द्राविणोदसाः प्रवादा भवन्ति'। ऋतवो यैर्मन्त्रैरिज्यन्ते ते भवन्त्यृतुयाजाः । तेषु ऋतुयाजेषु द्राविणोदसा द्रविणोदःशब्दयुक्ताः प्रवादा भवन्ति[2] । तद्यथा 'अपाद्धोत्रा[3]दुत पोत्रादमत्तोत नेष्ट्रादजुषत प्रयो हितम् । तुरीयं पात्रममृक्तममर्त्यं द्रविणोदाः पिबतु द्राविणोदसः' ( ऋ० सं० २ । ३७ । ४ )॥ तथा[5] । 'होता यक्षद्देवं द्रविणोदामपाद्धोत्रादपात्पोत्रादपान्नेष्ट्रात्तुरीयं पात्रममृक्तममर्त्यमिन्द्रपानं देवो द्रविणोदा द्राविणोदसः स्वयमायुयाःस्वयमभिगूर्यास्स्वयमभिगूर्तया होत्रय ऋतुभिः सोमस्य पिबत्वच्छावाक यज'( प्रैषः ५१ ) इति । 'होता यक्षद्देवं द्रविणोदाम्' इत्यच्छावाकस्य संप्रैषः । मैत्रावरुणो ब्रवीति अध्वर्युणा 'ऋतुभिः प्रेष्य' इति प्रेषितः । होता यक्षत् यजतु । कथमिति । देवं द्रविणोदसम् । स च पुनर्द्रविणोदा देवः पूर्वम् अपात् पीतवान् सोमम् । अपाद्धोत्रात् संप्रदानात् । अपाच्च पोत्रात्संप्रदानात् । अपाच्च

ऋतुयाजेषु द्रविणोदाः सोमं पिबति पात्रं चेन्द्रपानमिति प्रैषे उच्यते तस्मादिन्द्रो द्रविणोदाः

१ क. ख. ग. च. ज. झ. ट. वलस्य. २ क. ख. ग. ज. घ. झ ट. ठ. ड. °भवन्ति । ततः किम् । तेषामृतुयाजानां यत्पात्रं येन ते हूयन्ते तस्येन्द्रपानमिति समाख्या भवति । तद्यथा°; च. 'भवन्ति । ˇ तद्यथा° ततः किम् । तथा॰ समाख्या भवति. ३ ग °द्धोत्रात् । होता°; घ. झ. ट °द्धोत्रादुत॰ दसः, च °द्धोत्रात् । अपाद्धोत्रा°. ४ क. ख च. द्रवि°. ५ ग. ज. तथा । होता यक्ष-त्यादि यजेत्यन्त न विद्यत, च. पुस्तके पत्रस्याधस्तनभागे पठ्यत. ६ क ख. द्रविणोदसमपा°; झ द्रविणोदसमपा°. ७ क. ख. °णोदा द्रविणसः स्वय°, घ झ. ट. °णोदाद् द्रावि°. ८ च. द्रविणोदस° द्रा. ९ क. ख. घ. झ. ट. ठ. ड. 'अपात्' नास्ति, च. अपोत्

नेष्ट्रात्संप्रदानात् । अथ पुनरिदं तुरीयं चतुर्थं संप्रदानम् अमृक्तम् अशुं॰ द्रम् । अपूर्णमित्यर्थः । अमर्त्यं यत्पीत्वा न म्रियते । अथवा । अमनुष्ययो॰ ग्यम् । अमृक्तं चानुपमृदितमन्यया देवतया अपरिभुक्तम् । इन्द्रपानम् इन्द्रस्य पातु योग्यम् । तदेतत् द्रविणोदाः देवः इन्द्रः अस्माभिः प्रत्तमादरेण
५ स्वयमायुयात् स्वयमाभिश्र्यात् स्वयमभिगूर्यात् स्वयमभ्युद्यच्छेत् । ततः पिबतु ऋतुना कालेन सह सोमस्य अभिगूर्तया अभिमतया होत्रया स्तुत्या प्रदीयमानं स्वमग्रम् । हे अच्छावाक त्वमप्येनदेवं ज्ञात्वा यज ।

एवमनस्मिन्निन्द्रस्य द्रविणोदःप्रवादवति प्रैषे पात्रस्य इन्द्रपानम् इति समाख्या । तस्मादिन्द्रस्तेन पिबतीति गम्यते । एवं चेत्प्राप्तमिन्द्रो द्रविणोदा
१० इति ।

अथापि अयमपरो हेतुरिन्द्रस्य द्रविणोदस्त्वे । यस्मात् ' एनं सोमपानेन स्तौति ' ऋतुयाजेष्वेव । ' होत्रात्सोमं द्रविणोदः पिब ऋतुभि ' ( ऋ० सं० २ । ३७ । १ ) इति । न ह्यन्य इन्द्रात्सोमपानेन स्तूयते तदर्थत्वात्सोम॰ संस्कारस्य । भवति हि सोमाप्यायने तत्संस्कारप्र॰ धानो मन्त्रः । तद्यथा । अंशुरंशुष्टे देव सोमा॰ प्यायतामिन्द्रायैकधनविदे ( मैत्रा० सं० १ । २ । ७ ॥ ३ । ८ । २ )

इन्द्र एव सोमपानेन स्तूयते यस्मात् इन्द्रायैव सोमः संस्क्रियते
१५

१ घ. झ. ट. ठ. ड. °नात् । उतापि पोत्रात्संप्रदानायदमत्त इन्द्रवान् । उतापि नेष्ट्रात्संप्रदानादजुषत प्रीतवान् । एवमेनदजुषताशीयत प्रयोऽन्नं हितं । आत्मनो हित
२० पथ्यमन्नम् । अथ° ( च. पुस्तके इदं सर्वं पत्रस्योपरितनभागे लिख्यते । °प्रयो हितमात्मनो हितं पथ्य । अथ° एव च पाठो वर्तते ।, ट. पुस्तके इदं सर्वं — — ईदृशोश्चिह्नैरपमृज्यते. २ घ. झ. ट ड. °शुद्र दे॰भ्य. अदत्त दशापवित्रेणामृष्ट वा । अपू°; च. °शुद्धं॰ अपू° देवेभ्य. अदत्त दशापवित्रेणामृष्टं वा. ३ ग. ज. ' इन्द्रपान ' नास्ति. ४ क. ख. घ. झ. ट ठ ड. °मामिश्रीयात्, ग. ज.
२५ °मासिष्यात्, च. °मामिश्र्यात्° श्रीया. ५ क. ख. घ झ. ठ. ठ. ड तत स्वय पि°; च. ततः॰ पि° स्वय. ६ ग. च. ज. स्मिन्प्रैषे इन्द्र°. ७ ग. ज. °देवं, च. °देव° नं. ८ ग. ज °स्वेव । सोममिन्द्रो देवः पिबतु ऋतुभिरिति, च; होत्रात्सोमं- मिन्द्रो देवः (म द्रविणोदाः) पिबतु ऋ . ट होत्रात्सोमं इन्द्रो देवः ( द्रविणोदाः ); घ. ट. ड. होत्रात्सोममिन्द्रो देवः पिबतु ऋतु°. ९ ग. ज. श्रूयते. १० क ख. घ.
३० झ. ट. ठ ड. °येन च तत्स°, च °येन॰ तत्स° च

इति । तस्माद्यत्र यत्र सोमपानस्तुतिस्तत्र तत्रेन्द्र इति स्पष्टो न्यायः । प्रसिद्धतरं ह्येतत् । यदर्थमिव हविः संस्क्रियते तस्मा एव प्रदीयते ।

'अथाप्याह द्रविणोदाः पिबतु द्राविणोदसः इति' । यस्य द्रविणोदसोऽग्निरपत्यं स द्रविणोदाः इन्द्रः पिबत्विति । अपाद्धोत्रात् इति[1] तस्यैवा[2]च्छावाकप्रैषस्यैषा याज्या । अमत्त इष्टवान् । उत अपि । अजुषत अप्रीयत । प्रयः अन्नम् आत्मने हितं पथ्यम् । शेषस्तेनैव व्याख्यातः । समाप्ता पूर्वपक्षहेतवः क्रौष्टुक्यभिमताः[3] ।

यस्मात् अग्निः द्राविणोदसः तस्मात् इन्द्रः द्रविणोदाः

५

किमस्तु एतैर्हेतुभिरिन्द्रो द्रविणोदा इति । नेत्युच्यते[4] । 'अयमेवाग्निर्द्रविणोदाः इति शाकपूणिः' मन्यते । अयमेव यस्य पृथिवीस्थाने समाम्नानम् । अपि च यदि मध्यमोऽभविष्यत्ततो यान्येतानि माध्यमिकानि ऐन्द्राणि वा पार्जन्यानि वा बार्हस्पत्यानि वा तेषु द्राविणोदसाः प्रवादा अभविष्यन्मध्यमस्य कर्मणा चैनं रसानुप्रदानादिनास्तोष्यन् । न चैतदुभयमस्ति । किं तर्हि । 'आग्नेयेष्वेव हि सूक्तेषु द्राविणोदसाः प्रवादा भवन्ति' । 'हि' शब्दो हेत्वर्थः । यस्मादाग्नेयेष्वेव सूक्तेषु द्राविणोदसाः प्रवादा विशेषणत्वेनाग्नेरेव भवन्ति । अग्निकर्मणा चैनं सूक्तेषु स्तौति नेन्द्रेण कर्मणा । तस्मादयमेवाग्निर्द्रविणोदाः । कथमिति । यत उपप्रदर्शयति । '[5]देवा अग्निं धारयन्द्रविणोदामित्यपि निगमो भवति' । [6]अप्ययमन्ये बहव इत्यपिशब्दः । 'स प्रत्नथा[7] सहसा जायमानः सद्यः काव्यानि बळधत्त[8] विश्वा । आपश्च मित्रं धिषणा च साधन्देवा अग्निं धारयन्द्रविणो-

अयमेवाग्निर्द्रविणोदा इति शाकपूणिः

यस्मात् आग्नेयेष्वेव सूक्तेषु द्रविणोदःशब्दः प्रयुज्यते

१० १५ २०

---

१ ग. इति । तस्ये°; ठ. ड. सर्वा ऋक् पठ्यते. २ च. तस्यैवावेकेक° च्छावा. ३ क. ख. °मताः । २ । किम°. ४ ग. °च्यते । २ । अय°. ५ च. पुस्तके 'देवाः००० शब्दः' पत्रस्याधस्तनभागे लिख्यते. ६ ग. ज. 'अपि' नास्ति. ७ ग. प्रत्नथेति । कुत्स°; घ. झ. ट. ज. प्रत्नथेति । कुत्स°; च. प्रत्नथेति । सहसा° ८ क. ख. बडधत्त; च. बलधत्त.

२५

दाम् ' ( ऋ० म० १ । ९६ । १ ) ॥ कुत्सस्येयमार्षम् । पितृयज्ञे स्विष्टकृत्पुरोनुवाक्या ( मैत्रा० सं० ४ । १० । ६ ) । योऽग्निः अपां मित्रं तदुत्पत्तियोगात् । धिषणायाश्च वाचः साधन् साधयिता

अस्यामृचि अग्निः द्रविणोदाः

५ तदधिदेवतायोगात् । यं च देवाः अग्निं धारयन् धृतवन्तः पूर्वे । द्रविणोदा द्रविणानां हविषां देवेभ्यो दातारं वोढारम् । सोऽग्निः प्रत्नथा । ' था ' इत्युपमाने ( निरु० ३ । १६ )। पुराण इव । सहसा बलेन जायमानो जन्यमानः सद्यो जातमात्रः सन् काव्यानि पितृदेवतानि हवींषि बेळवत्त। ' वेट् ' इति सत्यस्य नाम । यथा अवितथेन न्यायेन धारयितव्यानि

१० दातव्यानि वा पितृभ्यस्तथैव सद्यो जातोऽपि धारयति ददाति वा विश्वा विश्वानि सर्वाणि । एवमेतस्मिन्नधिकारे यं धर्त्तं धृतवन्तो देवाः सोऽस्माकमिदं नाम करोत्वित्याशिषैकवाक्यता । अयमेवाग्निर्द्रविणोदा इति स्थितः पक्षः । स पुनरयं परपक्षहेतुष्वनिराकृतेषु अनवस्थित एव । यतस्तन्निराकरणाय ' यथो एतत् ' इत्येवमादुच्यते ।

१५ यत्पुनरेतदुक्तं ' स बलधनयोर्दातृतमः ' इति अकारणमेतदिन्द्रस्य द्रविणोदस्त्वे । कस्मात् । यस्मात् ' सर्वासु देवतास्वैश्वर्यं विद्यते ' । ता ऐश्वर्यात् सर्वा एव बलधनयोर्दात्र्यो भवन्ति । तस्मादवैशेषिकमेतदिन्द्रस्य कारणं द्रविणोदस्त्वे ।

ऐश्वर्यात् सर्वा एव देवता बलधनयोर्दात्र्यो न केवल इन्द्रः

२० ' यथो एतदोजसो जातमिति ' । यदप्युक्तं बलकृतिमधिकृत्य ' ओजसो जातमुत जातम् उत मन्ये मन्य एनमिति ' तदप्यवैशेषिकमिन्द्रस्य । कस्मात् । यस्मात् ' अयमप्यग्निरोजसा बलेन मथ्यमानो जायते तस्मादेनम् ' अग्निम् ' आह ' मन्त्रदृक् । किमाह । ' सहसस्पुत्रं सहसः सूनुं सहसो

अग्निरपि ओजसा मथ्यमानो जायते

२५ यहुम् ' । ऊर्जः नपदित्यादिरित्येवमादयः शेषाः ।

---

१ क. ख. ग. झ. ट. ठ. ड. धिषणा धिष°; च. धिषणा या° धिषणा. २ क. ख. बडधत्त; ग. ज. ब. झ. बलधत्त. ३ ग. ज. बल. ४ क. ख. ग. झ. ट. ठ. ड. सत्यनाम. ५ क. ख. घ. झ. ट. ट. ड. दापयितव्यानि, च. दातव्यानि पयि. ६ क. ख. ग. झ. ट. ठ. ड. °यति वा द°; च. °यति द° वा. ७ ग. झ. ट. ठ. ड. यं धारयन् धृ°; च. धैर्तं धारयन्. ८ क ख. एवमयमे°, ग. ज. एवमग्नि- मयमग्निर्द्र°. ९ ठ. ड. °जातमुतमन्य एनमिति चाहेति । यद्°.

'द्रुन्नः सर्पिरासुतिः[1] प्रत्नो होता वरेण्यः । सहसस्पुत्रो अद्भुतः '

अग्निः सहसः पुत्र इत्युच्यते

(ऋ० सं० २ । ७ । ६ ) ॥ गृत्समदस्यार्षम्[2] । अग्नौ विनियोगः समिदाधाने ( मैत्रा. सं० २ । ७ । ७ ॥ ३ । १ । ९ ) । द्रु अन्नः द्रुन्नः द्रुमान्नः । सर्पिरासुतिः च सर्पिः आसवो यस्य । सर्पिर्वोदकमासूते य आहुतिद्वारेण । प्रत्नश्च पुराणो होता वरेण्यो वरणीयः सहसश्च[3] बलस्य[4] यः पुत्रः अद्भुतो महान् चित्रो वा । स इदमस्माकं करोत्वित्याशीर्गतमाख्यातमध्याहृत्य समाप्यते ।

'त्वं ह यद्यविष्ठ्य सहसः सूनवाहुत । ऋतावा यज्ञियो भुवः '

सहसः सूनुः

( ऋ० स० ८ । ७५ । ३ ) ॥ विरूपस्यार्षम् । सामिधेनीष्वाग्नेयेऽन्वायकामकर्मणि धाय्या । हे यविष्ठ्य युवतम सहसो बलस्य सूनो पुत्र यत् यस्मात् आहुत अभिहुत ऋतावा उदकवान् यज्ञवान् वा यज्ञियः यज्ञसंपादी भुवो भवसि तस्मात्त्वां वयमपि जुहुमः । स त्वमस्माकमप्येवं भवेत्येतदाशास्महे ।

'अग्ने वाजस्य गोमतः[11] ईशानः सहसो यहो । अस्मे धेहि जातवेदो

सहसो यहुः

महि श्रवः ' ( ऋ० सं० १ । ७९ । ४ ) ॥ उष्णिक् । गोतमस्यार्षम्[12] । इष्टकोपधानेऽप्यग्नौ[13] विनियोगः ( मैत्रा० सं० २ । १३ । ८ ) । हे भगवन्नग्ने सहसो यहो बलस्य पुत्र जातवेदः यदेतद् वाजः अन्नं गोमत् गोभिस्तद्वत् तस्य त्वम्[14]

---

१ ग. °रासुतिरिति । गृत्स°, च. ज. घ झ. ट. °रासुतिरिति[6] । गृत्स°. २ क. ख. घ. झ ट. ठ. ड. °र्षम् । गायत्री । आग्नेयी अग्नौ°; च. °र्षम्^ अग्नौ° । गायत्री । आग्नेयी । . ३ क. ख. घ. झ. ठ. ड. 'च' नास्ति. च. च. ४ ट. बळस्य. ५ क. ख.घ. झ. ट. ठ. ड. यः अद्भु°. ६ क. ख घ. झ ट. ट. ड. इदं नामास्माकं; च. इदंमस्मा °दं नामा. ७ म. °विष्टचेति । घोरस्यार्षम्, च. ज. °विष्ठचेति । घोरस्यार्षम्, घ. झ. ट. °विष्ठ्येति । विरू°. ८ क. ख. घ. झ. ट. °र्षम् । आग्नेयी । गायत्री । सा°; च. °र्षम्^ । सा° आग्नेयी । गायत्री । . ९ क. ख. घ. झ. ट. ठ. ड. °नीष्वाग्नेयेऽना°. १० क. ख. घ. झ ठ. ड. याज्या°; ट याज्या । हे° धाय्या. ११ च. ज. घ. झ. ट. °मत इति । उष्णि°; ग. °मत इति । उष्णि°. १२ क. ख. घ. झ. ट. ठ. ड. °र्षम्^ । आग्नेयी । इष्ट°; च. °र्षम् । ^ इष्ट° आग्नेयी । १३ क. ख. घ. झ. ट. ठ. ड. 'अपि' नास्ति १४ च. °द्वत् तस्य त्वमस्य त्वत, ट. ठ. ड. तस्य त्वमस्य^वत.

अस्य ईशानः ईश्वरः । यतो भ्रमः । अस्मे अस्मासु धेहि स्थापय । अनपायि कुरुष्वैतत् महि श्रवः महदेतत् श्रवो गत्रादि इत्येतदाशास्महे ।

'यथो एतत्' यत्पुनरेतदुक्तम् 'अग्निं द्राविणोदसमाहेति' । नेदमनेनाभिप्रायेण इन्द्रात् अयं द्रविणोदसो जायत इति । किं तर्हि । 'ऋत्विजोऽत्र' एतस्मिन् द्राविणोदसेऽग्नेः 'उच्यन्ते' । ते पुनः कस्मात् । 'हविषो दातारः' । देवाना हि हविर्द्रविणम् । तदेते ददत इति द्रविणोदस एते । ततः किम् । 'ते चैनं जनयन्ति' । 'निगमोऽपि' इह 'भवति' ऋत्विजामयमग्निः पुत्र इति । तद्यथा । 'ऋषीणा पुत्रो अधिराज एष इति' । 'अग्नावग्निश्चरति प्रविष्ट ऋषीणा पुत्रो अधिराज एषः । तस्मै विधेम हविषा वयं मा देवाना युयुपाम भागधेयम्' ( मैत्रा० सं० १ । २ । ७ ) ॥ अनेन निर्मथ्योऽग्निरभिहूयते ( मान० श्रौ० १ । ७ । १ । ४७ ) ।

यस्माहत्विजो हविषा दातारस्तस्मात्ते द्रविणोदसः । तेषा पुत्रोऽग्निः

अग्न्यामृषि अग्निः ऋषीणा पुत्र इत्युच्यते

यः एषः अधिराजः अधिकर्दाभिः अग्नौ आहवनीये निर्मथ्यः प्रविष्टः चरति ज्वलन् ऋषीणाम् ऋत्विजा पुत्रः तस्मैचितस्तस्मै विधेम तं परिचरामहे वयम् अनेन आज्येन हविषा । किमिति । मा देवाना युयुपाम भागधेयम् इति । प्राप्तमेतदग्निहोमाख्यं भागधेयं 'स्रुवेणाभिजुहोति' ( मान० श्रौ० १ । ७ । १ । ४७ ) इति शास्त्रतोऽस्याग्नेः । तस्य मा युयुपाम मा लोलुपामेत्यतो विधेम । अथवा । अस्मै अग्नये दद्मः । विधतिर्दानकर्मापि भवति ।

१ क. ख. घ. झ. ट. ठ. ड. इतं ' नास्ति. २ ग. ज. 'दसात्व अग्ने°, च. °दसीत्वग्ने' सर्वत्र. ३ ग. °राज इति, च. राज॰ इति' एष, ज. °राज इति. ४ ग. च. ज. घ. झ. ट. 'विष्ट इति । अने' ( च. पुस्तके सर्वा ऋक् पत्रस्योपरितनभागे ट. पुस्तके अधस्तनभागे लिख्यते ). ५ च. ट. ठ. ड. घृतेन. ६ क. ख. घ. झ. ट. ठ ड. °नीये अग्निर्निर्म', ग. ज. °नीयनिर्म'; च. नीये ॰ नि० अग्निः. ७ क. ख. घ. झ. ट. ठ. ड. °तोऽस्याग्न्याख्यस्य देवस्य मा°; च. °तोऽस्याग्नेर्नस्य॰ग्न्याख्यस्य देवस्य. ८ क. ख. घ. झ. ट. ठ. ड. 'ग्नये हविर्दद्मः, च. 'ग्नये॰दद्मः °हविः.

यत्पुनरेतदुक्तम् ' ऋतुयाजेषु द्राविणोदसाः प्रवादा भवन्ति ' ' तेषां पुनः पात्रस्येन्द्रपानमिति समाख्या भवति ' इति । एतदप्यकारणम् । कस्मात् । यस्मात् ' भक्तिमात्रं भवति तत् ' । गुणतः संवादः । दुर्बला हि समाख्या यतः असामर्थ्यात्कुतश्चित् गुणानुवादः ' यथा वायव्यानीति सर्वेषां सोमपात्राणां ' नानादेवतानामपि सताम् ( तै० सं० ६ । ४ । ७ ॥ मैत्रा० सं० - । ५ । ८ ) । ५

पात्रस्येन्द्रपानमिति समाख्या गौणी

' यथो एतत्सोमपानेनैनं स्तौतीति ' । इदमप्यकारणम् । कस्मात् । यस्मात् ' अस्मिन्नप्येतदुपपद्यते ' सोमपानम् । कथमिति । ' सोमं पिब मन्दसानो गणश्रिभिरिति ' । ' अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः सोमं पिब मन्दसानो गणश्रिभिः । पावकेभिर्विश्वमिन्वेभिरायुभिर्वैश्वानर प्रदिवा केतुना सजूः ' ( ऋ० सं० ५ । ६० । ८ ) ॥ हे भगवन्नग्ने वैश्वानर त्वमेभिः मरुद्भिः मितरोचिभिः अर्चिभिः शुभयद्भिः भवन्तम् ऋक्वभिः रसहर्तृभिः गणशो भवन्तमाश्रयद्भिः पावकेभिः पावयितृभिः विश्वमिन्वेभिः सर्वमिदमागच्छद्भिः यद्वायुम् आयुभिः अयनशीलैः प्रदिवा चिरंतनैः केतुना प्रज्ञया कर्मणा वा सजूः संयुक्तो मन्दसानः मोदमानः सोमं पिबेत्येतदाशास्महे । अर्चिषोऽत्र मरुतः । अन्यथा ह्यनुदाहरणमेवैष मन्त्रोऽग्नेः सोमपाने स्यादितरैर्मरुद्भिः संबन्धात् । ऋत्विजो वा मरुतः । १० १५

अग्नावपि सोमपानमुपपद्यते

'यथो एतद् द्रविणोदाः पिबतु द्राविणोदस इति । अस्यैव तद्भवति' । यत्पुनरेतदुक्तमृतुयाजेषु 'द्रविणोदाः पिबतु द्राविणोदसः' इति अस्य एव अग्नेः तद्भवति अग्नेरपि सोमभागित्वादृतुयाजेषु । भवति हि तेषु 'वनस्पते०० द्रविणोदः पिब ऋतुभिः ' ( ऋ० सं २ । ३७ । ३ ) इति । वनस्पतिशब्दसामानाधिकरण्यात्सोमपानार्थे संबोधने द्रवि- २० २५

ऋतुयाजेषु अग्निरपि सोमभाक्

१ ग. ज. सवादो. २ ग °यद्भिः । हे भग°; च. ज. घ. भ. ट. °यद्भिः । हे भग°. ३ क. ख. घ. झ. ट. ठ. ड. गणश्रिभिः गणशः°; च. °तृभिः गण° गणश्रिभिः. ४ ग. ज. °गच्छन्ति य°; ठ. ड. ' सर्वमिदमागच्छद्भिः ' नास्ति. ५ क. ख. घ. झ. ट. ठ. ड. °रुतः । ऋत्विजो वा मरुतः । अन्य°; च. °रुतो ऋत्विजो वा मरुतः न्य°. ६ क. ख. घ. झ. ट. ठ. ड. ' ऋत्विजो वा मरुतः ' नास्ति; च. °न्धात् । ऋत्विजो वा मरुतः । यथा°.

णोदसो विशेषणविशेष्यभावसामर्थ्यान्नान्यो वनस्पतेर्द्रविणोदाः । वनस्पतिश्च पुनरसंशयमग्निः । ' वहा देवत्रा दिधिषो हवींषि ' ( मैत्रा० सं० ४ । १३ । ७ ॥ काठकसं० १८ । २१ ) इति हविर्वहनकर्मसंयोगात्स्विष्टकृद्विकारश्रुतेश्च वनस्पतेः । तस्मादग्निर्द्रविणोदा नेन्द्रः ।

५ यत्पुनरेतदुक्तमिन्द्रार्थं सोमः संस्क्रियते तस्मादिन्द्र एवं केवलः पाता नान्य इति । नैतदेवम् । सोमो ह्यन्यस्यै देवतायै मीयतेऽन्यस्यै संस्क्रियतेऽन्याभ्यश्च गृह्यते हूयते च । तद्यथा । ' अभि त्यं देवम् ' इति सावित्र्या मीयते (मैत्रा० सं० १ । २ । ५ ॥ ३ । ७ । ४॥ मान० श्रौ० २ । १ । ४ । ३ ) । ' अंशुरंशुष्टे' इतीन्द्राय संस्क्रियते (मैत्रा० सं० १ । २ । ७ ॥ मान० श्रौ० २ । २ । १ । १२ ) । पुनरपि च मीयते ' इन्द्रायाभिमातिघ्ने ' इत्येवमादिना ( मैत्रा० सं० १ । ३ । ३ ॥ ४ । ५ । ४ ॥ मान० श्रौ० २ । ३ । ३ । ४ ) । नाना-

यद्यपि सोम इन्द्रार्थं संस्क्रियते तथापि सोऽन्याभ्यो देवताभ्यो गृह्यते हूयते च

१५ देवताभ्यो गृह्यते च मित्रावरुणाद्याभ्यः ( मैत्रा० सं० १ । ३ । ४—३६ ) । तथा च हूयते । ( मैत्रा० सं० १ । ३ । ४—३६ ) । तदेवं विधिवशाद्विचित्रा सोमतन्त्रगतिः । तत्रैवं सत्यशक्यं वक्तुं यत्र यत्र सोमस्तत्र तत्रेन्द्रः पातेति । संभुङ्क्ते चाग्निरिन्द्रेण सह प्रत्यक्षमैन्द्राग्ने ग्रहे ' इन्द्राग्नी आगतम् ' ( मैत्रा० सं० १ । ३ । १७ ) । इत्यत्र । भवति चान्यर्थमपि पृथग्ग्रहणं यजुषा सोमस्य ' अग्नये त्वा रायस्पोषदाय ' ( मैत्रा० सं० १ । ३ । ३ ॥ ४ । ५ । ४ । ) इति । तस्मादग्निरपि सोमस्य पाता स्यादृचेह ऋतुयाजेषु ॥ २ ॥

ऐन्द्राग्ने ग्रहे अग्निरपि इन्द्रेण सह सोमं संभुङ्क्ते

२१ १ क. ख. घ. ठ. ड. वह, ट वहा ह. २ क. ख. घ. झ. ट. ठ ड. एवाम्य क , च. एव के अस्य. ३ ग. ज. सावित्र्यमिमीते; च. सावित्र्या निमीयते, घ. झ ट ठ. ड. सावित्र्या अत्यष्ट्या मीयते. ४ ग. ज. रपि वाप्यायते, च. पुनरप्यायते पि च मी, घ. झ. चाप्यायते। इन्द्रा°, ट. चाप्यायते° च मी. ५ क. ख. घ. झ. ट ठ. ड °मादिभिः; ग. ज. °मादिना देवताभ्यो°; च. °मादिनाभिः. ६ क. ख.घ. झ. ट. ठ. ड. 'स्पोषाय त्वा'; च. °स्पोषदायेति' षाय त्वा इ. ७ क. ख ३ ( २ ), ग. ३, ठ. ड. २ ( ड. ' २ ' नास्ति) । इति निरुक्तटीकायामुत्तरषट्के द्वितीयाध्याये द्वितीयः खण्डः ; च. वर्जमितरेष्वादर्शेषु नास्ति.

मेद्यन्तु ते वह्नयो येभिरीयसेऽरिषण्यन्वीळयस्वा वनस्पते । आयूया धृष्णो अभिगूर्या त्वं नेष्ट्रात्सोमं द्रविणोदः पिब ऋतुभिः (ऋ० सं० २।३७।३) ॥ मेद्यन्तु ते वह्नयो वोढारो यैर्यास्यरिष्यन् दृढीभवायूय धृष्णो अभिगूर्य त्वं नेष्ट्रीयाद्धिष्ण्याद्धिष्ण्यो धिषण्यो धिषणाभवो धिषणा वाग् धिषेर्दधात्यर्थे धीसादिनीति वा धीसानिनीति वा वनस्पत इत्येनमाहैष हि वनानां पाता वा पालयिता वा वनं वनोतेः पिबर्तुभिः कालैः ॥ ३ ॥

---

'मेद्यन्तु ते वह्नयः' इति । गृत्समदस्यार्षम् । 'ञिमिदा स्नेहने' (धा० ४ । १३)। तस्य लोटि मेद्यन्तु इति । हे भगवन् वनस्पते द्रविणोदः स्निह्यन्तु एते पुष्यन्तु ते तव वह्नयः वोढारः अश्वाः येभिः ईयसे यैर्नित्यं गच्छसि अरिषण्यन् अहिंस्यमानः केनचिदपि । स त्वमेभिरश्वैरागम्यं अस्मद्यज्ञं वीळयस्व दृढमात्मानं कुरुष्व सोममस्मत्प्रत्तं पातुम् । कथं चैनं पिब । आयूय आमिश्रय अङ्गुल्या । स हि पानपानां स्वभावो यदङ्गुल्या मन्थनम् । हे धृष्णो शत्रूणां धर्षयितः अभिगूर्य अभ्युद्यम्य ततो नेष्ट्रीयात् धिष्ण्यात् सोमं नेष्ट्रा वषट्कृतं पिब ऋतुभिः कालैः सहेत्येतद्ब्रूमहे ।

अत्र वनस्पतिः द्रविणोदाः । स ऋतुभिः सोमं पातुमाहूयते

---

१ क. ख. छ. त. द. वीलय°. २ छ. त. द. वोल्हारो. ३ छ. त. द. दृल्हीभव. ४ थ. ध. ठ. ड. पिपर्तुभिः. ५ छ. ४ । प्रथमः पादः; त. ४ । इति प्रथमः पादः; द. ४ । इति नैरुक्ते उत्तरार्धस्य प्रथमाध्यायस्य प्रथमः पादः. ६ ग. °ह्नय इति । गृ°. ७ क. ख. घ. झ. ट. ठ. ड. °र्षम् । जगती । ऋतव्या । त्रि°; च. °र्षम् । ~ त्रि° जगती । ऋतव्या । . ८ क. ख. घ. झ. ट. ठ. ड. इति भवति हे°. ९ क. ख. घ. झ. ट. ठ. ड. °गत्य°; च. गम्यं° त्य. १० क. ख. ग. च. ज. घ. झ. वीलयस्व. ११ क. ख. घ. झ. ट. ठ. ड. आमिश्रय मिश्रीकृत्याङ्गुल्या; च. °यूयामिश्रीगुल्या° य आमिश्रय मिश्रीकृत्या. १२ ज. पिपर्तुभिः.

'धिष्ण्यो धिषण्यः'। 'धिषणा वाक्'। तदर्थमसौ साद्यते। तस्य पश्चा-

धिष्ण्यशब्दस्य व्युत्पत्तिः

दुपविष्टो होता शसति। धिषणा कस्मात्। 'धिषेः' धातोः 'दधात्यर्थे' वर्तमानस्य। सा हि वागर्थं धारयति शब्दार्थयोः संबन्धनित्यत्वात्।

५ अथवा।[1] 'धीसादिनीति वा धीसानिनीति वा'। धीः प्रज्ञा कर्म वा। सा एत-स्यां सीदति सनोति वा। संभजते इयं वा। तयोः सीदति सनोति वा तन्निमित्तत्वात्। एवं धीशब्दात्पूर्वपदं सदेः सनोतेर्वोत्तरपदं धिषणाश-ब्दस्य विकल्पेन। 'वनस्पत इत्येनमाह' द्रविणोदसम्। तस्मादग्निरित्यभि-

वनस्पतिरग्निः। तस्मात् द्रविणोदा अप्यग्निरेव

प्रायः। अथ कथमग्निर्वनस्पतिः। 'एष हि वनानां पाता वा पालयिता वा'। 'हि' शब्दो

१० हेत्वर्थः। यस्मादेष वनानां वृक्षाणामन्तर्गतोऽपि[2] समर्थोऽपि दग्धुं न तानि दहति तस्मात्[3] तेषां

कथमग्निर्वनस्पतिः

पाता रक्षिता पालयिता वेति। केवल धात्व-न्यत्व स एवार्थः। अथ 'वनं' कस्मात्।

१५ 'वनोतेः' संभजनार्थस्य। तद्धि दार्वादिप्रयोजनार्थं सेव्यते। पितृ[4] भिः कालैः सेहति वाक्यशेषः।

एवमयमग्निर्द्रविणोदाः सूक्तभाग्घविर्भाक्च। निपातमेवैतन्मध्यमं

एवं पार्थिवोऽग्निर्द्रवि-णोदाः सक्तभाक् हविर्भाक्च

ज्योतिरेतेन[5] नामधेयेन भजतेति[6]।

२०

एष देवतापदविचारन्याय: सर्वत्र देवतापदविचारार्थे[7] यथासंभवमुपा-देयः प्रज्ञावृद्धये[8] शिष्यस्येति ॥ ३ ॥[9]

---

त्रयोदशाध्यायस्य प्रथमः पादः।[10]

---

१ ख. 'धी' नास्ति. २ क. ख घ. झ. ट ठ. ड. वृक्षादीनामन्त°. ३ क. ख. घ. झ. ट. ठ. ड. °तस्मादयं ते°; च. तस्मात्से° दय. ४ ठ. ड. पितृतुभिः. ५ क ख. घ. झ. ट. ठ. ड. ज्योतिरुत्तमं च ज्योतिरेते°, च. ज्योतिरे° रुत्तम च ज्योति. ६ च. भजेताति° त इति. ७ क. ख. घ. झ. ट. ठ. ड. रार्थाय°. ८ क. ख. घ. झ. ट. ठ. ड. प्रज्ञाविवृ°; च. प्रज्ञाभिवृ°वि. ९ क. ख. ४ (३); ग. ४; च. वर्जमितरेष्वङ्को नास्ति. १० ग. इति त्रयो°; ठ ड. °स्येति। इति त्रयोदशा ध्यायस्य प्रथमः पादः। इति उत्तरषट्के द्वितीय ( ड. इति द्वितीय ) श्चाध्यायस्य तृतीयः

 खण्डः.

**अथात आप्रिय आप्रियः कस्मादाप्नोतेः प्रीणातेर्वाप्रीभिराप्रीणातीति च ब्राह्मणं तासामिध्मः प्रथमागामी भवतीध्मः समिन्धनात्तस्यैषा भवति ॥ ४ ॥**

---

'अथात आप्रियः' । आप्रियः इध्मादीनि ( निरु० ५ । २ ) निर्वक्तव्यानि । तानि पुनरमूनि प्रैषिके आप्रीसूक्ते ( प्रयाजप्रैषाः १–१३ ) पाठक्रमनियमाद्विवक्षितक्रमाणीति देवतापदसमाम्नायेऽपि गृह्यमाणत्वात्पाठक्रमप्रयोजनस्य विवक्षितक्रमाण्येव । तत्रैतद्भवति । इमान्यप्यग्निजातवेदोवैश्वानरप्रभृतीनि किं विवक्षितक्रमाणि उत युगपदभिधानासंभवादर्थत एवां क्रम इति । तत्र विवक्षितक्रमाणीति केचित् । कथमिति । इह तावत्स्थानानि भूर्भुवःस्वरिति पाठानुपूर्व्येण नियतानीति तत्स्थानिनामप्यग्न्यादीनां स एव क्रमो गृह्यते । स गृह्यमाणो न न्याय्य उत्स्रष्टुमिति । अपि च । सति क्रमप्रयोजनेऽग्निः पृथिवीस्थानो यस्मादतस्तं प्रथमं व्याख्यास्याम इति वचनमुपपद्यते । उत्तरत्र च 'तासामिध्मः प्रथमागामी भवति' 'तेषामश्वः प्रथमागामी' ( निरु० ९ । १ ) 'तेषां रथः प्रथमागामी भवति' ( निरु० ९ । ११ ) इति तत्र तत्र प्रथमागामीति वचनं यथाप्रधानमभिधानं पूर्वं समाम्नातमित्यस्य न्यायस्योपप्रदर्शनार्थमिति लक्ष्यते । इतरथा ह्यविवक्षितक्रमेषु प्रथमागामिवचनमकृन्देव यत्किंचित्पदमुपाददीत । तदेतत्पृथिवीस्थाने सर्वत्र क्रमप्रयोजनमुच्यते । पार्थिवस्य ज्योतिषो यथा अग्निशब्देन प्रसिद्धतमः संबन्धो न

आप्रिय इध्मादीनि । तानि विवक्षितक्रमाणि

अग्निजातवेदोवैश्वानरप्रभृतीन्यपि पदानि विवक्षितक्रमाणि

---

१ क. ख. १ (४); छ. ५; त. द. ९. २ ठ. ड. आप्रिय इति. ३ ष. आप्रियं' प्रीषु; ट आप्रिय°. ४ क. ख. घ. झ. ट. ठ. ड. निर्वक्त°. ५ क. ख. घ. झ. ट. ठ. ड. इति हेतुवच°. ६ क. ख. घ. झ. ट. ठ. ड. भवतीति तेषा°. ७ क. ख. घ. झ. ट. ठ. ड. °गामी भवति तेषा. ८ घ. ट. ठ. ड. 'तत्र' सकृदेव. ९ क. ख. घ. झ ट. ठ ड. °गामी भवतीति वच°. १० ग. ज. °दृश्याच्च देव तन्त्र'.

तथा जातवेदःशब्देन यथा जातवेदःशब्देन न तथा वैश्वानरशब्देन यथा वैश्वानरशब्देन न तथा द्रविणोदःशब्देन। तान्येतानि गुणविप्रकर्षात्प्रसिद्धिविप्रकर्षाच्चाग्निशब्दाद्विप्रकृष्यन्ते। इध्मादीना तु व्यवधानेनाग्न्यभिधानत्वमित्यतितरा विप्रकर्षः। अश्वप्रभृतयस्तु स्थानमात्रमग्नेर्भजन्त इति इध्मप्रभृतिभ्योऽपि विप्रकृष्यन्ते। तेषामपि चोदितप्राणवृत्तयोऽश्वः शकुनिर्मण्डूका इति प्रथमम् ( निरु० ५। ३। १–३ )। अनुदितप्राणवृत्तयस्त्वक्षादयस्ते पश्चादाद्वन्द्वेभ्यः ( निरु० ५। ३। ४–२८ )। इत्येवं सर्वत्र क्रमप्रयोजनमुपेक्ष्यम्।

पृथिवीस्थाने सर्वत्र विवक्षित एव क्रमः

शाकपूणिस्तु पृथिवीनामस्य एवोपक्रम्य स्वयमेव सर्वत्र क्रमप्रयोजनमाह। तदुक्तं वार्तिककारेण 'क्रमप्रयोजनं नाम्नां शाकपूण्युपलक्षितम्। प्रकल्पयेदन्यदपि न प्रज्ञामवसादयेत्'॥

इतरयोः स्थानयोरपि क्रमो विवक्षित इति शाकपूणिः

प्रकृतमिदानीमुपवर्ण्यते। इध्मादीना गुणाभिधानसामान्यं किंचिदस्ति यतस्तेनाधिकारवचनम् 'अथात आप्रियः' इति। 'अथ' इति विशेषाधिकारे। 'अतः' इत्यानन्तर्ये। आप्रियो वक्ष्यन्त इति वाक्यशेषः। इह कारणादभिधेयेऽभिधाननियमो नैरुक्तानाम्। तदर्थमुपोद्घात्य 'आप्रियः कस्मादाप्नोतेः प्रीणातेर्वा' इति निराह। आप्रिय ऋचस्तत्संबन्धाद्देवता अपि। तथाहि दर्शयति 'आप्रीभिराप्रीणाति' ( ऐ० ब्रा० ६। ४ )। 'इतीमा आप्रीदेवताः' ( निरु० ८। २१ ) इति। ऋचस्तावद्दाप्नुवन्ति प्रीणन्ति वा देवता इत्याप्रियः। अथ पुनर्देवता आप्यन्ते आप्रीयन्ते वा इत्याप्रियः।

आप्रीशब्दव्युत्पत्तिः

आप्रीशब्देन ऋचो देवताश्चाभिधीयन्ते

'तासामिध्मः प्रथमागामी भवति'। प्रथममागन्तुमस्याप्रीदेवतापदसमाम्नाये शीलमिति प्रथमागामी। कस्मात्। तत्पूर्वत्वादिज्याया अनित्य-

---

१ क. ख. घ. झ. ट ठ ड यथा च वै. २ च. ट. °र्षाच्चाग्नि° द्वा. ३ क, ख. झ. °दितप्रमाणवृ°, ट. 'दितप्रमाण' प्रा. ४ घ. झ. ट. ठ. ड. °धानं सा°. ५ क. ख. घ. झ. ट. इति च. ६ क. ख. ध. झ. ट. ठ. तत्पूर्वकत्वादि°, च. तत्पूर्वत्वाद्विधाया:° ज्या.

त्वाच्च तनूनपान्नराशंसयोरन्यतरस्य । ' तस्य ' इध्मस्य समित्कलापस्य ' एषा ' प्राधान्यस्तुतिः ' भवति ' ॥ ४ ॥[1]

---

**समिद्धो अद्य मनुषो दुरोणे देवो देवान्यजसि जातवेदः । आ च वह मित्रमहश्चिकित्वान्त्वं दूतः कविरसि प्रचेताः ( ऋ० सं० १० । ११० । १ ) ॥ समिद्धोऽद्य[2] मनुष्यस्य मनुष्यस्य गृहे देवो देवान्यजसि जातवेद आ च वह मित्रमहश्चिकित्वांश्चेतनावांस्त्वं दूतः कविरसि प्रचेताः प्रवृद्धचेता यज्ञेध्म इति कात्थक्यो[3]ऽग्निरिति शाकपूणिस्तनूनपादाज्यं[4] भवति नपादित्यननन्तरायाः प्रजाया नामधेयं निर्णततमा भवति गौरत्र तनूरुच्यते तता अस्यां भोगास्तस्याः पयो जायते पयस आज्यं जायतेऽग्निरिति शाकपूणिरापोऽत्र तन्व उच्यन्ते तता अन्तरिक्षे ताभ्य ओषधिवनस्पतयो जायन्त ओषधिवनस्पतिभ्य एष जायते तस्यैषा भवति ॥ ५ ॥[5]**

---

' समिद्धो अद्य मनुषो दुरोणे ' इति[6] । जमदग्नेरार्षम्[7] । सूक्तमेवाहाग्नेयं[8] यास्कः । हे इध्म यस्त्वं समिद्धः संदीप्तः अद्य एतस्मिन् विशिष्टे यजनीयेऽहनि मनुषो मनुष्यस्य[9] मनुष्यस्य समानेऽहनि प्रवृत्तयागानां[10] दुरोणे यज्ञगृहे देवो दाता हविषा हेतुकर्तृत्वेन देवो दीप्तो वा द्योतनो वा देवान् दानादिगुणयुक्तान् एतान् हेतुकर्तृत्वेन यागाङ्गभावमुपगच्छन्[11] यजसि हे जातवेदः । जातवेदस

इध्मोऽग्निवद्वर्ण्यते

---

१ क. ख. १ (४); ग. ५, ठ. ड. 'वति । इति निरुक्तटीकायामुत्तरषट्के द्वितीयाध्याये चतुर्थः खण्डः । ४ । (ट. '४' नास्ति), च. वर्जमितरेष्वङ्को नास्ति. २ क. ख. छ. त. द. 'द्धो अद्य. ३ छ. द काच्छक्यो'; त. कार्च्छक्यो° थ. ४ छ. त. द. ' आज्यं भवति ' नास्ति. ५ क. ख. २ (५) छ. ६; त. द. २. ६ ग. इति''। जम'. ७ क. ख. घ. झ. ट. ठ. ड. °र्षम् । त्रैष्टुभम् । सू°; च. र्षम् ।ˇ सू' त्रैष्टुभं ।. ८ ग. ज. ' आहाग्नेयं यास्कः ' नास्ति; च. मेवं । हे° वोहाग्नयं यास्कः. ९ ग. ज. ' मनुष्यस्य ' सकृदेव; च. मनुष्यस्य ˇ समा° मनुष्यस्य. १० क. ख. घ. झ. ट. ठ. ड. °गाना त्रैवर्णिकाना दु°; च. °गाना ˇ दु° त्रैवर्णिकानां. ११ क. ख. घ. झ. ट. ठ. ड. यागेऽङ्ग', च. यागाङ्ग° गेऽ.

आधार इति तदभिधानेन संबोध्यते। दृष्टा हि मन्त्रस्थेषु क्रोशत्सु तदभिधानप्राप्तिः। अथवा। जातवेदा अपि त्वदृतेऽनभिव्यक्तस्वशक्तिः। त्वदाधारत्वादशक्त एवायं यष्टुम्। तस्माज्जातवेदास्त्वदाधारो यजति यत्तत्त्वमेव यजसीत्युच्यते। अस्माकमप्येतस्मिन्नहनि हे मित्रमहः मित्राणां पूजयितः नित्यमभ्युपेक्षमाण उपकारप्रवृत्तो यजमानानां चिकित्वान् जानानः आ च वह आहूय च देवानाहूय चैतान्यज तथास्मिन्कर्मणि उज्ज्वलन्नभावमुपेहि यथैतस्मिन्कर्मणि हविः प्रतिजिघृक्षन्तोऽनभावमीयुर्देवाः। अपि च। नैतदतिचित्रं यदेवमस्माकमस्मिन्कर्मणि वर्तेथाः। किं कारणम्। यतो ब्रूमः। त्वं दूतः कविरसि प्रचेताः। अग्न्यावेशादग्निवदपेक्ष्योच्यसे। त्वमेव दूतः सर्वयजमानानां त्वत्पूर्वकत्वाद्देवतायागस्य कविः क्रान्तदर्शनः क्रान्तप्रकाशः सर्वत्र प्रचेताः प्रकृष्टप्रज्ञानः। यस्मात्त्वमृत्विग्यजमानानां साफल्ये हेतुस्तस्य तव युक्तमस्माकमाहूय देवान्यष्टुमित्यतो ब्रूमहे आहूय चास्माकं देवान्यज च।

'यज्ञेध्म इति कात्थक्यः'। कैत्थकस्य पुत्रः कात्थक्य आचार्यः।

इध्मो यज्ञेध्म इति कात्थक्यः

स मन्यते। योऽयमिध्म आधीयते प्रतिप्रणवमिध्मो यज्ञ स एवायमिति। नन्वेतस्मिन्मन्त्रे न तस्य लिङ्गमस्ति। सत्य नास्ति साक्षात्। प्रैषे तु 'समिद्भ्यः प्रेष्या' ( मान० श्रौ० १।८।३।१७ ) इति श्रूयते। युक्तं च यदर्थमेव प्रेष्यते स एवेज्यते। तस्मात्समिधामेवेध्मभा-

१ ग. ज. 'व्यक्तस्य शक्तिः; च° व्यक्तस्य शक्तिः° स्व. २ ग. ज. °रत्वात् शक्ति अशक्त°. ३ क. ख. घ. झ. ट ठ. ड. नित्यमभ्युपेक्ष्यमाण उप'; च. नित्यमभ्युपेक्षमाणोपकार' भ्य. ४ ग. ज. °वृत्त जयमा'; च. जैयमा° यज. ५ च. पुस्तके त्वत्पूर्वेत्यादि यजमानानामित्यन्त पत्रस्योपरितनभागे लिख्यते. ६ ग. ज. मृग्यज°. ७ क. ख. ब. झ. ठ. ड. सायुज्ये; ट. सायुज्ये° फले. ८ च. यज्ञे इध्म°. ९ ग. घ. ट. काठक्यः, च. कार्थक्यः° थ, ज. काथक्य., छ. कात्ठक्यः. १० ग. च. ज. कथकस्य; घ. झ. ट. कत्ठकस्य. ११ ग. ज. काथक्यः, कार्थक्यः° त्य; घ. झ. ट. काठक्यः. १२ क. ख. घ. झ. ट. ठ. ड. 'इध्मः' नास्ति.

वमुपगताना संदीप्तानां समुदायापेक्षमिदं व्यवहितमभिधानमाप्रीगतं 'समिद्धो अद्य' इति । समिध एव चेमा इज्यन्त इति स्फुटमैष्टिके हौत्रे । 'समिधो यज' इति ( मान० श्रौ० १ । ३ । २ । २ ) प्रेषितो होता 'समिधः समिधो अग्न आज्यस्य व्यन्तु' (आश्व० श्रौ० १ । ५) इति वषट्करोति । तस्माद्युक्त यत्कात्थक्यो मन्यते यज्ञेध्म इति । ५

अथ पुनरन्यः कथं मन्यते । यत आह 'अग्निरिति शाकपूणिः' । स पुनः कयोपपत्त्याग्निं मन्यते । आराटुपकारित्वात्प्रैषस्य संनिपत्योपकारित्वाच्च यजतावाप्रियां यदाप्रीरूपं तद्बलवत् । किंच पुनराप्रियो रूपम् । अग्न्यर्थता । कथमिति । शृणु । 'समिद्धो १० देवान्यजसि जातवेदो मित्रमहश्चिकित्वान् त्वं दूतः कविरसि प्रचेताः' इति सर्वाण्येतानि अभिधानानि कर्माणि चागौणान्याग्निपक्षे गौणानीध्मपक्षे । 'गौणमुख्ययोश्च मुख्ये संप्रत्ययः' इति न्यायः । तस्मादप्रच्युतस्वरूपाया आप्रियो यजतावुपकारत्वाद्बाहुल्यादाग्नेयत्वाच्च प्रयाजानामग्निरेवायमनयाप्रिया १५ इज्यत इति शाकपूणिर्मन्यते ।

इध्मोऽग्निरिति शाकपूणिः

यस्मात् आप्रियोऽग्न्यर्थाः

यास्कस्यापि चैतदेव मतम् । 'आग्नेय्य इति तु स्थितिः' इत्यधिकरणान्ते हि वक्ष्यति ( निरु० ८ । २२ ) । एवं तर्ह्यग्निरित्येतदेव समाम्नातव्यमासीन्नेध्म इति । नैवम् । कस्मात् । समिद्धो अद्येत्येतद- २० स्यामाप्रियामग्नेर्लिङ्गमस्ति न त्वग्निशब्दः । अतोऽस्यासमाम्नानम् । पौनरुक्त्यदोषाच्च । तदिध्मशब्देऽपि समानमिति चेत्तदपि ह्याप्रियां नास्तीति । न । प्रैषिके समाम्नानात्क्रियाविशेषितत्वाच्च । आगतस्तेनेध्माभिधानेनेज्यत इति इध्मशब्दः समाम्नातो नाग्निशब्द इति । सर्वत्र शाकपूणेरेवमाप्रीष्वग्न्यर्थान्यभिधानानि ।

शाकपूणिमतं यास्कस्य संमतम्

१ क. ख. घ. झ. ट. ट. ड. °तानामग्निना स; च. ताना ~ सं° अग्निना. २५ २ ग. अ. °दायापेक्ष्यमि°. ३ ग. ज. °मग्निहौत्रे. ४ ग. च. ज. °त्काथक्यो; घ. झ. ट. °त्कच्छक्यो. ५ ग. च. ज. °कित्वा त्व. ६ ग. ज. झ. यस्क°. ७ क. ख. घ. झ. ट. ठ. ड °देवाभिमतम्. ८ च. आग्नेया ~ तु° इति. ९ ग. ज. ठ. ड. °म्नातं; च. म्नातं पौन° नं. १० च. ट. तदिध्म°. ११ च. ट. तदपि°. १२ ग. ज. °म्नानात् । विशिषित°. १३ क. ख. ग. ज. घ. झ. ट. ठ. ड. °त्वाच्च आहुय ( ग. च. आह्वय ) चास्माकं देवान्यज चेति । स एषोऽग्निः स मित्कलापमिध्ममात्मत्वेनाभिसंपन्नस्तदास्यतामुपगतस्तेना°; च. आगतः° 'आहूय० मुपगतः' अयं पाठः पत्रस्योपरितनभागे लिख्यते. ३२

शाकपूणिपक्षे मन्त्रयोजना । हे भगवन्नग्ने समिद्धः यस्त्वं संदीप्तः अद्य अस्मिन्नहनि मनुषो मनुष्यस्य दुरोणे यज्ञगृहे देवो दाता दीपनः द्योतनो वा देवान् दातॄन् दीप्तान् वा यजसि जातवेदः हविषा यजमानाना जातप्रज्ञानः स त्वमस्माकमपि हे मित्रमहः मित्राणामुपकारप्रवृत्त चिकित्वान् जानानः स्वमधिकारमाहृत्य देवान्यज चेति । किमित्येवं ब्रूमहे । यस्मात्त्वमेव दूतः सर्वयजमानाना भवसि कविः क्रान्तदर्शनः प्रचेताः प्रवृद्धप्रज्ञान इति ।

शाकपूणिपक्षे मन्त्रार्थः

' तनूनपात् ' ( निरु० ५ । २ । ३ ) इति निर्वक्तव्यम् । तत्पुनरेतत् ' आज्यम् ' इति कात्थक्यः । ' अग्निरिति शाकपूणिः ' । यथा तावदाज्य तथा निरुच्यते । ' नपादिति अननन्तरायाः प्रजायाः ' एतत् ' नामधेयम् ' । या पितुरनन्तरा पुत्राख्या सा । अननन्तरा पौत्राख्येत्यर्थः । किं कारणम् । सा हि ' निर्णततमा भवति ' । पुत्रस्तावत्पितुर्नीचैर्नतो भवति । ततोऽपि नीचैर्नततमः पौत्रः । तत्रैतस्मिन्पक्षे यः 'तनू'शब्दः पूर्वपद तनूनपाच्छब्दस्य तेन ' गौरुच्यते ' । कस्मात् । ' तता अस्यां भोगाः ' क्षीरदध्यादयः । ततः किम् । ' तस्याः पयो जायते ' । तस्याः पुत्रः । ' पयस आज्यं जायते ' । तस्मात्तस्याः पौत्रः । एवं तन्वाख्याया नपात् आज्यम् । तस्मात्तनूनपात् ।

तनूनपात् आज्यमिति कात्थक्यः

अग्निपक्षे ' आपोऽत्र ' अस्मिन्नग्नेस्तनूनपात्त्वे ' तन्व उच्यन्ते ' । ताः कस्मात् । ' तता अन्तरिक्षे ' । ततः किम् । ' ताभ्य ओषधिवनस्पतयो जायन्ते । ओषधिवनस्पतिभ्य एष जायते ' । तस्मादयमपां पौत्रः । ' तस्य ' तनूनपातः आज्यस्य अग्नेर्वा प्राधान्यस्तुतिः ' एषा भवति ' ॥ ५ ॥[12]

अग्निरिति शाकपूणिः

---

१ च. °हनि ˇ मनुष्यस्य° मनुषो. २ ग ज. 'वा' नास्ति, च. °तनो ˇ देवा° वा ३ क. ख. घ. झ. ट. °ज्ञानस°. ४ ग. च. ज. °महमि°. ५ ग. च. ज. काथक्यो; ध. झ. ट. काछक्यो. ६ क. ख. सा भवति । अननन्त°; ग. ज. °ख्या तस्यानन्तरा पौ°; घ. झ. ट ठ. ड. सा भवति । अनन्तरा°. ७ क. ख. घ. झ. ट. ठ. ड. °ति । कथम् । पुत्र°, च. °ति । ˇ पुत्र° कथम् ।. ८ क. ख. घ. झ. ठ. ठ. ड. सा कस्मात्, च. °च्यते । ˇक. सा. ९ क. ख. घ. झ. ट. ठ. ड. पुत्रः पयः, च. पुत्रः ˊ । पयसः° पयः. १० क. ख. घ. झ. ट. ठ. ड. गोस्तन्वा°; च. °एवं ˇतन्वा° गोः. ११ क. ख. घ. झ. ट. ठ ड. एषोऽग्निर्जा°; च. एष ˇ जा° अग्निः. १२ क.ख. २ (५); ग. ६; ठ. ड. °वति । इति निरुक्तटीकायामुत्तरषट्के द्वितीयाध्याये पञ्चमः खण्डः.

तनूनपात्पथ ऋतस्य यानान्मध्वा समञ्जन्त्स्वदया सुजिह्व । मन्मानि धीभिरुत यज्ञमृन्धन्देवत्रा च कृणुह्यध्वरं नः (ऋ० सं० १०। ११०। २)॥ तनूनपात्पथ ऋतस्य यानान्यज्ञस्य यानान्मधुना समञ्जन्त्स्वदय कल्याणजिह्व मननानि[1] च नो धीभिर्यज्ञं च समर्धय देवान्नो यज्ञं गमय नराशंसो[2] यज्ञ इति कात्थक्यो[3] नरा अस्मिन्नासीनाः शंसन्त्यग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति तस्यैषा[4] भवति ॥ ६ ॥ ५

---

'तनूनपात्पथ ऋतस्य' इति[5]। हे तनूनपात् आज्य त्वमुच्यसे। एतान् पथो मार्गान् सर्वान् ऋतस्य यज्ञस्य यानान्। हवींषि यज्ञे यान्ति[6] उत्सर्पन्ति। मध्वा[7] मधुरेण स्वादेन समञ्जन् संम्रक्षयन्[8] स्वदय स्वादुतामापादय हे सुजिह्व जिह्वया[9] हित। एवं[10] कुर्वन् मन्मानि[11] यानि[12] वयं मन्यामहेऽर्थवस्तूनि ध्रुवाण्येतानि न[13] स्युरिति तानि[14] तानि धीभिः स्वैः कर्मभिः अभिघारणालंकरणोपस्तरणादिभिः ऋन्धन् ससाधयन् स्वगुणैरुपकुर्वन् समर्धय। संपादयन्नपि[15] चैनं[16] यज्ञं समर्धय संपादय। या काचिदापदुत्पद्यते यज्ञस्य तां प्रायश्चित्तेनाङ्गभावमुपगमयन् गमय देवत्रा देवान् प्रति। स्विष्टमध्वरमस्माकं च कुरुष्वेत्यर्थः। एतदाशास्महे त्वत्तः। १० १५

अस्यामृचि तनूनपात्सबोध्यते

---

१ छ. मन्मानि. २ छ. नारा°. ३ छ. द कात्थक्यो; त. कात्थक्यो° थ. ४ क. ख. ३ (६); छ. ७; त. द. ३. ५ ग. °स्येति । हे°. ६ ग. झ. याति°; घ. ठ. ड. ज. यानि°; ट. यानि° यांति. ७ क. ख. घ. झ. ट. ठ. ड. तानि मध्वा; च. °न्ति । मध्वा° तानि. ८ क. ख. संरक्ष; ग. ज. घ. झ. ट. ठ. ड. सम्रक्ष°. ९ च. ट जिह्वया° ह्वायां; ठ. ड. जिह्वाया. १० क. ख. घ. झ. ट. ठ. ड. एतदेवं; च. एवं तद्. ११ क. ख. घ. झ. ट. ठ. ड. मन्मानि मननानि या°; च. मन्मानि या° मननानि. १२ क. ख. घ. झ. ट. ठ. ड. यानि च वयं;° च. यानि व° च. १३ क. ख. घ. झ. ट. ठ. नः; च. न स्यु° नः. १४ क. ख. घ. झ. ट. ठ. ड. तानि स्वाभिः धीभिः°; च. तानि तानि. १५ क. ख. घ. झ. ट. ठ. ड. °समर्धय संपादय । अपि°. १६ क. ख. घ. झ. ठ. ड. चैवं कुर्वन्नेतं य°; च. चैतं° वं कुर्वन्ने. १० २१

'अग्निरिति शाकपूणिः'। हे भगवन्नग्ने तनूनपात् त्वम् एतान् पथः ऋतस्य यज्ञस्य यानान् हवींषि मध्वा मधुरेण पाककृतेन रसेन समञ्जन् समभिव्यञ्जयन् स्वदय मृष्टीकुरु हे सुजिह्व स्वर्चिः अथवा हे

शाकपूणिमते मन्त्रार्थः

५ सुवाक्। एतान्येवं कुर्वन्नस्मदभिमतान्यर्थवस्तूनि नः संसाधयन् यज्ञम् ऋन्धन् समर्धयन् स्वसामर्थ्याच्च देवत्रा देवप्रविष्टं कुर्वित्येतदाशास्महे वयं त्वत्त इति।

'नराशंसः (४) यज्ञ इति कात्थक्यः'। कस्मात्। 'नराः अस्मिन्नासीनाः शसन्ति'। नरशब्दः पूर्वपदम्। आसेर्निष्ठान्तस्य मध्यम्। शंसतेरुत्तरपदम्। अथ

नराशंसो यज्ञ इति कात्थक्यः

१० कोऽर्थः। नराः मनुष्याः अस्मिन्नासीना उपविष्टाः शंसन्ति इति नराशंसः। 'अग्निरिति शाकपूणिः'। स कस्मात्। 'नरैः प्रशस्यः' स्तुत्यो 'भवति'। 'तस्य' नराशंसस्य 'एषा भवति' प्राधान्यस्तुतिः॥ ६॥

अग्निरिति शाकपूणिः

---

१५ नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः। ये सुक्रतवः शुचयो धियन्धाः स्वदन्ति देवा उभयानि हव्या ( ऋ० सं० ७। २। २ )॥ नराशंसस्य महिमानमेषामुपस्तुमो यज्ञियस्य यज्ञैर्ये सुकर्माणः शुचयो धियं धारयितारः स्वदयन्तु देवा उभयानि हवींषि सोमं चेतराणि चेति वा तान्त्राणि

२० चावापिकानि चेति वेळ ईट्टेः स्तुतिकर्मण इन्धतेर्वा तस्यैषा भवति॥ ७॥

---

१ ग. ज. °प्रतिष्ठं. २ ग. च. ज. काथक्यः, घ. झ. ट. काच्छक्यः. ३ क. ख. ३ (६); ग. ७, ठ. ड. 'स्तुतिः। इति निरुक्तटीकायामुत्तरषट्के द्वितीयाध्याये ( ठ. द्वि० ) षष्ठः खण्डः; च. वर्जितोऽयं नास्ति. ४ क. ख. छ. त. द. वेल ई°.

२५ ५ क. ख. ४ ( ७ ), छ. ८; त. द. ४.

' नराशंसस्य महिमानमेषाम् ' इति[1] । वर्तमान एव कर्मणि ब्रवीति ।

यज्ञः इति मते मन्त्रयोजना

योऽयमेषामभिमतफलदाता नराणां नराशंसो यज्ञो द्रव्यदेवतात्यागात्मकः प्रयोगस्तस्याधिष्ठाता । तद्वयमग्नौ देवताविशेषे जगदुत्पत्त्यनुग्रहबीजम् । नराशंसस्य वयम् उपस्तुमः उपगम्य चेतसा[2] महिमानं माहाभाग्यं[3] विभूतिं[4] स्तुमः अभिकीर्तयामः यजतस्य यज्ञियस्य यजनस्यै संपादयितुः[5] प्रयोक्तुरभिमतफलसंपादयितुः यज्ञैः कर्मभिः युक्ता उपस्तुमः । तदेवमेत-[6] स्मिन्नुपस्थितमहिम्नि[7] नराशंसे यज्ञे किमप्यस्त्वित्याशास्महे । ये सुकृतवः सुकृतकर्माणो जगदनुग्रहप्रवृत्ताः शुचयः निर्णिक्ततरपापाः धियंधाः स्वाधिकारयुक्तानां कर्मणाम् अनुविधारयितारः प्रज्ञाना वा । एवमादिगुणा[8]

उभयानि हवींषि सोमं चेतराणि च । अथवा ताम्राणि आवापिकानि च

देवाः स्वदन्ति आस्वादयन्तु[9] एतानि हवींषि उभयानि । यदि सौमिकः पशुस्ततः ' सोमं चेतराणि ' च[10, 11] पशुपुरोडाशधानाप्रभृतीनि । अथ पृथक्सोमात् ' ताम्राणि प्रयाजाज्यभागस्विष्टकृत्प्रभृतीनि ' आवापिकानि च ' प्रधानहवींषि । इत्येतदाशास्महे ।

' अग्निरिति शाकपूणिः ' । योऽयमेषामभिमतोपकारकारी नराणां

अग्निरिति मते

प्रशस्यो नराशंसोऽग्निस्तस्य[12] वयम् उपस्तुमः[13] महिमानं यजतस्य यज्ञसंपादयितुः यज्ञैः कर्मभिः दानैर्वा[14] युक्ताः । तस्मिन्नुपस्तुतमहिम्नि[15] नराशंसेऽग्नौ हुतानि ये सुकृतवो देवाः शुचयो धियंधाः ते एतानि उभयानि हवींष्यास्वादयन्त्वित्येतदाशास्महे ।

---

१ ग. इति'' । वर्त°. २ ग. ज. चैतस्य; ठ. चेतसा चैतस्य. ३ ग. घ. ज. झ. महा°. ४ ग. ज. विभूतीः; च. विभूतिः स्तु° ति. ५ क. ख. घ. झ. ट. ठ. ड. यजनसंपा°; च. यजनस्यै ६ च. ट. तदेव° अत ए. ७ ग. ज. °मुपस्तुतः; च. ट. °मुपास्थित° स्तु. ८ क. ख. घ. झ. ट. ठ. ड. °मुणयुक्ता दे°; च. °गुणा° णयुक्ता. ९ क. ख. घ. झ. ट. ठ ड. देवास्ते स्व°; ग. ज. स्वदन्त्वास्वा°; च. देवाः स्व° ते. १० च. दयन्ति. ११ क. ख. ग. च. ज. झ. ' च ' नास्ति. १२ ग. ज. नारा°; च. नारा° न. १३ क. ख. घ. झ. ट. ठ. ड. उपस्तोषाम उपस्तुमः; च उप स्तुमः स्तोषाम उप. १४ क. ख घ. झ. ट. ठ. ड. संयुक्ताः; च. युक्ताः° स. १५ ग. ज. °स्तुते म°.

'ईळः' (९) अग्निः । स पुनरयम् 'ईट्टेः स्तुतिकर्मणः' (धा० २ । ९) । स्तूयते ह्यसौ । 'इन्धतेर्वा' दीप्तनार्थस्य (धा० ७ । ११) । तत्क्रियायुक्तो ह्यसौ । 'तस्यैषा' प्राधान्यस्तुतिः 'भवति' ॥ ७ ॥

इळशब्दस्य व्युत्पत्तिः

५

---

**आजुह्वान ईड्यो वन्द्यश्चा यांह्यग्ने वसुंभिः सजोषाः । त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीयान् ( ऋ० सं० १० । ११० । ३ ) ॥ आहूयमान ईळितव्यो वन्दितव्यश्चायाह्यग्ने वसुभिः सहजोषणस्त्वं देवानामसि यह्व होता यह्व इति महतो नामधेयं यातश्च हूतश्च भवति । स एनान्यक्षीषितो यजीयान् । इषितः प्रेषित इति वाधीष्ट इति वा यजीयान्यष्टृतरो बर्हिः परिबर्हणात्तस्यैषा भवति ॥ ८ ॥**

१०

---

आजुह्वान ईड्यो वन्द्यश्चेति । हे भगवन्नग्ने यस्त्वम् ईड्यो वन्द्यश्च सर्वलोकस्य । ईड्यो दीपनार्हो हविर्भिराज्यादिभिः । वन्द्यः स्तुत्यः । स त्वम् आजुह्वानः आहूयमानः एतस्मिन्कर्मण्यस्माभिः वसुभिः सहजोषण समानप्रीतिर्भूत्वा आयाहि । कस्मात्पुनरेवं ब्रूमहे । इतः यस्मात् हे यह्व महन् त्वमसि होता देवानाम् आह्वाता । सः त्वमस्माभिः इषितः प्रेषितः अधीष्टो वा अध्येषितो होतृत्वे स्थित्वा अस्माकम् एतान् देवान् यक्षि यज । किमित्येवं ब्रूमहे । यस्मात् यजीयान् असि । यजीयान् यष्टृतरो मनुष्यहोतुरिति ।

१५ इळः

२०

इह 'इडः' इत्येकवचनमग्नेरव्यवधानेन । तथैतस्मिन्मन्त्रे एकस्य श्रुतत्वात् । ऐष्टिके पुनर्हौत्रे 'इडो अग्न आज्यस्य व्यन्तु' ( आश्व० श्रौ० १ । ५ ) इति बहुवचनयुक्तादाख्याताद् 'व्यन्तु' इत्येतस्मात्

'इडः' इत्येकवचनमग्न्यभिप्रायम्

२५

---

१ क. ख. ग. घ. ज. ध. झ. इळोऽग्निः. २ क. ख. (७), ग. ८; ठ. ड. °वति । इति निरुक्तटीकायामुत्तरषट्के द्वितीयाध्याये सप्तमः खण्ड. ( ड. °षट्के २ ध्यो ७ खण्डः ); च. वर्जमितरेष्वङ्को नास्ति ३ क. ख. छ. त. द. ईलित°. ४ क. ख. ५ (८), छ. ९; त. द. ५ ग. °श्चेति । हे'; ठ. ड. आजुह्वान इति. ६ ग. ज. दीपनादाज्यहविरादिभिः । व°; ठ. ड. दीपनादेर्हविर्भि°. ७ क. ख. घ. ट. एनाम्. ८ क. ख. घ. झ. ठ. °यज इत्येवं ब्रूमहे । किं; च. °यज ०। कि° इत्येवं ब्रूमहे.

१२

'ईळः' इत्येतस्यापि बहुवचनत्वमेव 'इडो यन्तु' इति । तत्र पुनरन्नाभिधानम् । अन्नं च पुनरोषधय एव । ताश्च पृथिवीस्थानाः इत्यग्निं भजन्ते । तदात्मनायमग्निरुच्यत इति । तत्र बहुवचनं प्रति समाधानमोषध्यात्मनाग्नेर्व्यवधानात् । उक्तं च 'योऽयमृर्वसे पृथिव्यामग्निरन्तरोषधिवनस्पतिष्वप्सु तमुन्निन्यथुः सर्वगणं सर्वनामानम्' (निरु० ६ । ३६) इति तस्मादुपपद्यत इति ।

ऐष्टिके होत्रे तु 'इडः' इति बहुवचनमन्नाभिप्रायम्

'बर्हिः' ( ६ ) इति वक्तव्यम् । तत्पुनरेतत्प्रसिद्धमेव कुशमयं यज्ञाङ्गम् । तत्कस्माद्बर्हिरित्युच्यते । 'परिबर्हणात्' परिच्छेदनात् । लूनं हि तद्भवति परिवृद्धं वा । 'तस्यैषा' बर्हिषः प्राधान्यस्तुतिः 'भवति' ॥ ८ ॥

बर्हिःशब्दस्य व्युत्पत्तिः

---

**प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् । व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम्** ( ऋ० सं० १० । ११० । ४ ) ॥ **प्राचीनं बर्हिः प्रदिशा पृथिव्या वसनायास्याः प्रवृज्यतेऽग्रेऽह्नां बर्हिः पूर्वाह्णे तद्विप्रथते वितरं विकीर्णतरमिति वा विस्तीर्णतरमिति वा वरीयो वरतरमुरुतरं वा देवेभ्यश्चादितये च स्योनं स्योनमिति सुखनाम स्यतेरवस्यन्त्येतत्सेवितव्यं भवतीति वा द्वारो जवतेर्वा द्रवतेर्वा वारयतेर्वा तासामेषा भवति ॥ ९ ॥**

---

प्राचीनं बर्हिरिति । प्राच्यां दिशि यदञ्चितं गतं जातं प्रागग्रं वा यत्स्तीर्यते तद्भवति प्राचीनम् । किं पुनस्तत् । बर्हिः । प्रवृज्यते प्रच्छिद्यते लूयते । अथवा । प्रवृज्यते प्रस्तीर्यते । किं पुनरत्र स्वमनीषिकया । नेत्युच्यते । प्रदिशा

बर्हिः

---

१ क. ख. ग. च. ज. घ झ. इल इ°. २ च. ज. ठ. ड. °रन्तरोष°. ३ क. ख. घ. झ. ट. ठ. ड. निर्वक्तव्यं. ४ क. ख. ५ ( ८ ); म. ९, ठ ड. °वति । इति निरुक्तटीकायामुत्तरषट्के द्वितीयाध्याये अष्टमः खण्डः ( ग. °उत्तरष० द्वि. ७ खण्डः ), घ. वर्जमितरेष्वङ्को नास्ति. ५ क. ख. छ. त. °ज्यते अग्रे अह्ना; ठ. द. 'ज्यतेऽग्रे अह्न'. ६ क. ख छ त. द. विकीर्ण°. ७ क. ख. ६ ( ९ ); छ. १०; त द. ६. ८ ग 'रिति । प्रा°. ९ क. ख. घ. झ. ट. 'रेवमेव स्व°, च 'रेव स्व' मेव.

विधिवाक्येन । ' प्रागुदग्वा बर्हिश्छिनत्ति ' । तत्सामर्थ्यात् । अथवा प्रदिशा मन्त्रेण ' देवस्य त्वा ' ( मैत्रा० सं० १ । १ । २ ) इत्यनेन । स्तरणपक्षेऽपि ' प्राचीनं बर्हिः स्तृणाति ' इति विधिवाक्यम् । ' ऊर्णम्रदा वि प्रथस्व ' ( ऋ० मं० ५ । ५ । ४ ) इति मन्त्रः । किमर्थं पुनस्तत्प्रवृज्यते । पृथिव्याः वस्तोरस्याः । पृथिवी वेदिः । तस्याः वस्तोः वसनाय आच्छादनाय । कदा पुनस्तत्प्रवृज्यते । अग्रे अह्ना पूर्वाह्णे । तदा हि प्रशस्यते दर्भस्तरणं लवनं वा । तत्प्रवृक्तं प्रस्तीर्यमाणं वा यथाकालं विविधं प्रथते वितरं[6] विस्तीर्णादपि विस्तीर्णतर वरीयो वरतरम् अन्येभ्यो यज्ञाङ्गेभ्यः श्रेष्ठतरं तदाधारत्वाद्धविषाम् । उरुतरं बहुतरं वा । किमर्थं पुनस्तत्प्रवृज्यते विप्रथते वा । देवेभ्यश्च अदितये च कथं नाम स्योनं सुखं स्यादिति । बर्हिषा हि सगुणीकृतात्कर्मणो देवानां हविर्दातॄणां यजमानानामभीप्सितेन फलेन वा योगो भवति तत्सुखम् । अदितये पृथिव्यै बर्हिषा वा सगुणीकृतात्कर्मण आहुतिद्वारेण वृष्टिर्भवति, ततः ओषधिप्ररोहस्तत्सुखम् ।

नात्र ब्रवीत्यग्निरिति । तेन यज्ञाङ्गमेव । अभिमतमेतदिदमप्यस्याचार्यस्य । तद्द्वारेणैव व्यवधानेनाग्निः स्तूयते पृथिव्यायतनत्वात्तस्य । अपरे पुनरग्निवदपि योजयन्ति मन्त्रार्थदृशः । तत्पक्षे बर्हिरित्यग्न्यभिधानम् । प्रागेउच्यते प्रणीयत इति प्राचीनम् । बर्हिः प्रवृद्धमाहवनीयाख्यं ज्योतिः प्रवृज्यते प्रणीयते । तत्पुनः प्रदिशा वचनेन ' प्राञ्चमुद्धरन्ति ' इति । पृथिव्या वस्तोर्वसनाय । अग्निनैव[11] हि वेदिरनग्निका भवति । अग्रे अह्ना पूर्वाह्णे । तत् विविधं प्रथते सामिधेनीप्रक्षेपात् । आज्यभागाघारादिषु च विस्तीर्णतरं विक्षिप्ततरं प्रथते । वरीयो

बर्हिरिति यज्ञाङ्गमेव नाग्निः

केषाचिन्मते बर्हिरित्यग्निः । तदायं मन्त्रार्थः

---

१ ग. ज. बर्हि च्छिन, च. बर्हि च्छिनत्ति तत्सा° त्रीणि सा°. २ क. ख. घ. ट ठ ड प्रस्तरणमन्त्रेण; च. ॰दिशा ॰म° प्रस्तर. ३ ग. ज. ' पृथिवी वेदिः ' नास्ति. ४ क. ख. घ. झ. ट. ठ. ड. कदा च पु°. ५ क. ख. ग. ज. घ. ट. ठ. ड. प्रथते विस्तीर्यते वेद्या छाद्यमानाया प्रवृज्यमान वा प्रस्तीर्यमाणं विप्रथते । वितर ; च. विधं ॰प्र° वि ६ ठ. विस्तीर्ण, ड. वितीर्ण. ७ क. ख. घ. झ. ट. ठ. ड. ' वा ' नास्ति, च. वा. ८ क. ख. हि, च ट वा ॰स° हि. ९ क. ख. घ. झ ट. ठ. ड. ॰र्यस्य च त°, च. °र्यस्य ॰। त° च. १० क. ख. ग. ज. ठ. प्रागुच्यते; घ. झ. ठ. ड. प्रागच्यते. ११ ग. ज. अग्निनव हिवेदिः; घ. झ. ट. ठ. ' हि ' नास्ति.

वरतरमन्येभ्यो ज्योतिर्भ्यः । उरुतरं वा महत्तर देवेभ्यो यजमानेभ्य इतरेभ्यो वा अदितये पृथिव्यै कथं नाम स्योनं स्यादिति ।

स्योनमिति सुखनाम । 'स्यतेः' धातोरवपूर्वात् । तदेव हि 'अवस्यन्ति' निवसन्ति प्राणिनः । 'सेवितव्यं भवतीति वा' । तद्धि सर्वस्य सेवनार्हं भवति । 'द्वारः' (७) इति निर्वक्तव्यम् । ताः पुनरेताः 'जवतेर्वा' । जवन्ति हि ताभिः । 'द्रवतेर्वा' । धात्वन्यत्वमर्थैकत्वम् । 'वारयतेर्वा' । वारणीया हि द्वारादेव निवार्यन्ते । 'तासामेषा' प्राधान्यस्तुतिः 'भवति' ॥ ९ ॥

*द्वारः इत्यस्य व्युत्पत्तिः*

---

**व्यचस्वतीरुर्विया वि श्रयन्तां पतिभ्यो न जनयः शुम्भमानाः । देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः ( ऋ० सं० १० । ११० । ५ ) व्यञ्चनवत्य उरुत्वेन विश्रयन्तां पतिभ्य इव जाया ऊरू मैथुने धर्मे शुशोभिषमाणा वरतममङ्गमूरू देव्यो द्वारो बृहत्यो महत्यो विश्वमिन्वा विश्वमाभिरेति यज्ञे गृहद्वार इति कात्थक्योऽग्निरिति शाकपूणिरुषासानक्तोषाश्च नक्ता चोषा व्याख्याता नक्तेति रात्रिनामानक्ति भूतान्यवश्यायेनापि वा नक्ताव्यक्तवर्णा तयोरेषा भवति ॥ १० ॥**

---

व्यचस्वतीरिति । या एता विविधेनाञ्चनेन गमनेन युज्यन्ते व्यचस्वतीः ताः । किं कुर्वन्तु । उर्विया उरुत्वेन महत्त्वेन विश्रयन्तां विप्रियन्ताम् । कथम् । पतिभ्यो न जनयः । पतिभ्य इव जायाः ऊरू मैथुने धर्मे विवृण्वन्ति शोभयितुमिच्छमानाः प्रहर्षात् । एवं

*यज्ञे गृहद्वार इति कात्थक्यः*

---

१ क ख. घ. झ ट. ठ ड. 'वा' नास्ति. २ क. ख घ. झ. ट. ठ. ड. °त्तरं वा दे°. च. °त्तरं ˇ दे° वा. ३ क. ख. घ झ. ट. ठ. ड. °तये च पृ°; च. तये ˇ पृ° च. ४ क. ख. अवस्यन्ति व्यवस्यन्ति निव°; च. निवसन्ति° व्यवस्य. ५ क. °व्यम् । यज्ञे गृहद्वार इति कात्थक्यः । ताः, च. °व्यम् । ˇताः° यज्ञे गृहद्वार इति कात्थक्यः. ६ क. ख. ६ ( ९ ); ग. १०, ठ. ड °वति । इति निरुक्तटीकायामुत्तरषट्के द्वितीयाध्याये नवमः खण्डः. ७ छ. त. द. कात्थक्यो°. ८ क. ख. ७ ( १० ); छ. ११; त. द. ७. ९ ग. °रिति° । या°. १० च. उरुत्वेनˇ विश्र° महत्त्वेन; झ. 'महत्त्वेन' नास्ति. ११ ग. विव्रिय°; ज. विव्रय°; झ. विप्रय; ठ. °श्रयन्तां विविधमाश्रिता भवन्तु । कथं°; ड. विप्रयन्तां विविधमाश्रिता भवन्तु । कथं°. १२ क. ख. घ. झ. ट. ठ. ड. जायाः । यथा पतिभ्यो ज्याया ऊरु°; च. जायाˇ ऊ° यथा पतिभ्यो जाया.

विश्रयन्ताम् । इदानीमुत्तरोऽर्धर्चः प्रत्यक्षकृतः । या यूयं व्यञ्चनवत्य एवं विश्रयध्वे तों वो ब्रवीमि हे देव्यो दानक्रियाहेतुभूता द्वारो बृहत्यो महत्यो विश्वमिन्वाः विश्वं सर्वम् आभिः एति यज्ञे उपकरणमिति विश्वमिन्वाः । यूयमुच्यध्वे । एतेभ्यो देवेभ्यो हविर्दातृभ्यः ऋत्विग्भ्यो यजमानेभ्य इतरेभ्यो वा सुप्रायणाः सुप्रगमनाः भवतेत्येतदाशास्महे ।

'अग्निरिति शाकपूणिः' । तत्पक्षे योजना । अग्न्यर्चिषो द्वारो जवनाद् द्रवणाद्वा । हविर्वा । ताभिर्जवति द्रवति वारयन्ति वा रक्षःप्रभृतीनीति द्वारः । व्यचस्वतीः या एता विविधेनाञ्चनेन तद्वत्यः ।

अग्निरिति शाकपूणिः

अग्न्यर्चिषस्ता उरुत्वेन विश्रयन्ताम् । कथम् । पतिभ्य इव जाया ऊरू मैथुने धर्मे शोभयितुमिच्छमानाः । या यूय विविधेनाञ्चनेन तद्वत्यः याश्चैवं विश्रयध्वे तों वो ब्रवीमि । हे देव्यो बृहत्यो विश्वमिन्वाः सर्वं हविर्याभिर्जवति ता यूयमस्य हविषः सुप्रायणाः सुप्रगमनाः भवतेति ।

'उषासानक्ता' (८) इत्येतत्पदम् । अस्य विग्रहः 'उषाश्च नक्ता च' । 'उषा व्याख्याता' 'उच्छतीति सत्याः' (निरु० २ । १८) इति । 'नक्तेति' रात्रिनाम । तत्कस्मात् । 'अनक्ति' क्लेदयति भूतानि अवश्यायेन । अवश्यमेता आयन्तीत्यवश्यायाः प्रुष्वाः । अनक्तेरकारलोपे नक्ता । 'अपि वा नक्ता अव्यक्तवर्णा' । नकारः प्रतिषेध । न अक्ता न व्यक्ता अनक्ता । यथा अहः सर्वमभिव्यक्तरूप भवति न तथा रात्रिः । 'तयोरेषा' प्राधान्यस्तुतिः 'भवति' ॥ १० ॥

उषःशब्दस्य व्युत्पत्तिः

नक्तशब्दस्य च

१ क. ख. ग. ज. झ. °ध्वे ततो ब्र°, घ. 'यध्वः । ता°, ट. °यध्वे(ध्वः) ततो (ता वो), च. °ध्वे ततो ब्र° ता वो, ठ. ड. यध्व तनो ब्र°. २ ग. ज. °यज्ञशरणमिति, च. °यज्ञ उपकरणमिति. ३ क. ख. घ. झ. ट. ठ. ड. देवेभ्य एतेभ्यो ह°. ४ ग. ज. अर्चिषो. ५ क. ख. घ. झ. ट. ठ. ड. द्रवति वा वार°, च. द्रवति ~ वार° वा. ६ क. ख. ग. घ. झ. ट. ठ. ड. ऊरू मे°. ७ क. ख. घ. ठ. ड. ततो ब्र°; च. ट. ततो ब्र° ता वो. ८ क. ख. घ. झ. ट. ठ. ड. 'एतत्' नास्ति. ९ क. ख. घ झ. ट. ठ. ड. °येनेति. १० च. नकार~ प्र°. ११ ग. ज. झ.° षेधेन । अक्ता°; च. °षेधेन । अ° । न अ. १२ क. ख. ७ (१०); ग. ११; ठ. ड. °वति । इति निरुक्तटीकायां ( ठ. निरु० ) मुत्तरषट्के द्वितीयाध्याये दशमः खण्डः, च. वर्जमितरथ्वं नास्ति.

आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ । दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने ( ऋ० सं० १० । ११० । ६ ) ॥ सेष्मीयमाणे इति वा सुष्वापयन्त्याविति वा सीदतामिति वा न्यासीदतामिति वा यज्ञिये उपक्रान्ते दिव्ये योषणे बृहत्यौ महत्यौ सुरुक्मे सुरोचने अधिदधाने शुक्रपेशसं श्रियं शुक्रं शोचतेर्ज्वलतिकर्मणः पेश इति रूपनाम पिंशतेर्विपिशितं भवति । दैव्या होतारा दैव्यौ होतारावयं चाग्निरसौ च मध्यमस्तयोरेषा भवति ॥ ११ ॥

---

'आसुष्वयन्ती' इति[1,2] । आसुष्वयन्ती सेष्मीयमाणे[3] परस्परं स्मयमाने ।

उषासानक्ता — अथवा । 'सुष्वापयन्त्यौ' सुष्ठु जनान् स्वापयन्त्यौ[4] । यजते हेतुकर्तृत्वेन । यजते यज्ञिये यज्ञसंपादयित्र्यौ ।

उपाके प्रशस्ये[5] उपगम्ये[6] इतरेतर क्रान्ते । दिव्ये दिविजे[7] । योषणे संमिश्रे परस्परतः । बृहती महत्यौ । सुरुक्मे सुरोचने[8] दीप्ते[9] । ये एते एवमादिगुणयुक्ते उषासानक्ते अधिश्रियं श्रियम्[10] अधिदधाने उपरि स्थापयन्त्यौ[11] शुक्ररूपां श्रियम् आसीदताम् एतस्मिन्[12] नियोनौ । आकार उत्कर्षः[13] । उपसर्गस्य हि क्रियापदेन सामर्थ्यम् । न्यासीदताम् इति नियमेनासीदतामिति 'निः' उत्तरपदस्थोऽप्यपकृष्यते तेनैव क्रियापदेन । निशब्दश्चोत्तरपादपूरणः[14] ।

---

१ क. ख. ८ (११); छ. १२; त. द. ८. २ ग. इति[17] । आ°. ३ घ. ट. सेष्मीय°. ४ ग. ज. °यन्त्यौ वृद्धत्यां महत्यौ यजते°. ५ च. प्रशंस्ये. ६ च. °गम्ये इ° म्य. ७ क. ख. घ. झ. ट. ठ. ड. °दिविजे द्योतने यो°; च. °विजे ˇ यो° द्योतने. ८ घ. झ. ट. ठ. ड. सुष्ठु रोचने. ९ क. ख. घ. झ. ट. ठ. ड. सुदीप्ते; च. °चने ˇदीप्ते° सु. १० ग. ज. झ. ठ. ड. 'श्रियम्' नास्ति; घ. ट. °श्रियं ˇ आधि°; श्रियं. ११ ग. ज. स्थाप°. १२ क. ख. घ. झ. ट. ठ. ड. °स्मिन्नस्वे योनौ; च. ° स्मिन्नियोर्जनौ° न्स्वे योनौ. १३ क. ख. घ. झ. ट. ठ. ड. उत्कृष्यते; च. उत्कृष्टः° ष्यते. १४ क. ख. घ. झ. ट. °त्तरपदो वा पाद°; घ. °तर ˇपाद° पदो वा.

न ब्रवीत्यग्निरिति येन द्वित्वानुपपत्तिरिति केचित्। अपरे पुनर्वर्णयन्ति। उषा अग्नेर्दीप्तिः। नक्ता आहुतिः। दीप्तिर्विवासयति तमः। आहुतिर्नक्ताज्येन। ते एते दीप्त्याहुती सुष्ठु स्मयमाने इव यज्ञिये यज्ञसंपादयित्र्यौ उपाके उपक्रान्ते परस्परतः दिव्ये द्योतने परस्पराश्रयार्त् योषणे मिश्रीभूते बृहत्यौ महत्यौ सुरुक्मे रोचने अधिदधाने शुक्रपेशसम् एतस्मिन्यजमाने श्रियम् आसीदताम् एतस्मिन्नग्नौ न्यासीदता नियमेनाधिकं वेत्येतदाशास्महे।

उषासानक्ता अग्निरिति केचित्

'पेश इति रूपनाम पिंशतेः' धातोः। तद्धि 'विपिशितं भवति'। विकासितं भवति यावदाश्रयभावित्वात्। विनिहितमिति केचिदन्याश्रितत्वात्।

'दैव्या होतारा' (५) इति वक्तव्यम्। 'दैव्यौ होतारौ' इति शब्दसमाधिः। 'अयं चाग्निरसौ च मध्यमः' इत्यभिधेयवचनम्। तयोरेषा प्राधान्यस्तुतिः 'भवति' ॥ ११ ॥

दैव्यौ होतारौ अयमग्निरसौ च मध्यमः

---

दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै। प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता (ऋ० सं० १०।११०।७)॥ दैव्यौ होतारौ प्रथमौ सुवाचौ निर्मिमानौ यज्ञं मनुष्यस्य मनुष्यस्य यजनाय प्रचोदयमानौ यज्ञेषु कर्तारौ पूर्वस्यां दिशि यष्टव्यमिति प्रदिशन्तौ। तिस्रो देवीस्तिस्रो देव्यस्तासामेषा भवति ॥ १२ ॥

---

१ घ. झ. ट. ठ. ड. पुनर्वर्णयन्त्यपर. २ क. ख. आहुतिरग्नक्त्याज्येन, घ. आहुति अग्नि नक्त्याज्येन अग्नि ते ए०; च. आहुति नैक्त्यज्येन रनक्त्याज्येन अग्नि, ट. आहुति नैक्त्यज्येन रनक्त्याज्येन अग्नि, ठ. ड आहुति अग्निमनक्त्याज्येन. ३ क ख घ. झ. ट. ठ. ड. इव यजते य, च. इव य यजते. ४ च. °श्रया योषणे मि णी. ५ घ. झ ट शुक्रपिशम, च. शुक्रपिश म स. ६ क. ख. ८ (११), ग. १२, ठ ड. वति। इति निरुक्तटीकायामुत्तरषट्के द्वितीयाध्याये एकादशः खण्डः (ड. २ ध्याये १२ खण्डः); च. वर्गमितरेष्वङ्को नास्ति. ७ क. ख. ९ (१२), ग. १३, ठ. ड. ९.

दैव्या[1] होतारे[2]ति । यावेतौ दैव्यौ[3] होतारौ । देवेषु भवौ दैव्यौ[4] । देवावेव वा

दैव्यौ होतारौ  दैव्याविति स्वार्थे एव तद्धितः । मनुष्यहोतारौ[5] होतृमैत्रावरुणावपेक्ष्य । दैव्यौ होताराविति विशेषणम् । कौ पुनस्तौ । होतारौ आह्वातारौ देवानाम् । वाय्वग्नी । किंलक्षणौ । प्रथमौ मुख्यौ मनुष्यहोताराववपेक्ष्य सुवाचौ प्रशस्तवाचौ     ५
सुस्तुती[6] मिमाना यज्ञं यज्ञनिर्मातारौ नित्यं मनुषो मनुष्यस्य यजध्यै यजनाय प्रचोदयन्तौ[7] प्रचोदयमानौ विदथेषु यज्ञेषु कारू कर्तारौ ऋत्विजौ । नानग्निको यज्ञोऽस्तीत्यग्निर्निर्मिमीते । न चासावनुपध्मातो वायुना ज्वलतीति वायुर्निर्मिमीते । विज्ञायते हि 'तस्मादेष नानुपध्मातो ज्वलति' (शत० ब्रा० ११ । ८ । ३ । ७) इति । स एव मैत्रावरुणो वायु-     १०
रग्नेर्होतृवदधियज्ञे वर्तमानस्य नित्यं चोदयिता तन्मूलत्वाच्च यज्ञकर्मणः । तावेव देवानामाह्वातरावुच्येते । यावेतावेव प्रचोदयन्तौ विदथेषु यज्ञेषु कारू कर्तारौ मनुष्यहोतुरनुग्रहस्य नित्यं स्वाधिकारकर्मानुग्रहसंनिधानात्[8] यत्प्राच्यां दिशि ज्योतिराहवनीयाख्यं प्रणीयते प्रदिशा मन्त्रेण 'प्राचीमनु प्रदिशं प्रेहि'[10] इति । अनेन विधिवाक्यप्रदेशेन[11] वा 'प्राञ्चमुद्ध-     १५
रन्ति' (मैत्रा० सं० १ । ६ । ५) इति । एतत्प्रणीय नित्यं यष्टव्यमित्येवमर्थं प्रदिशन्तौ आज्ञापयन्ताविव यौ नित्यमवियोगेन स्वभावतो यज्ञोपकारे वर्तमानौ तौ मामप्येवं वर्तनामित्येवमाख्यातमध्याहृत्य समाप्यते निराख्यातत्वान्मन्त्रस्य ।

'तिस्रो देवीः' (१०) इति पदम् । ताः पुनरेताः 'तिस्रः एव     २०

---

१ च. दैव्यौ हो° व्या; ज. दैव्या हो. २ ग. °ताराविति° । या°; च. ज. °ताराविति । या°. ३ च दैव्यो. ४ क. ख. च. झ. दैव्यां. ५ ग. ज. °होताराववपेक्ष्य दैव्यौ होतारौ होतृमैत्रावरुणौ विशेषणम्; च. °होताराववपेक्ष्य दैव्यौ होतारौ (इति) होतृमैत्रावरुणौ विशेषणम्. ६ ठ. ड. सुष्टुती. ७ क. ख. घ. झ. ट. ठ ड. °यन्ता. ८ ग. ज. °धानात् आहृतौ; घ. °धानायिदेतत्प्रा°; च. °धादृर्दर्धात् । य°; ट °धाना ⌄ य° दानातौ, ठ. ड. °धाना । य°. ९ क. ख. घ. ट. ठ. ड. यदेतत्प्रा°, च. य ⌄ त्प्रा° देन. १० ग. ज. प्रहीति; च. प्रेहीं° प्रे. ११ क. ख. घ. झ. ट. ठ. ड. °शेनानेन वा°, च. °शेनं वा नानेन.     २८

देव्यः ' । प्रथमेया ता निराह । तिस्र इति देवीशब्दस्य विशेषणम् । ' तासामेषा भवति ' प्राधान्यस्तुतिः ॥ १२ ॥

---

**आ नो यज्ञं भारती तूयमेत्विळा मनुष्वदिह चेतयन्ती । तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसः सदन्तु ( ऋ० सं० १०।११०।८ )॥ एतु नो यज्ञं भारती क्षिप्रं भरत आदित्यस्तस्य भा इर्डा च मनुष्यवदिह चेतयमाना तिस्रो देव्यो बर्हिरिदं सुखं सरस्वती च सुकर्माण आसीदन्तु त्वष्टा तूर्णमश्नुत इति नैरुक्ता-स्त्विषेर्वा स्याद्दीप्तिकर्मणस्त्वक्षतेर्वा स्यात्करोतिकर्मणस्तस्यैषा भवति ॥ १३ ॥**

---

' आ नो यज्ञं भारती ' इति । अभिमुख्येनास्माकं यज्ञमागच्छतु । का पुनरसाविति । भारती । भरत आदित्यः सर्वभूतान्युदकेन बिभर्तीति । तस्य स्वभूता भाः दीप्तिः । कथमेता । तूयं क्षिप्रम् । इळा च पृथिवीस्थाना । ' इहेवेळैया वसुमत्या ' ( मैत्रा० सं० ४ । १३ । ८ ) इत्यनुयाजेषु उन्नीतसामर्थ्यात्पार्थिवत्वेम । तूयं मनुष्यवत् इह कर्मणि चेतयन्ती । यथा मनुष्येण मनुष्य आहूतो भोक्तुमविलम्बमान आगच्छतिक्षिप्रमेवमागच्छतु सा ममेह कर्मणि तिस्रो देव्यः

---

१ च. मैया नोति ' या ता निराह । तिस्र इ. २ ग. ज. ' तिस्र इति ' नास्ति. ३ च. देविश° ( वी ) ४ च. °शब्दस्य । तासा° विशेषणम्. ५ क. ख. ९ ( १२ ); ग. १३, ठ. इति निरु० उ० द्विती० द्वादशः खण्ड., ड. इति निरुक्त-भाष्ये १३ खण्डः, घ. वर्जनितरण्यङ्को नास्ति. ६ क ख. छ. त. द. इला. ७ छ. °मणस्त्वक्ष° स्त्व; त. द. °मणस्तक्ष°. ८ क. ख. १० ( १३ ); छ. १४; त. द १०. ९ ग. °इति°। आ°; ठ. ड. °यज्ञमिति। आभि . १० क. ख. व. झ. ट. ठ. ड ' इति ' नास्ति; °भर्तीति °र्ति. ११ क. ख. ग. घ. ज. प. झ. इला. १२ क. ख. ग. च. ज. ध. झ. °वेळया. १३ क. ख. घ. झ. ट. ठ. °वत्वात्; घ. °त्वमि° त्वा ।

हविर्भोक्तव्यमित्येवमर्थं जानाना । सरस्वती च मध्यमस्थानैवं चेतयन्ती आगच्छतु । ता एतास्तिस्रोऽपि देव्यः स्वपसः सुकर्माणः अस्मिन्कर्मणि इदं बर्हिः स्योनं प्राप्य एतस्मिन् आसीदन्त्वित्येतदाशास्महे ।

'त्वष्टा'(११)इति वक्तव्यम् । अत्र तूर्णशब्दात्क्षिप्रवाचिनः पूर्वप- श्नोतेरुत्तरपदम् । क्षिप्रं व्याप्नोति यदनेन व्याप्तव्यं भवति । 'त्विषेर्वा' धातोर्दीप्त्यर्थस्य । दीप्त एव नित्यमसौ देवतात्वात् । 'त्वक्षतेर्वा स्यात्' क्रियासामान्यमात्रवाचिन उत्सृष्टतनुकरणस्वार्थस्य । 'तस्यैषा' प्राधान्यस्तुतिः 'भवति' ॥ १३ ॥

*त्वष्टृशब्दस्य व्युत्पत्तिः*

---

**य इमे द्यावापृथिवी जनित्री रूपैरपिंशद्भुवनानि विश्वा । तमद्य होतरिषितो यजीयान्देवं त्वष्टारमिह यक्षि विद्वान् ( ऋ० सं० १० । ११० । ९ ) ॥ य इमे द्यावापृथिव्यौ जनयित्र्यौ रूपैरकरोद्भूतानि च सर्वाणि तमद्य होतरिषितो यजीयान्देवं त्वष्टारमिह यज विद्वान्माध्यमिकस्त्वष्टेत्याहुर्मध्यमे च स्थाने समाम्नातोऽग्निरिति शाकपूणिस्तस्यैषा परा भवति ॥ १४ ॥**

---

'य इमे द्यावापृथिवी' इति । यः त्वष्टा इमे द्यावापृथिव्यौ सर्वेषां भूतानां जनयित्र्यौ रूपैः नानाविधैः अकरोत् भूतानि च सर्वाणि । अथवा । रूपैरिति कर्त्रैवानया तृतीयया लक्ष्यते । तत्तद्रूपमास्थाय यः त्वष्टा द्यावापृथिव्यावक-

*त्वष्टा*

---

१ ग. झ °भोक्तव्य°, घ. °भोक्तव्य° त. २ क. ख. घ. झ. ट. ठ. ड. मध्यस्था° ३ क. ख. ग. ज. घ. झ ट. ठ. ड. °स्थानेष्वमेव; च. स्थानैवं° वमेव. ४ ग. ज. ठ. ड 'इदं' नास्ति, घ. °र्मणि ~ बर्हि° इद्. ५ ग. ज. सीद्°; घ. °स्मिन्~सी° आ. ६ घ. ट. ड. तक्षते°; झ तत्वक्षते°; ट. तक्ष° त्व. ७ क. ख. १० (१३), ग. ११; ठ. ड इतिनिरुक्तटीकायामुत्तरषट्के द्वितीयाध्याये त्रयोदशः खण्डः (ड.२ ध्याये १३ खण्डः ) ८ छ. त द्. °न्माध्यमक°. ९ क. ख. ११ (१४); छ. १५; त. द्. ११. १० ग. ज. 'इमे' नास्ति; च. °स्त्वष्टा ~ द्या° इमे. ११ क. ख. व. ठ. ड. ड. °नानाविधैरनेकप्रकारैरक°; ग. ज. °नानाचित्रैरक°; च.° र्नानाविविधै~र~ रनेकप्रकारै. १२ ग. ज. 'यः' नास्ति; च. °स्थाय~ त्वष्टा° यः.

रोभूतानि च सर्वाणि । किं तस्य त्वष्टु । तं देवम् इह अद्य एतस्मिन्नहनि कर्मणि च हे होतः यक्षि यज विद्वान् जानानो मयेदमवश्यं कर्तव्यमिति ।

माध्यमिकस्त्वष्टेति विचारः । तत्र तावत् 'माध्यमिकस्त्वष्टेत्याहुः' आचार्याः । केचिन्नैरुक्ता एवं मन्यन्ते । माध्यमिकः इति सञ्ज्ञाप्रसिद्धिः । को हेतुः । 'मध्यमे च स्थाने समाम्नातः' ( निघ० ५ । ४ । २१ ) इति । किंच । एतस्मिन्नेव मन्त्रे व्यपदेशात् । कथम् । य इमे द्यावापृथिव्यौ भूतानि च सर्वाण्यकरोत्तं देवं त्वष्टारं यजेति । त्वष्टुरन्यो यष्टा । स एव पुनः संबोध्यते हे होतरिति मनुष्यहोत्रा । न चान्यः पार्थिवादग्नेर्होतास्ति । तस्माद्यो यष्टा स पार्थिवो य इज्यते स मध्यमस्त्वष्टेति । सर्वशिल्पवत्तामाचार्यो देववर्धकिर्दाक्षायणीपुत्रो द्वादशानामादित्यानामन्यतम इत्यैतिहासिकाः । कोऽत्र निश्चयः । अयमेव 'अग्निरिति शाकपूणिः' । कथम् । यत्तावत् 'मध्यमे च स्थाने समाम्नातः' इत्यकारणम् । 'अयमप्यग्निर्मध्यमे स्थाने समाम्नात' इति ( निघ० ५ । ४ । २३ ) यत्पुनरेतत् 'व्यपदेशात्' इति तदपि समानमिन्द्रेणापि त्वष्टृव्यपदेश इति 'त्वष्टा दधदिन्द्राय शुष्मम्' ( मैत्रा० सं० ३ । ११ । १ ) इति । अपि च । व्यपदेशादन्यत्वमित्यशक्यमध्यवसातुम् । अनन्यत्वेऽपि हि व्यपदेशो भवति । तद्यथा । 'अग्निमग्न आवह' ( तै० ब्रा० ३ । ५ । ४ ) इति । हे भगवन्नग्ने अग्निमावहेति व्यपदेशे सत्यनन्यत्वम् । न हि पार्थिवादन्यः सूक्तभाग्घविर्भाग्वाग्निरस्ति योऽनेन प्रसिद्धहोतृत्वाभिधानेनाहूयेतेज्येत वा । 'स्वं महिमानमावह' ( तै० ब्रा०

*मार्जिनल शीर्षकाः:* कस्त्वष्टा — माध्यमिक इति नैरुक्ताः — द्वादशानामादित्यानामन्यतम इत्यैतिहासिकाः — अग्निरिति शाकपूणिः

---

१ क. ख. घ. झ. ट. ठ ड वा, च. चैं॰ वा. २ ग. ज. मध्यमक॰; च. माध्यमक॰. ३ ग च. ज. माध्यमक॰. ४ ग. ज. 'दित्याना मन्य इत्यै॰, च. 'दित्याना मन्य॰ इ॰ तम. ५ क. ख. घ. झ. ट. ठ. ड. ॰कारणमेतत्, च. ॰कारणम्॰मेतत्. ६ ग. ज. प्रथमे. ७ च. त्वष्टा दर्शेति॰ धदिन्द्राय शुष्ममि. ८ ग. ज. शुष्ममिन्द्रायेति. ९ क. ख. घ. झ. ट. ठ. ड. अग्ने भगवन्. १० च. योदिन्द्रायाच्छुष्मेनेन॰. ११ ग. ज. ॰नाहूयेज्यते च; घ. ॰नाहूयेत इज्यत; झ. ॰नाहूयेत इज्यते, ट. ॰नाहूयेत इज्येत॰ ज्ये. १२ क. ख. ग. ज. घ. झ. ट. ठ. ड. च; च. वा॰ च.

३ । ५ । ४ ) इति स्विष्टकृति विशेषलिङ्गात्स्वमेवात्मनात्मानं विधिवशा-
दाह्वानेन संस्मृत्य द्वैधं त्रैधमनेकधा वा यजति । अन्यद्वाभिनिर्वर्तयति । तद्व
दिहापि कर्मात्मनः परो योऽस्य तैक्ष्णगुणयोग्यात्मा यदधिष्ठितः कर्मात्मा
सर्वरूपाणि पाकेन विकरोति तमधिकृत्योच्यते ' त्वष्टा रूपाणि विकरोति '
इति । तदयमुच्यते मनुष्यहोत्रा ' यज त्वम् ' इति । एवं तावद्व्यप-  ५
देशः शक्यप्रतिसमाधानः । यत्पुनरुक्तं देवशिल्पीति तत्तद्गुणसामान्याद-
षासावपि कौशलातिशयमपेक्ष्योच्यत इत्यदोषः । यथा चाग्निरेव नान्यस्तथा
विशिष्टतरलिङ्गा ' अपरा ' ऋक् ' भवति ' ॥ १४ ॥[4]

---

आविष्ट्यो वर्धते चारुरासु जिह्मानामूर्ध्वः स्वयशा उपस्थे ।  १०
उभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीची सिंहं प्रति जोषयेते (ऋ०
सं० १ । ९५ । ५ ) ॥ आविरावेदनात्तत्त्यो वर्धते चारुरासु
चारु चरतेर्जिह्मं जिहीतेरूर्ध्व उच्छ्रितो भवति स्वयशा आत्म-
यशा उपस्थ उपस्थाने उभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीची सिंहं
प्रतिजोषयेते । द्यावापृथिव्याविति वाहोरात्रे इति वारणी इति वा  १५
प्रत्यक्ते सिंहं सहनं प्रत्यासेवेते ॥ १५ ॥[6]

---

' आविष्ट्यो वर्धते ' इति[7] । ' आविः ' प्रकाशः । स कस्मात् ।

तस्यैव त्वष्टुरन्या ऋक्

' आवेदनात् ' । सर्वस्य प्रकाशनात् । तस्मात्
त्यप् । तस्य तनिता आविष्ट्यः । किंलक्षणः ।  २०
चारुः चरणशीलः अनवस्थितः । किं करोति ।

वर्धते । क । आसु क्रियासु प्रजासु वा प्रसवाय । कस्य । जिह्मानां कुटि-
लचेतसामपि मनुष्याणामवैषम्येणोर्ध्वमेव ज्वलति । कुटिलानामपीन्धना-

---

१ ग. ज. °त्स्वमेवात्मामनात्मानं; घ. झ. ट. ठ. ड. °त्स्वमेवायमात्मना°;  १५
च. °त्स्वमेवा त्म° यमा. २ क. ख. संस्कृत्य; ग. ज. संकृत्य; च. ट. संस्मृत्य°
स्कु. ३ ग. तल्लक्षग°; च. ट. तैक्ष्णगुणे लक्षणाक्रिया. ४ क. ख. ११ ( १४ );
ग. १५; ठ. °वति । इति नि० उ० ष० द्वि० १४; ङ. °वति इति निरुक्तटी-
कायामुत्तरषट्के २ ध्याये १४ खण्डः; च वर्जमितरेष्वङ्को नास्ति. ५ छ. त. द.
' प्रतीची सिंहं प्रतिजोषयेते ' नास्ति. ६ क. ख. १२ ( १५ ); छ. १६ द्वितीयः
पादः; त. १२ अष्टमोध्यायद्वितीयः पादः; द. १२ । इति नैरुक्तस्य उत्तरार्धस्य
द्वितीयाध्यायस्य द्वितीयः पादः. ७ ग. इति° । आ°. ८ क. ख. घ. झ. ट. ठ. ड.
तत्यः; च. त्यर्गे° तत्यः

नामकुटिल ऊर्ध्वमेवेति केचित् । एवमेव वर्धते । स्वयशाः आत्मयशाः परमाश्रित्य यशस्वी । उपस्थे उपस्थाने यत्रासावुपनतस्तिष्ठति आविष्टयः ।

**उभे के**

योऽयमेवमादिगुणयुक्तस्त्वष्टा तस्य त्वष्टुः अग्नेः जायमानादेव अपि बिभ्यतुः । के पुनस्ते ।

**द्यावापृथिव्यौ**

'द्यावापृथिव्याविति' । यथायमतिमहान्वर्धते अवश्यमयमावां धक्ष्यतीति । 'अहोरात्रे इति वा' ।

**अहोरात्रे**

सकृदुपज्वलिते महत्यग्नावनुपशाम्यत्यहोरात्रयोर्व्यवस्थाभावः । तस्मात्ते अपि बिभ्यतुरपि नामायमेवमतिप्रवृद्ध आवामन्यन्तमच्छिन्द्यादिति । 'अरणी इति वा' ।

**अरणी वा**

अवश्यमयमावां जातो यदा तदा धक्ष्यतीत्यतोऽरणी अपि बिभ्यतुः । एवं बिभ्यत्यौ किं कुरुतः। नान्या गतिरस्तीति प्रतीची नाम तं प्रत्यञ्चिते अभिमुखे सिंह सहनम् अभिभवनं प्रतिजोषयेते प्रत्यासेवेते उपकारत्वेन कथं नामायमावां न भस्मसात्कुर्यादिति । एवमयमेवाग्निरिह त्वष्टेति ॥ १५ ॥

त्रयोदशाध्यायस्य द्वितीयः पादः ।

---

तृतीयः पादः ॥

**वनस्पतिर्व्याख्यातस्तस्यैषा भवति ॥ १६ ॥**

'वनस्पतिः' ( १२ ) अवसरप्राप्तः । स पुनरयमभिधेयतोऽभिधानतश्च 'व्याख्यातः' 'एष हि वनानां पाता वा पालयिता वा' ( निरु० ८ । ३ ) इति । 'तस्यैषा भवति' ॥ १६ ॥

---

१ च. °नामाकुटि°. २ च. स्वयशाः ॰ पर° आत्मयशाः. ३ क. ख. आवामन्यतरमु°; ग. ज. घ. ठ. ड. आवामन्यतमम°; च. ट. आवामन्यं (न्य)-तमेमु°. ४ क. ख. घ. झ. ट. ठ. ड. °च्छिद्यादिति. ५ क. ख. घ. झ. ट. ठ. ड. जातो यतो यदा; च. जातो ॰ यदा° यतो. ६ घ. ट. प्राची। नेमेनं प्रत्य°; ग. ज. प्रतीचीं तमेनं प्रत्य,° ठ. ड. प्राचीनमेनं प्रय°. ७ क. ख. घ. झ. ट. ठ. ड. °कारकत्वेन. ८ क. ख. १२ ( १५ ), ग. १३; च. वर्जमङ्का नास्ति. ९ ठ. ड. इति त्रयो°. १० ठ. २ पादः । इति नि० क० उ० द्वि० १५ खण्डः; ड. इति १५ खण्डः. ११ क. ख. १ ( १६ ), छ. १७, त. द. १. १२ क. ख. १ ( १६ ); ग. १७, ठ. °वति । इति निरु० उ० द्वि० ध्याये षोडशः खण्डः । १६ ।, ड °वति । इति निरुक्तटीकायामुत्तरषट्के द्वितीयाध्याये षोडशः खण्डः.

उपावसृज त्मन्या समञ्जन्देवानां पाथ ऋतुथा हवींषि। वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन ( ऋ० सं० १०।११०।१० )॥ उपावसृजात्मनात्मानं समञ्जन्देवानामन्नमृतावृतौ हवींषि काले काले वनस्पतिः शमिता देवो अग्निरित्येते त्रयः स्वदयन्तु हव्यं मधुना च घृतेन च। तत्को वनस्पतिर्यूप इति कात्थक्यो ऽग्निरिति शाकपूणिस्तस्यैषापरा भवति॥ १७॥ ५

---

'उपावसृज त्मन्या समञ्जन्निति'। उपाश्लिष्य अवसृज एतत्पश्वाख्यं पाथः। अनाश्रितविशेषः किमयमग्निर्वा यूपो वेत्युच्यते उत वान्य एव कश्चिदिति। उत्तरेष्वर्धर्चेषु वनस्पतिशब्दः प्रथमासंबन्धात्परोक्ष इह पुनरुपावसृजेति मध्यमपुरुषयोगात्प्रत्यक्षः कोऽप्यभिधीयत इति सुतरामनाश्रितविशेष इति विचारास्पदमित्यतः परं विचारयिष्यति 'तत्को वनस्पतिः' इति। त्मन्या समञ्जन् आत्मना आत्मानम् अस्य पशोः समञ्जन् समभिव्यञ्जयन् विशिष्टेन संस्कारेण स्वाधिकारसंबन्धिना देवानाम् एतत् पाथः अन्नम् एतत् अमुनैव प्रकारेण ऋतुथा ऋतावृतौ काले काले षण्मासादौ हवींषि चैवान्यन्यान्यप्याज्यप्रभृतीनि उपावसृज देवेभ्यो देहीति। किंच। वनस्पतिः शमिता देवो अग्निरित्येते त्रयः। त्रिग्रहणाद्देवशब्दोऽग्निविशेषणमिति दर्शयति। वनस्पतिश्च शमिता चाप्रत्यक्षदेवतो असंदिग्धश्च देवोऽग्निरित्येते त्रयः स्वदयन्तु स्वादुतामापादयन्तु। मधुना च उदकेन। प्रोक्षणाद्यभिप्रायम्। घृतेन च एतदस्माभिः संस्कृतं पाथ इत्येतदाशास्महे। १० १५ २०

(margin: वनस्पतिः)

---

१ छ. त. उपव°. २ छ. त. द. °त्मना मन्या स°. ३ छ. त. द. कात्थक्यो°. ४ क. ख. २ ( १७ ); छ. १८; त. द. २. ५ ग. °न्निति'। उ°; ठ. ड. उपावसृजेति. ६ ग. ज. घ. ट. ठ. ड. 'श्लिषयावसृ°; च. 'श्लिष्या-वसृ° ष्या. ७ क. ख. ग. घ. झ. ट. ठ. ठ. ड. °वेत्युच्यते. ८ ग. ज. °मतस्मा-गिनामुनै'; च. 'मेतममुने° द. ९ क. ख. घ. झ. ट. ठ. ड. °देवते एव अ°; च. °देवते अ° स्व. १० ग. ज. °घृतेन तत्पा'; च. °घृतेन तद° चै. २८

को वनस्पतिः। यूप इति कात्थक्यः

'तत्को वनस्पतिः' इत्येवमादिविचारः। तत्र तावत् 'यूपः इति कात्थक्यः[1]'। कस्मात्। यस्माद्[2]यप्येतस्यामना[3]विष्कृतोऽग्नेर्विशेष आप्रियां[4] तथापीयम् 'अपरा' यूपाञ्जनीया ऋक् या संनिपत्य यूपाञ्जने यूपमभिधानेन संस्करोति (आश्व० श्रौ० ३। १)। तद्यथा॥ १७[5]॥

---

**अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन। यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थे (मैत्रा० सं० ३। ८। १)॥ अञ्जन्ति त्वामध्वरे देवान्कामयमाना वनस्पते मधुना दैव्येन च[6] घृतेन च यदूर्ध्वः स्थास्यसि द्रविणानि च नो दास्यसि[7] यद्वा ते कृतः क्षयो मातुरस्या उपस्थे उपस्थानेऽग्निरिति शाकपूणिस्तस्यैषा परा भवति॥ १८[8]॥**

---

वनस्पतिः

अञ्जन्ति त्वामध्वर इति[9]। विश्वामित्रस्यार्षम्[10]। 'देवेभ्यो वनस्पते' (मैत्रा० सं० ४। १३। ७) इति च। हे यूप अञ्जन्ति त्वां म्रक्षयन्ति त्वाम् ऋत्विग्यजमानाः। क्व। एतस्मिन् अध्वरे यज्ञे। किमिच्छन्तः। देवान् यष्टुं कामयमानाः। केन अञ्जन्ति हे वनस्पते यूप। मधुना दैव्येन। संस्कृतेन घृतेनेत्यर्थः। देवानां यन्मधु। विज्ञायते हि 'देवानां मधु घृतम्' (मैत्रा० सं० ३। ९। ३) इति। किमित्यञ्जन्ति। यदूर्ध्वस्तिष्ठाः। यस्मादक्तस्त्वमूर्ध्वः स्थास्यसि। अञ्जनादनन्तरमुच्छ्रयिष्यन्ति त्वाम्। यस्माच्च ते क्षयः मातुः अस्याः पृथिव्याः उपस्थे उपरि। क्षयो निवासः

---

१ ग. च. ज. काथक्य°; घ. ट काच्छक्य° २ क. ख. ग. ट. ट. ह. 'यस्मात्' नास्ति; च. येस्मात् ३ क. ख घ ठ. ठ. ड. °तस्यामपि-यामना°, च. तस्याऽमना° मापिया. ४ क ख घ ट. ट. ह 'आप्रिया' नास्ति, आप्रियां. ५ क. ख. २ (१७); ग. १८; ठ. यथा। इति निरु० उ० द्वि० सप्तदशः खण्डः; ह. इति निरुक्तटीकायामुत्तरषट्के २ ध्याये सप्तदशः खण्ड ६ क. ख. छ. त. द. 'च' नास्ति. ७ छ. त. द. धास्यसि ८ क. ख. ३ (१८), छ. १९, त. द. ३ ९ ग. इति ॥। वि°; ठ. ह °ोति. १० क. ख. घ. ट. ठ. ड. °र्षम्। पुरस्ताद्देवे, च. र्षम। ... परस्तात्।.

स्थैर्यार्थमत्र[१]: तस्मादवश्यमूर्ध्वः स्थास्यसि । तथा स्थित्वा पशुधारणसमर्थः प्रधानक्रियापूर्वाङ्गं[२] भावयित्वा तद्द्वारेण तत्फलानि द्रविणानि च अवश्यमस्मभ्यं दास्यसीत्यतः समञ्जन्ति । एवमस्मिन् समञ्जने यूपे वनस्पतिशब्दः प्रयुक्तः । तस्माद्यूपो वनस्पतिरिति ।

'अग्निरिति शाकपूणिः' । कस्मात् । इहापि 'उपावसृज' इत्य- ५

अग्निरिति शाकपूणिः

स्यानाविष्कृतवनस्पतिशब्दार्थत्वान्नैवतु यूपपरः[३] । परास्य हविर्वहनलिङ्गलिङ्गिता पुरोरुग्यजतो संनिपत्याग्नेर्वनस्पतिशब्दनाभिधायिका ऋगभवति । तद्यथा[४] ॥ १८ ॥

१०

देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम् । प्रदक्षिणिद्रशनया नियूय ऋतस्य वक्षि पथिभीरजिष्ठैः ( मैत्रा० सं० ४ । १३ । ७ ) ॥ देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण ऋतपर्णापि वोपमार्थे स्याद्धिरण्यवर्णपर्णेति प्रदिवस्ते अर्थं पुराणस्ते सोऽर्थो यं ते प्रब्रूमो यज्ञस्य वह पथिभीरजिष्ठैर्ऋजुतमै- १५ रजस्वलतमैः प्रपिष्टतमैरिति[५] वा तस्यैपापरा भवति[६] ॥ १९ ॥

देवेभ्यो वनस्पते इति[७] । हे वनस्पते अग्ने हिरण्योपमपर्णज्वलित देवेभ्यो हवींपि वक्षि वह । कथमिति ।

अस्यामृचि वनस्पतिरग्निः

प्रदक्षिणित् प्रदक्षिणं देवानां यो हविर्वहनधर्म- २० स्तेन पितृधर्मविपरीतेन । कथं वह । रशनया नियूय निबध्य सुनिपुणम् । यथा न किंचिदप्यत्र हविरनवेक्षितं[८] प्रभ्रंशये-

१ ग. ज. मत्र: २ ग. ज. पूर्वाङ्गभावयितत्वात् तद्द्वा'; च. 'पूर्वाङ्गभावयित्वात् द्वा°. ३ ग. ज. °र्थत्वात्परो यूप°. ४ क. ख. ३ ( १८ ), ग. १९; ठ. °द्यथा । इति निरु० द्वि० १८ खण्डः; ङ. 'द्यथा । इति निरुक्तटीकायामुत्तरषट्के २ ध्याये २५ १९ खण्डः; च.वर्जमेतरेष्वङ्को नास्ति. ५ ङ. थ. ध. ढ. ड. तमैरतप्रपि°. ६ क. ख. ४ ( १९ ). छ. ६०; त. द. ४. ७ ग. इति । हे°; घ ट. ठ. ड. इति । वसिष्ठस्यार्षं । हे°. ८ क. ख. घ. ट. ठ. ड. 'क्षितं धूम्रभूतेन प्र°; च. °क्षितं - प्र° धूम्रभूतेन. ९ ग. ज. ठ. ड. °भ्रश्येत तथा, च. 'भ्रंश्येश्येत्'; ट. भ्रश्येत° स्यं. ३०

तथा । अपि च । ऋतस्य यज्ञस्य पथिभी रजिष्ठैः । य एव प्रसिद्धाः पन्थानो यज्ञस्य हविर्वहनाय देवान्प्रति । ऋजुभ्योऽपि ऋजुतमैः । यैः कालो नातिहीयेत । रजस्वलतमैर्वा अत्यर्थमुदकवद्भिः । ते हि पथिकानां सुखाः । प्रपिष्टतमैरिति सुरूपतमैः प्रहततमस्कैर्यैः असंमोहः स्याद्गच्छतस्तैः वह । न च पुनरविदिते कर्मणि त्वां नियुञ्महे । यतो ब्रूमः । प्रदिवस्ते अर्थम् । चिरंतनमेव ते अयं हविर्वहनाधिकारलक्षणं विषः । 'अयं यो होता' इत्येवमादिमन्त्रेभ्यः 'देवा दधिरे हव्यवाहम्' ( ऋ० सं० १०-५२-३ ) इति । अतो ब्रूमहे वहेति । एवमेतस्मिन्मन्त्रे हविर्वहनयोगाद्वनस्पतिशब्दस्याग्निरभिधेयः ।

अथ 'एषा' । वनस्पतेरग्नेः 'एषापरा भवति' । सा पुनः किमर्थमिति । प्रायोवृत्त्युपदर्शनार्थं बहुषु मन्त्रेष्वग्निर्वनस्पतिरिति ॥ १९ ॥

---

वन॑स्पते रश॒नया॑ नि॒यूय॑ पि॒ष्टत॑मया व॒युना॑नि वि॒द्वान् । वह॑ दे॒वत्रा दि॑धि॒षो ह॒वींषि॒ प्र च॑ दा॒तार॑म॒मृते॑षु वोचः ( मैत्रा० सं० ४ । १३ । ७ ) ॥ वनस्पते रशनया नियूय सुरूपतमया वयुनानि विद्वान्प्रज्ञानानि प्रजानन्वह देवान्यज्ञे दातुर्हवींषि प्रब्रूहि च दातारममृतेषु देवेषु स्वाहाकृतयः स्वाहेत्येतत्सु आहेति वा स्वा वागाहेति वा स्वं प्राहेति वा स्वाहुतं हविर्जुहोतीति वा तासामेषा भवति ॥ २० ॥

---

वनस्पते रशनया नियूयेति । वनस्पतेरेव याज्या ( मैत्रा० सं०

---

१ च. सुर्गाः° स्वाः. २ क. ख. घ. ट. ठ. ड. विनियु°; च. ° नियु° वि. ३ क. ख. घ. ट. ठ. ड. °वहनसंयो°, च. °वहनयो° स. ४ क. ख. घ. ठ. ढ. ड. कामवति. ५ क. ख. ४ ( १९ ); ग. २०, ठ. °रिति । इति निरुक्तटीकायामुत्तरषट्के २ ऽध्याये १९ खण्डः; च. वर्जमितोऽध्वश्लो नास्ति. ६ क. ख. छ. त. द. वहा. ७ क. ख ऽ( २० ); छ. २१, त. द. ५. ८ ग. °यति । ब°, ठ. ड. °रशनयाति.

४ । १३ । ७ )। हे वनस्पते रशनया पिष्टतमया सुरूपतमया अत्यर्थं दृढया एवमादिगुणयुक्तया रशनया नियूय अप्रध्वंसनाय निबध्य वयुनानि स्वाधिकारयुक्तानि प्रज्ञानानि अस्मदुपकाराय विद्वान् जानानो वह एतानि अस्मत्प्रेत्तानि हवींषि अस्य दिधिषो: दातु: यजमानस्य अभिमतफलप्राप्तये देवत्रा देवान् प्रति । प्रदातारम् अमृतेषु वोच: प्रवोच: । कथयस्वैनं दातारम् अमृतेषु देवेषु अमुना यजमानेनैतानि हवींषि प्रत्तानि । एवमाग्निर्वनस्पतिः ।

हविर्वहनात् वनस्पतिरग्निः

यत्पुनरेतदुक्तं यूपाञ्जनीयायां ' यूपे वनस्पतिशब्द: ' ( निरु० ८ । १७ ) इति । अत्र ब्रूमः । अग्निरेवासौ यूपान्तर्गतो यूपात्मना वर्तमानो यूपाञ्जनीयाया वनस्पतिशब्देनोच्यते । तदुक्तम् ' एष हि वनानां पाता पालयिता वा ' ( निरु० ८ । ३ ) इति । यस्मादन्तर्गतो वनानां वनानि न दहति तस्मादेष वनस्पतिः । उक्तं च ' योऽयमृबीसे पृथिव्यामग्निरन्तरोषधिवनस्पतिष्वप्सु तमुभिन्थथु: सर्वगणं सर्वनामानम् ' ( निरु० ६ । ३६ ) इति । सोऽयमग्निरेवानेन वनस्पतिशब्देन यूपाभिधानेन वनस्पतिरभिधेय इत्यदोष: ।

यूपाञ्जनीयायामृचि अपि वनस्पतिरग्निरेव

अपरे पुन: ' अञ्जन्ति त्वाम् ' इत्यधियज्ञात्पृथक्त्वेनाधिदैवतमुत्पाद्य शाकपूणिमतेनाग्निपरत्वमेव वर्णयन्ति । यद्यप्यधियज्ञेऽस्य यज्ञाङ्गाभिवादस्तथापि नाधिदैवतमग्निमभिधातुमस्या. परिहीयते सामर्थ्यं मन्त्रार्थे इति । तत्कथम् । अञ्जन्ति त्वामध्वरे देवयन्त: । हे भगवन्नग्ने अञ्जन्ति त्वाम् आघाराद्याभिराहुतिभि: अध्वरे यज्ञे देवयन्त: देवान्कामयमाना: यस्मात्त्वमूर्ध्व: स्थास्यसि ज्वलिष्यसि । यच्च ते क्षयो मातु. वेद्या: उपस्थे उपस्थाने उपरि उत्तरवेद्या: क्षयो निवास: कृतस्तत्रोपज्वलित: द्रविणानि धनानि यज्ञसिद्धौ यज्ञफलान्यस्माकमवश्यं दास्यसीत्यतस्त्वामाहुतिभिरञ्जन्ति ।

तस्या ऋचोऽग्निपरत्वेनार्थयोजना

---

१ घ. ट ट. ड प्रदत्तानि; च. °त्प्रवृत्तानि, ग. ज. °त्प्रवृत्तानि°. २ ग. ज. °वैषमुता°. ३ ग. ज. °यंत भिन्नसामर्थ्यमिति. ४ ङ. °माघाराद्या इत्यस्यानन्तरमध्यायसमाप्ति यावत् पत्राणि गलितानि.

काण्वेकयूपपक्षेऽपि 'देवेभ्यो वनस्पते' 'वनस्पते रशनया नियूय' इत्यनयोरर्थयोजना। हे वनस्पते वानस्पत्य यूप त्वमुन्नयसे हिरण्यपर्णो ऋतपर्ण वह एतानि हवींषि। अनुत्थिते त्वयि नैतानि उह्यन्त इति त्वमेवैषां वोढेति प्रतीमहे। कथं च पुनर्वह। प्रदक्षिणित्। यथैतानि वोढव्यान्याविर्भविष्यन्ते तेन

'देवेभ्यो वनस्पते' 'वनस्पते रशनया नियूय' इत्यनयोर्ऋचोः यूपार्थे योजना

५

विधिना रशनया एतया त्रिवृता नियूय परिवीय त्वमात्मानम्। ऋतस्य यज्ञस्य ये पन्थानः रजिष्ठाः। प्रदिवः चिरन्तन एवायमर्थस्त्वया हवींषि वोढव्यानीति। विज्ञायते च 'यूपेन वा आहुतयः स्वर्गं लोकं यन्ति' (मैत्रा० सं० ४। ८। ८) इति। वनस्पते रशनया नियूय। हे

१०

वानस्पत्य यूप रशनया पिष्टतमया सुरूपतमया त्रिवृता नियूय परिवीय त्वमात्मानं वह एतानि हवींषि स्वाधिकारप्रयुक्तानि प्रज्ञेयानि प्रजानन् देवत्रा च देवान्प्रति विविधो हविर्दाता अर्थसिद्धये। प्रब्रूहि च एनं दातारम् अमृतेषु देवेष्विति।

१५

'स्वाहाकृतयः' (१३) व्याख्याता। काः पुनस्ताः स्वाहाकृतयः। या यागार्थमाहृयोत्तमे प्रयाजे स्वाहाकारेण संस्क्रियन्ते ताः स्वाहाकृतयः। ननु 'सद्यो जातः' (ऋ० सं० १०। ११०। ११) इत्याग्नेयो मन्त्रः। सत्यमाग्नेयः शौनकस्य। तथापि स्वाहाकृतयः समाम्नाताः। किं कारणम्। 'सद्यो जातः'

२०

१ ग. च. ज. काथस्य. २ ग. ज. हतपर्ण. ३ ग. ज. समुच्छ्रेत. ४ क. ख. ग. ज. °पर्यस्यन्तेन, च. °पर्यस्यन्ते स्यत. ५ ग. ज. तृवृता; च. वृवृता° त्रि. ६ क. ख. घ. ट. ठ. वनस्पते वानस्पत्य, च. वनस्पत्यं यू ते मान पत्य. ७ क. ख. घ. ठ. ड. प्रज्ञानानि. ग. च. यज्ञेयानि; च. प्रज्ञेयानि° ज्ञाना. ८ क. ख. घ ठ. ड. 'च' नास्ति, च. चँ. ९ क. ख. घ. ठ. ड. निर्वक्त°. च. वक्त° निर्व १० क. ख. घ. ट ठ. ड. °ग्नेयो मन्त्रः शौ°, च. °ग्नेय. शौ° मन्त्रः.

३०

यद्यपि 'सद्यो जातः' इति मन्त्र आग्नेयः तथापि 'स्वाहाकृतं हविरदन्तु देवाः' इति मन्त्रान्ते श्रवणात् स्वाहाकृतयः समाम्नाता नाग्नेः

इत्यनुद्रुत्याग्नेः स्तुतिमन्ते[1] 'स्वाहाकृतं हविरदन्तु देवाः' इति सम्प्रदानम् । तत्र देवता[2]: संप्रदानमिति स्वाहाकृतयः समाम्नाता नाग्निरिति ।

अथ स्वाहाकृतयः कस्मात् । स्वाहा स्वाहेत्यनुकीर्तनेनासामुत्तमस्य प्रयाजस्य प्रैषसंस्कारः क्रियत इति स्वाहाकृतयः । अथ 'स्वाहा' इत्येतत् कस्मात् । सु 'आह इति वा' । यदेव संप्रदानदेवतायै 'किंचिदाज्यस्य' इत्यनेन मन्त्रेणाह 'तुभ्यमिदम्' इति तदेव 'सु आह' शोभनमाह । एवमस्य 'सु' पूर्वपदम् 'आह' इत्युत्तरपदम् ।

'स्वाहा' शब्दस्य व्युत्पत्तयः

अथवा । इदमन्यद्ब्राह्मणानुगतं निर्वचनम् । 'स्वा वागाहेति' । विज्ञायते हि । 'त स्वा वागभ्यवदज्जुहु[3]धीति तत्स्वाहाकारस्य जन्म' (मैत्रा० सं० १ । ८ । १) इति । अत्र च स्वशब्दः पूर्वपदमुत्तरपद तथैव । अथ 'वा स्वं प्राहेति' । को विशेषः पूर्वस्मात् । पूर्वपदस्य[4] कारकान्यत्वम् । स्वा वागाहेति कर्तरि स्व प्राहेति कर्मणि । प्रपूर्वं चोत्तरपदं प्रकर्षद्योतनाय । 'स्वाहुतं हविर्जुहोति इति' । यदनेनैव हविर्जुहोतीति तदेव सुष्ठ्वापाद्य यथाभिधानमग्नौ जुहोति[5] । हविःप्रधानोऽत्र निर्देशः । 'तासामेषा भवति' स्वाहाकृतीनाम्[6] ॥ २० ॥

---

**सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः । अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतं हविरदन्तु देवाः (ऋ० सं० १० । ११० । ११) ॥ सद्यो जायमानो निरमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाम्यस्य होतुः प्रदिश्यृतस्य वाच्यास्ये स्वाहाकृतं**

---

१ क. ख. घ. च. ट. ठ. स्तुतिमन्त्रे. २ घ. ट. ठ. देवाः सं° ३ ग. ज. वागवद्ज्जु°. ४ क. ख. घ. ट. ठ. °पदेऽस्य का°. ५ क. ख. घ. ट ठ. जुहोतीति हवि°. ६ क. ख. ५ (२०); ग. २१; ठ. °तीनाम् । इति निरुक्त० उ० द्वि० २० खण्डः; च.वर्जितमितरेष्वङ्को नास्ति.

हविरदन्तु देवा इतीमा आप्रीदेवता अनुक्रान्ता अथ किंदेवताः प्रयाजानुयाजा आग्नेया इत्येके ॥ २१ ॥

---

'सद्यो जात' इति[1]। योऽयमग्निः सद्यो जातो जायमानः अनन्तरमेव व्यमिमीत यज्ञं निर्वर्तयति यज्ञम्। यश्च जातमात्र एव अग्निः देवानाम् अभवत् पुरोगाः पुरोगामी अग्रतोगामी प्राधान्येन। तस्य होतुः देवानामाह्वातुः प्रदिशि प्राच्यां दिशि गतस्य गतस्य प्रणीतेस्योत्तरवेदिकत्वेन वाचि आस्ये। वाचीत्यास्यमेवापेक्ष्य। स्वाहाकृतं स्वाहाकारवता मन्त्रेण प्रक्षिप्तं हविः एतदाज्यम् अदन्तु पिबन्तु देवाः स्वाहाकृतयः इति।

स्वाहाकृतयः

इतिकरणोऽधिकारसमाप्त्यर्थः प्रदर्शनार्थो वा। एता एकादश आप्रीदेवता अनुक्रान्ता इध्माद्याः। ननु द्वादशैयासामनुकीर्तनम्। सत्यमें। अनुक्रान्ता द्वादश। तास्तु एकादश वनस्पत्यन्ता यासामिह विचारः। न तु स्वाहाकृतिषु विचारोऽस्ति। तत्तद्देवतासंस्कारपरत्वादुत्तमस्य प्रयाजस्य यजतो एकादशग्रहणादेकादशप्रयाजविषय एवोत्तरो विचार इत्याचार्याभिप्रायो गम्यते। ततः किम्। यद्यनुक्रान्तास्तान्[12] प्रति विचारो वर्णिष्यते। ननु विचारितमेव 'यज्ञेध्म इति कात्थक्यो[13]ऽग्निरिति शाकपूणिः' ( निरु० ८।५ ) इत्येवमादि। सत्यम्। विचारितमेतत्। स तु प्रत्येकमाप्रीदेवतापदेषु विचारः। अयं तु सामान्यप्रक[14]रणगत आसामेव विचारोऽनिश्चितानां निश्चयावधारणार्थः। निश्चितेन हि

एवमेता एकादश आप्रीदेवताः

१ ङ. थ. ध. ट. 'देवा यजन्तीर्ति मा°. २ क. ख. ६ ( २१ ), छ. २१ ख. द. ६. ३ ग. इति॰ । यो°. ४ क. ख. घ. ट. ट. तस्यास्य हो°, च. तस्य हो° अस्य. ५ ग. ज. तस्योत्तर°. ६ घ. ट. ठ. द्वादशानामासामनु°; च. द्वादशायासामानु° नामा. ७ ग. ज. सत्यमनुक्रान्तानां ता एकादश° च. सत्यं तु अनुक्रान्तानि द्वादश यासामनुकीर्तनं ता°,. ८ च. ता ° ए °स्तु. ९ ग. ज. °वनस्पतयः। न तु°. १० ग. ज. °पदत्वा°. ११ ग. ज. यजत। ए°, च. यजत। ए° तो. १२ ग. ज. °क्रान्ताः प्रति°, च °क्रान्तास्तान. १३ ग. च. ज. काथक्या°. १४ क. ख. घ. ट. ठ. सामान्य प्र°, च. सामान्येप्र°कराः. १५ क. ख. घ. ट. ठ. °गतश्चासा°; च. गत आसा° श्चा.

व्यवस्थितेन विधिना भवितव्यम् । अधियज्ञे यजतौ देवताध्यानात्क्रम वश्र-
वणात्तदेतद्विषयमनिश्चितम् ।

'अथ' इति । विचाराधिकारवाचिना अथशब्देन विचारमधिकृत्यो-
पोद्धन्ति 'अथ किंदेवताः प्रयाजाः' इति । का प्रयाजेषु देवतेति । प्रयाजा इति आश्रुता- दिर्यजमानोपस्थानान्तः क्रियाकलाप उच्यते । प्रयाजेषु हूयमानेष्विति प्रसिद्धत्वात् । कुतः संशयः । नानादेवता एव प्रयाजप्रवादाः । आप्रीणां वषट्कारेण संबन्धात् सर्वस्य चान्यस्य समञ्जसो विशेषभावः । एव सति विप्रतिपत्तिराचार्ययोः कात्थक्यशाकपूण्योः । तस्माद् व्यवस्थाप्यत इति ।

किंदेवताः प्रयाजाः

५

१०

कथं नानादेवताः प्रवादा इति । तत्र तावत् 'आग्नेया इत्येके' । कुतः । 'आग्नेया वै प्रयाजा आग्नेया अनुयाजाः' इति च ब्राह्मणम् । तत्र ये एतस्मिन्नर्थे सौचीकेनाग्निना विश्वैश्च देवैः परस्परसंवादे दृष्टे ऋचौ । स हि किल सौचीकोऽग्निर्विश्वैर्देवैः सह समूदे । ते तमुचुरेहि नो हवींषि वहेति । स तानुवाच यज्ञे भागो मेऽस्त्विति । ते तं प्रत्यूचुर्वृणीष्वेति । सोऽनयर्चा वव्रे ॥ २१ ॥

आग्नेया इत्येके

१५

---

**प्रयाजान्मे अनुयाजांश्च केवलानूर्जस्वन्तं हविषो दत्त भागम् । घृतं चापां पुरुषं चौषधीनामग्नेश्च दीर्घमायुरस्तु देवाः ( ऋ० सं० १० । ५१ । ८ ) ॥ तव प्रयाजा अनुयाजाश्च केवल ऊर्जस्वन्तो हविषः सन्तु भागाः । तवाग्ने यज्ञोऽयमस्तु सर्वस्तुभ्यं नमन्तां प्रदिशश्चतस्रः ( ऋ० सं० १० । ५१ । ९ ) आग्नेया वै प्रयाजा आग्नेया अनुयाजा इति च ब्राह्मणं छन्दोदेवता इत्यपरं छन्दांसि वै प्रयाजाश्छन्दांस्यनुयाजा इति च**

२०

---

१ ग. ज. यजने. २ ग. ज. प्रयाजवादाः. ३ क. ख. ग. ज. घ. ट. ठ. विशेषभावः. ४ ग. च. ज. काथक्य;° घ. ट. काच्छक्य°. ५ क. ख. घ. ट. ठ. °वताः प्रयाजप्रवादाः. ६ घ. झ. ट. च. °स्पर सं°. ७ च विश्वेदे°; ठ. विश्वैश्च देवै°. ८ क. ख. ६ ( २१ ); ग. २२; ठ. इति निरुक्तटीकायामत्तरषट्के द्वितीयाध्याये एकविंशतिः खण्डः, च. वर्जमितरेष्वङ्को नास्ति. ९ उ. २.

२५

ब्राह्मणमृतुदेवता इत्यपरमृतवो वै प्रयाजाः पशवोऽनुयाजा इति च ब्राह्मणं प्राणदेवता इत्यपरं प्राणा वै प्रयाजा अपानो अनुयाजाः ( शत० ब्रा० ११ । २ । ६ । २७ ॥ कौषी० ब्रा० ७ । १ ) इति च ब्राह्मणमात्मदेवता इत्यपरमात्मा वै प्रयाजाः प्रजा अनुयाजाः ( तैत्ति० सं० ६ । १ । ५ ) इति च ब्राह्मणमाग्नेया इति तु स्थितिर्भक्तिमात्रमितरत्किमर्थं पुनरिदमुच्यते यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्निति ह विज्ञायते ( ऐ० ब्रा० ११ । ८ ) । तान्येतान्येकादशाप्रीसूक्तानि तेषां वासिष्ठमात्रेयं वाध्यश्वं गार्त्समदमिति नाराशंसवन्ति मैधातिथं दैर्घतमसं प्रैषिकमित्युभयवन्त्यतोऽन्यानि तनूनपात्वन्ति तनूनपात्वन्ति ॥ २२ ॥

---

प्रयाजानुयाजा आग्नेया इत्यर्थे ऋचौ

अग्निः प्रयाजानुयाजादि देवान्ययाचे

प्रयाजान् मे अनुयाजांश्चेति । हे विश्वेदेवाः प्रयाजान् मम केवलान् अनन्यदेवतासंपृक्तान् । अथवा । निरवशेषान् । ऊर्जस्वन्त रसवन्त सर्वस्य हविषः अवधार्य दत्त भाग यज्ञे । घृतं चापां पित्र्यमहं प्रथममाज्यभागे । पुरुषं चौषधीनाम् औषधिमयाना च हविषा मम पुरुषं पुरोडाशम् । एवं नित्यं भागः स्यात् । ममाग्नेः हे देवाः दीर्घमायुरस्तु । यथा मम पूर्वे भ्रातरो हविर्वहन्तो वषट्कारप्रवृक्णा मम्रुर्नाहं तथा मृषीयेत्यभिप्रायः । तत्र पूर्वेऽग्नय प्राग्यव्यं देवेभ्यो वहन्तः तान् वषट्कारः प्रावृक्तेति । एवमुक्तास्तेऽनयोत्तरयर्चानुजज्ञिरे तस्य त भागम् । तत्र प्रयाजा अनु-

---

१ ङ. थ. ध. ठ. °याजा ऋतवोऽनुयाजा इति च ब्राह्मण पशुदेवता इत्यपरं पशवो वै प्रयाजाः पशवोऽनु°. २ ङ. थ. ध. ठ. प्राणा वा अनु°. ३ ङ. थ. ध. आत्मा वा अनु. ४ त. नरा° ना, ध. नरा°. ५ क. ख. ७ (२२), त. द. ७. ६ ग. °श्चेति । हे°. ७ च. °ओष°. ८ क. ख. च. झ. ट. ठ. नित्यं मम भागः. ९ क. ख. त्रयः, च. ट. तत्र त्रयः. १० ग. ज. प्राकृतश्चेति, च. प्रावृक्तेति° श्चेत, ट. प्रावृक्तेति° श्चेति. ११ ठ. प्रयाजा इति । यथा°.

याजाश्च केवल ऊर्जस्वन्तो हविषः सन्तु भागाः । यथा तथोक्तम् ।

ते याचितं सर्वमग्नये ददुः

अपि च किं बहुना । तवाग्ने यज्ञोऽयमस्तु सर्वः । त्वदधीन एवायं यज्ञः सर्वोऽस्तु । किंच । तुभ्यं नमन्तां प्रदिशश्चतस्रः । प्रदिशोऽन्तर्भूता दिक्ष्वेव । दिग्निवासीनि[1] भूतानि भोग्यत्वेन कल्पन्तामित्यर्थः । एवं तावदाग्नेयाः ।

नानादेवता इत्यपरे

अथ नानादेवताः प्रयाजा इति यदुक्तं तदनुप्रदर्श्यते । ‘ छन्दोदेवताः ’ इत्येवमादि । तत्कोऽत्र निश्चयः । ‘ आग्नेया इति तु स्थितिः ’ । तुशब्दोऽन्यप्रवादनिवृत्त्यर्थः । केन विशेषहेतुनाग्नेयत्वमवध्रियते[2] । ब्राह्मणं[3] मन्त्रश्चोभयमाग्नेयत्वे । ब्राह्मणान्येव केवलान्यन्यदेवतात्वे ।

आग्नेया इति तु स्थितिः

एतस्माद्विशेषहेतोरवधारयाम[4] आग्नेया इति ।

यां देवतामुद्दिश्य हविर्गृहीतं तां मनसा ध्यायेदिति ब्राह्मणानुशासनादयं देवताविचारः

अथ किमन्यदनूतमभवति[5] । ‘ भक्तिमात्रमितरत् ’ छन्दोदेवता इत्येवमादि । तदुक्तम् । ‘ बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति[6] ’ (निरु० ७ । २४) । ‘ किमर्थं पुनरिदमुच्यते ’ । किं विचारेण[7] प्रयोजनमिति । ‘ यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्निति ह विज्ञायते ’ । नानभिसंहितं[8] हविर्देवतामुपेयात्[9] । एवमर्थः सर्वत्र विचारः । तथाहि दर्शितं ‘ यस्तु सूक्तं भजते यस्मै हविर्निरूप्यते ’ (निरु० ७ । ११) इति । मनसेति किमर्थम् । केन वाऽन्येन ध्यायेदिति ।

---

१ क. ख. घ. झ. ट. ठ.° दिङ्निवा°; ग. दिग् दिशिवासीनि; ज. दिग् दिग्वासीनि. २ ग. ज. °मवधूयते, च °मदंध्रयते° वध्रि, घ. झ. ठ. °यत्वं मन्यते; ट. °यत्वमन्वेते° त्वमवध्रिय. ३ ग. च. ज. झ. ठ. ब्राह्मणमन्त्र°. ४ क. ख. °रवधारयामः; घ. झ. ट. °रवधराम आ°; च. °रवां दीधराम° व. ५ घ. झ. ट. ठ. °नूतमेव भवति, च. °नूतमेवाति° व भव ६ क. ख. घ. झ. ठ. ट. भवन्तीति. ७ क. ख. ग. ज. विचारणे. ८ ग. नामभिहितं; ज. नमभिहितिं, च. नाऽभिसं° न. ९ क. ख. घ. झ. ट. ठ. हविर्देवतां देवताम्°, च हविर्दे व° व तायै दे. २८

शृणु । सर्वेन्द्रियविषयप्रत्याहृतेन मनसा यथाश्रुतगृहीतभावितानां देवतानां नानालिङ्गकर्त्रत्वेष्वात्मनो हृदये विज्ञानमयीमालिख्य प्रतिकृतिं लक्ष्यीकृत्यानन्यमनास्तत्कालमधीत्य याज्या वषट्कारिष्यंस्तदनुचिन्तनसंस्कारसंतानैकरसेन मनसा हविष्यभिसंधाय देवतां ध्यायेदित्यस्य विशेषस्य द्योतनार्थं प्राप्तस्यापि मनसो ग्रहणं मनसा ध्यायेदिति । ब्राह्मणं चैतदर्थमेवोक्तमाचार्येण । अत्र हि विशेषतः पुरुषार्थोऽवबद्ध इति । अतोऽन्यथा हि देवताचिन्तनशून्यं कर्मैतस्मिन्प्रधानकाले विकलमित्यफलमेव स्यात् । एष एव ध्यानकालो यजमानस्याहुतिप्रक्षेपकाले । न तथान्येषामध्वर्युप्रभृतीनामाहुतिप्रक्षेपव्यापृतानाम् । लक्षणं हि होति ।

ब्राह्मणवाक्ये मनसापदस्य प्रयोजनम्

५

१०

' इतीमान्येकादशाप्रीसूक्तानि ' अनुक्रान्तानि । दशाथा दशतयीषु । तेषामेकादशं प्रैषिकमिति । इतीमानि । उपप्रदर्शनार्थ इतिकरणः । एष एव तेष्वपि निर्वचनविचारावधारणकल्पः । यस्तु तद्गतः कश्चिद्विशेषः स उच्यते । ' तेषां वासिष्ठमात्रेयम् ' इत्येवमादि । वसिष्ठेन दृष्टं वासिष्ठम् । अत्रिणा दृष्टम् आत्रेयम् । वाध्र्यश्वेन दृष्टं वाध्र्यश्वम् । गृत्समदेन दृष्टं गार्त्समदम् । कः पुनरसौ विशेषः । ' इति ' एतानि ' नाराशंसवन्ति ' । अथ पुनः ' मैधातिथं दैर्घतमसं प्रैषिकमिति ' । मेधातिथिना दृष्टं मैधातिथम् । दीर्घतमसा दृष्टं दैर्घतमसम् । प्रैष इति ग्रन्थः । तेषु यत्प्रैषिकमिति तदिहोपवर्णितम् । एतानि ' उभयवन्ति ' । ' अतोऽन्यानि ' यानि चत्वारि अवशिष्यन्ते तानि ' तनूनपात्वन्ति ' । अत्र नाराशंसयाजिनो वसिष्ठा-

आप्रीसूक्तान्येकादश

तेषु कानिचिन्नाराशंसवन्ति

१५

कानिचिदुभयवन्ति शेषाणि तनूनपात्वन्ति

२०

---

१ क. ख. ग. ज. च. झ. ट. ठ. द्योतनायार्थप्राप्त॰ घ. द्योतनार्थं॰ या. २ घ. ह. ३ ग. घ. ज. चिन्तशून्यं. ४ क. ख. च. झ. ट. ठ. एव च ध्या॰; ग. एष चध्या॰; च. एव ॰ ध्या॰ घ. ५ क. ख. च. झ. ट ठ ॰काले, घ. ॰काले.॰ ले. ६ क. ख. घ. झ. ट ठ. ॰मानीति ७ क. ख. च. झ ठ. ठ. ॰नार्थमिति॰. ८ ग. ज.॰ स.॰ नास्ति.

दयः । तेभ्योऽन्ये तनूनपाद्याजिनः । तान्येतान्यमुना विभागेनावस्थितानि एकादश एकनिर्वचनावधारणानि ।

अतोऽन्यानि दाशतयीदाप्रीसूक्तवर्गात् सौत्रामण्यां त्रीणि ( मैत्रा० सं० ३ । ११ । १ ॥ ३ । ११ । ३ ॥ ३ । ११ । ११ ) आग्न्वश्वमेधयोरेकैकम् ( मैत्रा० सं० २ । १२ । ६ ॥ ३ । १६ । २ )। तत्र यानि सौत्रामण्या तान्यनाग्नेयानीति न परिसंख्यातानि प्रैषिकेऽननुक्रमणात्तेषाम् । आग्निकाश्वमेधिके तु कर्मान्तरेऽपि विनियुज्येते न केवलमाप्रीषु । इष्टकोपधाने " आग्निकमुत्तमायां चितौ ' समास्त्वाग्न ऋतवो वर्धयन्तु ' ( मैत्रा० सं० २ । १२ । ५ ) इति " ' द्वादशाप्रीरुपैषु ' इति । हस्तग्रहणमाश्वमेधिकं यजमानस्य ' समिद्धो अञ्जन्कृदरं मतीनाम् ' ( मैत्रा० सं० ३ । १६ । २ ) इति ' आप्रीभिर्हस्तं गृह्णाति ' इति । अत आप्रीकार्ये प्रयोगव्यभिचाराद्दाप्रीसूक्तवर्गमध्यपठिते अपि न परिसंख्याते आचार्येण । सौत्रामण्यां तु प्रथमस्य पशोर्या द्वितीया आप्री तस्यामेकस्यामेव च नराशंसतनूनपातौ ' नराशंसः प्रति शूरोऽग्निमानस्तनूनपात्प्रति यज्ञस्य धाम ( मैत्रा० सं० ३ । ११ । १ ) इति । तत्र नराशंसयाजिनां वसिष्ठप्रभृतीना यागे निपातवत्तनूनपात्पदमनर्थकं पादपूरणमात्रेणोपकारं मन्त्रे करोति । तथा तनूनपाद्याजिना नराशंसपदम् । एव एवान्यत्राप्येवंविधे देवतापदे प्रयोगादन्यथाभाविनि देवतापदे निपातकल्पः । तद्यथा । अश्वहविष्यश्वप्रतिग्रहप्रायश्चित्ते ( मैत्रा० सं० २ । ३ । ३ ॥ काठ० सं० १२ । ६ ) ' यदद्य सूर्य ' इति सौर्यावारुणाना याज्यानुवाक्ये ( मैत्रा० सं० ४ । १२ । ११ ॥ ऋ० सं० ७ । ६० । १ )। तयोर्मित्रार्यम्णोर्यानि लिङ्गानि तानि निपातवद्भवन्ति । यथा

अन्येषामाप्रीसूक्तानां यास्केन निर्देशो न कृतः । तस्य कारणानि

---

१ ग. ज. तेभ्योन्योवाजेन तान्ये°, घ. तेभ्योऽप्यन्ये. २ ग. °तव्याद्रा. ३ घ. °रुपेषिव°. ४ ग. ज. अस्र°. ५ घ. झ. ठ. शंसोमिषा°; ट. शसोमिमा° शूरो. ६ ग. ज. °याजिना नराशसपदम् । एव एवान्यवरु नूनपा°. ७ क. ख. घ. झ. ट. ठ. °पदानां निपा°; च. °पदानि° दाना. ८ क. ख. घ. झ. ट. ठ. ड. सौर्यमित्रावरुणानां, ग. ज. °सौर्यावरुणानां, च सौर्यावरुणाना° °मित्रा°.

'प्र चित्रमर्कं गृणते तुराय' ( ऋ० सं० १ | ६६ | ९ ) इति । अत्र संबोधनान्तमप्यग्निपदं नैपातिकं केवलमारुते हविषि (आश्व०श्रौ०३.७) । चातुर्मास्येषु वैश्वदेवप्रयोगे पुनस्तदेवार्थवत् ( आश्व० श्रौ० २ | १६ ) । 'आग्निमारुतीं पृश्निमालभेत वृष्टिकामः' ( मैत्रा० सं० २ | ५ | ७ )
५ इत्यत्र पशुप्रयोगे । एष एव देवतादविचारः ।

यस्मिन् पक्षे सर्वे आग्नेयाः प्रयाजाः 'प्रयाजान्मे अनुयाजांश्च केवलान्' ( ऋ० सं० १० | ५१ | ८ ) इति मन्त्रदर्शनात्तस्मिन्पक्षे 'तिस्रो देवीः' इत्यत्र भारती द्युस्थाना मध्यस्थाना सरस्वती पृथिवीस्थाना इडा इति स्म तद्देवतात्रयं दुःप्रतिसमाधानम् । स्थानान्तरापत्तिस्तुल्या चाग्निरेवैता देवता इति प्रतिसमाधानम् । सौत्रामण्यां तृतीये पशौ 'समिद्धो अग्निः समिधा' इत्येता आप्रिय. (मैत्रा० सं० ३ | ११ | ११ ) । तासु तनूनपादिकः 'तनूनपाच्छुचिव्रतः' इति ( का० ठ० सं० १८ | १० ) । नास्त्येव नराशंसः । तत्र नराशंसयाजिनां सौत्रामणीप्रयोगे कथं प्रयोगः । किं तनूनपादेव प्रयुज्यतामुतान्यतः कुतश्चिदार्षात्सूक्तादाहृियता नराशंस इति न्यायविदो मेधाविनः समनुगच्छन्ते विशेषमिति ॥ २२ ॥

सर्वे प्रयाजा आग्नेया इति पक्षे 'तिस्रो देवीः' इत्यस्य आग्नेयत्वेन विवरणं कथमपि क्रियेत

१५ सौत्रामण्यां प्रतिसमाधानं प्रायोऽशक्यम्

२०

इति निरुक्तवृत्तौ त्रयोदशोऽध्यायः समाप्तः ।

---

१ घ. झ. ट ठ. बह्वृचः प्र°. २ क. ख. घ. झ. इला इति; ट. ठ. इळा इति. ३ म. ज. 'तत्' नास्ति. ४ क. ख. घ. झ. ट. ठ. समिधा सुसमिद्धो वरेण्य इत्येते. ५ क. ख. ट. झ. ट. °पादिकः; च. °पादिकः° ते. ६ क. ख. ध. झ. ठ. °नपाच्छुचिव्रत इत्येतदेव प्र°, च. °नपादेव° च्छुचिव्रत इत्येत. ७ क. ख. ७ ( २२ ), ग. २३ । त्रयोदशे तृतीयः पादः । इति, श्रीजम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गकृतौ ऋज्वर्थाया निरु° ठ. °मिति । इति जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तटीकायां निदष्टाध्यायपञ्चकेन सह नैरुक्तत्रयोदशाध्यायः । इति निरु उत्तरषट्के द्वि० २२ खण्डः समाप्तिमगमत्, घ. ट ज. झ. अङ्को नास्ति ८ घ. झ. ट. °इति श्रीनिरुक्त°. ९ ग. 'समाप्तः' नास्ति.

३२

* द्रविणोदाः कस्माद्द्रविणोदाद्द्रविणसोमेद्यन्तुतेऽर्थोत आमियः समिद्धो अद्यतनूनपान्नराशंसस्याजुह्वानः प्राचीनं व्यचस्वतीरासुष्वयन्ती दैव्याहोतारा नो यज्ञं यइमं आविष्टयो वनस्पतिरुपावसृजाज्जन्तिदेवेभ्यो वनस्पते वनस्पतेरशनया सद्योजातः प्रयाजान्मेद्वाविंशतिः ॥

इति निरुक्त उत्तरषट्के द्वितीयोऽध्यायः ॥ [२]

---

* छ. त. द्. खण्डशृङ्खला नास्ति.

१ क. ख. नैरुक्ते; छ. इति निरुक्ते अष्टमोऽध्यायः; त. द्. इत्यष्टमोऽध्यायः समाप्तः; न. अष्टमोऽध्यायस्य तृतीयः पादः । इत्यष्टमोऽध्यायः समाप्तः; उ. ' इति० ध्यायः ' नास्ति.

# अथ नवमाध्यायस्य

## प्रथमः पादः ।

ॐ । अथ यानि पृथिव्यायतनानि सत्त्वानि स्तुतिं लभन्ते तान्यतोऽनुक्रमिष्यामस्तेषामश्वः प्रथमागामी भवत्यश्वो व्याख्यातस्तस्यैषा भवति ॥ १ ॥

---

अथ यानि पृथिव्यायतनानि सत्त्वानीत्येवमादि । 'अथ' इति

**पृथिव्यायतनानां सत्त्वानामनुक्रमणम्**

विशेषाधिकारे । प्रकृतार्थादनन्तरमधिकरोति । 'पृथिव्यायतनानि' पृथिव्याश्रयाणि 'सत्त्वानि' द्रव्याणि च तेषामप्यत्र विवक्षितत्वात् । 'स्तुतिं लभन्ते इति, समाम्नातानि । 'तान्यतः' परम् 'अनुक्रमिष्यामः' । व्याख्यास्याम इति शेषः । पूर्वस्मादाप्रीगणाद्विलक्षणोऽयमश्वादिगण इति पृथगधिकारवचनम् । पृथिव्यायतनत्वाविशेषात्सर्पोलूखलकुसुम्भकप्रभृतीनामप्यत्रैवान्तर्भावः । तान्यपि हि स्तुतिं लभन्ते लक्षण वेदमिति । तेषां युगपदभिधानासंभवात्क्रमोऽर्थादङ्गीकृतो भवति । सति च क्रमे न मुख्यातिक्रमो न्याय्य इत्यतो ब्रवीति । 'तेषामश्वः प्रथमागामी भवति इति । स पुनः किमर्थः

**तेषामश्वः प्रथमः**

प्रथमागामी । पुरुषानन्तरं जन्मेति हि विज्ञायते । 'तस्या आहुत्याः पुरुषोऽजायत द्वितीयामजुहोत्ततोऽश्वोऽजायत' ( मैत्रा० सं० १ । ८ । १ ) । विशिष्टे चाश्वमेधलक्षणे कर्मणि विशिष्टोऽस्याङ्गभाव इति । स च पुनरयं 'व्याख्यातः' ।

---

१ क. ठ. ड. हरिः ओम्, छ. ॐ, थ. ॐ २ म्, ध. हरिः ॐ म्. २ ग. ज. यानि पृथि°. ३ ग. ज. °म्नातान्यतः प°. ४ च. ज. व्याख्यास्ये°. ५ क. ख. च. झ. ट. ठ. ड. कुषुम्भ°; ग. ज. कुशुम्भ°. ६ क. ख. घ. झ. ट. ठ. ड. चेद°. ७ ग. ज. क्रमेण मु°; च. क्रमेण मु° न. ८ ग ज. न्याय्य त तस्या आहुत्याः°. ९ क. ख. किमर्थं. १० क. ख. घ. झ. ट. ठ. ड. °नन्तरं जन्म°. ११ क. ख. च. झ. ट. ठ. ड. °ख्यात एव प्राक्

‘ अश्नुते अध्वानं महाशनो भवतीति वा ’ (निरु० २।२७) इत्यत्र ।
‘ तस्यैषा ’ प्राधान्यस्तुतिरश्वस्तोमीय एव ॥ १ ॥

---

अश्वो वोळ्हा सुखं रथं हसनामुपमन्त्रिणः । शेपो रोमण्वन्तौ भेदौ वारिन्मण्डूक इच्छतीन्द्रायेन्दो परि स्रव ( ऋ० सं० ९ । ११२ । ४ ) ॥ अश्वो वोळ्हा सुखं वोळ्हा रथं वोळ्हा सुखमिति कल्याणनाम कल्याणं पुण्यं सुहितं भवति सुहितं गम्यतीति वा हसैता वा पाता वा पालयिता वा शेपमृच्छतीति वारि वारयति मा नो व्याख्यातस्तस्यैषा भवति॥ २ ॥ ५

---

१०

मा नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतः परि ख्यन् । यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि ( ऋ० सं० १।१६२।१ )॥ यद्वाजिनो देवैर्जातस्य सप्तेः सरणस्य प्रवक्ष्यामो यज्ञे विदथे वीर्याणि मा नस्त्वं मित्रश्च वरुणश्चार्यमा चायुश्च वायुरयन इन्द्रश्चोरुक्षयण ऋभूणां राजेति वा मरुतश्च परिख्यञ्छकुनिः शक्नोत्युन्नेतुमात्मानं शक्नोति नदितुमिति वा शक्नोति तकितुमिति वा सर्वतः शंकरोऽस्त्विति वा शक्नोतेर्वा तस्यैषा भवति ॥ ३ ॥ १५

---

मा नो मित्र इति । दीर्घतमस आर्षम् । अश्व एवाहूयतेऽनेन सूक्तेन । २०

अश्वः

यद्वाजिन इति । यत् यानि वाजिनः अस्याश्वस्य देवजातस्य देवैर्जनितस्य वसुभिरादित्यात् ।
‘ सूरादश्वं वसवो निरतष्ट ’ ( ऋ० सं० १।१६३।२ ) इति । अग्नेर्वा

---

१ ग. २; घ. ‘एवं । मा नो°; ठ. ड. °वाति । इति उत्तरषट्के तृतीये अध्याये प्रथमः खण्डः । अश्वो वोळ्हेति महाराष्ट्रपाठः । मा नो°; ड. एव । इति उत्तरषट्के ३ ध्याये १ खण्डः । अश्वो वोळ्हेति महाराष्ट्रवैदिकपाठः । २ । इति उत्तरषट्के तृतीयेऽध्याये २ खण्डः समाप्तः । मा नो°. २ क ख. छ. त. द. वोल्हा. ३ छ. त. द. ‘ रथं वोळ्हा ’ नास्ति. ४ छ. त. द. सुहितं भवति मा नो व्याख्या°; ठ. ड. सहितं. ५ ठ. ड. ‘२’ नास्ति. ६ छ. त. द. ‘विदथे°’ नास्ति. ७ त. वायु° श्चा; ध. वायु°. ८ ग. इति । दी°. ९ ग. ज. °नितस्य च सुरभिरादि°. १० ग. शूरा° सू; घ. ज. शुग°. २५ ३०

प्रजापतिना। 'द्वितीयामजुहोत्ततोऽश्वोऽजायत' (मैत्रा० सं० १।८।१) इति। सखेः सरणस्य प्रवक्ष्यामः प्रकर्षेण वक्ष्यामः। विदथे एतस्मिन्यज्ञे वीर्याणि गुणान्। किं तेषाम्। मा नः मास्माकं तान्युच्यमानानि मित्रो वरुणः अर्यमा वायुः इन्द्रो मरुतः परिख्यन् मा चक्षीरन्[1]। किं तर्हि। अनुमन्यन्ताम्। 'आयु.' अत्र 'वायुः अयनो' वकारलोपेन। स कस्मात्। अयनात्। एति ह्यसौ विश्वम्। इन्द्र ऋभुक्षाः। स हि उरुक्षयणः[2]। उरावन्तरिक्षे क्षियति निवसति। अथवा। क्षियतिरैश्वर्यार्थः[3]। कस्येष्टे। 'ऋभूणां' देवानां 'राजेति' च तेषामीष्टे। एवमृभुशब्दात्पूर्वपदं क्षियतेरैश्वर्यकर्मण[4] उत्तरपदम्।

'शकुनिः' (निघ० ५।३।२) कस्मात्। स हि 'शक्नोत्युन्नेतुमात्मानम्'। ऊर्ध्वं नेतुं लघुत्वात्। शके. पूर्वपदं नयतेरुत्पूर्वेभ्योत्तरपदम्। अथवा।

शकुनिः कस्मात्

नदतेस्तकतेर्वा शब्दार्थगत्यर्थयोर्वोत्तरपदं विकल्पेन। अथ 'वा'। 'सर्वतः शंकरः' अयमस्माकम् 'अस्त्विति' सर्वेण नित्यमाशास्तिव्यो भवति। एवं सति 'शम्' इति सुखनाम पूर्वपदं करोतेरुत्तरपदम्। 'शक्नोतेः' एव वैकस्मात्। किमसौ शक्नोति। यदस्य योग्यं शकितुम्। 'तस्यैषा' प्राधान्यस्तुतिः 'भवति'॥ ३[5]॥

---

कनि॑क्रदज्ज॒नुषं॑ प्रब्रुवा॒ण इय॑र्ति॒ वाच॑मरि॒तेव॒ नाव॑म्। सु॒मङ्ग॒लश्च॑ शकुने॒ भवा॑सि॒ मा त्वा॒ काचि॑दभि॒भा विश्व्या॑ विदत् (ऋ० सं० २।४२।१)॥ न्यक्रन्दीज्जन्म प्रब्रुवाणो यथास्य शब्दस्तथा मामेरयति वाचमीरयितेव नावं सुमङ्गलश्च शकुने भव कल्याणमङ्गलो मङ्गलं गिरतेर्गृणात्यर्थे गिरत्यनर्थानिति वाङ्गलमङ्गवन्मज्जयति पापकमिति नैरुक्ता मां[6] गच्छत्विति वा मा च त्वा काचिदभिभूतिः सर्वतो विदद्बुध्नमदमथमभ्युत्थितं कपिञ्जलोऽभिवयाञ्चे तदभिवादिन्येषभवति ॥ ४ ॥

---

१ ग. ज. मा च परिचक्षीरन्. २ ग. ज. °भुक्षा स्म ह्युरु°. च. °भुक्षा स्मै ह्यु रु° स ३ ग. ज. र्यार्थः। क°. ४ ग. ज. °यतिरे°. ५ ठ. °वति। इति निरुक्तवृत्तरषट्के द्वि० तृतीयः खण्डः, ड. °वति। इति निरुक्तटीकायामुत्तरषट्के तृतीयाध्याये तृतीयः खण्डः ६ ड थ ग. ठ. ठ मा.

कनिक्रदज्जनुषं प्रब्रुवाण इति । गृत्समदस्यार्षम् । शकुनिरुतश्रवणे जपे विनियोगः ( आश्व० गृ० ३ । १० । ९ ) । कनिक्रदत् न्यक्रन्दीत् । पुनःपुनः भृशं वा क्रन्दसीति मध्यमपुरुषेण नुतिरुत्तरमर्धर्चमपेक्ष्य । जनुषं प्रब्रुवाणः आत्मनोऽभिजातिं कथयन्निव इयर्ति वाचम् इयर्ति वाचम् । कथमीरयसि । नाविक इव पुनःपुनः नावं पारगमनाय । यस्त्वमेवमीरयसि स त्वं सुमङ्गलश्च हे शकुने प्रशस्तमङ्गलः अस्माकं भव । वयमपि च तुभ्यमित्याशास्महे । मा त्वा काचिदभिभा अभिभूतिः परोपद्रवः विश्व्या सर्वप्रकारा सर्वतो विदत् विदत्विति । ' यथास्य शब्द-स्तथा नाम ' इति । तदिदं शकुनिषु बहुलमित्यत्रोक्तम् ( निरु० ३ । १८ ) ।

शकुनिः

प्रायः शकुनिषु शब्दमूलानि नामधेयानि

' मङ्गलं ' कस्मात् । ' गिरतेः ' धातोः ' गृणात्यर्थे ' वर्तमानस्य । स्तुत्यं हि तद्भवति । ' गिरत्यनर्थानिति वा ' । अस्यैव वा गिलनार्थस्य । किमिदं गिलति । उत्पद्यमानमेवेदमनर्थं न् गिलति भक्षयति । वा ' अङ्गलम् ' एतन्मका-रोपजनेन मङ्गलम् । कोऽर्थः । ' अङ्गवत् ' । अङ्गैरवयवैर्दधिमध्वक्षता-दिभिस्तद्वत् । रो मत्वर्थे । प्रत्ययश्च श्लेः । अथवा । मज्जयतेर्मङ्गलम् । किं ' मज्जयति । पापकमिति नैरुक्ताः ' । उत्पद्यमानमेवैतन्मङ्गलिनः पुरुषस्य मज्जयति नाशयति यदस्य किंचित्पापकं भवति । एवं मज्जयतेर्मङ्गलमिति नैरुक्ता विदुः । ' मा गच्छत्विति वा ' । गमेर्वा । सर्वः एतन्मन्यते मामेतद्गच्छत्विति । ' गृत्समदमर्थमभ्युत्थितम् ' इति स्तुतिलाभकारणम् । स किल कंचिदर्थं मिमाधयिषुरभ्युत्तस्थौ । तमभ्युत्थितं ' कपिञ्जलः ' शकुनः ' अभिवाशे ' तत्सिद्धिमवेदयत् । यथा चैतदेवं ' तदभिवाद्यिपगर्न वाति ' ॥ ४ ॥

मङ्गलं कस्मात्

गृत्समदं कपिञ्जलोऽभ्युत्थितमर्थं स्वरुतेन दर्शयामास

---

१ ग. ड्।। गृ०. २ ग. च. पुनःपुनः ३ क. ख. घ. झ. ट ठ. ड. कथम् । ईरयितेव । ना°, च. कथमीरयसि° तेव. ४ च अस्यैव. ५ च. गिरयति° गिल. ६ क. ख. घ झ ट. ठ. ड. °यति वा, अथवा । अङ्ग°; । च. °यति वा अङ्गल° अथवा. ७ क. ख. घ. झ. ठ. ठ. ड अङ्गात् ८ ग. ज. ' रलोः ' नास्ति. ९ ग ज. °प्यात्°. १० ग. ज. °यति । म°, च. °यति मे° तर्म. ११ ठ ड. मा. १२ क. ख °दयत्, च °दयत् न १३ ठ. ड °वाति । इति निरुक्त-टीकायामृतरषट्के तृतीयेऽध्याये चतुर्थः खण्डः. ( ठ. निरु उत० त्रि० चतु० ).

भद्रं वद दक्षिणतो भद्रमुत्तरतो वद । भद्रं पुरस्तान्नो वद भद्रं पश्चात्कपिञ्जल ( खैलिके सूक्ते ३ । १ ) ॥ इति सा निगदव्याख्याता गृत्समदः गृत्सो मदनो गृत्स इति मेधाविनाम गृणातेः स्तुतिकर्मणो मण्डूका मज्जूका मज्जनान्मदतेर्वा मोदतिकर्मणो मन्दतेर्वा तृप्तिकर्मणो मण्डयतेरिति वैयाकरणा मण्ड एषामोक इति वा मण्डो मदेर्वा मुदेर्वा तेषामेषा भवति ॥ ५ ॥

**कपिञ्जलः**

भद्रं वद दक्षिणत इति । इह शकुनिः किल कस्याचिद्दिशि साधुर्भवति । कस्याचिदसाधुः । स एव ब्रवीति । दक्षिणतः उत्तरतः पश्चात् पुरस्ताच्च सर्वत एव त्वमस्माकं कपिञ्जल भद्रं वदेति । 'गृत्समदो गृत्सो मदनः' । गृत्सश्चासौ मदनश्च गृत्समदनः । गृत्सो मेधावी मदनो हर्षाल्लुं ।

**मण्डूकाः कस्मात्**

'मण्डूकाः' (३) इत्येतत्पदं वक्तव्यम् । य एते 'मण्डूकाः' एते 'मज्जूकाः' । कस्मात् । 'मज्जनात्' । नित्यमग्ना ह्येत उदके । 'मदतेर्वा' स्यात् 'मोदतिकर्मणः' । नित्यप्रमुदिता हि ते । 'मन्दतेर्वा स्यात् तृप्तिकर्मणः' । नित्यतृप्ता हि ते प्रचुरोदकत्वात् । 'मण्डयतेरिति वैयाकरणाः' । ते हि भक्तिभिर्नानाचित्राभिर्विभक्ता मण्डिता भवन्ति । 'मण्ड एषामोक इति वा' । मण्डे उदके एषामोको निवास इति वा मण्डूकाः । 'तेषामेषा भवति' ॥ ५ ॥

---

संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः । वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः ( ऋ० सं० ७ । १०३ । १ ) ॥ संवत्सरं शिश्याना ब्राह्मणा व्रतचारिणो ब्रुवाणा अपि वोपमार्थे स्याद्ब्राह्मणा इव व्रतचारिण इति वाचं पर्जन्यप्रीतां प्रावादिषुर्मण्डूका वसिष्ठो वर्षकामः पर्जन्यं तुष्टाव तं मण्डूका अन्वमोदन्त स मण्डूकाननुमोदमानान्दृष्ट्वा तुष्टाव तदभिवादिन्येषर्ग्भवति ॥ ६ ॥

---

१ छ थ. ध. पश्चात्कपिञ्जल. २ क. ख. ङ. थ. ध. ठ. ढ. गृत्समदना. ३ ग. इति°, घ. झ. ट. इति । इति सा निगद्व्याख्याता । इह°; च. इति । इह इति सा निगद्व्याख्याता, ठ ढ °ता वदेति ४ ट हर्षाळ्. ५ ग. अ. मोदतक°. ६ ड. ७. नति । इति निरुक्त[illegible] नवमाध्याये (ठ. °निरुक्त[illegible]) पञ्चम खण्डः.

संवत्सरं शशयाना इति । वसिष्ठस्यार्षम् । संवत्सरं शिश्याना: निर्वाच: संवत्सरं सुप्ता इव स्थित्वा ब्राह्मणा: व्रतचारिण: समर्था गन्तो वक्तुं व्रतचारिण: कृतवाक्संयमा: तत: प्रावृट्कालं प्राप्याभिवृष्टा: पर्जन्येन तर्पिता वाचं प्रमण्डूका अवादिषु: प्रावादिषुर्मण्डूका: । अथवा । न युक्तो रूढिपरिबाधो ब्राह्मणशब्दस्येति लुप्तोपम: प्रकल्प्यते 'ब्राह्मणा इव व्रतचारिण:' इति । यथा ब्राह्मणा उपाकृत्य प्रावृषि पवित्रपाणयो मेखलिनो नियतकालैस्ता वैदिकीं वाचं वदन्त्येवं प्रावादिषुरिति ।

मण्डूका:

'वसिष्ठो वर्षकाम:' इति स्तुतिलाभनिमित्तम् । स किल वर्षन्तं पर्जन्यं तुष्टाव । तं मण्डूका अन्वमोदन्त स्तुहि स्तुहीति । 'स' तान् अनुमोदमानान् वाश्यमानान् दृष्ट्वा लब्धं वर्षनिमित्तमिति परितुष्टस्तानेव 'तुष्टाव' । यथा चैतदेवं 'तदभिवादिन्येषर्ग्भवति' ॥ ६ ॥

वसिष्ठो वर्षकामो मण्डूकांस्तुष्टाव

**उप प्रवद मण्डूकि वर्षमा वद तादुरि । मध्ये ह्रदस्य प्लवस्व विगृह्य चतुर: पद: ( खैलिकं सूक्तं १६ ) ॥ इति सा निगदव्याख्याताक्षा अक्षुवत एनानिति वाभ्यश्नुवत एभिरिति वा । तेषामेषा भवति ॥ ७ ॥**

---

उप प्रवद मण्डूकि मण्डूकानां मात: । अथवा । मण्डूकपत्ने मण्डूकि । मामुपगम्य प्रकर्षेण वद । कथं च प्रवद । वर्षम् आभिमुख्येन वद । तादुरि तरणशीले । अथवा । तावदुदरि । यावच्छरीरं तावदेवोदरं तस्या: । ततो वृष्टे देवे आप्लुते उदकेनैतस्मिन्नेकजलीभूते मध्ये ह्रदस्य उदकस्य बहुन: प्लवस्व उपरि विगृह्य प्रसार्य एताश्चतुर: पद: । पादानित्यर्थ: । पादस्य पदादेश: क्रियते ।

वसिष्ठो मण्डूकीमुत्तेजयति

१ ग इति । व° . २ ग. घ. ज. प्रकल्पते. ३ ग. ज. °कालाभा वै°; च. °कालीभो वे° ला: ता. ४ ठ. ड. °वति । इति निरुक्तभाष्य उत्तरषट्कस्य तृतीयाध्याये ( ह. भाष्य ३ ध्याये ) पृष्ठ: ८०६. ५ क. ख. त. प्रवद, द. उपप्रवद. ६ क. ख. घ. झ. ट. ठ. ढ. प्रवद, घ. ज. झ. ट. सर्वा ऋक्पाठश्च. ७ ग. मण्डूकि ० मण्डूकानां मा°; च. मण्डूकि० मण्डू हे मण्डूकि, ठ. ढ मण्डूकीति. ८ ग. च. ज. एनश्च. ९ क. ख पदा°, च पदा° दा. १० क. ख. झ. ट, ठ. ढ पादस्य ह्रदस्य, घ. पादस्य शाद.

'अक्षाः' इत्येवमादीनि तद्धस्तुतित्वात्पृथिव्यायतनत्वसामान्यादिह वर्गे समाम्नातानि। तेषां च यथासमाम्नातमेव 'अक्षाः'(४) प्रथमं निर्वक्तव्याः। ते कस्मात्। 'अश्नुवत एनानिति वा'। दीव्यन्तः कितवा एतानक्षान्पाणिभिः अश्नुवते व्याप्नुवन्ति। त एते अश्नोतेः कर्मणि कारके। अथवा। 'अभ्यश्नुवते'। अभिपूर्वस्य तस्यैवाश्नोतेः करणे कारके। तैर्हि कितवाः प्रतिकितवं धनमभ्यश्नुवते। 'तेषामेषा भवति' स्तुतिः॥७॥

अक्षशब्दस्य व्युत्पत्तिः

---

**प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः। सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान्॥ (ऋ० सं० १०।३४।१)॥ प्रवेपिणो मा महतो विभीदकस्य फलानि मादयन्ति प्रवातेजाः प्रवणेजा इरिणे वर्तमाना इरिणं निर्ऋणमृणातेरपार्णं भवत्यपरता अस्मादोषधय इति वा। सोमस्येव मौजवतस्य भक्षः। मौजवतो मूजवति जातो मूजवान् पर्वतो मुञ्जवान् मुञ्जो विमुच्यत इषीकयेषीकेषतेर्गतिकर्मण इयमपीतरेषीकैतस्मादेव विभीदको विभेदनाज्जागृविर्जागरणान्मह्यमचच्छदत्प्रशंसत्येनान्प्रथमया निन्दत्युत्तराभिः ऋषेरक्षपरिद्यूनस्यैतदार्षं वेदयन्ते ग्रावाणो हन्तेर्वा गृणातेर्वा गृह्णातेर्वा तेषामेषा भवति॥ ८॥**

---

प्रावेपा मेति। अक्षपुत्रस्य मौजवतस्यार्षम्। प्रावेपाः प्रवेपिणः प्रकर्षेण वेपनशीलस्य वृक्षस्य जाता महतो मा मादयन्ति हर्षयन्ति वा तर्पयन्ति वा। प्रवातेजाः प्रचुरवाते स्थाने काले जाताः प्रावृट्काले, पक्वा नाम वा प्रचुरवाते काले पतनाभिप्राय जन्म। विभीदक एक एव वा विशेषणे। स प्रवणे उदकबहुले देशे जातस्तस्य फलानि अक्षाः। इरिणे वर्वृताना। निर्ग-

अक्षाः

---

१ ग. च ज. अभ्यश्नु°. २ ठ ड स्तुतिः। इति निरुक्तटीकायामुत्तरषट्के तृतीयाध्याये (ठ. निरु० उत्त० तृ० अ०) सप्तमः खण्डः ३ छ त. प्रवतेजा. ४ छ. त. द मूजवतस्य°. ५ ग. मेति। अ°. ६ ग ज. °ना वाते काले°. ७ ग. च ज. ड. विर्ग°

तेर्णे आस्फुरकस्थाने वर्तमानाः । न हि तत्र पुत्रपौत्रानुगमृणं भवति । 'अपार्णं' वा । उपसर्गस्यान्यत्वमेव केवलम् । अथवा । अपार्णम् अपगतो-दकम् । 'अपरता ओषधय इति वा' । अपेत्य तस्मादन्यत्र ओषधय इति । कथं मादयन्ति । सोमस्येव । यथा सोमस्य मौजवतस्य भक्षो यजमानं मादयति हर्षयति तर्पयति तथा । विभीदकः विभेत्ता कोऽयमस्य जागृविः जागरणकर्ता । यो जयति स हर्षेण जागर्ति योऽपि जीयते स दुःखेन जागर्ति । स एव विभीदक एवंप्रकारो मह्यम् अचिच्छदत । स्वेन फलशब्देन सर्वार्थेषु पुनःपुनः भृशं वा मनश्छादयित्वा देवने एवैकस्मिन्मम मनः उत्साहयति ।

मौजवतः सोमः । स कस्मात् । 'मूजवति जातः' । अथ 'मूजवान्' कः । 'पर्वतः' । स कस्मात् । 'मुञ्जवान्' । मुञ्जैस्तद्वान् । अथ 'मुञ्जः' कस्मात् । स हि 'विमुच्यते इषीकया' । अथ 'इषीका' कस्मात् । 'इषेर्गतिकर्मणः' । सा हि निर्गता भवति मुञ्जात् । 'इयमपीतरेषीकैतस्मादेव' । या हलेषा अन्या वा । सापि हि निर्गता भवति ।

*कथं सोमः मौजवतः*

'ग्रावाणः' कस्मात् । 'हन्तेर्वा' । तदर्थोपपत्तेः । वर्णव्यापत्त्युपजनाभ्याम् । 'गृणातेर्वा' स्तुत्यर्थस्य । स्तूयन्ते हि ते । 'गृह्णातेर्वा' । गृह्यन्ते हि ते । 'तेषामेषा' स्तुतिः 'भवति' ॥ ८ ॥

*ग्रावाणः कस्मात्*

---

**प्रैते वदन्तु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः । यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनः** (ऋ० सं० १० । ९४ । १) ॥ प्रवदन्त्वेते प्रवदाम वयं ग्रावभ्यो वाचं

---

१ ग. ज. निर्गत आस्फु°. २ घ. झ. ट. ठ. ड. आस्फार°; च. आस्फर° स्फा. ३ ग. च. ज. विभी°. ४ ग. च. ज. विभे°. ५ ग. यजति महद्दर्षेण; च. यजति मैं (स) हद्दर्षेण; ज. यजति स हद्दर्षेण. ६ च. अचिच्छ°. ७ ठ. ड. °वति । इति निरुक्तटीकायामुत्तरषट्के तृतीयेऽध्याये (त. निरु० टी० उत्त० तृ० ध्या०) अष्टमः खण्ड°, क. ख. च. पर्जमितरेणवङ्क्षो नास्ति.

**वदत वदद्भ्यो यदद्रयः पर्वता आदरणीयाः सह सोममाशवः क्षिप्रकारिणः श्लोकः शृणोतेर्घोषो घुष्यतेः सोमिनो यूयं स्थेति वा सोमिनो गृहेष्विति वा येन नराः प्रशस्यन्ते स नाराशंसो मन्त्रस्तस्यैषा भवति ॥ ९ ॥**

---

ग्रावाणः

प्रैते वदन्त्विति[2] । अर्बुदस्यायमार्षम् । यस्मात्ते अद्रयः आदरणीया आदरणार्हाः[3] पर्वयन्तः[4] साकमाशवः सहभूताः सोममश्नीथ अभिषुणुथ । ते[5] चाभिषुण्वन्त इन्द्राय श्लोकं श्रवणीय हृद्यं घोषं शब्दं भरथ धारयथ निर्वर्तयथ । ये ते यूयम् अमुना प्रकारेण यस्मात् सोमिनो भवथ । अथवा । सोमिनः सोमेन तद्वतो यजमानस्य गृहेषु एव कुरुध्वे तस्माद्युष्मानधिकृत्य ब्रवीमि प्रैते वदन्तु युष्मदर्थं स्तुतीरुद्गातारः । प्रवदाम[6] वयं होतारः । अध्वर्यूनपि च ब्रूमहे । एभ्यो ग्रावभ्यो वाचं वदद्भ्यो वदत वाच या वक्तव्या एतान्प्रतीति ।

'नाराशंसः' ( ६ ) इति समाम्नातः । कः पुनरेष नराशंसः । 'येन नराः प्रशस्यन्ते स नाराशंसो मन्त्रः' । किमत्र मन्त्रः स्तूयते । न इत्युच्यते । लक्षणं मन्त्रः । नराः[7] स्तूयन्ते । एवं तर्हि नराणामेव समाम्नानं प्राप्तमासीत् । न । तेषां सामान्यस्तुत्यभावाद्राज्ञां च स्तुत्युपपत्तेः । तेषामपि च सामान्या स्तुतिर्नास्ति । अपि त्वेकैकश्येन[9] केषांचित् । यतो भावयव्यं लक्षणीकृत्य नाराशंसो[10] मन्त्र उदाह्रियते । 'तस्य' नराशंसस्य मन्त्रस्योदाहरणम् । 'तस्य' वा भावयव्यस्य प्राधान्यस्तुतिः 'एषा' ऋग् 'भवति'[11] ॥ ९ ॥

नाराशंसो मन्त्रः। तथापि न मन्त्रः स्तूयते किंतु नराः। तेष्वपि च केचिद्राजान एव स्तूयन्ते

---

१ क. ख. ङ. थ. घ. ठ. ड. अद्र°. २ ग. °न्त्विति । अ°. ३ क. ख. ग. ज. अद्र°; ध. अद्र° आ. ४ क. ख. ध. झ. ट. ठ. ड. पर्वताः पर्ववन्तः, घ. °र्हाः पर्व° पर्वताः. ५ क. ख. घ. झ. ट. ठ. ड. ते तं, घ. °णुथ । तं° ते. ६ क. ख. घ. झ. ठ. ठ. ड. °दाम च व° ७ क. ख. ग. ज. ठ. ड. नरा°. ८ ग. ज. °म्नातं; च. °म्नात प्रा° न. ९ क. ख. ग. घ. ज. त्वेके° १० ग. ज. नरा°, घ. नैरा° ना. ११ ठ. ड. °वति । इति निरुक्तटीकायामृजुतरवृत्तौ तृतीयेऽध्याये ( उ. निरुक्त० उ० तृतीया पा० ) नवम. [illegible]

अमन्दान्स्तोमान्प्र भरे मनीषा सिन्धावधि क्षियतो भाव्यस्य।
यो मे सहस्रममिमीत सवानतूर्तो राजा श्रव इच्छमानः ( ऋ० सं० १।१२६।१ ) अमन्दान्स्तोमानबालिशाननल्पान्वा बालो बलवर्ती भर्तव्यो भवत्यम्बास्मा अलं भवतीति वाम्बास्मै बलं भवतीति वा बलो वा प्रतिषेधव्यवहितः प्रभरे मनीषया मनस ईषया स्तुत्या प्रज्ञया वा सिन्धावधि निवसतो भावयव्यस्य राज्ञो यो मे सहस्रं निरमिमीत सवानतूर्तो राजातूर्ण इति वात्वरमाण इति वा प्रशंसामिच्छमानः ॥ १० ॥

---

इति नवमाध्यायस्य प्रथमः पादः ॥

अमन्दान्स्तोमानिति । दानपरितुष्टः कक्षीवान् ब्रवीति । अमन्दान् अबालिशान् अनल्पान्वा अबालिशयोग्यान् प्रभरे उच्चारये मनीषा स्तुत्या प्रज्ञया वा । कस्य । भावयव्यस्य । भाविनैवासावार्जवेनैव सर्वार्थान् यवयति

राज्ञो भाव्यस्य स्तुतिः

मिश्रयति अनुतिष्ठतीति भावयव्यः । क निवसतः । सिन्धावधिक्षियतः निवसतः । यः किमकरोत् । यो मे सहस्रं बहून् सवान् यज्ञान् निरमिमीत निर्मितवान् । बहूनां यज्ञानां यागोपकरणं दत्तवान् । अतूर्तः अतूर्णः अचपलः अत्वरमाणः । कमंग यो निरमिमीत सहस्रं मम सवान् प्रशंसामिच्छमानः अमन्दान् स्तोमान् तस्मै भावयव्याय राज्ञे प्रभरेऽहमिति ॥ १० ॥

चतुर्दशाध्यायस्य प्रथमः पादः ।

---

१ छ. त. द. बलभर्ता. २ क. थ. ध. छ. त. द. राजातूर्ण°. ३ क. थ. ध. छ. त. द. वा त्व°. ४ क. थ. ध. 'इति पाद' नास्ति; छ. प्रथमः पादः; त. नवमेध्याये प्रथ°; द. इति नैरुक्ते उत्तरार्धस्य प्रथमः पादः. ५ ग. 'मिति । दा°. ६ ग. °तुष्टः क°; घ. तुष्टाविः क° ष्टः; ज. तुष्टावः. ७ क. ख. घ. ञ. ट. ठ. ड. °भरे प्रहरे उ°. घ. भरे ~ उ° प्रहरे. ८ च. न्यव °ति य. ९ क. ख. घ. ड. ठ ढ. °सवान् प्रवः प्रशं°; च. सवान्~ प्र° प्रवः १० ठ ड. °वति । इति चतुर्दशाध्यायस्य प्रथमः पादः । इति निरुक्तटीकायामुत्तरषट्के दुर्गसिंहकृतायां दशमः खण्डः, क. ख. घ. चतुर्दशिनेत्यद्यो नास्ति.

द्वितीयः पादः ।

यज्ञसंयोगाद्राजा स्तुतिं लभेत राजसंयोगाद्युद्धोपकरणानि तेषां रथः प्रथमागामी भवति रथो रंहतेर्गतिकर्मणः स्थिरतेर्वा स्याद्विपरीतस्य रममाणोऽस्मिंस्तिष्ठतीति वा रपतेर्वा रसतेर्वा तस्यैषा भवति ॥ ११ ॥

५

---

' यज्ञसंयोगाद्राजा स्तुतिं लभेत ' इत्येवमादि । तैः पूर्वप्रकृतस्यैव भावयव्यस्य स्तुतिलाभनिमित्तमेव मन्त्रगतमनूद्यते । यस्मात्सहस्रं सवान्निरमिमीत तस्मात्प्रभर इति केचिन्मन्यन्ते । अपरे पुनर्युद्धोपकरणानामुत्तरेषां सामान्यमेतत्स्तुतिलाभनिमित्तमिति वर्णयन्ति । तत्कथमिति । अश्वमेधे हि ' जीमूतस्येव भवति प्रतीकम् ' ( ऋ० सं० । ६ । ७५ । १ ) इत्यनेन सर्वयुद्धोपकरणोपेतं रथमधिरूढः सन्नद्धकवचो राजा स्तूयते ( मैत्रा० सं० ३ । १६ । ३ ) । स कस्मादित्युपोद्घात्योच्यते । ' यज्ञसंयोगाद्राजा स्तुतिं लभेत ' । स तावद्यज्ञसंयोगात्स्तुतिं लभते ।

राजा यज्ञसंबन्धात्स्तुतिं लभते

१०

१५

अथ पुनर्युद्धोपकरणानि किमिति स्तुतिं लभन्त इति । ' राजसंयोगाद्युद्धोपकरणानि ' । युद्धायोपक्रियन्त इति युद्धोपकरणानि । युद्धायोपकुर्वन्तीति युद्धोपकरणानि । स एष हि व्यापी स्तुतिसंक्रमन्याय आचार्येणोपप्रदर्शितः । तद्यथा । युद्धोपकरणानि राजसंयोगात्स्तुतिं लभन्ते । तस्य तान्यङ्गानीति तत्संबन्धात्स्तूयन्ते । राजापि यज्ञसंयोगात्स्तूयते । यज्ञोऽपि देवतासंबन्धाद्देवता अप्यात्मसंबन्धात् । सोऽयमेवमात्मैवाङ्गप्रत्यङ्गभावेनावस्थितः सर्वावस्थोऽतः स्तूयत इत्यात्मस्तुतिरेवेयं सर्वा । तदुक्तम् । ' स्थाने स्थाने स्तुतिः सर्वा स्थानानि प्रतिभागिनः । आत्मप्रतिष्ठा बोद्धव्या तथोपकरणस्तुतिः ' ॥ इति । एष स्तुतिसंक्रमन्यायः सर्वत्रोपसंधेयः ॥

युद्धोपकरणानि राजसंबन्धात्स्तूयन्ते

२०

२५

---

१ छ. त. द. ' रसतेर्वा ' नास्ति. २ क. ख. १ ( ११ ), त द. १. ३ क. ख. घ. झ. ट. ठ. ड. तदेवैतत्सू॰, च. तत्सू॰ दत्त. ४ ग. ष. ज. लभते. ५ ग. ज. °त्सबन्धात्°; घ. °भक्तिसं° बमा ६ ग. ज. ञ. झ. ट ठ. ड. °वस्थः स्तू°, च °वस्थोऽतः° स्थ°.

३०

'तेषां रथः (७) प्रथमगामी भवति' । स कस्मात् । तदाधारत्वादितरेषां युद्धोपकरणानाम् । 'रथः' कस्मात् । 'रंहतेर्गतिकर्मणः' । तस्य हि तदर्थैवोत्पत्तिः । 'स्थिरतेर्वा स्याद्विपरीतस्य' । स्थिरः सन् रथ इत्युक्तः । तत्र हि स्थिरमुप्रतिष्ठितो योद्धा भवति न तथाश्वादिषु । 'तस्यैषा भवति' स्तुतिः ॥ ११ ॥ ५

---

**वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः । गोभिः संनद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि (ऋ० सं० ६ । ४७ । २६) ॥ वनस्पते दृढाङ्गो हि भवास्मत्सखा प्रतरणः सुवीरः कल्याणवीरो गोभिः संनद्धो असि वीळयस्वेति संस्तम्भस्वास्थाता ते जयतु जेतव्यानि दुन्दुभिरिति शब्दानुकरणं द्रुमो भिन्न इति वा दुन्दुभ्यतेर्वा स्याच्छब्दकर्मणस्तस्यैषा भवति ॥ १२ ॥** १०

---

वनस्पते वीड्वङ्ग इति । गर्गस्यार्षम् । हे वनस्पते वानस्पत्य रथ

रथः त्वमुच्यसे । वीड्वङ्गो दृढाङ्गो भव । ततश्च अस्मत्सखा अस्मन्मित्रं प्रतरणः प्रतारणः संग्रामाणां १५

पारं नेता सुवीरः कल्याणवीरः अविक्लवानवखण्डिताधिष्ठाता भव । किंच । कृतप्रतीकारस्त्वमस्माभिः गोभिः असि संनद्धः समन्ततो नद्धो बद्धो गव्येन चर्मणा श्लेष्मणा च । स त्वं कृतप्रतीकारमात्मानं मत्वा तेन हेतुना सुतरामात्मानं वीळयस्व संस्तम्भुहि । संस्तब्धे च त्वय्यवस्थितः २० आस्थाता ते अधिष्ठाता तव योद्धा यानि तेन जेतव्यानि आत्मनोऽभीप्सितानि तानि सर्वाणि जयतु ।

१ च. °त्रोपपत्तिः २ क. ख. २ (११), ठ. ड° स्तुतिः । इति नि (ह. ने) रुक्टीकायामुत्तरषट्के तृतीयाध्याये (ठ. नि ० उ० तृ० ध्या०) एकादशः खण्डः; घ. ङ. ट. ज. अङ्को नास्ति. ३ क. ख. छ. त. द्. वीलय°. ४ छ. त. द् वृल्हाङ्गो ५ छ. त. द्. स्याद्धधकर्मण°. ६ क. ख. २ (१२); त. द्. २. ७ ग. इति । ग°. ८ ग. ज. अस्मन्मित्रं. ९ ग. ज. अविक्लवा°, च. अविक्लवा° कृ. १० ग. ज. °कारत्वम° ११ ग च. ज. संबन्धः. १२ च. नद्धो ४ ग° बद्धो.

'दुन्दुभिः' (८) इत्यस्य योऽभिधेयस्तस्य 'शब्दानुकरणम्' आत्मनो नामधेयप्रतिलम्भनिमित्तम् । यथैवासावभिहन्यमानः शब्दं करोति दुन्दुभिरिति तदेव तस्य नाम ।

दुन्दुभिः कस्मात्

'द्रुमो भिन्न इति वा' । द्रुमशब्दात्पूर्वपद मिदरुत्तरपदम् । तत्संभवो ह्यसौ द्रुमैकदेशो निष्कुषितश्चर्मणा पिनद्धः । 'तस्यैषा भवति' ॥ १२ ॥

---

उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् । स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अप सेध शत्रून् ( ऋ० सं० ६।४७।२९ )॥ उप श्वासय पृथिवीं च दिवं च बहुधा ते घोषं मन्यतां विष्ठितं स्थावरं जङ्गमं च यत्स दुन्दुभे सहजोषण इन्द्रेण च देवैश्च दूराद्दूरतरमप सेध शत्रूनिषुधिरिषूणां निधानं तस्यैषा भवति ॥ १३ ॥

---

उपश्वासय पृथिवीमिति । अत आरभ्य सर्वा एता युद्धोपकरणा ऋच । भारद्वाजस्यार्षम् । हे दुन्दुभे उपश्वासय उपशब्दय आपूरय शब्देन एतां चैव पृथिवीं कृत्स्नाम् । उत द्याम् । अपि चैकस्यापि सतस्तव पुरुत्रा बहुत्वे वर्तमानस्य मनुता मन्यता घोषं यच्चेदं विष्ठितं जङ्गमं यच्चेदं स्थावरं च । यस्यैवं तव सामर्थ्यं द्यावापृथिव्यावापूरयितु स त्वं दुन्दुभे सजूः सहजोषणः सहप्रीतिः इन्द्रेण चान्यैः च देवैः दूराद् दूरतरम अपसेध अपकालय अपुनरागमनायास्मच्छत्रूनित्येतदाशास्महे ।

दुन्दुभिः

१ क. ख. २ (१२), ठ. ड. °वति । इति निरुक्तटीकायामुत्तरषट्के तृतीयेऽध्याये ( ठ. निरु० उ० तृ० ) द्वादशः खण्डः ( ठ. खण्डः । १२ । ); घ. झ. ट. अङ्को नास्ति २ क. ख. ३ ( १३ ), ग. ढ. ३. ३ म. °मिति । अ°. ४ घ. झ. ट. ठ. ड भर°. ५ क. ख. घ. झ. ट. ठ. ड. 'च' नास्ति. ६ क. ख. विष्ठितं स्थावरं यच्चेदं जङ्गमं च°, ठ. विष्ठितं यज्जङ्गम, ठ. ड. विष्ठितं यज्जङ्गम. ७ ख. वान्यै'. ८ घ. झ. ट ड. अपगमय; च.' अपकालय ' नास्ति; ढ °सेध अपगमयाप्' काल. ९ क. ख. घ. झ. ट. ठ ड. °स्महे तथा । इ°.

इषुधिः कस्मात् — 'इषुधिः' (९) इषूणां निधानं तूणः । तस्मिन्निषवो निधीयन्ते । 'तस्यैषा भवति'॥१३॥

---

बह्वीनां पिता बहुरस्य पुत्रश्चिश्चाकृणोति समनावगत्य । इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः (ऋ० सं० ६ । ७५ । ५ ) ॥ बह्वीनां पिता बहुरस्य पुत्र इतीषूनभिप्रेत्य प्रस्मयत इवापाव्रियमाणः शब्दानुकरणं वा सङ्काः सचतेः संपूर्वाद्वा किरतेः पृष्ठे निनद्धो जयति प्रसूत इति व्याख्यातं हस्तघ्नो हन्ते हन्यते तस्यैषा भवति ॥ १४ ॥ ५

---

१०

बह्वीनां पितेति । योऽयमिषुधिः बह्वीनां बहूनामिषूणां पाता रक्षिता तदर्थत्वात् । यस्य चेषुधेः बहुः इषुकलापः पुत्रः पुरुणो बहून् पापात् त्राता । तदर्थं ह्यसौ रक्ष्यत इत्येवं व्युत्पाद्यम् । यश्चायं चिश्चाकृणोति । प्रस्मयत इव अपाव्रियमाणः । प्रकर्षेण स्मयत इव उद्घाटयमानश्चित्रपुङ्खत्वात् । अथवा । हसतीव शोभया पुङ्खदीप्त्या । अस्मिन्पक्षे चिश्चातिरपठितोऽपि धातुः कल्प्यत इति । 'विकारपक्षेषु तदर्थान्यधातूपादानम्' इत्याचार्यपरिभाषा । अथ 'वा शब्दानुकरणम्' । चिश्चिदित्येवं शब्दं करोति । कदा । समना संग्राममवगत्य प्राप्य । स एष इषुधिः सङ्काः संकटान संपृक्तान् वा संग्रामान् पृतनाश्च सर्वाः याः स्पर्धमानैरिषव एव केवलमभिलक्ष्य क्षिप्यन्ते पताकार्थं तानेवंविधान्संग्रामान् पृष्ठे रथस्य मनुष्यस्य वा निबद्धो जयति प्रसूतः क्षिप्तो धनुष्मतेत्येतदाशास्महे । (margin: इषुधिः) १५ २०

---

१ क. ख. ३ (१३); ठ. °वति । इति निरु० उ० तृ० ध्या० १३ खण्डः; ड. °वति । इति निरुक्तटीकायां १३ खण्डः । त्रयोदशः खण्डः. २ क. ख. ङ. ब. ध. ठ. ड बहूना. ३ छ. द. इवावध्रीय°; त. इवावध्रीय° ।ध्रि. ४ क. ख. ४ (१४); त. द. ४. ५ ग. °तेति । यो°. ६ ग. ज. अपध्रिय°; च. आपविय°. ७ घ. म. ठ. ड. अस्मिन्नर्थे चि°; ग. ज. अस्मिन्पक्षेऽर्थे चि°. ८ ग. ज. सङ्काः सङ्कयन् समस्कासंग्रामात् ।त°. ९ च. °लक्ष्यः. १० क. ख. घ. म. ठ. निनद्धो. २८

'हस्तघ्नः' (१०) कलापिपद्दको गोधेति च यमाहुः । स कस्मात् ।

हस्तघ्नः कस्मात् 'हस्ते' व्यवस्थितोऽसौ ज्यया 'हन्यते'। 'तस्यैषा भवति' ॥ १४ ॥

---

५ अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः । हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमांसं परि पातु विश्वतः ( ऋ० सं० ६ । ७५ । १४ ) ॥ अहिरिव भोगैः परिवेष्टयति बाहुं ज्याया वधात्परित्रायमाणो हस्तघ्नः सर्वाणि प्रज्ञानानि प्रजानन् पुमान् पुरुमना भवति पुंसतेर्वाभीशवो व्याख्याता- १० स्तेषामेषा भवति ॥ १५ ॥

---

अहिरिव भोगैरिति । योऽयम् अहिरिव भोगैः सर्प इव कुटिलभावैः

हस्तघ्नः सर्पग्राहकस्य बाहुं सर्पेणेव पर्येति परिवेष्टयति बाहु धनुष्मतः पुरुषस्य । ज्याया हेतिं परिबा-

१५ धमानः । ज्याया वधात् सर्वतस्त्रायमाणस्तदर्थत्वात्तस्य । सोऽयमेवंधर्मा हस्तघ्नः पुमानिव पुरुमना इव कश्चिदाप्तः प्रज्ञाबहुलः पुमांसम् एतं धनुष्मन्तं परिपातु विश्वतः सर्वप्रकारं सर्वतः पात्वित्येतदाशास्महे । स्त्रियमपेक्ष्यामनस्का पुरुषे बहुतरं मनः । 'पुंसतेर्वा' पौरुषार्थस्य पौंस्यमिति यस्य बलनाम भवति ।

२० 'अभीशवः' (११) इति वक्तव्यम् । ते पुनरमी 'व्याख्याताः' अभिधानतोऽभिप्रेयतश्च 'अभीशवोऽभ्यश्नुवते' ( निरु० ३ । ९ ) इति । 'तेषामेषा भवति' ॥ १५ ॥

---

१ च. कलापीयद्दकः; झ. कलापापद्दकः. २ क. ख. ४ ( १४ ); ठ. ड. °षति । इति निरुक्तटीकायामुत्तरषट्के ३ ध्याये १४ खण्डः. ३ क. ख. ५ । १५; त. द. ५. ४ ग. °रिति । यो°. ५ क. ख. घ. झ. ट. ठ. ड. वधात् ज्याघातात् बाहुं स°. ६ क. ख. घ. झ. ट. ठ. ड. प्रज्ञानव°. ७ च. पुरुमांस°. ८ क. ख. घ. झ. ट. ठ. पुरु°. ९ क. ख. ५ ( १५ ), ठ. ड. °वति । २३ इति निरुक्तभाष्ये ( ठ °भाष्ये उ० ) ३ ध्याये पञ्चदशः ( ठ. १५ ).

रथे तिष्ठ॑न्नयति वा॒जिनः॑ पु॒रो यत्र॑यत्र का॒मय॑ते सुषा॒र॒थिः ।
अ॒भीशू॑नां महि॒मानं॑ पनायत॒ मनः॑ प॒श्चाद॑नु यच्छन्ति र॒श्मयः॑

( ऋ० सं० ६ । ७५ । ६ ) ॥ रथे तिष्ठन्नयति वाजिनः पुरस्तात्सतो यत्र यत्र कामयते सुषारथिः कल्याणसारथिरभीशूनां महिमानं पूजयामि मनः पश्चात्सन्तोऽनुयच्छन्ति रश्मयो धनुर्धन्वतेर्गतिकर्मणो वधकर्मणो वा धन्वन्त्यस्मादिषवस्तस्यैषा भवति ॥ १६ ॥ ५

---

रथे तिष्ठन्नयति वाजिन इति । यदेतत् रथे तिष्ठन् वर्तमानः सुषारथिः

अभीशवः — कल्याणः सुशिक्षितोऽपि सारथिः नेता रथस्य वाजिनः पुरस्तात् अग्रतः सतो रथयुक्तान् रथस्य नीडे पश्चात्सन्नुपविष्टः । क ! यत्र यत्र कामयते । यत्र यत्रेच्छति योद्धा तत्र तत्र नयति । तदेतत्किं सारथेर्महाभाग्यम् । न इत्युच्यते । निरभीशुः को हि सारथिः किं कुर्यात्सुशिक्षितोऽपि । एवम् अभीशूनाम् एतं महिमानं मोहाभाग्यं पनायत पूजयामि । यन्मनोऽश्वानामतिप्रवृद्धजवानामपि तेष्वश्वेषूपनिबद्धा रश्मयः गृहीताः सारथिना पश्चात्सन्तो मनोऽनुयच्छन्ति । उपरमयन्तीत्यर्थः । संबोध्याभावात्पनायतेत्यस्य पूजयामीति पुरुषवचनव्यत्ययः । १० १५

धनुःकस्मात् — 'धनुः' (१२) धन्वतेः गत्यर्थस्य । तद्बलेन हीषवो गच्छन्ति । 'वधकर्मणो वा' । शत्रुवधार्थं तदुपादीयते । 'तस्यैषा भवति' ॥ १६ ॥ २०

---

१ छ. त. द. पूजयत. २ क. ख. ६ (१६), त. द. ६. ३ ग. °यतीति । य°; ठ. ड. यतीति. ४ ग. सुदार° वा, च. ज. सुखार°. ५ च. शिक्तितो° ६ क. ख. घ. झ. ट. ठ. ड. °विष्टस्तिष्ठन् । क°. २५ ७ च. °थेर्महा°. ८ घ. झ. ट. ठ. ड. निरभीशुको हि°. ९ च. महा°. १० क. ख. यश्व°; ट. तेश्व° ये. ११ ग. ज च. 'रश्मयः' नास्ति. १२ क. ख. घ झ. ट. ठ. ड. °धाय हि त°. १३ घ. झ. ट. ठ. ड. °दुपपद्यते. १४ क. ख. ६ (१६), ठ. ड. °वति । इति निरुक्तटीकायामुत्तरषट्के तृतीयाध्याये षोडशः (ठ. निरुक्तभा० उ० ष० तृ० ध्याये षोड°) खण्डः, घ. झ. ट. ज. अङ्को नास्ति. ३०

धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम। धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ( ऋ० सं० ६ । ७५ । २) ॥ इति सा निगदव्याख्याता समदः समदो वात्तेः संमदो वा मदतेर्ज्या जयतेर्वा जिनातेर्वा प्रजावयतीषूनिति वा तस्या एषा भवति ॥ १७ ॥

---

धन्वना गा इति । ताः गाः तावत् धन्वना धनुषा वयमरिभ्यो जयेम । अपि च । आजिम् । इतरेतरस्य स्पर्धया यत्र लक्ष्यवेधायैव केवलमिषवः क्षिप्यन्ते वैतर्केण प्रतापार्थं वा तम् आजिम् आजवनं धनुषैव वयं जयेम । या अपि तीव्रा दारुणाः समदः संग्रामाः अनेकशस्त्रसंपातसंकटाः अनेकवीरपुरुषाकीर्णाः ता अपि वयं जयेम धनुषैव । अपि च । किं बहुना । समासत एव ब्रूमः । धनुः शत्रोरपकामं कृणोति । यत्र यत्र शत्रुरस्मान् जेतुकामः स्यात्ततस्ततोऽपगतकाममस्मत्तो धनुः करोतु । अपगतकामे च तस्मिञ्छत्रौ वयं धनुषैवैताः सर्वा दिशः प्रदिशश्च जयेमेत्येतदाशास्महे ।

(धनुः)

'समदः समदो वा संमदो वा' । संपूर्वस्य अत्तेः भक्षार्थस्य । भक्षत इव हि तत्र परस्परतः । मदतेर्वा हर्षणार्थस्य द्वितीयम् । 'संमदो वा' इति । संहृष्टास्तत्र हि परस्परतो युध्यन्ति ।

(समदः कस्मात्)

'ज्या' (१३) इति वक्तव्यम् । सा पुनरियं 'जयतेर्वा जिनातेर्वा' । धात्वन्यत्वेऽप्यर्थैकत्वम् । तद्धि तेन हि जीयते । स पुनरेष धनुर्गुणः । तस्या एषा भवति ॥ १७ ॥

(ज्या कस्मात्)

१ क. ख. ७ (१७), ठ. ढ. ७. २ ग इति । ता°. ३ च. वयमपरिभ्यो ४ क. ख. घ. झ. ट. ठ. ड. इतरेतरस्पर्धया. ५ ग. च. ज. वैतर्केण, घ. ट. वैतर्क्येण. ६ ट. प्रतापार्थं° पताकार्थं. ७ च. °आजेवनं; ठ. ढ. °आजवनं. ८ क. ख. घ. झ. ट. ठ. ड. भक्षणार्थस्य. ९ ग. च. परस्परता, ज. परस्परतो. १० च. °न्यत्वमप्यर्थे°. ११ ग. च. ज. तस्यैषा. १२ क. ख. ७ (१७), ठ. ढ. °वति । इति निरुक्तटीकायामृजुार्थायां तृतीयोऽध्यायः (ठ. °मनुभा० उ० पू० पा० ) समाप्तः. ग. च. एतद्, घ. झ. ट. ज. अत्र नास्ति

वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना ।
योषेव शिङ्क्ते[1] वितताधि धन्वन् ज्या इयं समने पारयन्ती ( ऋ० सं० ६ । ७५ । ३ ) ॥ वक्ष्यन्तीवागच्छति कर्णं प्रियमिव सखायमिषुं परिष्वजमाना योषेव शिङ्क्ते शब्दं करोति वितताधि धनुषि ज्येयं समने संग्रामे पारयन्ती पारं नयन्तीषुरिषतेर्गति- 5
कर्मणो[2] वधकर्मणो वा[3] तस्यैषा भवति ॥ १८ ॥[4]

---

वक्ष्यन्तीवेति[5] । येयं योषिदिव काचित्कस्मैचिदिष्टाय पुरुषाय किंचि-
द्रहस्यं वक्ष्यन्तीव[6] कथयिष्यन्तीव ज्या धनुष्मता
ज्या
पुरुषेण इषुं चिक्षिप्सता सव्येन दक्षिणेन वा 10
पाणिना कृष्यमाणा सव्यं दक्षिणं वा कर्णं प्रत्यागनीगन्ति आगच्छति । कथमिति । प्रियं सखायं परिषस्वजाना । प्रियम् इष्टं काचित्कंचित्[7] सखायं समानख्यानम्[8] उपजातप्रीतिं स्त्री पुरुषमिवेषुं परिष्वजमाना । संप्रत्यर्थ एव सस्वजानेत्यभ्यासोऽर्थविशेषाभावात् । यथा हि सा कर्णं प्रत्याकृष्यते धनुष्मता तथा मध्यमात्मनो निनीय इषुं परिष्वजत इव । किमेतावदेव । 15
नेत्युच्यते । या चेयं योषेव शिङ्क्ते योषिदिव विदग्धा[9] काचित्कामिना पुरुषेणात्मानं प्रत्याकृष्यमाणोपजायमानपरितोषा कामिनः पुरुषस्य हर्षमुत्पादयन्ती शिङ्क्ते सुकुमारमव्यक्तशब्दं करोति । वितताधिधन्वन् धनुषि अध्यारोपिता सेयमस्माकमेवमादिगुणयुक्ता ज्या समने संग्रामे पारयन्ती अस्तु । पारम् अन्तं नयन्ती अस्तु शत्रूणामित्येतदाशास्महे । 20
'इषुः' (१४) इत्येतत् ईषतेर्गतिकर्मणः[10] । तदर्थमेवासावुत्पाद्यते ।
इषुः कस्मात्
वधार्थाय वा । तदर्थमेव ह्यसौ गच्छति ।
'तस्यैषा भवति'[11] ॥ १८ ॥

---

१ छ. त. द. 'शिङ्क्ते' नास्ति. २ क. ख. छ. त. द. °न्तीषुरीष°, त. °न्तीषुरीष° रि. ३ क. ख. छ. त. द. 'वधकर्मणो वा' नास्ति. ४ क. ख. ८ (१८); त. द. ८. ५ ग. °वेति । ये°. ६ ग. घ. ज. वक्ष्यती कथ°. ७ ग. ज. 'कंचित्' नास्ति. ८ ग. घ. ज. °ख्यातम्°. ९ ग. घ. ज. विदग्धा; घ. झ. ट. विदाधा. १० क. ख. ग. घ. ज. ईषते°. ११ क. ख. ८ ( १८ ); ठ. °वति । इति उ० तृ० १८ खण्डः; ड. °वति । इति निरुक्तटीकायामुत्तरषट्के ३ ध्याये १८ खण्डः; घ. झ. ट. न. अङ्को नास्ति. 25

सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः संनद्धा पतति प्रसूता। यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन् (ऋ० सं० ६। ७५। ११)॥ सुपर्णं वस्त इति वाजानभिप्रेत्य मृगमयोऽस्या दन्तो मृगयतेर्वा गोभिः संनद्धा पतति प्रसूतेति व्याख्यातं (निरु० २। ५) यत्र नराः संद्रवन्ति च विद्रवन्ति च तत्रास्मभ्यमिषवः शर्म यच्छन्तु शरणं संग्रामेष्वश्वाजनीं कशेत्याहुः कशा प्रकाशयति भयमश्वाय कृष्यतेर्वाणूभावाद्वाक् पुनः प्रकाशयत्यर्थान् खेशया[1] क्रोशतेर्वाश्वकशाया एषा भवति॥ १९॥

---

सुपर्णं वस्त इति[2]। ये एते सुपर्णं वस्ते वसते गार्ध्रं[3] वाजा इषवः।

**इषुः** येषां चैतेषां मृगमयो दन्तो यदि मार्गाणि फलानि। अमार्गेषु तु व्यधनस्वभावान्मार्गयन्तीव[4][5] किं नु तद्यद्देद्रव्यं स्याद्यदहं विध्येयमिति[6]। ये चेमे गोभिः संनद्धाः गव्येन स्नाव्ना श्लेष्मणा च समन्ततो नद्धाः पतन्ति गच्छन्ति धनुष्मता प्रसूताः क्षिप्ताः त एवमादिगुणयुक्ता इषवो यत्र यस्मिन् संग्रामे नराः मनुष्याः संद्रवन्ति गच्छन्ति[7] च विद्रवन्ति च पुनर्विगच्छन्ति तत्र अस्मभ्यं शर्म शरणं सुखं जयनिमित्तं यंसन् यच्छन्तु ददात्वित्येतदाशास्महे।

'अश्वाजनी' (१९) इत्येतत्पदम्। तां पुनरेता 'कशेत्याहुः'।

**कशा कस्मात्** अश्वाजनीत्येतन्न निर्वक्तव्यं प्रत्यक्षवृत्तित्वादस्य। अथ 'कशा' कस्मात्। सा हि 'प्रकाशयति' प्रख्यापयति 'भयमश्वाय'। 'कृष्यतेर्वाणूभावात्'। अपकृष्टा हि सा भवति चर्मणोऽणी। 'वाक्' अपि कशेत्युच्यते। सा 'पुनः प्रकाशयत्यर्थान्' इति। अथवा। 'खशया'। वाक् खे मुखा-

---

१ छ. द कशया; त. कैशया° ख. २ क. ख. ९ (१९.) त द. ९. ३ ग. इति। य°. ४ ग. ज. च. वसतेर्गार्ध्रं वा°. ५ क. ख. घ. झ. ट. ठ ड. व्यथन°. ६ घ. झ. ट. ठ. ड. °यद्द्वेद्रव्यमिति. ७ क. ख. च. झ. ट. ठ. ड. संगच्छन्ति.

काशे शेते इति । 'क्रोशतेर्वा[२]' शब्दार्थस्य । या त्वश्वकशा तस्या 'एषा भवति' स्तुतये[१] ॥ १९ ॥

---

**आ जङ्घन्ति सान्वेषां जघनाँ उप जिघ्नते । अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ( ऋ० सं० ६ । ७५ । १३ ) ॥**　५

**आघ्नन्ति[३] सानून्येषां सरणानि सक्थीनि सक्थिः सचतेरासक्तोऽस्मिन्कायो जघनानि चोपघ्नन्ति जघनं जङ्घन्यतेरश्वाजनि प्रचेतसः प्रवृद्धचेतसोऽश्वान् समत्सु समरणेषु संग्रामेषु चोदयोलूखलमुरुकरं वोर्कर[४]ं वोर्ध्वखं वोरु मे कुर्वित्यब्रवीत्तदुलूखलमभवदुरुकरं वै[५]तत्तदुलूखलमित्याचक्षते परोक्षेणेति च ब्राह्मणं तस्यैषा[६] भवति ॥ २० ॥**　१०

---

आजङ्घन्ति सान्वेषामिति[७] । आजङ्घन्ति इति शतारं संबोधनम् ।

अश्वाजनिः　हे अश्वाजनि आजङ्घन्ति सानूनि एषां सरणानि समुच्छ्रितानि सक्थीनि कटिप्रदेशान्[८]　१५

जघनान् उपजिघ्नते । जघनानि स्फिग्देशाः । तांश्च हे अश्वाजनि उपजिघ्नति[१०] । इदमपि शतर्यैव । रथ्यानां[११] कटिप्रदेशमश्वाजन्यभिहन्ति पृष्ठयानां[१२] स्फिग्देशान् । हे अश्वाजनि या त्वमेवमभिहंसि सा त्वमेतान् अश्वान् प्रवृद्धचेतसः[१३] प्रकृष्टचेतसो गमनं प्रति समुत्सुकान् समत्सु समरणेषु सम्प्रामेषु तथा चोदय यथा जयेयमित्येतदाशास्महे ।　२०

'सानूनि सक्थीनि' । तानि पुनः 'सरणानि' । तद्बलेन हि

---

१ क. ख. घ. झ. ट. ठ. ड. 'स्तुतये' नास्ति. २ क. ख. ९ (१९); ट. °वति । इति निरु० भा० उ० तृ० एको० १९ खण्डः, ड. °वति । इति निरुक्तटीकायामुत्तरषट्के तृतीयाध्याये एकोनविंशतिः खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ३ क. ख. ड. त. ड. आघ्नन्ति; ठ. आजङ्घन्ति. ४ क. ख. छ. त. द. वोर्ध्वखं वोर्करं. ५ क. ख. चैतत्तदुलू°; ड. थ. ध. ठ. ड. चैतदु°. ६ क. ख. १० (२०); त. द. १०. ७ ग. °मिति । आ°; ठ. ड. आजङ्घन्तीति. ८ ठ. ड. आघ्नन्ति. ९ ग. ज. °देशात् । जघनानि स्फि°; च. °देशान् संघ्नते जघनानि स्फि°. १० ग. च. ज. जिघ्नन्ति. ११ क. ख. घ. झ. ट. ठ. ड. रथ्याना हि क°. १२ च. °भिह घ्नति. १३ क. ख. घ. झ. ट. ठ. ड. प्रचेतसः.　२५ ३०

सक्थिनी सर्तारः । ' सक्थि ' कस्मात् । ' सचते ' । किमस्मिन्सक्तम् । ' आसक्तोऽस्मिन् कायः ' कृत्स्नं शरीरम् । ' जघनं ' कस्मात् । तद्धि भृशं हन्यते कशया ।

उलूखलं कस्मात्

' उलूखलम् ' ( १९ ) इत्येतत्पदम् । तत्कस्मात् । तद्धि ' उरुकरं वा ' । उरुकरं बह्वन्नं करोति । उरुशब्दात्पूर्वपदं करोतेरुत्तरपदम् । ' ऊर्करं वा ' । ऊर्क्शब्दात्पूर्वपदम् । ऊर्जे एव हि करणार्थं तदुपयुज्यते । ' ऊर्ध्वखं वा ' । ऊर्ध्वशब्दात्पूर्वपदं खशब्दादुत्तरपदम् । ऊर्ध्वमेव हि तस्य खातं भवति । अथवा । ' उरु मे कुर्वित्यब्रवीत्तदुलूखलमभवत् ' ( शत० ब्रा० ७।५।१।२२ ) । तत्किल क्रियमाणमुरु मे त्वं कुर्वित्यब्रवीदिति तथागुणयुक्तत्वात्तस्य । तदुलूखलमभवत् । ब्राह्मणमपि च भवति । " उरुकरं वै तदुलूखलमित्याचक्षतेऽपरोक्षेण ' ( शत० ब्रा० ७।५।१।२२ ) । उरु करोतीत्युरुकरमेतत्प्रत्यक्षमव्यवहितगुणाभिधानम् । तत्पुनरेतद्वर्णव्यत्ययेन व्यवहितगुणमुच्यते उलूखलमिति । ' तस्यैषा ' स्तुतिः ' भवति ' ॥ २० ॥

---

**यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे । इह द्युमत्तमं वद जयतामिव दुन्दुभिः ( ऋ० सं० १।२८।५ ) ॥ इति सा निगदव्याख्याता ॥ २१ ॥**

---

## इति नवमाध्यायस्य द्वितीयः पादः ॥ २ ॥

यच्चिद्धि त्व गृहेगृह इति । शुनःशेपस्यार्षम् । ' आयजी वाजसा-

---

१ क. ख. घ. झ. ट. ठ. ड. 'करत्वादुरुकर°, ग. च. ज. उरुकं वा. २ ग. च. ज. उरुकर ब°. ३ झ. °पदम् । ऊर्जे एव°. ४ क. ख. पदम् । करोतेरेवोत्तरपदम् । ऊ, घ. झ. ट. ठ. ड. °पद करोतेर्वोत्तरपदम् । ऊ. ५ च. उरूक°. ६ ग. ज. ' उरु करोतीति ' नास्ति. ७ क. ख. १० (२०), ठ. °वति । इति निरु० भा० उ० तृ० ध्या० विंशः २० खण्डः, ( ड. °वति । इति निरुक्तटीकायामुत्तरषट्के ३ ध्याये विंश. खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ८ क. ख. ११ (२१), त. द. ११. ९ ङ. थ. ध. ' इति०० पादः ' नास्ति; छ. त. द्वितीयः पादः, द. इति नैरुक्ते उत्तरार्धस्य नव°. १० ग. इति । यु°; ठ. ड. °चिद्धि त्वमिति.

तमा' (ऋ० सं० १।२८।७ । निरु० ९ । ३६ ) इति च। सोमाभिषवे विनियोगः ( ऐ० ब्रा० ३३ । ५ ) । अभिमन्त्र्य चोपधीयतेऽग्निचयने । हे उलूखलक युज्यसे । यद्यपि त्वमन्नसंस्कारार्थं गृहे गृहे युज्यसे तथापि त्वम् इह एव अस्मद्गृहे द्युमत्तमं दीप्तिमन्तं गम्भीरम् अन्नैर्बहुभिः संस्क्रियमाणैः शब्दं वद । कथम् । जयतामिव दुन्दुभिः । ये हि जयन्ति तेषामेतदेव जयस्य पूर्वरूपं[२] भवति गम्भीरस्वनो दुन्दुभिः । ये पुनर्जीयन्ते तेषां रूक्षस्वर इति ॥ २१ ॥

उलूखलम्

चतुर्दशस्य द्वितीयः[३] पादः ।

---

तृतीयः पादः ।

**वृषभः प्रजां वर्षतीति वातिबृहति[४] रेत इति वा तद्वृषकर्मा वर्षणाद्वृषभस्तस्यैषा भवति ॥ २२ ॥**

---

' वृषभः ' ( १७ ) कस्मात् । स हि ' प्रजां वर्षति ' । प्रजोत्पत्तिकारणं रेतः सिञ्चति योनौ । ' अतिबृहति रेत इति वा ' । रेतः सेक्तुमतिशयेनासावात्मानमुद्यच्छति । ' तद्वृषकर्मा वर्षणाद्वृषभः ' । तेना[६]स्य वृषकर्मणा रेतोवर्षलक्षणेन[७] नृगौरप्यतिशयेन यो युक्तोऽसावपि वर्षणात् रेतोवर्षणा[८]द्धेतोः भकारमुपजनीकृत्वा वृषभ इत्युच्यते । ' तस्य ' गोवृषभस्य ' एषा ' स्तुतिः ' भवति '[९] ॥ २२ ॥

वृषभः कस्मात्

---

१ ग. च. ज. ' गृहे ' सकृदेव. २ क. ख. ११ ( २१ ); ठ. °इति । इति निरुक्त० उ० तृ० एकविंशतिः खण्डः; ड. इति । इति निरु० २१ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ३ ठ. °शस्यपादः; ड. °शस्य पादः २. ४ क. ख. १ ( २२ ), त. दृ. १. ५ ग. च. ज. ह. ६ क. ख. घ. झ. ट. ठ. ड. तेनास्य वृष°. ७ क. ख. घ. झ. ट. ठ. ड. °णेन गौर°; च. °क्षणे नृगौर°; ग. ज. रेतोवर्षणेन गो°. ८ ध. झ. ट.. वर्षणा°. ९ क. ख. १ ( २२ ); ठ. °वति । इति नि० उ० तृ० २२ खण्डः; ड. °वति । इति निरुक्तटीकायां० २१ खण्डः; घ. झ. ट. ज. अङ्को नास्ति.

न्यंक्रन्दयन्नुपयन्त एनममेहयन्वृषभं मध्य आजेः । तेन सूभर्वं शतवत्सहस्रं गवां मुद्गलः प्रधने जिगाय ( ऋ० सं० १० । १०२ । ५ ) ॥ न्यक्रन्दयन्नुपयन्त एनमिति व्याख्यातममेहयन्वृषभं मध्य आजेराजयनस्याजवनस्येति वा तेन तं सूभर्वं राजानं भर्वतिरत्तिकर्मा तद्वा सूभर्वं सहस्रं गवां मुद्गलः प्रधने जिगाय प्रधन इति संग्रामनाम प्रकीर्णान्यस्मिन्धनानि भवन्ति द्रुघणो द्रुममयो घनस्तत्रेतिहासमाचक्षते मुद्गलो भार्म्यश्व ऋषिर्वृषभं च द्रुघणं च युक्त्वा संग्रामे व्यवहृत्याजिं जिगाय तदभिवादिन्येषर्ग्भवति ॥ २३ ॥

---

न्यक्रन्दयन्नुपयन्त एनमिमिति[3] । एवं तावत् व्याख्यातं प्रतिपदम् । एकवाक्यतया तु मन्त्रस्य व्याख्येयमिति । मन्त्रदृगब्रवीति । यत् वृध्वे[4] केनाजेर्धास्त्वमेतं राजानमिति तत्र मे शृणुत । वृषभः यमेतम् आजेः संग्पथस्य मध्ये वर्तमानं वृषभं न्यक्रन्दयन् उपयन्ति न्यक्रन्दयन्तः एन हे जनाः युक्तां रयन्त युक्ता रयन्तीति उपयन्ति उपगच्छन्ति परिवृणवन्ति । अमेहयन्तश्च तं मुहूर्तं स्थीयता यावदयं संक्रन्मूत्र करोति ततो लघु सुख भविष्यतीति । स हि गोमिनामाजिमृतां स्वभावः । तेन अमुना वृषभेण सूभर्वं सुभगं शोभनभोगं राजानं वा । तद्वा सुभगं सुयवसदेशसमृद्धं शतवत् शतैस्तद्वत् संख्यासहस्र गवा दशशतानि । यद्वा । असंख्यं बहु । किमिति । मुद्गलोऽहं प्रधने धनं प्रति स्पर्धया विजिगीषोरावयोः प्रवृत्तयोर्वाहिकाया जिगाय जितवानिति ।

---

१ छ. त. द. ' आजेः ' नास्ति. २ क. ख. २ ( २३ ), त. द. २. ३ ग. °मिति । ए°; ठ. ड. °न्द्रयन्निति. ४ क. ख. यद्वृषभकेणाजेर्षी°; घ. यद्वृध्वे के°; झ. ट. यद् वृध्वे के°, ठ. ड. यद्वध्वे के°. ५ घ. झ. ट. मेये श्रु°. ६ ग. च. ज. सर°. ७ घ. झ. ट. जानाः. ८ च. युक्त्वा र°; क. ख. फुत्कारवन्तं कारयतोति उप°. ९ क. ख. घ. झ. ट. ठ. ड. अमेहयन्मेहयन्तश्च. १० घ. झ. ट. ठ. ड. शकृ°. ११ ग. च. ज. मानि°. १२ ग. च. ज. सुतगं. १३ क. ख. घ. झ. ट. ' वा ' नास्ति. १४ च. कमि°. १५ क. ख. घ. झ. ठ. ड. प्रधने सग्रामे धनं, ग. च. ज. प्रधाने.

**द्रुघणः कस्मात्** 'द्रुघणः' (१८) इत्येतत्पदम्। स पुनरयः 'द्रुमयो घनः' द्रुप्रकृतिः[1]। तत्प्रकृतिवचने मयट् (पाणि० ५।४।२१)। द्रुशब्दात् पूर्वपदं घनशब्दादुत्तरपदम्। मुद्गरोऽभिधेयः। 'तत्रेतिहासमाचक्षते' इति स्तुतिलाभनिमित्तमुभयोरप्येकमेव वृषभद्रुघणयोः।

**तत्रेतिहासः** 'मुद्गलो भार्म्यश्व[2] ऋषिः' इत्येवमादि[3]। स किल द्वितीयस्य गोरभावाद्राज्ञा सह प्रतिस्पर्धमानः ऐश्वर्यादन्वादिश्य[4] 'द्रुघणं' वृषभेण सह युक्त्वा[5] राज्ञा सहाजिं ससर्प। स च तं 'जिगाय' जितवान्। यथा चैतदेवं तस्यार्थस्य 'अभिवादिन्येषर्ग्भवति'[6] ॥ २३ ॥

---

**इमं तं पश्य वृषभस्य युञ्जं काष्ठाया मध्ये द्रुघणं शयानम्। येन जिगाय शतवत्सहस्रं गवां मुद्गलः पृतनाज्येषु (ऋ० सं० १०।१०२।९)॥ इमं तं पश्य वृषभस्य सहयुजं[7] काष्ठाया मध्ये द्रुघणं शयानं येन जिगाय शतवत्सहस्रं गवां मुद्गलः पृतनाज्येषु पृतनाज्यमिति संग्रामनाम पृतनानामजनाद्वा जयनाद्वा मुद्गलो मुद्गवान् मुद्गगिलो वा[8] मदनं गिलतीति वा मदगिलो वा मुदंगिलो वा भार्म्यश्वो भृम्यश्वस्य पुत्रो भृम्यश्वो भृमयोऽस्याश्वा अश्वभरणाद्वा पितुरित्यन्ननाम पातेर्वा पिबतेर्वा प्यायतेर्वा तस्यैषा भवति[9] ॥ २४ ॥**

---

इमं तं पश्य वृषभस्येति[10]। जितायामाजावभिमताभिमनगणमाजन्त[11] एवाप-

१ ग. च. ज. °कृति; झ. द्रुमप्रकृतिः. २ ग. °लो भार्म्यश्व, च. °लो भार्यस्यश्च. ज. °लोम्यश्व ऋ°. ३ ग. च. ज. °मादिः. ४ ग. ज. ऐश्वर्यं दत्वादिश्य द्रु°; च. ऐश्वर्यं दित्वादिश्य द्रु°. ५ ग. च. ज. युक्ता. ६ क ख. २ (२३); ठ. °वति। इति नि० उ० २३ खण्डः, ड. °वति। इति निरुक्तटीकायामुत्तरषट्के ३ ध्याये २३ खण्डः, घ. झ. ट ज. अङ्को नास्ति. ७ छ. द सहयुज, त. सहयुजं° यु. ८ छ. त. द. 'वा' नास्ति, ९ क. ख. ३ (२४),. त. द. ३. १० ग. °स्येति। जि°, त. ड. पश्येति. ११ ग. च. ज. ठ. ड. °मायन्त°, ढ. °माजन्त° ध.

विद्धमुद्गरो मुद्गलः केनचित्पृष्टः केन सह युक्त्वा वृषभेणेमं राजानमजैषीरिति । स तमुपदिशन्नेव द्रुघणमाउ्यन्ते तस्मिन्नपविद्धमसावज्ञमिव कुत्सयन् राजानमनर्चा तस्मै प्रत्याचचक्षे । इमं तं पश्य येनाजैषमिति । वृषभस्य सहयुजम् ।

द्रुघणः

५ वर्तमानम् । काष्ठायाः आउ्यन्तस्य मध्ये द्रुघणं शयानम् अपविद्धम् । येन जिगाय शतवत्सहस्रम् इति व्याख्यातम् ।

'पृतनाज्यमिति संग्रामनाम' । तत्कस्मात् । 'पृतनानामजनाद्वा' । पृतनाः मनुष्याः । ते यस्मिन्नजन्ति गच्छन्ति । पृतनाशब्दात्पूर्वपदमजतेरुत्तरपदम् । 'जयनाद्वा' । तत्रोत्तरपदं विकल्पयन्ति । ते हि तत्र जयन्ति । 'मुद्गलो मुद्गवान्' । लो मत्वर्थे । अथ 'वा मुद्गगिलो' मुद्गभोजनप्रायः । मुद्गशब्दः पूर्वपदं गिलशब्द उत्तरपदम् । 'मदनं गिलतीति वा' । मदनः कामः । तमसौ गिलति वशीकरोति । जितेन्द्रिय इत्यर्थः । मदनशब्दः पूर्वपदं गिलतिशब्द उत्तरपदम् । 'मदंगिलो वा' । मुदंगिलो वा । मद उद्रेकः । तमसौ गिलति । उपशान्त इत्यर्थः । 'मुदंगिलो वा' । हर्षमसौ गिलति । निवृत्त इत्यर्थः । 'भार्म्यश्वो भृम्यश्वस्य पुत्रः' । 'भृम्यश्वः' पुनः 'भृमयोऽस्याश्वाः' । अनवस्थायिनः । 'अश्वभरणाद्वा' । बिभर्त्ति वा अमावश्वान् ।

पृतनाज्यं कस्मात्

१०

मुद्गलश्च

१५

भार्म्यश्वश्च

२० 'पितु.' (१९) इत्येद्वक्तव्यम । तत्पूर्वेष्वेव गतं 'अन्ननाम' । तत्कस्मात् । 'पातेर्वा' रक्षणार्थस्य । 'पिबतेर्वा' पानार्थस्य । 'तस्यैषा भवति' ॥ (२४)॥

पितुः कस्मात्

---

पितुं नु स्तोषं महो धर्माणं तविषीम् । यस्य त्रितो व्योजसा

२५ वृत्रं विपर्वमर्दयत् (ऋ० सं० १ । १८७ । १)॥ तं पितुं स्तौमि महतो

---

१ ग. घ. ज. ठ. ड. मायन्ते. २ च. मुद्गलो मुद्गभोजन°. ३ क. ख. घ. झ. ट. ठ. ड. शब्दात्. ४ क. ख. ट. झ. ट. ठ. ड. शब्दादुत्त°; च. लिंगश°. ५ क. ख. ३ (२४); ठ. ड. °वति । इति निरुक्तटीकाया (ठ. °रुक्तभाष्ये) मुत्तरषट्के तृतीयेऽध्याये चतुर्विंशतिः खण्डः; घ. झ. ट. ज. अङ्को

३० नास्ति.

धारयितारं बलस्य तविषीति बलनाम तवतेर्वृद्धिकर्मणो यस्य त्रित ओजसा बलेन त्रितस्त्रिस्थान इन्द्रो वृत्रं विपर्वाणं व्यर्दयति नद्यो व्याख्यातास्तासामेषा भवति ॥ २५ ॥

---

पितुं नु स्तोषमिति । अगस्त्यस्यार्षम् । यस्य पितोः ओजसा बलेन बलाधिपतिरपीन्द्रः त्रिस्थानः त्रिषु स्थानेष्वप्रतिहतप्रभावः वृत्र मेघं विपर्वं विगतपर्वाणं विगतसन्धिबन्धनं कृत्वा व्यर्दयत् विविधमर्दयति अपुनरावृत्तये तं पितुम् अहम् अन्नं तविषीसंज्ञकस्य महतो बलस्य धर्माणं धारयितारं स्तौमि। को हि नाम तन्न स्तुयाद्यस्माद्दते त्रिलोकाधिपतिरपीन्द्रः किंचिद्प्यशक्तः कर्तुमित्यभिप्रायः। 'तविषी (निघ० २।९।१०) इति बलनाम' 'तु वृद्धौ' इत्यस्य। तद्धि सर्ववस्तुभ्यो ज्यायः।

'नद्यः' (२०) अवसरप्राप्ताः। ताः पुनरेताः 'व्याख्याताः' 'नदना भवन्ति शब्दवत्यः' (निरु० २।२४) इति। 'तासामेषा भवति'॥२५॥

---

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या। असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ( ऋ० सं० १०।७५।५)॥ इमं मे गङ्गे यमुने सरस्वति शुतुद्रि परुष्णि स्तोममासेवध्वमासिक्न्या च सह मरुद्वृधे वितस्तया चार्जीकीय आशृणुहि सुषोमया चेति समस्तार्थोऽथैकपदनिरुक्तं गङ्गा गमनाद्यमुना प्रयुवती गच्छतीति वा प्रवियुतं गच्छतीति वा सरस्वती सर इत्युदकनाम सर्तेस्तद्वती शुतुद्री शुद्राविणी क्षिप्रद्राविण्याशु तुन्नेव द्रवतीति वेरावतीं परुष्णीत्याहुः पर्ववती कुटिलगामिन्यसिक्न्य-

---

१ क. ख. ङ. थ. ध. ठ. ड. तवतेर्वा वृद्धि°. २ छ. त. द. व्योज°. ३ क. ख. ४ (२५), त. द. ४ च. विपर्व वि°. ५ क. ख. घ. झ. ट. ठ. ड. अन्नमहं. ६ क. ख. घ. झ. ट. ठ. ड. महो महतो. ७ क. ख. घ. झ. ठ. ड. न तत्. ८ ग. च. ज. स्तवया°. ९ घ. झ. ठ. ड. °वसुभ्यो; ट. वसुभ्यो° स्तु. १० क. ख. ४ (२५); ठ. ड. °वाति। इति निरुक्तटीकाया—(ठ.- °रुक्तभाष्ये) मुत्तरषट्के तृतीयेऽध्याये पञ्चविंशतिः खण्डः, घ. झ. ट. ज. अङ्को नास्ति. ११ क. ख. ड. थ. ध. ठ. ड. °वती भास्वती कुटि°.

शुक्लासिता सितमिति वर्णनाम तत्प्रतिषेधोऽसितं मरुद्वृधाः सर्वा नद्यो मरुत एना वर्धयन्ति वितस्ता विदग्धा विवृद्धा महाकूलार्जीकीयां विपाळित्याहु[1]र्ऋजी[2]कप्रभवा वर्जुगामिनी वा विपाड्विपाटनाद्वा विपाशनाद्वा विप्रापणाद्वा पाशा अस्यां व्यपाश्यन्त वसिष्ठस्य । मुमूर्षतस्तस्माद्विपाळु[3]च्यते पूर्वमासीदुरुञ्जिरा सुषोमा सिन्धुर्यदेनामभिप्रसुवन्ति नद्यः सिन्धुः स्यन्दनादापआप्नोतेस्तासामेषा भवति ॥ २६[4] ॥

---

इम मे गङ्गे यमुने इति[5] । हे मरुद्वृधे गङ्गे यमुने सरस्वति शुतुद्रि[6]

नद्यः

यूयम् इम मे मम स्तोमम् आसेवध्वं परुष्ण्या सह । मरुद्वृधे आर्जीकीये त्वमपि असिक्न्या वितस्तया सुषो[7]मया च सह आशृणुहि आभिमुख्येन स्थित्वा शृणुहीति समस्तार्थः । एवं सर्वत्र पूर्वं समस्तार्थो वक्तव्य इत्युपप्रदर्शनार्थम् ।

'अथैकपदनिरुक्तम्' । 'गङ्गा गमनात्' । सा हि विशिष्टं स्थानं

गङ्गादिशब्दानां व्युत्पत्तिः

गच्छति । गमयति वा प्राणिनो विशिष्टं स्थानमिति गङ्गा । 'यमुना प्रयुवती गच्छति' । प्रकर्षेण मिश्रयन्त्यन्याभिर्नदीभिः स्वान्युदकानि गच्छति । 'प्रवियुतं गच्छतीति वा' । स्तिमितमिव तरङ्गैर्गच्छति । 'सरस्वती सर इत्युदकनाम' । तत्कस्मात् । 'सर्तेः' 'सृ गतौ' (धा० पा० १–९६० ॥ ३–१७) इत्यस्य । तेन सरसा विशिष्टेन 'तद्वती' । विज्ञायते हि राजसूये सारस्वतीनामपामभिषेकार्थवादः । 'वरुणस्य वा अभिषिच्यमानस्येन्द्रियं वीर्यमपाक्रामत्तत्रेधाभवद्भृगुस्तृतीयमभवच्छ्रायन्तीयं तृतीयं सरस्वतीं तृतीयं प्राविशत्' (मैत्रा० स० ४ । ३ । ९) इति । 'शुतुद्री शुद्राविणी क्षिप्रद्राविणी' । शु इति क्षिप्रनाम । अथ 'वा आशु' क्षिप्रमसौ 'तुन्नेव' विद्धेव केनचित् 'द्रवति' । आकारलोपः पूर्वपदे । 'इरावतीं परुष्णीत्याहुः' । येयमिरावतीति लोके प्रसिद्धा तामिमामेतस्मिन्मन्त्रे मन्त्रार्थविदः परुष्णीत्याहुः । सा कस्मात् ।

---

१ छ. त. द. °पालित्या°. २ ड. ध ठ. ड. °र्ऋजूक°, थ. °र्ऋजुक°. ३ छ. त. द. °पालुच्य°. ४ क. ख. ५ (२६) त. द. ५. ५ ग. इति[22] । हे°, ठ. ड. °यमुने सरस्वतीति. ६ ग. च. ज. सुतु°. ७ च. सुषोम°.

'पर्ववती'। किमुक्तं भवति । 'कुटिलगामिनी' इति । तदस्याः पर्ववत्त्वं यानि कुटिलानि तानि पर्वाणीव तस्यास्तैस्तद्वतीति । 'असिक्नी' कस्मात् । सा हि 'अशुक्ला असिता'। कथम् । 'सितमिति वर्णनाम'। स च पुनः शुक्ल इति प्रसिद्धो लोके । 'सितासितौ यद् वृष्णौ' इति बलदेववासुदेवावधिकृत्योक्तम् । तस्य शुक्लस्य 'प्रतिषेधोऽसितम्'। कृष्णमित्यर्थः । तस्मात्कृष्णोदका असिक्नी । 'मरुद्वृधाः सर्वा नद्यः । मरुत एना वर्धयन्ति' वर्षेण । तस्मात्प्रत्येकं नद्यभिधानमनुपश्यन्ते[1] विशेषणत्वेन हे मरुद्वृधे गङ्गे हे मरुद्वृधे यमुने इति । 'वितस्ता अविदग्धा'। 'वैदेहको नामाग्निः । स किल नदीरन्या निर्ददाह न ताम्' इति सामिधेनीब्राह्मणे विज्ञायते । अथवा । 'विवृद्धा महाकूला[2]'। विस्तीर्णा । 'आर्जीकीयां लोके विपाळित्याहुः[3]' । सा कस्मात् । 'ऋजीकप्रभवा' । ऋजीको[4] नाम पर्वतस्तस्मात्प्रभवतीति तद्धितेन । अथ 'वा । ऋजुगामिनी' मत्यार्जीकीया । 'विपाट् विपाटनाद्वा'। विपाटयत्यसौ भूमिमतिवेगवत्त्वाद्गच्छन्तीति । 'विपाशनाद्वा'। किमस्या व्यपाश्यन्त । 'पाशा अस्या व्यपाश्यन्त वसिष्ठस्य मुमूर्षतः[6]' । वसिष्ठः किल ममज्जास्यां मुमूर्षुः पुत्रमरणशोकार्तः पाशैरात्मानं बद्ध्वा । तस्य किल ते पाशा अस्या व्यपाश्यन्त[7] । व्यमुच्यन्तोदकेन । ततः प्रभृति सा विपाडभवत् । 'पूर्वमासीदुरुञ्जिरा' नाम सा । उरुजलेत्यर्थः । 'विप्रापणाद्वा' उदकानां विपाट् । 'सुषोमा[8] सिन्धुः' । सा कस्मात् । 'यदेनामभिप्रसुवन्ति' अभिगच्छन्त्यन्याः प्रभृता 'नद्यः'। 'सिन्धुः' कस्मात् । 'स्यन्दनात्'। सा ह्यविच्छेदेन विशेषतः स्यन्दत इति ।

'आपः' (२१) इत्येतत्पदम् । ताः पुनरेताः[9] 'आप्नोतेः'। सर्वमाभिराप्तमिति । 'नामामेषा भवति' ॥ २६ ॥

---

१ ग. च. ज ठ. ड. °पश्यन्ते २ क. ख. ग. च. ज. महाकुला. ३ क. ख. °पाडित्या°, ग. च. ज. ष. झ. ट. °पाळित्या°. ४ ग च. ज. ऋजूको°, ठ. ह. °ऋजुको°. ५ ग. च. ज. वगन्वा°. ६ ग. च. ज. महर्ष°. ७ ग. च. ज. °पास्यन्त. ८ ग. च. ज. सुखोमा. ९ क. ख. ५ (·६), ठ. ड. °वति । इति निरुक्तटीकायामृतरत्नके तृतीयेऽध्याये षड्विंशतिः खण्डः; घ. झ ट. ज. अङ्को नास्ति.

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ( ऋ० सं० १० । ९ । १ ) ॥ आपो हि स्थ सुखभुवस्ता नोऽन्नाय धत्त महते च नो रणाय रमणीयाय च दर्शनायौषधय ओषद्धयन्तीति वौषत्येना धयन्तीति वा दोषं धयन्तीति वा तासामेषा भवति ॥ २७ ॥

५

---

आपो हि ष्ठेति । सिन्धुद्वीपस्यार्षम् । हे आपः आपयित्र्यः स्थ मयोभुवः मयोभावयित्र्यश्चैव सुखभावयित्र्यः याः ताः यूयम् अस्मान ऊर्जे अन्नाय यथा वयमन्नं स्याम भोजनाय च दधातन धारयत अनुगृह्णीध्वम् । किंच । महे रणाय महते च नो रणाय रमणीयाय चक्षसे दर्शनाय । श्रुतिस्मृत्युदितसम्यग्दर्शना भूत्वा अन्नप्रयोगे यथा वर्तेमहि तथा कुरुध्वं यूयमित्येतदाशास्महे ।

आपः

१०

'ओषधयः' (२२) इत्येतत्पदम् । ताः पुनरेताः 'ओषद्धयन्ति'। यत्किंचिदोषच्छरीरे दहद् रोगजातं भवति क्षयादि तदेता आत्ताः सत्यो धयन्ति पिबन्ति नाशयन्ति । तदेवमोषतेः पूर्वपदं धयतेरुत्तरपदं कर्तरि कारके । 'ओषत्येना धयन्तीति वा' । ओषति कस्मिंश्चिदुदरादावङ्गे एना धयन्ति पिबन्ति प्राणिनो दाहोपशमनाय ताश्च धातू कर्मणि कारके । 'दोषं धयन्तीति वा' । यः कश्चिदुपजायते दोषो वातादिकृतः शरीरे तमेता धयन्ति । इति दोषशब्दात्पूर्वपदं धयतेरेवोत्तरपदं कर्तर्येव कारके ।

ओषधयः कस्मात्

१५

२०

'तासाम्' ओषधीनाम् 'एषा' 'भवति' ॥ २७ ॥

---

१ छ. त. द. आपं धय°. २ छ वौष° वौ, त. वोष°. ३ क. ख. ६ (२७); त. द. ६ ४ ग. °र्ति । सि°. ५ ग ज. °दित्र्यं सुख°; च. °यित्र्यश्च सु°. ६ क. ख. घ. झ. ट. ठ. ड. यूयं नोऽस्मा°. ७ घ. झ. ट. ठ. ड. च तथा द°. ८ क. ख. ग. च. ज. गृह्णीध्वम ९ ग. घ. ज. ओषधयान्ति १० ग. ज. आत्ताः ११ ग. च. ज. उप°. १२ ग. च. ज. °णिनो नो दाह उपशाम ( घ. °नान ) य । ताश्च°. १३ ग. घ. ज. कर्मकार°. १४ क ख. ( २७ ), ट. ड. °वति । इति निरुक्तटीकायामुत्तरषट्के ( ठ. निरु० भाष्ये उ० ) तृतीयेऽध्याये सप्तविंशतिः खण्डः, घ. झ. ट ज. अङ्को नास्ति.

२५

३०

या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनै नु बभ्रूणामहं शतं धामानि सप्त च ( ऋ० सं० १० । ९७ । १ ) ॥
या ओषधयः पूर्वा जाता देवेभ्यस्त्रीणि युगानि पुरा मन्ये नु तद्बभ्रूणामहं बभ्रुवर्णानां हरणानां भरणानामिति वा । शतं धामानि सप्त च । धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति जन्मान्यत्राभिप्रेतानि सप्त शतं पुरुषस्य मर्मणां तेष्वेना दधतीति वा रात्रिर्व्याख्याता तस्या एषा भवति ॥ २८ ॥　　५

या ओषधीः पूर्वा जाता इति । ओषधिसूक्ते प्रथमैव । अग्निचयने

ओषधयः

क्षेत्रमनेन मन्त्रेण ग्राम्यारण्याभिरोषधीभिरुप्यते ( मैत्रा० सं० २ । ७ । १३ ) । या एता　　१०

ओषधयः पूर्वाः प्रथमजाताः । कुतः । देवेभ्यः । न तावद्देवा उत्पद्यन्ते । अथैता एव पूर्वमुत्पद्यन्ते । कियति काले । त्रियुग पुरा । कलिद्वापरत्रेताभ्यः पूर्वम् आदिकल्पे आद्ये कृतयुगे । देवानामपि ह्यन्नमनपेक्ष्य जीवनहेतु स्थितिर्नास्तीति पूर्वमन्नमुत्पद्यते पश्चाद्देवा इति । किं तासामिति । मनै नु बभ्रूणामहं शतं धामानि सप्त च । तासाम् अहं　　१५
बभ्रूणा बभ्रुवर्णानाम् । ओषधयः स्वभावतः सर्वा एव पच्यमाना बभ्रुवर्णाः कपिलाः संपद्यन्ते । मनै जाने । शतं धामानि सप्त च । सप्ताधिकं शतमहं नाम्ना यथावज्जाने । अथवा । बभ्रूणामिति वर्णव्यापत्त्या 'हरणानाम्' इति । ता हि क्षुदादि हरन्ति । 'भरणानामिति वा' ।
भर्त्र्यस्ताः सर्वस्य भूतग्रामस्य वा । 'स्थानानि नामानि जन्मानि　　२०
धामानि त्रयाणि भवन्ति' । इह तु 'जन्मान्यभिप्रेतानि' । सप्तशतमोष-

धामशब्दस्यार्थाः

विजातय एतस्मिन्मन्त्रे अभिप्रेताः । अथवा । 'सप्तशतं पुरुषस्य मर्मणां तेष्वेना दधतीति वा' । अस्मिन् पक्षे धामानि स्थानानि ।

---

१ छ. त. द 'भरणानां हरणानामिति' । सायणभाष्ये निरुक्तपाठस्तथैव. २ ड. थ. ध. ठ. ड. ऽति. ३ छ. त. स्थानान्य° जन्मा. ४ क. ख. ७ ( २८ ); त. द. ७. ५ ग. इति २८ । ओ°, ठ. ड. ओषधीरिति. ६ ग. च. ज. 'स्थिति नास्ती°. ७ क. ख. घ. झ. ट. ठ. ड. धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानि.

'रात्रिः' (२३) इत्येतत्पदम् । तत्पुनरभिधानतोऽभिधेयतश्च व्याख्यात 'रातेर्दानकर्मणः' (निरु० २ । १८) इति । तस्या एषा[1] 'भवति' ॥ २८ ॥

---

आ रा॑त्रि॒ पार्थि॑वं॒ रजः॑ पि॒तुर॑प्रायि॒ धाम॑भिः । दि॒वः सदां॑सि बृह॒ती वि ति॑ष्ठस॒ आ त्वे॒षं व॑र्तते॒ तमः॑ ( खैलिकं सूक्तं २५ ) ॥ आपूपुरस्त्वं रात्रि पार्थिवं रजः स्थानैर्मध्यमस्य दिवः सदांसि बृहती महती वितिष्ठस आ वर्तते त्वेषं तमो रजोऽरण्यान्यरण्यस्य पत्न्यरण्यमपार्णं ग्रामादरमणं भवतीति वा तस्या एषा भवति ॥ २९ ॥

---

आ रात्रि पार्थिवं रज इति । कुशिकस्यार्षं रात्र्या वा । हे रात्रि या त्वम् आपूपुरः पार्थिवं रजः । पृथिवीलोकमापूरयसि । किं केवलमेतदेव । नेत्युच्यते । पितुर्धामभिः । मध्यमस्य स्थानैः सह । महान्तरिक्षेण । तदपि व्याप्यते तमसा । किमेतावदेव । नेत्युच्यते । किं तर्हि । दिवो द्युलोकस्यापि यानि सदांसि सदनानि । येषु द्युलोकवासिनः सदनेषु सीदन्ति तान्यपि । बृहती महती यस्मात्त्वं तस्माद्दूरेऽपि वर्तमाना वितिष्ठसे । विष्टभ्य तिष्ठसि । न केवलं विष्टभ्यैव तिष्ठसि । किं तर्हि । आपूर्य द्युलोकमपि तत्पूरणातिशिष्टं तमः त्वेषं महत्पुनरिममेव लोकं प्रत्यावर्तते यस्यास्तव सा त्वमस्माकं सर्वदा शिवा भवेत्येतदाशास्महे ।

---

१ क. ख. घ. झ. ट. एषा स्तुतिर्भवति. २ क. ख. ७ (२८), त. °वति । इति निरुक्तभा° उत्तरषट्के तृ° ध्याये अष्टाविंशतिः खण्डः; द. °वति । इति निरुक्तटीकायामुत्तरषट्के ३ ध्याये २८ खण्डः, ग. च. वर्जमितरेष्वङ्को नास्ति. ३ ड. ध. पितुरः प्राय धा , थ पितुरप्रायि° य, ड. पितुरप्रायु वा°. ४ क. ख. ८ (२९), त. द. ८. ५ ग. इति° । कु°. ६ च. °च्यते° । किं तर्हि° पितुर्धा० नेत्युच्यते. ७ क. ख. घ. झ. ट. पूरयसि, ठ. ड. पूरयसे. ८ क. ख. घ. झ. ट. ठ. ड. स्थानेषु सीदन्ति. ९ ग. च. ज. आपूर्य.

'अरण्यानी' (२४) इत्येतत्पदम् । सा पुन: 'अरण्यस्य पत्नी' पालयित्री देवता । अथ अरण्यं कस्मात् । तद्धि ग्रामादपार्णमपगतं भवति । 'ऋ गतौ' (धा० १-९६१॥ ३-१६) इत्यस्य । 'अरमणं भवतीति वा' । रमे: प्रतिषेधपूर्वस्य । न ह्यरण्ये रतिर्भवति । 'तस्या एषा भवति' ॥ २९ ॥

अरण्यानीपदस्यार्थ:

अरण्यं कस्मात्

---

अरण्यान्यरण्यान्यसौ या प्रेव नश्यसि । कथा ग्रामं न पृच्छसि न त्वा भीरिव विन्दती३ँ ॥ (ऋ० सं० १० । १४६ । १) ॥ अरण्यानीत्येनामामन्त्रयते यासावरण्यानि वनानि पराचीव नश्यसि कथं ग्रामं न पृच्छसि न त्वा भीर्विन्दतीवेतीव: परिभयार्थे वा श्रद्धा श्रद्धानात्तस्या एषा भवति ॥ ३० ॥

---

अरण्यान्यरण्यानीति । देवमुनेरार्षम् । संबुद्धावेकवचनं पूर्वम् । द्वितीयाबहुवचनमुत्तरम् । उत्पन्नदिङ्मोहो मन्त्रदृगरण्ये भीतोऽरण्याधिदेवतामरण्यानीं ब्रवीति । अहं तावदेतस्मिन्नरण्ये निरमणे भीत: । त्वं कथं न बिभेषीति भीषयमाण इव । हे अरण्यानि कथं त्वम् अरण्यान्येव वनानि प्रति केवलं प्रेव पराच्येव पराङ्मुखेव अनावर्तमाना नश्यसि । असौ असाविति दृश्यमानेव । यतो ब्रवीमि । कथं किमिति ग्रामं न पृच्छसि । न त्वा भीर्मामिव विन्दति । अथ 'वा ईव: परिभयार्थे' ।

१ क. ख. घ. झ. ट. ठ. ड. कस्मात् । अरण्यमपार्णं ग्रामात् । तद्धि°. २ क. ख. ८ (२९), ठ. °वति । इति नि० भा० उ० तृ० २९ खण्ड:, ड. °वति । इति निरुक्तटीकायामुत्तरषट्के ३ ध्याये २९ खण्ड:; घ. झ. ट. ज. अङ्को नास्ति. ३ क. ख. ९ (३०); त. द. ९. ४ ग. °नीति[२६] । दे; क. ख. व. झ. ट. ठ. ड. °नीति ऐ (ठ. ड. ए) रमदस्य दे°. ५ च. पूर्वं अरण्यमपार्णं ग्रामात् । द्वि°. ६ क. ख. व. झ. ट. ठ. ड. °दिङ्मोहो. ७ ग. ज. भीतोऽरधिदे°; च. °रण्योधिदे°. ८ ग. च. ज. वनानि. ९ ग. ज. प्रेव. १० ग. च. ज. नस्यसि. ११ घ. झ. ट. ठ. ड. कथा ग्रामं न पृच्छसि । कथं°. १२ ग. च. ज. इव प°.

न त्वमीषदपि बिभेषीति परीषदर्थः । तद्यथा । परिमधुरं पर्याप्तमिति ।

'श्रद्धा' (२५) इत्येतत्पदम् । अत्र 'श्रत्' इति सत्यनाम पूर्वपदम् । तत्सत्यमस्यां धीयत इति श्रद्धा । धर्मार्थकाममोक्षेष्वविपर्ययेणैवमेतदिति या बुद्धिरुत्पद्यते तदधिदेवता भावाख्या श्रद्धेत्युच्यते । सा पुनराग्नेयं सर्वं प्रकाशमित्यग्निरेव । 'तस्या एषा भवति' ॥ ३० ॥

श्रद्धा कस्मात्

---

श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः । श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ( ऋ० सं० १० । १५१ । १ ) ॥

१० श्रद्धयाग्निः साधु समिध्यते श्रद्धया हविः साधु हूयते श्रद्धां भगस्य भागधेयस्य मूर्धनि प्रधानाङ्गे वचनेनावेदयामः पृथिवी व्याख्याता तस्या एषा भवति ॥ ३१ ॥

---

श्रद्धयाग्निः समिध्यत इति । श्रद्धायाः कामायन्या आर्षम् । य एव अग्निः श्रद्धया उपेत श्रद्धयैवास्तिक्यबुद्धिमालम्ब्य समिध्यते कर्मणि स एव साधु शोभनं समिध्यते । इतरो हि समिद्धोऽप्यसमिद्ध एवाश्रद्धासमिद्धाग्निकर्मणः फलाभावात् । एवमेव श्रद्धया हूयते हविः । यदेव श्रद्धया हूयते हविस्तदेव साधु हूयतेऽन्यस्याफलत्वात् । उक्तं च । 'नाश्रद्दधानाय हविर्जुषन्ति देवाः' इति । एवं चेत् श्रद्धा भगस्य मूर्धनि वचसा वेदयामसि । भगस्य भागधेयस्य धर्मस्य मूर्धनि । मूर्धा शिरः । प्रधानमिदमङ्गं धर्मस्य या श्रद्धा । तदभावे धर्माभावात् । अपि च । वचसा एव वचनेनैव मन्त्रगतेन

श्रद्धा

१ ग. पर्यन्तमिति । ३० । अ°; च. ज. प्रर्यन्तमिति. २ ग. च. ज. °मस्या-न्धीयत°. ३ क. ख. ९ (३०), ठ. °वति । इति निरु० भा० उ० तृती० ३० खण्डः; ड. °वति । इति निरुक्तभाष्ये तृतीयेऽध्याये ३० खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ४ क. ख. १० ( ३१ ), त. द. १०. ५ ग. इति । अ°. ६ घ. झ. ट. ठ. ड. कामायिन्या. ७ ग. च. ज. अद्धेवा°. ८ च. °ध्यते स एव साध्व 'शोभनं न इत°. ९ ग. च. ज. 'वचनेनैव' नास्ति.

'अश्रद्धामनृते दधाच्छ्रद्धां सत्ये प्रजापतिः' इत्यनेनैतदुद्धाव्य शिरः प्रकाशमावेदयामः आघोपयामो नाश्रद्दधानस्य धर्म इति ।

'पृथिवी (२६) व्याख्याता'। 'अथ वै दर्शनेन पृथः' इत्यत्र (निरु० १ । १४)। 'तस्या एषा भवति' ॥ ३१ ॥

---

५

**स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः (ऋ० सं० १ । २२ । १५) ॥ सुखा नः पृथिवि भवानृक्षरा निवेशन्यृक्षरः कण्टक ऋच्छतेः कण्टकः कन्तपो वा कृन्ततेर्वा कण्टतेर्वा स्याद्गतिकर्मण उद्गततमो भवति यच्छ नः शर्म यच्छन्तु शरणं सर्वतः पृथ्वपृा व्याख्याता तस्या एषा भवति ॥ ३२ ॥** १०

---

स्योना पृथिवि भवेति । मेधातिथेरार्षम् । हिरण्यनाशप्रायश्चित्तेष्ट्या

पृथिवी भौमस्यैककपालस्य पुरोऽनुवाक्या (मैत्रा० सं० २ । २ । ७) । हे पृथिवि स्योना १५

सुखा त्वमस्माकं भव । कथम् । अनृक्षरा निष्कण्टका निवेशनी निवासयोग्या । निविष्टाना चास्माकं यच्छ देहि शर्म सुखं सर्वतः पृथु सर्वतो विस्तीर्णमिति ।

'ऋक्षरः कण्टक ऋच्छतेः' । कमहं तापयामीत्येवमर्थमुद्गतः कण्टकः । कण्टतेर्वा । स हि 'उद्गततमो भवति' वृक्षात् । २०

---

१ ग. इति । ३१ । पृ°. २ क. ख. १० (३१); ठ. °षति । इति निरु० उ० तृ० ३१ खण्डः; ड. वति निरुक्तभाष्ये ३१ खण्डः; ग. ज. घ. झ. ट. अङ्को नास्ति. ३ छ. त. द. °तरो. ४ क. ख. १२ (३२); त. द. ११. ५ ग. °वाते । मे°. ६ ग. च. ज. °मस्येक°. ७ ग. च. ज. द्यावापृथिवि. ८ क. ख. घ. झ. ट. ठ. ड. अनृक्षरा निवेशनी । अनृ°. ९ क. ख. घ. झ. ट. ठ. ड. ऋच्छतेः । कण्टकः कंतपो वा कृन्ततेर्वा कण्टतेर्वा स्याद्गतिकर्मण उद्गततमो भवति । कर्म; ग. च. ज. ऋक्षतेः. २७

'अप्वा' (२७) व्याख्याता। 'अप्वा यदेनया विद्धोऽपवीयते व्याधिर्वा भयं वा' इत्यत्र (निरु० ६। १२)। 'तस्या एषा भवति'॥ ३२॥

---

५ **अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि। अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् (ऋ० मं० १०। १०३। १२)॥ अमीषां चित्तानि प्रज्ञानानि प्रतिलोभयमाना गृहाणाङ्गान्यप्वे परेह्यभिप्रेहि निर्दहैषां हृदयानि शोकैरन्धेनामित्रास्तमसा संसेव्यन्तामग्नाय्यग्नेः पत्नी तस्या**

१० **एषा भवति॥ ३३॥**

---

अमीषां चित्तमिति। अप्रतिरथस्यार्षम्। हे अप्वे अमीषाम् अस्मच्छत्रूणां चित्तानि मनांसि प्रतिलोभयन्ती प्रत्येकं लोभयन्ती गृहाण अङ्गानि। सर्वगात्राण्याविश। त्वयैते आविष्टसर्वगात्राः साध्वसिन उत्पन्नवेपथवः संमूढा अप्रतिपक्षाः सन्तु। परेहि परागच्छ एतान्। अपि च। यावन्न प्रत्यवस्थितास्तावदेकैकं क्षिप्रम् अभिप्रेहि। अभिप्रगम्य च निर्दह एषां हृदयानि शोकैः। त्वयैते निर्दग्धहृदया अस्मदमित्रा अन्धेन तमसा संसेव्यन्तामित्येतदाशास्महे।

(अप्वा)

२० 'अग्नायी' (२८) अग्नेः पत्नी। 'तस्या एषा भवति'॥ ३३॥

---

१ ग. च. ज. यदेनया. २ च. 'पर्धीय°. ३ क. ख. घ. झ. ट. ठ. ड. °त्यत्र व्याख्याता। त°. ४ क. ख. ११ (३२), ठ °वति। इति निरु० भाष्ये उ० तृ० द्वात्रिंशः खण्डः, ड. °वति। इति निरुक्तभाष्ये ३२ खण्डः; घ. झ. ट. ज. अङ्का नास्ति. ५ छ. त. द. 'प्रज्ञानानि' नास्ति. ६ क. ख. १२ (३३); त. द. १२. ७ ग. °भिनि। अ°. ८ क. ख. घ. झ. ट. ठ. ड. °यन्ती प्रत्येकं लोभयमाना गृ°. ९ क. ख. घ. झ. ट. ठ. ड. सचन्तां मन्°. १० क. ख. १२ (३३), ठ. °वति। इति निरुक्तभा० उ० तृतीये ३३ खण्डः, ड. °वति। २५ इति निरुक्तभाष्ये ३३ खण्डः; घ. झ. ट. ज. अङ्का नास्ति.

इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये । अग्नायीं सोमपीतये ( ऋ० सं० १ । २२ । १२ ) ॥ इति सा निगदव्याख्याता ॥ ३४ ॥

इति नवमाध्यायस्य तृतीयः पादः ॥  ५

इहेन्द्राणीमुपह्वय इति । इह कर्मणि अग्नायीम् उपह्वये सोमपानाय आत्मनश्च स्वस्तये । इन्द्राणीम् । अपि च । वरुणानीम् । असाधारण्येन । इन्द्राणीं च वरुणानीं च अग्नायीं च इह कर्मण्युपह्वये सोमपानाय स्वस्तये चेत्येवं सति 'तस्या एषा भवति' इति भाष्यवचनं नोपपद्यते । सोमपानसंबन्धान्मध्यमेति चेन्नैतत् । अग्निरपि हि सोमपानसंबन्धे उक्तः 'सोमं पिब मन्दसानो गणश्रिभिरिति' तस्मात् 'उपपद्यते' इति ( निरु० ८।२ ) ॥ ३४ ॥  १०

अग्नायी ।

अस्यामृचि इन्द्राणीवरुणान्यौ स्तूयेते । तेन 'तस्या एषा भवति' इति वचनं नोपपद्यते  १५

चतुर्दशस्य तृतीयः पादः ।

चतुर्थः पादः ।

अथातोऽष्टौ द्वंद्वान्युलूखलमुसले उलूखलं व्याख्यातं मुसलं मुहुः सरं तयोरेषा भवति ॥ ३५ ॥  २०

१ क. ख. १३ ( ३४ ), न इ. १३. २ ड. थ घ. 'इति॰ पादः' नास्ति; छ तृतीयः पादः, त. नवमस्य तृ°, द. इति नैरुक्ते उत्तरार्धस्य नव°. ३ क. ख. घ. झ ट. इति । इति सा निगदव्याख्याता । इति, ग इति । इह°; त. ड. °न्द्राणीमिति । इति सा निगदव्याख्याता । इ°. ४ क. ख. घ. झ. ट. ठ. ड. भाष्यकारवचन. ५ क. ख. १३ ( ३४ ), ग. च. वर्जमितरेष्वङ्को नास्ति. ६ ठ. ड. इति चतुर्दशाध्यायस्य तृ°. ७ ठ °पादः । इति निरुक्तभाष्ये उ० तृ० चतुस्त्रिंशः खण्डः; ड. °पादः । इति नैरुक्तभाष्ये २४ खण्डः . ८ क. ख. १(३५); त द. १.  २१

' अथातोऽष्टौ द्वंद्वानि ' इति । अथादेः पूर्वस्माद्वर्गाद्विलक्षणोऽयमपरो द्वंद्ववर्ग इति पृथगविकारवचनम् । अथातःशब्दावुक्तार्थौ ( निरु० ७ । १ ) ।

अष्टौ द्वंद्वानि

अष्टाविति निर्देशतोऽपि सिद्धे द्वित्वे नियमार्थमष्टग्रहणम् । ' उषासानक्ता दैव्या होतारा ' इति द्वद्वदर्शनादयुक्तमिति चेन्न । तयोराप्रीत्वसामान्येन तत्र प्रथमं समाम्नातत्वात् ( निघ० ५ । २ ) । इह च पुनः समाम्नाने द्विरुक्ततादोषप्रसङ्गः । मित्रावरुणादीनामपि द्वद्वसामान्यादिह प्रसङ्ग इति चेन्न । तेषां पृथगपि स्तुत्युपपत्तेः । एवं सत्युलूखलमुसलयोर्द्यावापृथिव्योश्चेह समाम्नानम्याप्रसङ्गः । केवलयोः स्तुत्युपपत्तेः । न । मुसलस्य दिवश्च पृथक्स्तुत्यभावात् । मित्रावरुणादीनां तु सर्वेषां पृथक्स्तुतयः सन्ति । तस्मादसमाम्नानम् । अश्विनोरिह द्वद्वसामान्यात्समाम्नानं प्राप्तमिति चेन्न । उषःप्रभृतीनामुपमः कालमध्ये । तेषां च समाम्नानेनेहानिसंसर्गप्रसङ्गात् । शुनासीरयोः स्थानान्यत्वादिहासमाम्नानमिति चेन्न । द्वंद्वसामान्यात्पृथिव्यर्थत्वाच्च समोगाभिप्रायेण च तत्स्तुतेः ' तेनेमामुपसिञ्चतम् ' ( ऋ० सं० ४ । ५७ । ५ ) इति । द्यावापृथिव्योः प्रथमं समाम्नानं देवताभावादिह प्राप्तमिति चेन्न । दिवः पृथिव्यायतनत्वाभावाद् द्वंद्वप्रसङ्गेन चेह दिवः समाम्नानात् । द्यावापृथिव्यौ शुनासीरौ इति देवता अपेक्ष्य द्वद्वमध्ये प्रथमागामित्वस्यावचनेन । उलूखलमुसलयोर्द्रव्यत्वात्प्रथमं समाम्नानम् । तयोः पृथिव्यायतनस्य निरुपचरप्रसिद्धेः । प्रचुरत्वाच्च तयोः । ' उलूखलं व्याख्यातम् ' ' उरुकरम् ' इत्येवमादिना ( निरु० ९ । २० ) । मुसलं कस्मात् । तद्धि मुहुर्मुहुः सरति व्रीह्यादिषु । ' तयोरेषा भवति ' ॥ ३५ ॥

केषांचिदेव द्वद्वानां समाम्नाने कारणम्

मुसलं कस्मात्

---

१ क. ख. घ. झ. ठ. ड. अष्टत्वनिय. २ ग. च. ज. तत्प्रथ°. ३ ग. च. ज. ठ. ड. °म्नाने. ४ च. °वर °ह, ज. °महर. ५ क. ख. घ. झ. ट. ठ. ड वचनं उ. ६ क. ख. घ. झ. ट. ठ. ड. तनत्वस्य. ७ घ. झ. ट. °त्वाच्च । उलूखल व्याख्यातम् । तयोर्द्वन्द्वयोरुलूखल त्या. ८ घ. झ. ट. मुसलं मुहुः सरम् । तयोरेषा भवति । मुसलं कस्मात्. ९ क. ख. १(३५), ठ. °वति । इति निरु० उ० तृ० ३५ खण्डः. ड. °वति । इति निरुक्तभाष्ये ३५ खण्डः, घ. झ. ट. ज. अङ्का नास्ति.

आयजी वाजसातमा ता ह्यु१ॅच्चा विजर्भृतः । हरी इवान्धांसि बप्सता ( ऋ० सं० १ । २८ । ७ ) ॥ आयष्टव्ये अन्नानां संभक्ततमे ते ह्युच्चैर्विह्रियेते हरी इवान्नानि भुञ्जाने हविर्धाने हविषां निधाने तयोरेषा भवति ॥ ३६ ॥

---

आयजी वाजसातमेति[3] । आभिमुख्येन मर्यादया वा यष्टव्ये पूज्ये वाजसातमे अन्नानां संभक्ततमे उच्चा विजर्भृतः उलूखलमुसले उच्चैर्विह्रियेते । उलूखलमुच्छ्रीयते । अवहननाय मुसलमुद्यम्यते[4] । एतदुच्चैर्विहरणम् । ते एते नित्यमस्माकं गृहे हरी अश्वाविव नित्यमविच्छेदेन अन्नानि बप्सती भुञ्जाने[6] संस्कारकत्वेन स्याताम् इत्येतदाशास्महे ॥

‘ हविर्धाने ( ३३ ) हविषा निधाने ’ । सोमास्तयोर्निधीयन्ते[8] । तयोरेषा भवति[10] ॥ ३६ ॥

---

आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः । इहाद्य सोमपीतये ( ऋ० सं० २ । ४१ । २१ ) ॥ आसीदन्तु वामुपस्थमुपस्थानमद्रोग्धव्ये[11] इति वा यज्ञिया देवा यज्ञसंपादिन[12] इहाद्य सोमपानाय द्याव्यापृथिव्यौ[13] व्याख्याने तयोरेषा भवति ॥ ३७ ॥

---

१ छ. द्द. ह्यु १ च्चा. २ क. ख. २ (३६), त. द्द. २. ३ ग. °मेति । आ. ४ ग. °द्यम्यमाने, ज. °द्यम्यते. ५ घ. झ. ट. बप्सतो. ६ ग. च. ज. भुञ्जाते ७ घ. झ. ट. ठ. ड. सोमस्त°. ८ घ. झ. ट. ट. ड. °धीयते. ९ घ. झ. ट. °वति । तयोरेषा स्तुतिर्भवति, ट. ड. स्तुतिर्भवति. १० क. ख. २ (३६); ठ. °वति । इति निरु० उ० तृ० ३६ खण्डः, ड. °वति । इति नैरुक्तभाष्ये ३६ खण्डः, घ. झ. ठ. ड. अङ्को नास्ति. ११ क. ख. छ. त. द. °पस्थ उप°. १२ छ. त. द्द. °स्थान यज्ञि . १३ क. ख. ३ ( ३७ ), त. द्द. ३.

आ वामुपस्थमद्रुहेति[1] । गृत्समदस्यार्षम् । द्यावा नः पृथिवी इति च । हविर्धानप्रवर्तने[2] विनियोगः[3] ( मन्त्रा० सं० ३ । ८ । ७ ) । हे हविर्धाने अद्रुहा अद्रोग्धव्ये युवामुच्येथे । यत्र युवामुपगम्य स्थिते तत् वाम् उपस्थानं यज्ञियाः यज्ञसंपादिनो देवा इह एतस्मिन्कर्मणि अद्य उपगम्य सीदन्तु निषीदन्तु सोमपानायेत्येतदाशास्महे ।

हविर्धाने

'द्यावापृथिव्यौ ( ३१ ) व्याख्याते' । द्यौश्च पृथिवी चेत्येते पदे व्याख्याते ( निरु० १ । १४ ) । 'तयोरेषा भवति' ॥ ३७[5] ॥

---

**द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् । यज्ञं देवेषु यच्छताम् ( ऋ० सं० २ । ४१ । २० ) ॥ द्यावापृथिव्यौ न इमं साधनमद्य दिविस्पृशं यज्ञं देवेषु[6] नियच्छतां विपाट्छुतुद्र्यौ व्याख्याते तयोरेषा भवति ॥ ३८ ॥**

---

द्यावा नः पृथिवी इममिति[7] । द्यावापृथिव्यौ अस्माकं सिध्रं साधनम् इमं यज्ञं योऽयमस्मान्साधयति अद्य एतस्मिन्नहनि वर्तमानं दिविस्पृशं द्यां यः स्पृशति आप्नोति तमेव गुणयज्ञं देवेषु नियच्छतां देवेभ्यो दत्तमित्येतदाशास्महे ।

द्यावापृथिव्यौ

'विपाट्छुतुद्र्यौ[8] ( ३२ ) व्याख्याते' । 'विपाट् विपाटनाद्वा' इत्यत्र विपाट् ( निरु० ९ । २६ ) व्याख्याता । 'शुतुद्री शुद्राविणी' इत्यत्र शुतुद्री ( निरु० ९ । २६ ) । 'तद्यद् द्विवदुपरिष्टात्तद्व्याख्यास्यामः[9]' इत्येतत् ( निरु० २ । २४ ) ॥ ३८ ॥

---

१ ग. °हेति । गृ°. २ ग. ज. °धान°. ३ ग. च. ज. °र्तने. ४ क. ख. घ. झ. ट. ठ. ड. °रेषा स्तुतिर्भवति. ५ क. ख. ३(३७), ठ. °वति । इति निरुक्तभा० ३ अ० तृ० पा० ३७ खण्डः, ड. °वति इति निरुक्तभाष्ये ३७ खण्डः, च. झ. ट. ज. अङ्को नास्ति. ६ क. ख. ४ (३८), न द. ४. ७ ग. °मिति । द्या°. ८ क. ख. घ. झ. ट. ठ. ड. [illegible] ९. झ. ट. च. ज. °पाट्शुतु°. १० क. ख. ४ (३८), ठ. °तत् । इति नि० भा० ३ अ० तृ० पा० ३८ खण्डः, ड. °तत् । इति निरुक्तभाष्ये ३८ खण्डः, च. झ. ट. ज. अङ्को नास्ति.

**प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने । गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते ( ऋ० सं० ३ । ३३ । १ ) ॥ पर्वतानामुपस्थादुपस्थानादुशत्यौ कामयमाने अश्वे इव विमुक्ते इति वा विषण्णे इति वा हासमाने हासतिः स्पर्धायां हर्षमाणे वा गावाविव शुभ्रे शोभने मातरौ संरिहाणे विपाट्छुतुद्र्यौ पयसा प्रजवेते आर्त्नी अर्तन्यौ वारण्यौ वारिषण्यौ वा तयोरेषा भवति ॥ ३९ ॥** ५

---

प्र पर्वतानामिति[3] । विश्वामित्रो ब्रवीति । ये चैते[4] विपाट्छुतुद्र्यौ पयसा

विपाट्छुतुद्र्यौ — उदकेन पूर्णे प्रजवेते प्रकृष्टेन जवेन गच्छतः पर्वतानाम् उपस्थात्[5] निर्झरान्मेघाना[6] वा उशती उशत्यौ[7] कामयमाने परस्पर समागम समुद्रं वा । कथं प्रजवेते । अश्वे इव विषिते विमुक्ते मन्दुरातः । सादिभ्यो[8] वा । विषण्णे इति वा । विभागे[9] वैकस्मिन्युक्ते । कस्मिंश्चिद्युक्ते युगादौ वा । हासमाने स्पर्धमाने परस्परेण वा हर्षमाणे हृष्यमाणे । विपाट्छुतुद्र्यौ[10] विमुक्ते गावाविव शुभ्रे शोभने कल्याण्यौ मातरौ संरिहाणे वत्समेकं प्रलेढुमिच्छन्त्यौ य एवमेते प्रजवेते ते अस्माकं गाधे भवत इत्येतदाशास्महे । १० १५

'आर्त्नी' ( ३३ ) धनुःप्रान्ते । ते कस्मात् । 'अर्तन्यौ वा' ।

आर्त्नी कस्मात् — ऋतेर्धातोर्गत्यर्थस्य । गमयतस्ते इषून् । 'रण्यौ[11] वा' । रणार्हौ[12] । 'रिषण्यौ वा' । हन्त्र्यौ । 'तयोरेषा भवति'[13] ॥ ३९ ॥ २०

---

१ छ. त. द. संमातरौ रिहाणे. २ क. ख. ५ ( ३९ ); त. द. ५. ३ ग. °मित[3a] । वि°. ४ च. वैत. ५ क. ख. घ. झ. ट. ठ. ड. °स्थात् उपस्थानात् नि°. ६ घ. झ. ट. ठ. ड. निर्भग°. ७ च. ज. उशत्यो. ८ ग. च ज. साहिभ्यो; ट. सादि भ्यो° हि न्यौ. ९ क. ख. घ. झ. ट. ठ. ड. °भागेनैक°. १० ग. च. ज. विराड्विमुक्ते. ११ ग. ज. चरण्यो; च. वाचरण्या. १२ ग. ज. चरणार्थौ; च. रणार्थौ. १३ क. ख. ५ ( ३९ ); ठ. °वति । इति निरु० भा० उ० पू० ३९ खण्डः; ड. °वति । इति निरुक्तभाष्ये ३९ खण्डः; घ. झ. ट. ज. अङ्का नास्ति. २५

ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे । अप शत्रून्विध्यतां संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् ( ऋ० सं० ६ । ७५ । ४ ) ॥ ते आचरन्त्यौ समनसाविव योषे मातेव पुत्रं बिभृतामुपस्थ उपस्थेनेऽपविध्यतां शत्रून्त्संविदाने आर्त्न्याविमे विघ्नत्यावमित्राञ्छुनासीरौ शुनो वायुः शु एत्यन्तरिक्षे सीर आदित्यः सरणात्तयोरेषा भवति ॥ ४० ॥

---

ते आचरन्ती समनेवेति । आर्त्न्योरेवानुमन्त्रणमश्वमेधेऽनेन क्रियते

आर्त्नी

( मैत्रा० सं० ३ । १६ । ३ ) । समनेव योषा । समनसाविव एकभर्तृके योषिते यथैक भर्तारं प्रत्याचरन्त्यौ भवतः परिष्वक्तुम् एवमाक्रष्टारं प्रति ये नित्यमाचरन्त्यौ भवतः आनमन्त्यौ । मातेव पुत्रं बिभृतामुपस्थे । मातेव पुत्रं उपस्थे रक्षणार्थं ये बिभृतामाक्रष्टारम् । अमुना प्रकारेण ये विस्फुरन्त्यौ नित्यममित्रान् भवतः । ययोरेष स्वभावस्ते आर्त्नी नित्यमस्माकममुना प्रकारेण संविदाने संवादमिव कुर्वाणे परस्परतः । आकर्षणाभिप्रायमेतत् । आकृष्यमाणयोरेतयोः संवाद इव परस्परतो भवति । शत्रूनपविध्यतामित्येतदाशास्महे ।

'शुनासीरौ' ( ३४ ) इत्यत्र शुनो वायुः । स हि क्षिप्रमेत्यप्रतिबध्यमानोऽन्तरिक्षे । 'सीर आदित्यः सरणात्' । स हि नित्यं सरति गच्छति ।

शुनासीरौ कस्मात्

'तयोरेषा भवति' ॥ ४० ॥

---

१ छ. त. द. °स्थानेऽप शत्रून्विध्यता संवि°. २ क. ख. ६ (४०), त. द. ६. ३ ग. °वेति । आ°; ठ. ड. °चरन्तीति. ४ घ. झ. ट. ठ. ड. °माकष्टार°. ५ च. °येनमाच°. ६ ग. ज. विष्फुर°, च. विस्फर°. ७ क. ख. घ. झ. ट. ठ. ड. शुनासीरो शुनो वायुः शु एत्यन्तरिक्षे । शुना°. ८ क. ख. ६ (४०); ठ. °वति । इति नि० उ० तृ० ४०, ड. °वति । इति नि० उ० तृ० ४० ढ. °वति । इति निरुक्तटीकायामुत्तरषट्के तृतीयेऽध्याये एकचत्वारिंशः ४१ खण्डः; घ. झ. ट. ज. अङ्को नास्ति.

शुनासीराविमां वाचं जुषेथां यद्दिवि चक्रथुः पयः। तेनेमामुपं सिञ्चतम् (ऋ० सं० ४। ५७। ५) ॥ इति सा निगदव्याख्याता देवी जोष्ट्री देव्यौ जोषयित्र्यौ द्यावापृथिव्याविति वाहोरात्रे इति वा सस्यं च समा चेति कात्थक्यस्तयोरेष संप्रैषो भवति ॥ ४१ ॥

---

शुनासीराविति। वामदेवस्यार्षम्। शुनासीर्ये विनियोगः (आश्व० श्रौ० २। २०)। हे शुनासीरौ युवां वाचमिमां मम स्तुतिलक्षणां जुषेथां सेवेथाम्। कथं पुनरासेवितेयं युवाभ्यां स्यात्। यद्दिवि चक्रथुः पयः। यत् दिवि द्युलोके चक्रथुः समभरथो युवां पयः उदकं तेन इमां पृथिवीम् उपसिञ्चतम्। एवमनेनास्मद्भागासेविता युवाभ्यां भविष्यतीति।

**शुनासीरौ**

'देवी जोष्ट्री (३५) देव्यौ जोषयित्र्यौ'। सर्वस्य तर्पयित्र्यौ। के पुनस्ते इति। 'द्यावापृथिव्यौ अहोरात्रे वा। सस्यं च समा चेति कात्थक्यः'। सस्यं व्रीह्यादि समेति संवत्सरः। 'तयोरेष संप्रैषो भवति'॥ ४१ ॥

**के देवी जोष्ट्री**

---

देवी जोष्ट्री वसुधिती ययोरन्याघा द्वेषांसि यूयवदान्वावक्षद्वसु वार्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज

---

१ छ. द. काछक्य°; त. काठेक्य° थ. २ क. ख. ७ (४१); त. द. ७. ३ क. ख. घ. झ. ट. ठ. ड. °विति। इति सा निगद्व्याख्याता। वा°; ग. °विति। वा°. ४ ग. च. ज. °मा म स्तु°. ५ क. ख. घ. झ. ट. ठ. ड. कथ च पु°. ६ ध. झ. ट. देवी जोष्ट्रीत्यादि भवतीत्यनन्तं निरुक्तमुदाहरणं ततो देवी जोष्ट्रीत्यादि, ठ. ड. देवी जोष्ट्री देव्यौ जोषयित्र्याविति। देवी°. ७ घ. झ. ट. ठ. ड. जोष्ट्रीति देव्यौ°. ८ ग. घ. झ. ट. काछक्यः, च. कौथक्यः° कात्थ, ज. काथक्यः. ९ क. ख. ८ (४१), ट. °वति। इति निरु० भाष्ये उ० तृ० ४१ खण्डः; ड. °वति। इति निरुक्तभाष्ये ४१ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. १० छ. त. द. जोष्ट्री. ११ ड. थ. ध. ट. द. यय°. १२ छ. त. द 'वेक्षद'.

( मैत्रा० सं० ४ । १३ । ८ ॥ तै० ब्रा० ३ । ६ । १३ ) ॥ देवी जोष्ट्री देव्यौ जोषयित्र्यौ वसुधितिनी[1] वसुधान्यौ ययोरन्याघानि द्वेषांस्यवयावयत्यावहत्यन्या वसूनि वरणीयानि[2] यजमानाय वसुवननाय च वसुधानाय च वीतां पिबेतां कामयेतां वा यजेति संप्रैषो[3] देवी ऊर्जाहुती देव्या ऊर्जाह्वान्यौ द्यावापृथिव्याविति वाहोरात्रे इति[4] वा सस्यं च समा चेति कात्थक्यस्तयोरेष संप्रैषो भवति ॥ ४२ ॥

---

देवी जोष्ट्री इति[5] । देव्यौ जोषयित्र्यौ वसूना निधानभूते ययोः देव्योः अन्या एका अघानि द्वेषांसि घ्नन्ति[6] यान्यप्रियाण्यस्माक तानि युयवत्[7] अवयावयति अवमिश्रयति[8] नाशयत्यस्मत्तः । अन्या पुनः आवक्षत् आवहति[9] वसु वार्याणि[10] वरणीयानि[11] यजमानाय यानि वसूनि वसुवने[12] वसुवेयस्य वसुवननाय च संभजनाय अवभुक्तानिशिष्टस्य[13] विधानाय[14] चेति । ते देव्यौ जोषयित्र्यौ[15] अस्य पृषदाज्यस्य स्वमंशं वीता पिबेता कामयेता वा । यजेति संप्रैषः[16] ॥ ४२ ॥[17]

---

देवी ऊर्जाहुती इषमूर्जमन्यावक्षत्सग्धिं सपीतिमन्या नवेन पूर्वं दयमानाः[18] स्याम पुराणेन[19] नवं तामूर्जमूर्जाहुती ऊर्जयमाने

---

१ छ. त. द. 'वसुधिनी' नास्ति. २ क. ख. त. थ द. वननीयानि, छ. वरणी° ननी. ३ क. ख. ९ ( ४२ ), त. द. ९. ४ ग. इति° । द°. ५ क. ख. घ. झ. ट. ठ. ड. वसुधिती वसू°. ६ क. ख. घ. झ. ट. ठ. ड हन्ति. ७ ग. ज. या अप्रि°; च. या अन्यप्रि°. ८ ग. न्ययुयवन्; च. युयवन; न्ययुयवान्. ९ ग. ज. अवसाव°. १० ग. ज. °हति आवहति वसु°; च. आवहति आवहति. ११ क. ख. घ. झ. ट. ठ. ड यजमानाय वरणीयानि. १२ ग. च. ज. 'वसुवने' नास्ति. १३ ग. च. ज. अभु°. १४ क. ख. निधा°, च. विधा° नि. १५ ग. ज. °यित्र्यौ वस्य, घ. °यित्र्यावस्य° त. १६ क. ख. घ. झ. ट. ठ. ड. संप्रैष इत्यनन्तरं निरुक्तमूलात् देवी ऊर्जाहुती-त्यादि भवतीत्यन्तमवतरणम्. १७ क. ख. ९ ( ४२ ), ग. च. वर्जमिनेत्यङ्को नास्ति. १८ ङ. थ. ध. 'माना स्याम'. १९ छ. त. पुराणेन नव ताम्; ध. पुराणेन नव.

अथातां[1] वसुवने वसुधेयस्य वीतां यज ( मैत्रा० सं० ४ । १३ । ८ ॥ तै० ब्रा० ३ । ६ । १३ ) ॥ देवी ऊर्जाहुती देव्या ऊर्जाह्वान्यावन्नं च रसं चो[2]वहत्यावहत्यन्या सहजग्धिं[3] च सहपीतिं[4] चान्या नवेन पूर्वं दयमानाः[5] स्याम पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने अथातां वसुवननाय च वसुधानाय च वीतां पिबेतां कामयेतां वा यजेति संप्रैषो यजेति संप्रैषः ॥[6] ४३ ॥

---

देवी[7] ऊर्जाहुती देव्या ऊर्जाह्वान्यौ[8] ऊर्जस्यै[9] अन्नस्य निष्पादयित्र्यौ[10] ।

**देवी ऊर्जाहुती** द्यावापृथिव्यावूर्जाह्वान्यावुच्येते । इषमूर्जमन्या एकावक्षत् । इषं च अन्नादि रसं च तदुपसेचनं[11] क्षीरादि[12] । किंच । एका उपनामि[13]तस्यान्नस्य सगुणस्य सग्धिं संपीतिमन्या[14] सहभोजनं[15] बन्धुभिरिति आवक्षत् । आभिमुख्येन यथा बन्धुभिः सह भुञ्जीमहि तथा करोतु । तथा च[16] बह्वन्नमस्तु यथा नवेन पूर्वम्[17] पुराणं दय[18]माना रक्षन्तः[19] स्याम । पुराणेन नवं पुराणेन च नवम्[20] । तामेवंलक्षणम् ऊर्जम् ऊर्जाहुती[21] ऊर्जयमाने बलवतीमूर्जं[22]ता च कुर्वाणे अथातां दत्तां वसुवने वसुवननाय च वसुधेयस्य वसुधानाय च । वीता पिबेता कामयेतां वा । 'यजेति संप्रैषो यजेति संप्रैषः' ॥ ४३[23] ॥

---

१ ङ. अधातां, छ. त. अधीतां, ध. अधाता. २ छ. त. द. 'आवहति सकृदेव. ३ छ. त. द. सहसग्धि. ४ छ. त. द. सहसपीतिं. ५ ङ. थ. ध. °माना स्याम. ६ क. ख. १० ( ४३ ), त. द. १०. ७ व. झ. ट. मैत्रावरुणो ब्रवीति । हे होतस्त्वमेने देवी°, ठ. ङ. देवी ऊर्जाहुतीति । मैत्रा० देवी°. ८ ग. °व्हान्यौ । ऊ°. ९ घ. झ. ट. ठ. ङ. ऊर्जोऽन्नस्य. १० ग. च. ज. निष्पाद°. ११ ग. च. ज. 'तद्' नास्ति. १२ ग. च. ज. °रादिकं च । एका°. १३ ग. च. ज. ठ ड. नागमि°. १४ ग. च. ज. सर्पातीति ( च. सपीतीति ) मन्या°. १५ ग. च. ज. सहभोज्यं सहभुञ्जी°. १६ क. ख. घ. झ. ट ठ. ङ. च ततन°. १७ ग. च ज. पूर्व्यं. १८ च. ज. देय°. १९ ग. च. ज. दक्ष°. २० क. ख. झ. नवं धान्यं दयमानाः स्याम । ता°; घ. ट. नवं धन्यं दयमा रक्षन्तः नः स्याम । ता°; ठ. ड. नवं धान्यं दयमानाः रक्षतः । नः स्याम ता°. २१ ग. च. ज. 'ऊर्जाहुती' नास्ति. २२ ग. च. ज. °मूर्जिव्हा च°. २३ क. ख. १० ( ४३ ), ठ. ड. ४३ ( ठ. '४३' नास्ति ) । इति निरुक्तटीकायामुत्तरषट्के तृतीयेऽध्याये चत्वारिंशः खण्डः ४३; ग. ध. वर्जमित्येष्वङ्को नास्ति.

जम्बूमार्गाश्रमनिवासिनो भगवद्दुर्गाचार्यस्य कृतौ ऋज्वर्थायां

निरुक्तवृत्तौ चतुर्दशोऽध्यायः समाप्तः ।

* अथयान्यश्वो + वोह्ळामानोमित्रः कनिक्रदज्जद्वदसंवत्स-
रमुपं = प्रवदग्रावाणप्रेतेवदन्त्वमन्दान्यद्वेसंयोगाद्वनेस्पतउपश्वासयत्र-
द्वीनामहिरिवभोगैरथनिष्ठन्धन्वनागावक्ष्यन्तीवसुपर्णंवस्तआजङ्घंति
यचिद्धित्वंवृषभोन्यक्रन्देयत्रिमंतंपितुन्विममं आपोहियाआपधारा-
रांत्त्वरण्यानिभद्रयास्यानामीपामिहेन्द्राणीमथातोग्रावायजीआवा-
मुपस्थंग्रावानःप्रपवेतानांतआचरन्तीशुनासीरादेवीजोष्ट्रीदेवाऊर्जा-
हुतीत्रिचत्वारिंशत् ⸙ ॥

इति निरुक्ते ( उत्तरषट्के ) तृतीयोऽध्यायः ॥ ३ ॥

---

१ ग ठ ड. इति जम्बू°. २ क. ख. घ. झ. ट. ठ. ड. 'मार्गाश्रमवासि°; ग. ज. मार्गानिवा°. ३ ठ. ड. 'रुक्तटीकाया निरुण्टाध्यायपञ्चकेन सह नैरुक्तचतु. ४ ग. °ध्यायः । खण्डः ॥ पाद.॥ ४ । मन्त्र ३८ सं ४२५, घ. झ. ट. 'समाप्तः' नास्ति, ठ. समाप्तिमगमत्. * ठ. ड. अथ खण्डानुक्रमणी । अथ° ( ड. °क्रम-णिका ). + घ. वोल्हा. = क. ख. ठ. ड. °पप्रव°. ⸙ छ. त. द. खण्डशृङ्खला नास्ति. ५ ड. इति नैरुक्ते°; छ. इति निरुक्ते नवमोऽध्यायः, त. नवमोऽध्यायः समाप्तः; ३. इति नैरुक्ते उत्तरार्धस्य नवमाध्यायस्य चतुर्थः पादः । इति नवमोऽध्यायः

# अथ दशमाध्यायस्य

## प्रथमः पादः ।

ॐ[1] ॥ अथातो मध्यस्थाना देवतास्तासां वायुः प्रथमागामी भवति वायुर्वातेर्वेतेर्वा स्याद्गतिकर्मण एतेरिति स्थौलाष्ठीविरनर्थको वकारस्तस्यैषा भवति ॥ १ ॥

---

व्याख्यातानि पृथिवीस्थानदेवतापदानि । अधुना समाम्नायानुक्रमेणैव मध्यमस्थानदेवतापदानि वक्तव्यानि । तदर्थमिदमारभ्यते । 'अथातो मध्यस्थाना देवताः' इति । 'अथ'शब्दो विशेषाधिकारार्थः । 'अतः'शब्द आनन्तर्यार्थः । मध्यं स्थानमेतासामिति मध्यस्थाना देवता वाय्वाद्याः । वक्ष्यन्ते इति वाक्यशेषः । देवता इति बहुवचनं भेदपक्षे । एकैव नैरुक्तानां देवता त्रित्वाभ्युपगमात् ( निरु० ७ । ५ ) । एतस्यैव मध्यमस्य पर्यायवचनान्येतानि वाय्वादीनि रोदस्यन्तानि गुणविशेषतो भवन्ति यथैवोत्तमस्य ज्योतिषो दृश्यन्ते सवितृभगप्रभृतीनि । 'तासां वायुः ( निघ० ५ । ४ । १ ) प्रथमागामी भवति' । नन्विन्द्र इति मध्यमस्य मुख्यमभिधानम् । तत्प्रथमं समाम्नातव्यमासीत् । न । मध्यमस्य वर्षकर्मोपलक्षणत्वाद्वर्षकर्मणि च वायोरधिकारः प्रथमः स्यात् । कथमिति । वाय्वात्मनैव हि मध्यम ऊर्जान्मासात्परतः सार्वादिकमुदकमुपसंहरन्नोषधिवनस्पतिजलाशयेभ्य उदकमन्तरिक्षलोकस्य गर्भमुपचिनोति । स मासाष्टकेन सम्भृतोदकगर्भो विपक्वः प्रावृषं प्राप्य प्रसवाय प्रकल्पते । तदुक्तम् । 'वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे । ततः पर्णरुहो वान्ति ततो देवः प्रवर्षति' ॥ इति । तदेवं वर्षकर्मप्रारम्भे वाय्वात्मनैव मध्यमो

(वायुः किमिति प्रथमः — margin)

---

१ ङ. ठ. ढ. हरिः ओम्, थ. ओ ३ म्; ध. हरिः ॐ म्; छ. नं. २ ग. ज. नं नमः । व्या°; च. श्रीगणाधिपतये नमः । व्या°; व. ट. श्रीः । व्या°; झ. ट. ड. श्रीगणेशायनमः । व्या°. ३ ग. च. ज. ठ. ढ. मध्यस्था°. ४ ग. च. ज. ठ. ड. मध्यमस्था°. ५ ग. च. ज. तत्त्वा°. ६ क. ख. ङ. झ. ट. ठ. ड. °मस्य स्थानम्य म°. ७ च. °मपहृतो°. ८ ख. °रिक्षजलो°.

व्याप्रियत इति युक्तं वाय्वभिधानमिह प्रथमं समाम्नातमिति । इतश्च युक्तं यदुच्यते 'तासां वायुः प्रथमागामी भवति' इति । स एष संभृतोदकगर्भो वायुर्विवृण्वन्मेघजालेन नभो मध्यमो वरुणः संपद्यते । ततो रुदद्रुद्रः । तत इरा ददिन्द्रः । ततो रमान् प्रार्जयन्पर्जन्यः । एवमादिर्मध्यमस्य जगदनुग्रहाय वर्षप्रदानसिद्धये गुणोपजनक्रमः । अनयैव गुणोपजनक्रमानुपूर्व्या वायुर्वरुणो रुद्र इन्द्रः पर्जन्य इत्येवमाद्या समाम्नाये देवतानामानुपूर्वी । तदेतत्स्फुटं द्युस्थाने गुणान्तरोपजनानुपूर्व्यं ज्योतिर्मण्डलस्य सवितृप्रभृतिषु ।

'वायुः' कस्मात् । 'वातेः' । 'वा गतिगन्धनयोः' (धा० २ । ४०) इत्यस्य । सततमसौ वाति गच्छति । 'वेतेर्वा स्याद्गतिकर्मणः' । अनेकार्थो वेतिः । तस्य वा गतिकर्मणो गत्यर्थस्य । 'एतेरिति स्थौलाष्ठीविः' ।

वायुः कस्मात् — अस्मिन् पक्षे 'अनर्थको वकारः' । उपजनमात्रम् । एत्यसौ इति वायुः । 'तस्यैषा भवति'[3] ॥१॥

---

**वायवा याहि दर्शतेमे सोमा अरंकृताः । तेषां पाहि श्रुधी हवम् ( ऋ० सं० १ । २ । १ ) ॥ वायवायाहि दर्शनीयेमे सोमा अरंकृता अलंकृतास्तेषां पिब शृणु नो ह्वानमिति कमन्यं मध्यमादेवमवक्ष्यत्तस्यैषापरा भवति ॥ २ ॥**

---

वायवायाहि[5] दर्शतेति[6] । मधुच्छन्दस आर्षम् । आध्वर्यवे वायव्योपस्थाने

वायुः — विनियोगः । बाहवृचे प्रउगे शस्यते ( ऐ० ब्रा० ३ । १ ॥ आश्व० श्रौ० ५ । १० ) । हे वायो

दर्शत दर्शनीय दर्शनार्ह त्वदर्थम् इमे सोमा अस्माभिः अलङ्कृताः । पर्याप्ताः अरंकृताः । पातुं संस्कृताः । स त्वमस्माकमिदम् आह्वानं श्रुधि शृणु । श्रुत्वा च तत आयाहि । एत्य च एतेषां सोमानां यः स्वोऽग्रस्तत्र तं पाहि पिबेत्येतदाशास्महे ।

---

१ ग. ज. वरुद°, च. वरुद्रः, ट. ड. रुदतीति रुद्रः. २ च. 'तस्यैषा भवति' नास्ति. ३ ठ. ड. °वति । इति निरुक्तटीकायामुत्तरषट्के चतुर्थाध्याये प्रथमः खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ४ छ. त. द. °वक्षत°. ५ ठ. ड. याहीति. ६ ग. °तेति । म°. ७ क. ख. घ. झ. ट. °गे शस्ने श.

वायोः सर्वस्थानतामपेक्ष्य विचारमागूर्य ततोऽवधारयति । सर्वस्थानत्वेऽपि सति 'कमन्यम्' इन्द्रात् 'मध्यमादेवमवक्ष्यत्' मन्त्रदृक् । सोमा अरंकृतास्तेषां निबोति प्रसिद्धं हीन्द्रस्य मध्यमस्य सोमपानं तदर्थत्वात्सोमसंस्कारस्याप्रसाध्यमन्यस्य । तस्मादिन्द्र एव वायुः । 'तस्य' इन्द्रस्य वायोरिन्द्रे एव सूक्ते यस्यामिन्द्रस्य विशेषणत्वेन वायुशब्दस्तथा 'एषापरा' ऋक् 'भवति' ॥ २ ॥

---

आसस्राणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो अश्वाः । अभि श्रव ऋज्यन्तो वहेयुर्नू चिन्नु वायोरमृतं विदस्येत् ( ऋ० सं० ६ । ३७ । ३ ) ॥ आससृवांसोऽभिबलायमानमिन्द्रं कल्याणचक्रे रथे योगाय रथ्या अश्वा रथस्य वोढार ऋज्यन्त ऋजुगामिनोऽन्नमभिवहेयुर्नवं च पुराणं च श्रव इत्यन्ननाम श्रूयत इति सतो वायोश्चास्य भक्षो यथा न विदस्येदितीन्द्रप्रधानेत्येके नैघण्टुकं वायुकर्मोभयप्रधानेत्यपरं वरुणो वृणोतीति सतस्तस्यैषा भवति ॥ २ ॥

---

आसस्राणाम इति । भारद्वाजस्यार्षम् । महाव्रते महदुक्थे शस्यते उत्तरे पक्षे ( ऐ० आ० ५ । २ । २ ) ।

वायुरिन्द्र एव । तस्य

रथ्या अश्वाः सुचक्रे कल्याणचक्रे रथे योगार्थम् इन्द्रं शवसानम् अच्छ इन्द्रमभिबलायमानमधिकबलमात्मानं मन्यमानम् आसस्राणा आससृवांसः नित्यमासर्पन्ति । एतान्युक्त्वा रथेऽस्माकमायाहि सोमपानाय यज्ञमिति । किमस्माकं ते कुर्वन्त्विति । अभि श्रव ऋज्यन्तो वहेयुः । ऋजुगामिनो भूत्वा श्रवः अन्नं सोमाख्यमेतदस्मद्यज्ञे यत नू चित् नवं पुराणं च तत्पानायैनमिन्द्रमभिवहेयुः । नु क्षिप्रम् । यथा अस्य इन्द्रस्य वायोरिदम् अमृतम् एष सोमभक्षो न विदस्येत् । अविदस्तेऽनुपक्षीणे एतस्मिन्सोमभक्षेऽभिवहेयुरित्येतदाशास्महे ।

---

१ ग. च. ज. °वक्षत् २ ग. च. ज. मध्यममध्यमस्य. ३ ठ. ड. 'षति । इति चतुर्थाध्याये २ खण्डः, घ. झ. ट. ज. अङ्को नास्ति. ४ छ. त. द. वोल्हार°. ५ ग. इति[3] । भ°. ६ च. भार°. ७ क. ख. ग. ज, घ. झ. ट. ठ. ड. 'न्ति । ये तान्यु°.

' अत्र इति ' एतत् ' अन्ननाम ' । तद्धि सर्वत्र ' श्रूयते ' । ' नू चित् ' इति नवपुराणाभिधायकौ निपातौ ( निरु० ४ । १७ ) । नव यः सोमो गृहीत्वा तत्कालमेव हूयते । पुराणं पुनर्यः प्रातःसवने गृहीत्वा माध्यंदिने सवने हूयते तृतीयसवने वा । तद्यथा । अतिग्राह्याः ( मैत्रा० स० ४ । ७ । ३ ) । ध्रुवः ( मैत्रा० स० ४ । ६ । ६ ) ।

अस्यामृचि वायुर्नैघण्टुक इन्द्रः प्रधानमित्येकं मतम् । उभौ प्रधाने इत्यपरम् ।

एवमेतस्मिन्मन्त्रे ऐन्द्रसूक्तमध्यपातित्वादिन्द्रप्रधाने यद्वाय्वभिधानं तत् ' नैघण्टुकम् ' इन्द्रस्यैव विशेषणार्थं व्यञ्जनमात्रम् । ' इत्येके ' । ' अपरे ' पुनः ' उभयप्रधाना ' इयमृक् ' इति ' मन्यन्ते भेदपक्षवादिनः । तत्पुनरयुक्तं निष्केवल्ये विनियोगात् ।

वरुणः कस्मात्

' वरुणः ' ( २ ) कस्मात् । ' वृणोतीति सतः ' । स हि वियद्वृणोति मेघजालेन । ' तस्यैषा भवति ' ॥ ३ ॥

---

नीचीनंबारं वरुणः कबन्धं प्र ससर्ज रोदसी अन्तरिक्षम् । तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ( ऋ० सं० ५ । ८५ । ३ ) ॥ नीचीनद्वारं वरुणः कबन्धं मेघं कवनमुदकं भवति तदस्मिन्धीयत उदकमपि कबन्धमुच्यते बन्धिरनिभृतत्वे कमनिभृतं च प्रसृजति द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन तेन सर्वस्य भुवनस्य राजा यवमिव वृष्टिर्व्युनत्ति भूमिं तस्यैषापरा भवति ॥ ४ ॥

---

नीचीनबारमिति । अनेरार्षम् । न्यक् अञ्चते द्वारं यस्य स भवति

वरुणः

नीचीनद्वारः अधोद्वारः । तं नीचैर्द्वारम् अधोबिलं कृत्वा कबन्धं मेघं वरुणो मध्यमः अत एव मेघसंबन्धात् कवनम् उदकं प्रससर्ज प्रसृजति महत्त्वेन ।

१ ठ ढ °वति । इति निरुक्तभाष्ये चतुर्थाध्याये तृतीयः ( ठ. ३ ) खण्डः, घ. झ. ट. ज. अङ्का नास्ति. २ क. ख. ङ. थ. ध. कबन्धं. ३ क. ख. ङ. कवन्धं. ४ ग. °मिति । अ°, ह. °चीनवार°. ५ क. ख. घ. झ. ट. नीचीनद्वार°. ६ क. ख. झ. ट. कबन्ध.

न ह्यमहानेतच्छक्नुयात्कर्तुम् । रोदसी अन्तरिक्षम् । द्यावापृथिव्यौ च अन्तरिक्षं च महत्त्वेन सर्वमापूरयिष्यन्निव । ततोऽतिप्रभूतेनोदकेन[2] विसृष्टेन विश्वस्य भुवनस्य भूतजातस्योदकस्य वा राजा ईश्वरः यवं न यवमिव कश्चित्सत्कर्षी स्वल्पं वृष्ट्या व्युनत्ति विविधमुनत्ति क्लेदयति भूमिं कृत्स्ना यः सोऽस्माकमिदं नाम करोतु । 5

अथैवैवमन्यथा[3] योज्यम् । प्रसृजति द्यावापृथिव्यौ चान्तरिक्षं च

ऋचोऽन्योऽर्थः

प्रकर्षेण सृजत्युत्पादयति । महत्त्वेन यस्माच्चोत्पादयति स तस्माद्भुवनस्य राजा विश्वस्य भुवनस्य भूतजातस्य । तेन हेतुना तदनुग्रहाय नीचीनद्वारमधोबिलं मेघं कृत्वा यवमिव वृष्टिर्व्युनत्ति भूमिमिति समानं पूर्वेण । 10

'कवन्धः' इति मेघ उच्यते । कस्मात्[6] । 'कवनमुदकं' कवतेर्गत्यर्थस्य । 'तदस्मिन्धीयते' इति कबन्धो[7] मेघः । 'उदकमपि कवन्धमुच्यते' । तत्कस्मात् ।

कवन्धः

अत्रोत्तरं पदं प्रथम निराह । 'बन्धिः' धातुः 'अनिभृतत्वे' । निभृतस्तावदचपलः । तद्विपरीतार्थवाची बन्धिः[10] । कं च तच्चपलं चेति कबन्धम् । सुखं चानवस्थायि चेत्यर्थः । 15

'तस्य' वरुणस्य मध्यमत्वे 'एषापरा भवति[11]' । सा पुनः किमर्थम् । वर्षकर्म वरुणाभिधानं च सूर्येऽपि दृष्टम् । उत्तरस्या तु[12] शब्दत एव मध्यमो वरुण इति विशेषहेतुनोपपादयति ॥ ४ ॥[13]

---

20

**तमू षु समना गिरा पितॄणां च मन्मभिः । नाभाकस्य प्रशस्तिभिर्यः सिन्धूनामुपोदये सप्तस्वसा स मध्यमो नभन्तामन्यके समे ( ऋ० सं० ८ । ४१ । २ ) ॥ तं स्वभिष्टौमि समानया[14] गिरा गीत्या स्तुत्या पितॄणां च मननीयैः स्तोमैर्नाभाकस्य प्रश-**

१ ग. च. ज. °महनेत°. २ क. ख. ब. झ. ट. ठ. ड. °भूतोदकेन. ३ क. ख. ग. च. अथ चैव°; ज. अथ त्वैव. ४ क. ख. ब. झ. ट. ठ. ड. तस्मात्स एव भु°. ५ क. ख. घ. ट. कवन्धं°. ६ क. ख. घ. झ. ट. कस्मात् । क°; च. कस्मात्स नः । क°. ७ क. ख. च. ध. झ. ट. कवन्धो°. ८ ग. च. ज. कबन्ध उच्य°. ९ घ. च. ज. झ. बन्धि°. १० घ. च. बन्धिः. ११ क. ख. घ. झ. ट. ठ. ड. ऋग्भवति. १२ च. °स्या उद श°. १३ ठ. ड. °वति । इति निरुक्तभाष्ये ४ खण्डः; घ. झ. ट. ज. अङ्का नास्ति. १४ छ. त. द. समान्या. 25

स्तिभिर्ऋषिर्नाभाको बभूव यः स्यन्दमानानामासामपामुपोदये सप्तस्वसारमेनमाह वाग्भिः स मध्यम इति निरुच्यतेऽथैष एव भवति । नभन्तामन्यके समे । मा भूवन्नन्यके सर्वे ये नो द्विषन्ति दुर्धियः पापधियः पापसंकल्पा रुद्रो रौतीति सतो रोरूयमाणो द्रवतीति वा रोदयतेर्वा यदरुदत्तद्रुद्रस्य रुद्रत्वमिति काठकं यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति हारिद्रविकं तस्यैषा भवति ॥ ५ ॥

---

तमू षु समनेति । नाभाकस्यार्षम् । 'सु' इत्येतस्योपसर्गस्य सम्बन्धि क्रियापदं नास्तीति 'तं स्तोमभिरीडे' इत्यभिपूर्वं क्रियापदमध्याह्रियते । सुष्टु तमभिष्टौमि ।

**स एव वरुणः**

केन । समना । तुल्यमानया नमोऽस्यया गिरा स्तुत्या । पितॄणां च मन्मभिः । ये च पितॄणां मननीया मननार्हा बहुगाना स्तोमास्तैश्चाहमभिष्टौमि । नाभाकस्य प्रशस्तिभिः । याश्च मम नाभाकस्य प्रशस्तयः स्तुतयो योग्यास्ता वरुणं प्रति ताभिरभिष्टौमि । किंलक्षणो यो वरुणः । यः सिन्धूनामुपोदये स्यन्दमानानाम् अपाम् उपोदये उपोद्गमे अन्तरिक्षलोके वर्षस्य सप्तस्वसा सम्पद्यते मध्यमाभिरश्वाद्याभिः सप्तभिः वाग्भिः । 'स मध्यमः' इति वरुणो निरुच्यते शब्देन एवैतस्मिन्मन्त्रे । तदनुग्रहादस्माकं नभन्तामन्यके समे । मा भूवन्नन्यके सर्वे । अन्य एव अन्यके । शत्रवः । ते मा भूवन्नस्माकमिति ।

**रुद्रः कस्मात्**

'रुद्रः' (३) कस्मात् । 'रौतीति सतः' । स हि स्तनयित्नुशब्दं करोति । 'रोरूयमाणो द्रवतीति वा' । शब्दं कुर्वाणो मेघोदरस्थो द्रवतीति । 'रोदयतेर्वा' । शत्रून् रोदयति दुःखयति । ब्राह्मणमपि च[३] भवति । 'यदरुदत्तद्रुद्रस्य रुद्रत्वमिति काठकम्' । कठानां प्रवचनम् । ऐतिहासिकैरेतत्समर्थ्यते । 'स किल पितरं प्रजापतिमिषुणा विध्यन्तमनुशोचन्नरुदत्तद्रुद्रस्य रुद्रत्वम्' । 'यदरोदीदिति हारिद्रविकम्' । स एवार्थः । केवलं तु शाखान्तरमन्यत् । एवं शाखान्तरेभ्योऽपि देवताभिधाननिर्वचनान्तराण्युपेक्ष्याणीत्युपप्रदर्शना[४]र्थम् । हारिद्रवो नाम मैत्रायणीयानां शाखाभेदः । तस्यैषा भवति ॥ ५ ॥

---

१ ग. नेति । ना°. २ ग. च. ज. 'स्त' स्वाह°. ३ क. ख. घ. झ. ट. ठ. ड. चैतस्मिन्नर्थे भ°. ४ ठ. ड. वेति । इति निरुक्तभाष्ये ५ खण्डः; घ. झ. ट. ञ. अङ्को नास्ति.

इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाव्ने । अषाळ्हाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः (ऋ० सं० ७।४६।१) ॥ इमा रुद्राय दृढधन्वने गिरः क्षिप्रेषवे देवायान्नवतेऽषाढायान्यैः सहमानाय विधात्रे तिग्मायुधाय भरत शृणोतु नस्तिग्मं तेजतेरुत्साहकर्मण आयुधमायोधनात्तस्यैषापरा भवति ॥ ६ ॥ ५

---

इमा रुद्रायेति । वसिष्ठस्यार्षम् । उत्तरा च । शूलगवे विनियोगः (आश्व० गृ० ४।९।२१) । हे स्तोतारो यूयमुच्यध्वे । इमा गिरः स्तुतीः भरत रुद्राय । किंलक्षणाय । स्थिरधन्वने दृढधनुषे क्षिप्रेषवे शीघ्रेषवे देवाय दानादिगुणयुक्ताय स्वधाव्ने स्वधावते अन्नवते अषाळ्हाय अनभिभूताय केनचित् सहमानाय नित्यमभिभवते शत्रून् वेधसे विधात्रे तिग्मायुधाय तीक्ष्णायुधाय । स चेमा गिर उच्यमानाः शृणोतु अस्माकमित्येतदाशास्महे । १०

रुद्र.

'सहमानाय' इति वल्कृतेर्मध्यमः । 'तस्यैषापरा भवति' । सा पुनः किमर्थम् । 'विधात्रे' इत्युक्तं पूर्वस्यामृचि । तत्र द्रवति किमसौ विदधातीति । यतः परया निर्ब्रवीति, रक्षःपिशाचादीनिति ॥ ६ ॥ १५

रुद्रो मध्यमो वल्कृतेः

---

या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु नः । सहस्रं ते स्वपिवात भेषजा मा नस्तोकेषु तनयेषु रीरिषः (ऋ० सं० ७।४६।३) ॥ या ते दिद्युदवसृष्टा दिवस्परि दिवोऽधि दिद्युद्द्युतेर्वा द्युतेर्वा द्योततेर्वा क्ष्मया चरति क्ष्मा पृथिवी तस्यां २०

१ छ. त. द. अषाल्हाय २ छ. त. द. [illegible] ३ क. ख. °षाढायान्नैःसह, छ. त. द. °षाल्हायान्नैःसह, थ °षाढायान्य. ४ ग. येति । व. ५ ग. च. ज. व अषाल्हाय. ६ ठ ड. °निति । इति निरुक्तभाष्ये षष्ठः खण्डः, च. ड. ट. [illegible] नास्ति ७ छ. त. द. [illegible] नास्ति. २७

चरति तया चरति विक्ष्मापयन्ती चरतीति वा परिवृणक्तु नः सा सहस्रं ते स्वाप्तवचन भेषज्यानि मा नस्त्वं पुत्रेषु च पौत्रेषु च रीरिषस्तोकं तुद्यतेस्तनयं तनोतेरग्निरपि रुद्र उच्यते तस्यैषा भवति ॥ ७ ॥

५

---

या ते दिद्युदवसृष्टेति । हे भगवन् रुद्र या ते तव दिद्युत् आयुधं ज्वरातीसारादिरोगाख्यं येन प्राणिनो हंसि दिवस्परि द्युलोकादधि त्वया अवसृष्टा चरति । सर्वैव हि देवता द्युस्थानेति गम्यते दिवस्परीति लिङ्गात् । कर्मविकारस्थानानि तु विशिष्टानीति तिसृणा त्रीणि कर्मविकारस्थानानि नियतानि भवन्ति । अत एवोक्तमग्न्यधिकारे 'द्युस्थानो भवति' ( निरु० ७ । १५ ) इति । कथं या चरति दिद्युत् । क्ष्मया पृथिव्या व्रीह्यादिभावमुपगतया । तस्या वा व्रीह्यादिभावमुपगताया पृथिव्यामनुप्रविश्य चरत्यन्नपानसमुद्भूता तत्प्रभवत्वात्सर्वरोगाणाम् । तदुक्तम् । 'नमोऽस्तु रुद्रेभ्यो ये के च पृथिव्यां येषामन्नमिषवः' ( य० वा० सं० १६ । ६६ ) इति । तस्याः किं दिद्युतः । सा घ्नती प्राणिनः अस्मान् परिवृणक्तु परिवर्जयतु न । किमन्यदस्तु त्वत्तोऽस्माकम् । सहस्रं ते स्वपिवात भेषजा । हे स्वपिवात स्वाप्तवचन कस्यचिदप्यननिक्रमणीयाज्ञ यानि तव सहस्रं भेषजानि यैर्बहुभिः बहुप्रकारम् भेषजं करोषि भक्तानां तान्यस्मान् प्रति सन्तु । किंच । मा नः अस्माकं तोकेषु पुत्रेषु तनयेषु पौत्रेषु च रीरिषः । हिंसां मा प्रयुङ्क्ष्वेत्येतदाशास्महे ।

१०

१५

२०

तस्यैव रुद्रस्य

'दिद्युत् द्यतेर्वा' अवखण्डनार्थस्य । 'द्युतेर्वा' दीप्त्यर्थस्य ।

दिद्युत कस्मात्

'विक्ष्मापयन्ती चरतीति वा' । हिंसन्ती चरतीति वा । 'तोकम्' इति पुत्रः । स हि नित्यं पित्रा विनयता तुद्यते इदं कुर्विदं मा कार्षीरिति । 'तनय तनोतेः' । पौत्रम् । तद्ध्यनितरां पितुः सकाशात्ततं भवति । सत्यप्यपत्यनामत्वाविशेषे इहाजामितायै विशेषः । एवमन्यत्रापि समानार्थानामेकवाक्ये विशेष उपेक्ष्य इति दर्शयति ।

तोकं च

२५

तनयश्च

---

१ ठ. ड. दिद्युदिति. २ ग. °सृष्टेति । ह°. ३ ग. च. ज. हिंसि. ४ क. ख. घ. झ. ट. ठ. ड. 'वा' नास्ति. ५ क. ख. घ. झ. ट. ठ. ड. 'सन्नं वा तो पतसि'. ६ क. ख. घ. झ. ट. ठ. ड हिंसा नो मा°.

२८

'अग्निरपि रुद्र उच्यते' इति । विचारानुस्मृतये संकरोपप्रदर्शनम् ।
'तस्यैषा भवति' अग्नेः रुद्रस्य[1] ॥ ७ ॥

---

**जरा॑बोध॒ तद्वि॑विड्ढि वि॒शेवि॑शे य॒ज्ञिया॑य । स्तोमं॑ रु॒द्राय॒ दृशी॑कम् ( ऋ० सं० १ । २७ । १० ) ॥ जरा स्तुतिर्जरतेः स्तुतिकर्मणस्तां बोध तया बोधयितरिति वा तद्विविड्ढि तत्कुरु मनुष्यस्य मनुष्यस्य यजनाय स्तोमं रुद्राय दर्शनीयमिन्द्र इरां दृणातीति वेरां ददातीति वेरां दधातीति वेरां दारयत इति वेरां धारयत इति वेन्दवे द्रवतीति[2] वेन्दौ रमत इति वेन्धे भूतानीति वा तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमिति[3] विज्ञायत इदं करणादित्याग्रायण इदं दर्शनादित्यौपमन्यव इन्दतेर्वैश्वर्यकर्मण इञ्छत्रूणां दारयिता वा द्रावयिता वादरयिता च यज्वनां तस्यैषा भवति ॥ ८ ॥**

---

जराबोधेति[4] । शुनःशेपस्यार्षम् । अश्वं न त्वा वारवन्तम् ( ऋ० सं० १ । २७ ) इत्येतस्मिन् सूक्ते । प्रातरनुवाके विनियोगः ( आश्व० श्रौ० ४ । १३ ) । येयं मया तव जरा स्तुतिः उच्यते भगवन्नग्ने रुद्र[5] ता त्वं रुद्राभिधानोऽग्निः बोध बुध्यस्व । अथवा । हे जराबोधयितः । स हि जरया स्तुत्या होतृत्वे वर्तमानोऽभिमतमर्थं यजमानाना संपादयन् देवान् बोधयति । तद्विविड्ढि तत्कुरु विशेविशे मनुष्याय यज्ञियाय यज्ञसंपादिने जनाय यत्त्वया यज्ञे कर्तव्यम् । ततस्तुभ्यं रुद्राय देवाना स्तोत्रे स मनुष्यः दृशीकं दर्शनीयं श्रवणीयं श्रवणार्हं व्यपगतदोषं स्तोत्रमुच्चारयिष्यति ।

---

१ ठ. ह. °द्रस्य । इति निरुक्तभाष्ये चतुर्थाध्याये ( ङ. 'चतुर्थाध्याये' नास्ति ) ७ खण्डः, घ. झ. ठ. ज. अङ्को नास्ति. २ छ. त. द. °वत इति°. ३ क. ख. ङ. थ. ध. ठ. ह. °मैन्धंस्तादि°. ४ ग. °धेति । शु°. ५ च 'ह' नास्ति.

'इन्द्रः' (४) कस्मात्। 'इरां दृणातीति वा'। इराम् अन्नं व्रीह्यादि दृणाति विदारयति। इराशब्दात्पूर्वपदं दृणातेरुत्तरपदम्। वर्षक्लेदितमङ्कुरं बीजम् भिनत्ति। [1]तदिन्द्रकारितम्। सोऽयम् इरादारी सन्निन्द्र इति परोक्षेणोच्यते यथा

इन्द्रः कस्मात्।

५ 'अग्रणीः सन्नग्निः' (निरु० ७।१४) इति। विज्ञायते हि। 'परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः' (शत० ब्रा० १४।५।१।२) इति। सर्वत्रैवं देवताभिधेयेषु[2]। अभिधानत एव हि देवतात्मनस्तत्त्वमन्तर्णीय[3] व्यवधायात्मानमविदुषा परोक्षीकृत्य नित्यं वर्तते। तां तु विद्वांसस्तदभिधानव्युत्पत्तिद्वारेण विवृत्य दैवेन चक्षुषा मनसोपजातदिव्यदृष्टयो दृष्ट्वा ताद्भाव्यं प्रतिपद्यन्त इति तदभिधानव्युत्पत्तौ कृत्स्नः पुरुषार्थ आहितः।

इन्द्रशब्दव्युत्पत्तौ योऽयमतितरां प्रयत्न-
१० स्तस्य प्रयोजनम्

इन्द्रश्च भूयिष्ठभाक्प्राणदेवतानामुभयोरध्यात्माधिदेवतयोरिति तदभिधानमाचार्योऽतितरां निरवोचत्। 'इरां ददातीति वा'। तदेव पूर्वपदं ददातेरुत्तरपदम्। यो वर्षद्वारेणाविरामन्नं ददाति सोऽयम् इरादः इरादाता
१५ इन्द्रः। 'इरां दधातीति वा'। तदेव पूर्वपदं दधातेर्दानार्थस्य धारणार्थस्य वोत्तरपदम्। सोऽयम् इराधः इराधारयिता इन्द्रः। 'इरां दारयतीति वा'। तदेव पूर्वपदं दारयतेरुत्तरपदम्। सोऽयम् इरादारयिता इन्द्रः। 'इन्दवे द्रवतीति वा'। इन्दुशब्दात्पूर्वपदं द्रवतेरुत्तरपदम्। इन्दुः सोमः। तं पातुमसौ द्रवति।
२० द्रवतिर्[4]गत्यर्थः। सोमपानार्थमसौ द्रवति[5]। सोऽयम् इन्दुद्रवः इन्द्रः। 'इन्दौ रमत इति वा'। क्रीडत्ययं[6] सोम इतीन्द्रः। 'इन्धे भूतानीति वा'। 'ञिइन्धी[7] दीप्तौ' (धा० ७।११) इत्यस्य। भूतानि ह्यसावन्नोत्पत्त्याधिदैवस्थोऽध्यात्मस्थो वा व्यवहारयन् विभजमानश्च दीपयति दीप्तिमन्ति करोति। सोऽयम् इन्धः इन्द्रः। 'तत्' इदमपरमि-

---

१ क. ख. घ. ट. ड. 'तमिन्द्र°', च. तामिदिन्द्र°, ठ. तमिन्द्र° दि. २ सर्वेषु पुस्तकेषु °धानेष्वभिधानत. ३ ग. च. ज. °मतर्णी°; ठ. ह. °मन्तर्णीय. ४ ग. च. ज. °वतिगन्त्य°. ५ क. ख. घ. झ. ट. ट. ह. °वतीति सो°. ६ ग. ज. क्षडत्य°, च.—ड्यन°. ७ ग. च. ज. इन्धी. ८ ग. च. ज. 'वा'
२९ नास्ति.

न्द्रस्येन्द्रत्वं ब्राह्मण उच्यते । 'यदेनं' मध्यतोऽवस्थितं शरीरस्य प्राणभावेन विष्टभ्येतरान् प्राणान् वागादीनितरप्राणवृत्तिर्महाभाग्यसंप्रदानेन 'यदह[1] वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसि'[3] (छान्दो० उप० ५।१।१३) इत्येवमादिना प्राणाधिदेवताः 'समैन्धन्'[4] समदीपयन् मंतानार्थं 'तदिन्द्रस्येन्द्रत्वमिति विज्ञायते' । इन्धे भूतानीति कर्तरि प्राणैरेनं समैन्धतेति[5] कर्मणि । 'इदं करणादित्याग्रायणः' । इदंशब्दात्पूर्वपदं करोतेरुत्तरपदम् । इदमसौ सर्वमकरोदिति । सोऽयम् इदंकरः सन्निन्द्रः । 'इदं दर्शनादित्यौपमन्यवः' । इद पूर्वपदं दशिरुत्तरपदम् । इदमसावद्राक्षीत्सर्वमिति । सोऽयम् इदंदर्शी इन्द्रः । 'इन्दतेर्वैश्वर्यकर्मणः'[6] । इन्दः पूर्वपदं द्रवतेर्द्रावयतेर्वोत्तरपदम्[7] । किमसौ द्रवति दारयति वेति[8] । 'शत्रूणां दारयिता द्रावयिता वा' । किमुक्तं भवति । ईश्वरश्चासौ द्रावयिता च शत्रूणाम्[9] । अथवा । ईश्वरश्चासौ दारयिता च शत्रूणामितीन्द्रः । अथवा । ईश्वरश्चासौ आदरयिता[10] च यज्वनाम् । आदरकर्ता यज्वनामुपरि । 'तस्यैषा भवति' ॥ ८ ॥[11]

---

**अदर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्धधानाँ अरम्णाः ।**
**महान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा अव दानवं हन्**
**(ऋ० सं० ५ । ३२ । १) ॥ अदृणा उत्समुत्स उत्सदनाद्[12] वोत्स्यन्दनाद्वोनत्तेर्वा[13] व्यसृजोऽस्य खानि त्वमर्णवानर्णस्वत एतान्माध्यमिकान्[14] संस्त्यायान्बाबध्यमानानरम्णा रम्णातिः संयमनकर्मा विसर्जनकर्मा वा महान्तमिन्द्र पर्वतं मेघं यद्व्यवृणो व्यसृजोऽस्य धारा अवहन्[15] एनं दानवं दानकर्माणं तस्यैषापरा भवति ॥ ९ ॥**

---

१ ग. च. ज. महा°. २ क. ख. घ. झ. ट. ठ. ड. °दह. विशिष्टो°; च. यदिहं च वसिष्ठा°. ३ क. ख. घ. झ. ट. ठ. ड तद्विशिष्टो°. ४ क. ख. घ. झ. ट. ठ. ड. °मैन्धन् स°. ५ ट. °न्धन्निति. ६ च. इंद्रः, ट. इन्द्रतेः. ७ घ. झ. ट. द्रवतेर्वोत्त°. ८ ग. च. ज. चेति. ९ च. ' ईश्वरश्च० शत्रूणाम् । अथवा 'नास्ति. १० ग. च. ज. °श्चासावादर°. ११ ठ. °वति । इति निरुक्तभाष्ये चतुर्थाध्याये अष्टमः खण्डः, ड. 'वति । इति निरुक्तभाष्ये ८ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. १२ क. ख. ड. थ. ध. ठ. ड. उत्सरणाद्वोत्सदना°. १३ छ. त. द. °द्वोन्नयनाद्वा व्यसृ°. १४ छ. त. द. माध्यमका°. १५ छ. त. द. अवाह°.

अदर्दरुत्समसृजो वि खानीति । गातौरात्रेयस्यार्षम् । उत्सो मेघः । स कस्मात् । 'उत्सदनात्' । उत्पूर्वस्य सदे. । ऊर्ध्वमसौ सन्न इत्युत्सः । उत्पूर्वस्य वा स्यन्दते । उपर्यमाववस्थितः स्यन्दतीत्युत्सः । 'उनत्तेर्वा' । 'उन्दी क्लेदने' (धा ७ । २०)

इन्द्रः

५ इत्यस्य । क्लेदयत्यसौ । तम् उत्सं मेघं हे भगवन्निन्द्र त्वम् अदर्दः । दारितवानसि त्वम् । दारयित्वा च जर्जरीकृत्य तस्योत्सस्य असृजः वि खानि । बिलानि विवृतानि त्वमकरोरुदकनिर्गमनद्वाराणि । स त्वममुना प्रकारेण अर्णवान् अर्णस्वतः अर्णसा उदकेन तद्वतः एतान् माध्यमिकान् संस्त्यायान् मेघसंघातान् उदकभारेणातिगुरुणा बाध्यमानान् यथाकालम् अरम्णाः विसृष्टवानसि ।

१० रम्णातिः धातुः 'संयमनकर्मा' अन्यत्र । तद्यथा । 'सविता यन्त्रैः पृथिवीमरम्णात्' ( ऋ० सं० १० । १४९ । १ ) इत्यत्र । इह पुनर्मेघविदारणसंबन्धात् 'विसर्जनकर्मा' । किंच । महान्तम् इन्द्र योऽप्यतिमहान् पर्वतो मेघः केनचिदप्यन्येनाशक्यो विवृतद्वारः कर्तुं तमपि वि यद्वः यत् व्यवृणोः विवृतमपावृतोदकनिर्गमनद्वारमकरोः ।

१५ विवृत्य च सृजो वि धाराः । व्यसृजो धाराः त्वमुदकधाराः पुनः पुनः अवहन् अवघ्नन् दानवम् उदकदातारं मेघम् । य एतदकार्षीस्त्वं स इदं नामास्माकं कुरुष्वेति ।

'तस्यैषापरा भवति' । सा पुनः किमर्थम् । उक्तं हि । 'अथास्य कर्म रसानुप्रदानं वृत्रवधो या च काचिद्बलकृतिः' ( निरु० ७ । १० )

२० इति । तदेतदिह रसानुप्रदानं वृत्रवधश्च दर्शितं । बलकृत्युपप्रदर्शनार्थमपरोदाह्रियते ॥ ९ ॥

---

यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत् । यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स

---

१ ग. °मिति । गा°. २ क. ख. घ. झ. ट. ठ. ढ. °नादा. ३ ग. बालानि° ब; च. बलानि, ज. बालानि. ४ ग. ज. माध्यमका°. ५ ग. च. ज. °त्यवसृजो°. ६ क. ख. घ. झ. ट. दर्शितम्. ७ ठ. ढ. °यते । इति निरुक्तभाष्ये चतुर्थाध्याये ( ढ. ४ ध्याये ) नवमः खण्डः ( ठ. ९ खण्डः ); घ. झ. ट. ज. २९ अङ्का नास्ति.

जनास इन्द्रः ( ऋ० सं० २ । १२ । १ ॥ ) यो जायमान एव प्रथमो मनस्वी देवो देवान् क्रतुना कर्मणा पर्यभवत्पर्यगृह्णात्पर्यरक्षदत्यक्रामदिति वा यस्य बलाद् द्यावापृथिव्यावप्यबिभीतां नृम्णस्य मह्ना बलस्य महत्त्वेन स जनास इन्द्र इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता पर्जन्यस्तृपेराद्यन्तविपरीतस्य तर्पयिता जन्यः परो जेता वा जनयिता वा प्रार्जयिता वा रसानां तस्यैषा भवति ॥ १० ॥ ५

---

यो जात एव प्रथमो मनस्वानिति[1] । गृत्समदस्यार्षम् । इन्द्राय मनस्वते पुरोडाशस्य याज्या ( मै० सं० १० । २ । १२ ) गृत्समदमिन्द्रवरप्रदानादैन्द्रं रूपं बिभ्रतमिन्द्रोऽयमिति मन्यमाना जिघांसवोऽसुराः किलैं मरुद्गणैर्विनाकृतोऽयमिदानीमेकः शक्यो हन्तुमिति परिवव्रिरे । स किल भीतो[6]ऽनेन सूक्तेनेन्द्रं तुष्टाव । आत्मानं च ब्राह्मणं परेभ्यः प्रतिवेदयांचकार । १०

यो जात एव जातमात्र एव प्रथमो मुख्यः सर्वभूतानां प्रीति मुख्यतां स एव संपेदे । मनस्वी मेधावी । अन्ये हि कालेन मुख्याः संपद्यन्ते मेधाविनश्च । देवो देवान् क्रतुना पर्यभूषत् । सत्यपि दे[10]वत्वाविशेषे इतरान् देवान् क्रतुना कर्मणा पर्यभूषत् पर्यगृह्णात् परिगृहीतवान् स्वामित्वेन । पर्यरक्षद्वा मुख्यत्वात् । अत्यक्रामद्वा प्रभावेन । य[11]स्य शुष्मात् बला[12]त् रोदसी अभ्यसेताम् अबिभीतां नृम्णस्य मह्ना बलस्य [13]सेनालक्षणस्य महत्त्वेन । अतिमहदसह्यमस्य बलमवश्यमयमावां सादयिष्यतीत्येवमतिमहत्यावेते द्यावापृथिव्यावबिभीतां यस्य १५ २०

---

१ छ. त. द. जात एव°. २ ठ. ड. एवेति. ३ ग. °निति । गृ°. ४ क. ख. ध. झ. ट. ठ. ड. °डाशस्तस्य. ५ ग. च ज. किमलं. ६ ग. च. ज. बिभीतो°. ७ ग. च. ज. °नेन्द्रं च तु°. ८ च. प्रथमु° ति. ९ क. ख. घ. झ. ट. ठ. ड. मनस्वी च मे°. १० च. दैव°. ११ क. ख. घ. झ. ट. यस्य च शु°. १२ क. ख. घ. झ. ट. ठ. ड. शारीराद्बलात्. १३ ग. च. ज. ' सेनालक्षणस्य ' नास्ति. १४ ग. ज. °मस्यावश्यमरजयमावा°; च. °मस्या— — मयमावा°. २५

शुष्मात् हे असुरजनाः स इन्द्रो नाहमिन्द्रो ब्राह्मणोऽहं तत्प्रसादादेवावाप्त-तद्रूप इति । 'ऋषेर्दृष्टार्थस्य' अनुभूतेन्द्रमैत्र्यस्येन्द्रत्वयशस्य गृत्समदस्येन्द्र प्रति 'प्रीतिः' तुष्टिः 'भवत्याख्यानसंयुक्ता' । अतश्च दर्शयति मन्त्राणा-मैतिहासिकोऽप्यर्थ उपेक्षितव्योऽसावपि तेषां विषय इति । अथवा । 'दृष्टार्थस्य' इति देवतार्थं सतस्ततो दृष्टवतो भावितान्तःकरणस्य तत्रोपजातप्रीतेः अतिहर्षात् 'आख्यानयुक्ता' अन्येभ्यः । कथनसं-युक्तेत्यर्थः ।

'पर्जन्यः' (५) तृपेराद्यन्तविपरीतस्य' । 'तृप तृप्तौ' पर्जन्यः कस्मात् (धा० पा० ६ । २७) इत्यस्य धातोः । स कथं भवति । आद्यन्तविपर्ययेण । यतस्त-माद्यन्तविपर्ययं स्वयमेव दर्शयति । 'तर्पयिता' स एव भवति । किमैक-देशिकः । नेत्युच्यते । 'जन्यः' सर्वजनपदतर्पयिता । अथवैवमन्यथा स्यात् । 'परो जेता वा' । परः प्रकृष्टो जेता पर्जन्यः । परशब्दात्पूर्व-पदं जयतेरुत्तरपदम् । 'परो जनयिता वा' । प्रकृष्टो जनयिता । तदेव पूर्वपदं जनयतेरुत्तरपदम् । 'प्रार्जयिता वा' । कस्य । 'रसा-नाम्' । प्रपूर्वस्यार्जयतेः पर्जन्यः । स हि रसान् प्रकटीकरोति । 'तस्यैषा भवति' ॥ १० ॥

---

**वि वृक्षान् हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महा-वधात् । उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन्हन्ति दुष्कृतः ( ऋ० सं० ५ । ८३ । २ ) ॥ विहन्ति वृक्षान् विहन्ति च रक्षांसि सर्वाणि चास्माद्भूतानि बिभ्यति महावधान्महान् ह्यस्य वधोऽप्यनपराधो भीतः पलायते वर्षकर्मवतो यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः पापकृतो बृहस्पतिर्बृहतः पाता वा पाल-यिता वा तस्यैषा भवति ॥ ११ ॥**

---

१ क. ख. घ. झ. ट. ठ. ख. °बन्धात्; ग. च. ज. °बंधा. २ ग. च. ज. भवि°. ३ ग. च. ञ. कार°. ४ क. ख. घ. झ. ट. ठ. ठ. °ख्यानमयु°. ५ ठ. ड. °वति । इति निरुक्तोत्तरषट्कटीकायां (ऋ. नरु० ) चतुर्थाध्याये तृतीयः खण्डः; घ. झ. ट. ज. अङ्को नास्ति.

वि वृक्षान्हन्तीति । अत्रेरार्षम् । कारीर्यां द्विगुस्थाने विनियोगः

पर्जन्यः (आश्व० श्रौ० २ । १३ ) । वि वृक्षान् हन्ति विहन्ति वृक्षान् पर्जन्यः अशनिपातैः ।

कदा । यदा तस्करादीननाकालप्रभवान् पापकृतो वर्षेगौषधीरभिनिष्पादयन् स्तनयन् हन्ति उपशमयति सुभिक्षं कुर्वंस्तदा । विहन्ति च रक्षांसि । विविधं हन्ति क्रूरकर्मणः । विश्वं बिभाय सर्वाणि चास्माद्भूतानि बिभ्यति महावधात् पर्जन्यात् । कथम् । उतानागा ईषते । एवं नाम महावधादस्मात्सर्वाणि भूतानि बिभ्यति येनानागा अपि अनपराधोऽपि सन् सर्व एव अस्माद्वर्षकर्मवतः स्तनयित्नुशब्दैरशनिं मुञ्चत ईषते पलायते मामयं हन्तीति मन्यमानः । योऽयमेवमतिमहानुभावो भगवान् पर्जन्यः स वर्षत्वस्माकमिति ।

'बृहस्पतिः' (६) कस्मात् । 'बृहतः पाता वा पालयिता वा' ।

बृहस्पतिः कस्मात् बृहतो महतोऽस्य जगत उदकस्य वा पाता रक्षिता । पालयितापि रक्षितैव । धात्वन्यत्वमर्थैकत्वम् । 'तस्य एषा भवति' ॥ ११ ॥

---

**अश्नापिनद्धं मधु पर्यपश्यन्मत्स्यं न दीन उदनि क्षियन्तम् । निष्टज्जभार चमसं न वृक्षाद्बृहस्पतिर्विरवेणा विकृत्य ( ऋ० सं० १० । ६८ । ८ ) ॥ अशनवता मेघेनापिनद्धं मधु पर्यपश्यन्मत्स्यमिव दीन उदके निवसन्तं निर्जहार तच्चमसमिव वृक्षाच्चमसः कस्माच्चमन्त्यस्मिन्निति बृहस्पतिर्विरवेण शब्देन विकृत्य ब्रह्मणस्पतिर्ब्रह्मणः पाता वा पालयिता वा तस्यैषा भवति ॥ १२ ॥**

---

अश्नापिनद्धमिति । अयास्यस्याङ्गिरसस्यार्षम् । अशनवता व्यापनवता

बृहस्पतिः मेघेनापिनद्धम् आत्मनो मध्यमातिनीय नद्धं बद्धं विवृतं व्यवहितमदृश्यमन्यैः बृहस्पतिः मधु उदकं

पर्यपश्यत् सर्वतोऽपश्यत् । कथम् । मत्स्यं न दीन उदनि क्षियन्तम् ।

---

१ ग. °र्न्तीति । अ°. २ ग. च. ज. व. झ. ट. ठ. ड. 'र्षेगौष'. ३ ग. च. ज. व. झ. ट. ठ. °शनिमु°, ड. °शनेमु° ४ ग. ड. वर्षि । इति निरुक्तोत्तरपट्कभाष्ये ( ड. नेरुक्तटीकायामुत्तरषट्के ) चतुर्थेऽध्याये एकादशः खण्ड , घ. झ. ट. ज. अङ्क नास्ति. ५ ग. 'मिति । अ°. ६ च. निबद्धं. ७ ग. ख. ग. ज. प. झ ठ. ड. विवृत, ट विवृतं मु.

मत्स्यमिव दीने उदके उपक्षीयमाणे उदके क्षीणप्राये क्षियन्तं निवसन्तम् । यथा मत्स्यबन्धोऽल्पे उदके जिघृक्षुर्मत्स्यं परिपश्येच्छक्यो ग्रहीतुमयमित्येवं पर्यपश्यत् । निष्टजभार चमसं न वृक्षात् । तत्र मधु दृष्ट्वा निर्जभार निर्हृतवान् । कथम् । चमसं न वृक्षात् । यथा कश्चित्कुशलः शिल्पी वृक्षम-
५ ध्यात् चमसं यज्ञपात्रं निर्हरेन्निष्पादयेदेवं निर्जहार बृहस्पतिः । अत एवोदक-निर्हरणान्मध्यमः । कथमसौ निर्जहार । विरवेण विकृत्य भीषणेन अतिमहता रवेण शब्देन संक्षोभ्य मेघं स्रस्तसर्वाङ्गसंधिबन्धनं कृत्वा विकृतं तत एव विह्वलीभूतं विकृत्य समन्ततो विशकलीकृत्य एवं निर्जहार मधु यो बृहस्पतिः सोऽस्माकमपीदं करोत्विति ।
१० ' चमसः ' चमेर्भक्षणार्थस्य । तत्र हि सोमभक्ष्यते ।

' ब्रह्मणस्पतिः ' (७) कस्मात् । 'ब्रह्मणः पाता वा पालयिता वा' ।

ब्रह्मणस्पतिः कस्मात् — ब्रह्म अन्नमुदकादि वा । तस्योभयस्याप्यसौ वर्षेणौषधीरभिनिष्पादयन्पाता संपद्यते । वर्षाभावे ह्येतदुभयमुत्सीदति । ' तस्यैषा भवति ' ॥ १२ ॥

१५

---

**अश्मास्यमवतं ब्रह्मणस्पतिर्मधुधारमभि यमोजसातृणत् । तमेव विश्वे पपिरे स्वर्दृशो बहु साकं सिसिचुरुत्समुद्रिणम् ( ऋ० सं० २ । २४ । ४ ) ॥ अशनवन्तमास्यन्दनवन्तमवातितं ब्रह्मणस्पतिर्मधुधारमभि यमोजसा बलेनाभ्यतृणत्तमेव सर्वे**
२० **पिबन्ति रश्मयः सूर्यदृशो बह्वेनं सह सिञ्चन्त्युत्समुद्रिणमुदकवन्तम् ॥ १३ ॥**

---

इति दशमाध्यायस्य प्रथमः पादः ॥

अश्मास्यमवतमिति । गृत्समदस्यार्षम् । अश्मशब्दात् 'अशनवन्तम्'

ब्रह्मणस्पतिः — इति आस्यशब्दात् ' आस्यन्दनवन्तम् ' इति भाष्यकारश्चकार तथा सामर्थ्यमपेक्ष्य । किमुक्तं
२५ भवति । उदकव्यापनक्रियया तद्वन्तम् आस्यन्दनक्रियया चोदकप्रक्षरण-

१ क. ख. घ. झ. ट. ठ. ड 'माणप्राये क्षि'. २ क. ख. घ. झ. ट. ठ. ड. °मसः कस्मात् । चमे'. ३ ठ. °वति । इति निरुक्तटीकायामुत्तरषट्के चतुर्थेऽध्याये द्वादशः खण्डः; ड. °वति । इति १२ खण्डः, घ. झ. ट. ज. अङ्को नास्ति. ४ छ. प्रथमः पादः; त. इति दशमस्य प्रथ०, ड. इति नैरुक्ते उत्तरार्धस्य दशमा'. ५ ग.
३० 'मिति । गृ'

क्रियया तद्रूतम् । अश्मास्यमवतं मेघं मधुधारम् उदकं[1] धारयितारं यं ओजसा बलेन अभ्यतृणत् अभ्यहन्[2] ब्रह्मणस्पतिः तम् अवतम् अवातितम् अवागतितं[3] भूमिमुदकभावेन गतं पुनरादानकालमुदकस्य प्राप्य तमेव विश्वे पपिरे पिबन्ति । तदुदकमाददते । के पुनस्ते । स्वर्दृशः सूर्यस्य रश्मयः । स्वरिव ये दृश्यन्ते । ते सूर्यसमानदर्शनाः । स्वर्भावेन वा सूर्यभावेन ये मण्डलीभूता दृश्यन्ते । ते पिबन्ति । पुनश्च प्राप्य तदुत्सर्गकालं बहु साकं[4] बहु तदुदकं संहभृता मण्डलात् अर्वाञ्च[5] आवृत्य एनम् अन्तरिक्षे उत्सं मेघम् उद्रिणम् उदकवन्तं कुर्वन्तः सिञ्चन्ति तं च पुनरेवं मेघं यो ब्रह्मणस्पतिर्लोकानुग्रहाय प्रतिसंवत्सरं तृणेढि सोऽस्माकमिदं नाम करोत्विति ॥ १३ ॥

[6]पञ्चदशाध्यायस्य प्रथमः पादः ॥

---

द्वितीयः पादः ॥

**क्षेत्रस्य पतिः क्षेत्रं क्षियतेर्निवासकर्मणस्तस्य पाता वा पालयिता वा तस्यैषा[7] भवति ॥ १४ ॥**

---

'क्षेत्रस्य पतिः' ( ८ ) कस्मात् । 'क्षेत्रं' तावत् 'क्षियतेर्निवासकर्मणः' । तदपाश्रयेण हि ग्रामे क्षियन्ति[8] कुटुम्बिनः । 'तस्य पाता वा पालयिता वा' मध्यमः । तत्कर्मोपपत्तौ हि क्षेत्रस्य क्षेत्रत्वसाफल्यम् । यदा हि मध्यमेन दृष्टं भवत्यथ क्षेत्रं सफलं भवति । विगृहीतमेव[9] समाम्नातम् । निगमे तथा दृष्टत्वात् । 'तस्यैषा भवति' ॥ १४ ॥

(क्षेत्रं कस्मात्) (पतिः कस्मात्)

---

१ ठ. ड. उदकधार°. २ क. ख. घ. झ. ट. ठ. ड अभ्यहनत्. ३ क. ख. घ. झ. ट. ठ. ड. °वाहनि°. ४ क. ख. घ. झ. ट. ठ. ड. साकं सह°. ५ ग. च. ज. °अर्वाञ्च°. ६ ठ. इति निरु० टी० १३ खण्डः; ड. इति निरुक्तटीकायामुत्तरषट्के चतुर्थेऽध्याये त्रयोदशः खण्डः । इति निघण्टुपञ्चकाध्यायेन सह नैरुक्तपञ्चदशाध्याये प्रथ० . ७ क. ख. १ ( १४ ); त. द. १. ८ क ख. घ. झ. ट. ठ. ड. °यन्ति निवसन्ति कु°. ९ क. ख. ( १४ ), ठ. °षति । इति निरुक्तटीकायामुत्तरषट्के चतुर्थेऽध्याये १३ खण्ड; ड. °षति । इति निरुक्तभाष्ये १४ । एतद्; ध. झ. ट. ज. अत्र नास्ति.

(५, १०, १५, २०, २५, ३२ — line numbers in margin)

क्षेत्रस्य पतिना वयं हितेनेव जयामसि । गामश्वं पोषयित्न्वा स नो मृळातीदृशे ( ऋ० सं० ४ । ५७ । १ ) ॥ क्षेत्रस्य पतिना वयं सुहितेनेव जयामो गामश्वं पुष्टं पोषयितृ चाहरेति । स नो मृळातीदृशे । बलेन वा धनेन वा मृळतिर्दानकर्मा[3] तस्यैषापरा भवति ॥ १५ ॥

---

क्षेत्रस्य पतिना वयमिति[4] । वामदेवस्यार्षम् । क्षेत्रस्य पतये चरोः पुरोनुवाक्या ( मैत्रा० सं० २ । १ । १ )। क्षेत्रस्य पतिः क्षेत्रस्य पतिना सुष्ठु हितेन केनचिदाप्तेन मित्रेणे[5] संयुक्ताः सन्तो वयं जयेम[6] गवाश्वादीनि धनानि पुष्टानि बलवन्ति पोषयितॄणि पोषणाय समर्थानि । उपनामितद्रव्याणां चास्माकं क्षेत्रस्य पतिना तत्प्रसादादेव[7] तानि भोक्तुं शक्तिरस्तु । कथमिति । 'आ' इत्यस्योपसर्गस्य सबन्धि क्रियापदमध्याजहार भाष्यकारः । आहरेति । कोऽर्थः । उपजातशक्तयो वयमेवमाज्ञापयन्तः परिचारकानिदमाहरतेति सर्वद्रव्याणि यथाश्रुतीमहि[8] तथा क्षेत्रस्य पतिरस्मान् मृडेतु[9] । 'मृळति-[10]र्दानकर्मा' । ईदृशे धनलाभाय भोगाय चास्मान् ददातु धारयतु । नित्यं स्थिरान् करोत्वित्येतदाशास्महे ।

'तस्यैषापरा भवति' । सा पुनः किमर्थम् । यस्य चरोः एषा[11] पुरोनुवाक्या तत्र ब्राह्मणं भवति । 'इयं वै क्षेत्रस्य पृथिव्यस्यामदीनाया प्रतितिष्ठति' इति । यत परया वर्णलिङ्गयोपपादयति मध्यस्थानः क्षेत्रस्य पतिरिति । भक्तिमात्र ब्राह्मणमिति ॥ १५[12] ॥

१ छ. त ड. मृडाती॰. २ छ. त. द. मृळतिरुपदयाकर्मा पूजाकर्मा वा तस्यै. ३ घ. ख. २ (१५), त द. २. ४ ग. °मिति॰ । वा°. ५ क. ख. घ. झ. ट ठ. ड. मित्रेण ग॰. ६ क. ख. ग. ज. घ. झ. ट. ठ ड. जयामः ७ क. ख. ग. ज. घ. झ. ट. ठ. ड. त्वत्प्र°. ८ ग. च. ज. यथा स्तवी°. ९ क. ख. घ. झ. ट. ठ. ड. मृडयतु°. १० क. ख. घ. झ. मुळति°; ग. च. ज. ठ. ड. मृडति°. ११ घ. झ. ट. ठ. ठ. ड. °दीनाना. १२ क. ख. १२ (१०), ठ. ड. मिति । इति भाष्ये १५ खण्डः, घ. झ. ट. ज अङ्को नास्ति.

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व । मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृळयन्तु ( ऋ० सं० ४ । ५७ । २ ) ॥ क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयोऽस्मासु धुक्ष्वेति मधुश्चुतं घृतमिवोदकं सुपूतमृतस्य नः पातारो वा पालयितारो वा मृळयन्तु मृळयतिरुपदयाकर्मा पूजाकर्मा वा　५ तद्यत्समान्यामृचि समानाभिव्याहारं भवति तज्जामि भवतीत्येकं मधुमन्तं मधुश्चुतमिति यथा यदेव समाने पादे समानाभिव्याहारं भवति तज्जामि भवतीत्यपरं हिरण्यरूपः स हिरण्यसंदृगिति यथा यथाकथाच विशेषोऽजामि भवतीत्यपरं मण्डूका इवोदकान्मण्डूका उदकादिवेति यथा । वास्तोष्पतिर्वास्तुर्वसतेर्निवासकर्मणस्तस्य　१० पाता वा पालयिता वा तस्यैपा भवति ॥ १६ ॥

---

क्षेत्रस्य पते मधुमन्तमिति । आर्पं यदेव पूर्वस्याः । विनियोगो महाव्रते । अदित्यै चतूरूपश्चतुःस्तनग्रहः । तस्य तृतीयमनयर्चा गृह्यते । हे क्षेत्रस्य पते मधुमन्तमूर्मि मधुरस्वादम् उदकसंघातं धेनुर्यथा पयो　१५

**क्षेत्रस्य पतिः**

दोग्धि एवमस्मासु धुक्ष्व प्रक्षर । किंच । मधुश्चुतं घृतमिव सुपूतम् । मध्विवं यन्मुहुर्मुहुः श्चोतति । घृतमिव सुपूतम् उदकमकलुषम् । तस्य दानेन ऋतस्य नः पतयो मृळयन्तु । ऋतस्य उदकस्य पतयः पातारो माध्यमिका देवाः क्षेत्रस्यपतिप्रमुखाः मृळयन्तु । नित्यमस्मान् रक्षन्तु पूजयन्तु वा ।　२०

अत एव मन्त्रात्प्रसक्तमतः परं सर्वमन्त्रेषु जाम्यजामिता पदानां

**जाम्यजामिता-विचारः**

चिन्त्यते । जामीति पुनरुक्तसंज्ञा । सा पुनरियं निगमत एव । विज्ञायते हि । ' जामि वा एतद्यज्ञे क्रियते यन्मरुत्वतीयो ग्रहो गृह्यते मरु-

---

१ क. ख. छ. त. द. मृळय°. २ क. ख. छ. त. द. मृळय°. ३ क. ख. मृळय°; छ. त. द. मृळति°. ४ क. ख. ३ (१६), त. इ. ३. ५ ग. °मिति । आ°. ६ ग. च. ज. ठ. ड. °तीयर्चा गृ°. ७ घ. झ. ट. ठ. ड. स्वादुम्°. ८ ग. च. °दकं सं°. ९ च. मधुश्च्युतं. १० ग. च. ज. मध्वेव. ११ क. ख. घ. झ. ट. ठ. ड. श्चोत. १२ ग. ग. ग. इ. मृळय'.　२१

त्वतीयं शस्यते ' ( मैत्रा० सं० ४ । ६ । ८ ) इति । तदेतत्पुनरुक्तं

द्विविधं जामि

द्विविधम् । समानशब्दार्थमसमानशब्दार्थं च । तत्र समानशब्दार्थं नाम यदेकमेव पदमेकार्थमेकस्मिन्नेव वाक्याधिकारे पुनरुच्यते । तद्यथा ।

समानशब्दार्थं जामि

५ ' मन्म रेजति रक्षोहा मन्म रेजति ' ( ऋ० सं० १ । १२९ । ६ ) । तदधिकृत्यान्यथाप्रतिसमाधानाशक्तौ वक्ष्यति ' अभ्यासे भूयांसमर्थं मन्यन्ते ' ( निरु० १० । ४२ ) इति । यत्पुनरसमानार्थं पदमभ्यस्यते तदपुनरुक्तमेव । यदसमानशब्दं समानार्थं च तदसुखप्रतिसमाधानमिति तदर्थमिहोपोद्घन्ति ' तद्यत्समान्यामृचि '

असमानशब्दं समानार्थं च

१० इति । ' तत् इति ' वाक्योपादाने । ' यत्समान्यामृचि ' । एकस्यामृचि । ' समानाभिव्याहारं ' पदं ' भवति ' । समानमर्थमभिव्याहरति । पदान्तरेण यः कश्चित्पूर्वेऽर्धर्चेऽभिहितोऽर्थस्तमेवोत्तरेऽर्धर्चेऽभिदधज्जामि भवति । तद्यथा ' मधुमन्तं मधुश्चुतमिति ' । यो हि मधु-

एकस्यामपि ऋचि वर्तमाना पुनरुक्तिर्जामिदोषार्हेत्येक मतम्

१५ श्च्युत् अवश्यमसौ मधुमान् । ' एकं ' तावदाचार्यमतम् ।

' यदेव समाने पादे समानाभिव्याहारं भवति तज्जामि भवतीत्यपरम् ' । नानार्धर्चगतयोः समानार्थयोरपि पदयोरसमानपदान्तरव्यवधानात्प्रकृतार्थानुस्मृतये पुनरनुकीर्तनमजाम्येव । किंतु यदेव समाने पादे एकस्मिन्

समानपादे एव वर्तमाना दोषार्हेत्यपरम्

२० पदान्तरेण व्यवहितं पदं समानार्थं पुनरुच्यते अविच्छिन्नप्रसक्तानुस्मृति तदेव जामीत्यपरम् । ' हिरण्यरूपः स हिरण्यसंदृक् ( ऋ० सं० २ । ३५ । १० ) इति यथा ' । यो हिरण्यरूपः सोऽवश्यं हिरण्यसंदृक् । तत्किं पौनरुक्त्ये न तयोरन्यं पदं तत्संयोगाद्वा तदसाधु मन्त्रवाक्यम् । नेत्युच्यते ' यथाकथाच विशेषोऽजामि भवतीत्यपरम् ' । यथाकथंचित् यः कश्चित् स्वल्पोऽपि हि तत्र विशेषो वक्तव्यः । दृष्टानुविधानाच्छन्दसोऽर्थानुविधाने यतेत । एवं येन केनचित्स्वल्पेनापि विशेषेण तदजामि भवतीत्यपरम् । अपरे पुनः कृतवाक्यार्थपरिम-

२५ स्वल्पेऽपि विशेषे अजामि भवतीति मतं यास्कसंमतम्

---

१ ग. च. ज मधुश्च्युत°. २ क. ख. घ. झ. ट. ठ. ड. मधुश्चुत्°. ३ च. पादा°; ज. पदा° पादान्तरेण व्यवहितमिति वा. ४ क. ख. घ. झ. ट. यतेतेवम्।

 येन°, ग. ज. यतेतेन°, च. यतेतेन येन°, ठ. यतेतेन यन°, ड. यतेत येन°.

मास्त्यतिरिक्तं पदं पुनरभ्यस्यमानं निपातवत्पादपूरणत्वेनानर्थकमिति प्रतिसमादधते । तदेतदवगतं भवति । इदमेव स्वभीष्टमाचार्यस्य 'यथाकथाच विशेषः' इति । तदर्थमुदाहरति । 'मण्डूका इवोदकान्मण्डूका उदकादिव (ऋ० सं० १० । १६६ । ५) इति यथा' । एवमादिषु यथा

पुनरुक्तौ कश्चिद्विशेषो वर्तते एव

समानशब्देष्वसमानशब्देषु च पुनरुक्तेषु यः कश्चिद्विशेषो वक्तव्यः । स कथमिति । मन्त्रमेव तं व्याचक्ष्महे यत्रैव पादः । 'योगक्षेमं व आदायाहं भूयासमुत्तम आ वो मूर्धानमक्रमीम् । अधस्पदान्म उद्वदत मण्डूका इवोदकान्मण्डूका उदकादिव' (ऋ० सं० १० । १६६ । ५) इति ॥ ५

ऋषभस्यार्षम् । कामतो देवता कल्या[3] । विद्विष उच्यन्ते । योगक्षेमं व आदाय । योगो नाम लिप्सितस्यार्थस्य प्राप्तिः । क्षेमो नाम तत्परिपालनम् । हे विद्विषः एतदुभयं भवद्भ्यः आदाय मदधीनसर्वयोगक्षेमान् युष्मान् कृत्वा सर्वार्थेषु अहं भूयासमुत्तमः उत्कृष्टो युष्माकम् । आ वो मूर्धानमक्रमीम् । उपरि युष्मानवितिष्ठेयम् । ते यूयमाक्रान्तमूर्धानो मया मम अधस्पदात् पादयोरधो वर्तमानाः मन्मुखप्रेक्षा[6] अस्वाधीनसर्वार्थवृत्तयो भूत्वा नित्यं मां वदत । कथम् । मण्डूका इवोदकात् । यथा मण्डूका उदकादृते नित्यमस्वाधीनवाग्वृत्तयो निर्वचनाः संपद्यन्ते एवं मदृते यूयं भूयास्त । मण्डूका उद- १० १५

यथा 'मण्डूका उदकादिव' इत्यत्र

कादिव । यथा चोदकादृते मण्डूकाः सर्वात्मनैव न भवन्त्येवं मदृते यूयं मा भूत । एवमत्रैकत्र विद्विषां निर्वाक्त्वे मण्डूका उपमानम् । अन्यत्रोदकाभावे यथा मण्डूका न भवन्त्येवं मदभावे यूयमित्युदकमुपमानम् । एव २०

पूर्वत्रापि तथा

विशेषः[11] । पूर्वयोरपि मन्त्रयोर्भवति कश्चिन्मधुमान्न तु मध्वविरतं मुहुर्मुहुश्चोततीति । तथा[13] हिरण्यरूपः स हिरण्यसंदृगित्यत्रभवति कश्चिद्धिरण्यरूपो न तु हिरण्य-

---

१ सर्वेषु पुस्तकेषु 'यथा समान°'. २ क. ख. ग. च. ज. घ. झ. ट. आदायेति । ऋष; ठ. ड. °येति । ऋगभिचष्टे । 'योगक्षेमं व°'. ३ क. ख. ग. च. ज. घ. झ. ट. ठ. ड. कल्याः. ४ क. ख. सर्वा ऋक्पठ्यते. ५ क. ख. घ. झ. ट. ठ. ड. °प्सितार्थ°. ६ ग. च. ज. सन्मु°. ७ ग. च ज. मा. ८ ग. ज. °यास्थ. ९ ग. च. ज. निर्वक्ते; घ. झ. ट. निर्वाक्त्के; ठ. ड निर्वक्ते. १० क. ख. घ. झ. ट. ठ. ड. मण्डूका यथा. ११ क. ख. घ. झ. ट. विशेषः पूर्व°. १२ क. ख. घ. झ. ट. ठ. ड. ,भवति । कश्चि°. १३ क. ख. घ. झ. ट. ठ. ड. यथा. २१ ३१

मिव दृश्यमानः प्रिय इति विशेषः ।

'वास्तोष्पतिः' (९) वक्तव्यः । स पुनरेष रुद्रात्मना मध्यमो वास्तोष्पतिः । विज्ञायते हि वास्तोष्पतीये याथार्थ्यप्रतिपत्तौ गृहगमनमधिकृत्य 'न हीनमन्वाहरेयू रुद्राय हि तद्धीयते यद्धीनमन्वाहरेयू रुद्रं भूतमन्वाहरेयुः' ( मैत्रा० सं० १ ५ । १३ ) इति । स एष गृहाधिदेवता रुद्रो वास्तोष्पतिः । स पुनः 'अमीवहा' इति वल्कर्मलिङ्गान्मध्यमः । तस्य पूर्वपदं विगृह्य निराह ।

को वास्तोष्पतिः

'वास्तुर्वसतेर्निवासकर्मण.' । 'वास्तु' इति गृहमुच्यते । उष्यते हि तस्मिन् । 'तस्य पाता' रक्षिता । तदधिदेवताभावेन रुद्रात्मना च तत्कृतेनोपकारेण रक्षिता मध्यमः । इतरथा ह्युन्मीदेयुर्गृहाः । 'तस्यैषा भवति' ॥ १६ ॥

वास्तुः कस्मात्

---

**अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् । सखा सुशेव एधि नः ( ऋ० सं० ७ । ५५ । १ ) ॥ अभ्यमनहा वास्तोष्पते सर्वाणि रूपाण्याविशन्त्सखा नः सुसुखो भव शेव इति सुखनाम शिष्यतेर्वकारो नामकरणोऽन्तस्थान्तरोपलिङ्गी विभाषितगुणः शिवमित्यप्यस्य भवति यद्यद्रूपं कामयते तत्तद्देवता भवति । रूपं रूपं मघवा बोभवीतीत्यपि निगमो भवति । वाचस्पतिर्वाचः पाता वा पालयिता वा तस्यैषा भवति ॥ १७ ॥**

---

अमीवहा वास्तोष्पत इति । वसिष्ठस्यार्षम् । गृहकार्मिकास्थालीपाके ( मान० गृ० १ । ६ । १९ ) याथार्थ्यप्रतिपत्तौ च वास्तोष्पतीयहोमे ( मान० श्रौ० १ ६ । ३ ) विनियोगः । हे भगवन् वास्तोष्पते त्वमस्माकम् अमीवहा भव ।

वास्तोष्पतिः

---

१ क. ख. व. झ. ट. ठ ड. सच पु°. २ ठ. ढ उपपर्यंत ३ च. 'च' नास्ति. ४ ठ. ड. °ग स्तुतिर्भवति. ५ क. ग. ३ (१६); ठ °वति । इति निरुक्तटीकायामुत्तरषट्के भाष्ये चतुर्थेऽध्याये षोडश. खण्ड; ड. °वति । इति भाष्ये १६ खण्ड., व. झ. ट. ज. अङ्का नास्ति. ६ क. ख. ४ (१), त. द. ४. ७ ग. इति । व°.

अमीवो रोगस्तस्य हन्ता । कथम् । सर्वाणि रूपाणि आविशन् । यस्या-स्मद्दुःखहेतोर्यः प्रतिपक्षः सर्पादिर्नकुलादिस्तस्य तस्य रूपमाविशन् तं तम-स्माकममीवानं जहि । अमुना प्रकारेण घ्नन्नस्मदुपद्रवान् सखा मित्रं सुशेवः सुष्ठु सुखो भव। 'शेव इति सुखनाम' । तत्कस्मात्। 'शिष्यतेः । वकारो नामकरणः' । शिपिर्धातुः[2] वकारः प्रत्ययः शिप इत्यस्य। स पुनः ५ 'अन्तस्थान्तरोपलिङ्गी' । अन्ते तिष्ठति धातोर्यो वर्णः सोऽन्तस्थः । न संज्ञा यथा[3] अन्तस्था यरलवाः । कश्च पुनरसौ । पकारः । तस्यान्तरमवकाशस्थानम् उपलिङ्गयति उपगच्छति यः स भवत्यन्तस्थान्तरोपलिङ्गी[4] । कश्च पुनरसौ । वकारः[5] । स पकारस्य स्थानमुपगच्छति । ततो गुणे कृते शेव इति भवति । स च पुनरेप धातुः 'विभाषितगुणः' इति 'शिवमित्यप्यस्य १० भवति' अगुणपक्षे ।

'सर्वाणि रूपाण्याविशन्' इत्यतः प्रसक्तमुच्यते । शक्रात पुनर्वा-स्तोष्पतिः सर्वाणि रूपाण्यावेष्टुमित्युच्यते । 'यद्यद्रूपं कामयते तत्तद्देवता भवति' । अस्त्येतदैश्वर्यं देवतायाः । यद्यदिच्छति रूपं तत्तत्करोति । निग-मोऽपि हि भवत्यैश्वर्यप्रख्यापकः । 'रूपंरूपं[6] १५

ऐश्वर्याद्देवता इष्टं रूपं स्वीकरोति यथा-स्यामृचि इन्द्रः

मघवा बोभवीति[7] माया: कृण्वानस्तन्वं१ परि स्वाम् । त्रिर्यद्दिवः परि मुहूर्तमागात्स्वैर्मन्त्रैरनृ-तुपा ऋतावा' ( ऋ० सं० ३ । ५३ । ८ ) इति ॥ विश्वामित्रस्या-र्षम् । यावन्ति कानिचिद्रूपाणि मघवा इन्द्रो भवितुमिच्छति तानि सर्वा-ण्यप्रतिबन्धेन बोभवीतीति पुनः पुनर्भवतीति । कथम् । मायाः कृण्वानः । २० इदं भवामीदं भवामीत्येव तन्वं परि स्वां स्वां तनुं[8] तत्तदाकृत्यानेकविधा विकु-र्वाणः । त्रिर्यद्दिवः परि मुहूर्तमागात् । दिवः परि दिवः अधि द्युलोकात् मुहूर्तकाल प्रति यस्त्रिरागात् आगच्छति । स्वैर्मन्त्रैः हूयमानो वा स्तूयमानो वा युगपद्यजमानानां यज्ञेषु । अनृतुपाः अनियतसोमपानकालः सर्वदा यागोपपत्तेः। ऋतावा ऋतवान् यज्ञवान् । येनासावेवमात्मानं विकरोत्येवं च दिवो मुहूर्तं निरागच्छति तेनासावचिन्त्यप्रभावत्वाच्छक्नोति तत्तद्रूप-

१ ग. च. ज. °मीवरो°. २ क. ख. ठ. ड. शिपियातु°. ३ ठ. ड. यणोऽ-न्तस्था°. ४ ग. च. ज. °न्तरोपिलि°. ५ ग. च. ज. षका°. ६ ग. रूप°. ७ ग. च. म. ध. झ. ट. °वीतीति । विश्वा°. ८ ग. च. ज. °तनुं तदा°. २९

मात्रेष्टुम् । एवं च मुष्ठु यदेतदुच्यते सर्वाणि रूपाण्याविशन्नमीवहा भवा-
स्माकं त्वमिति ।

‘ वाचस्पतिः ’ ( १० ) वक्तव्यः । स पुनरेषः ‘ वाचः पाता

५ वाचस्पतिः कस्मात् वा पालयिता वा ’ प्राणमध्यमेन्द्रः । ‘ तस्यैषा भवति ’ ॥ १७ ॥

---

पुनरेहि वाचस्पते देवेन मनसा सह । वसोष्पते निरामय
मय्येव तन्वं मम ॥ इति सा निगदव्याख्याताऽपांनपान्नूनपात्रा
व्याख्यातस्तस्यैषा भवति ॥ १८ ॥

१० ---

पुनरेहि वाचस्पत इति । अपगतप्राणमिवात्मानं मन्यमानः पापक-

वाचस्पति. त्पापसंबन्धात्कुतश्चित्कृतनिर्णेजनः सन् प्राणं ब्रवीति । हे प्राण पुनरेहि त्वं मा प्रति इति । किं

पुनरेकाकी । नेत्युच्यते । देवेन मनसा सह । सर्वेन्द्रियवृत्तिदीपकेन मनसा

१५ सह । एत्य च हे वसोष्पते हे धनस्य अन्नस्य च पते निरामय नियमेन
रमय । मय्येव एतां तन्वं मम । मा यासीमित्त इति प्राणात्पृथग्भूतमात्मानं
पश्यन् स्तोता ब्रवीति ।

‘ अपांनपात् ( ११ ) तनूनपात्रा व्याख्यातः ’ शब्दनिर्वचनतः
( निरु० ८ । ५ ) । अभिधेयस्तु मध्यमः । अद्भ्य आदित्यस्ततो

२० मध्यमः । एवमपां पौत्रः । ‘ तस्यैषा भवति ’ ॥ १८ ॥

---

यो अनिध्मो दीदयदप्स्वन्तर्यं विप्रास ईळते अध्व-
रेषु । अपांनपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्याय
( ऋ० सं० १० । ३० । ४ ) ॥ योऽनिध्मो दीदयद्दीप्यतेऽभ्य-

---

२५ १ क. स. ४ ( १७ ), ठ. ड, °वति । इति निरुक्तभाष्ये १७ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. २ क ख. थ. °तापात्मना°. ३ क. ख. ५ ( १८ ); त. द. ५. ४ म. इति । अ°. ५ क. ख. ग. च. ज. अपात्मप्र°. ६ क. ख. च. झ. ट. ठ. ड. °क्तस्तु°. ७ क. ख. ५ ( १८ ), ठ. ड. °वति । इति निरुक्तभाष्ये ४ ध्याये १८ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ८ क. ख. छ. त. द. ईळते. ९ क. ख. थ. आत्मना°. १० छ. त. द. ‘ °दीदयत् ’ नास्ति.

न्तरमप्सु यं मेधाविनः स्तुवन्ति यज्ञेषु सोऽपांनपान्मधुमतीरपो देह्यभिषवाय याभिरिन्द्रो वर्धते वीर्याय वीरकर्मणे यमो यच्छतीति सततस्तस्यैषा भवति ॥ १९ ॥

---

यो अनिध्मो दीदयदिति । कत्वस्यार्षम् । सर्व एव प्रत्यक्षकृतत्वेन गम्यते । हे अपांनपात् यस्त्वम् अनिध्मो अनिन्धनोऽपि दीप्यसे अभ्यन्तरप्रदेशं प्रति अप्सु वर्तमानः यं च त्वाम् अध्वरेषु यज्ञेषु विप्रा मेधाविन ईळते स्तुवते स त्वमपानपात् मधुमतीः मधुरसाः मधुरस्वादाः अपो देहि अभिषवाय । याभिः त्वमेव इन्द्रः ईश्वरः सोमपानद्वारेण वर्धेथाः वीर्याय वीरकर्मणे इत्येतत्प्रार्थयामहे ।

अपांनपात्

यमः कस्मात्

'यमो' (१२) वक्तव्यः । स पुनरेष 'यच्छति' उपरमयति जीवितात्सर्वं भूतग्राममिति यमः । अत एव बलवानिति मध्यमः । 'तस्यैषा भवति' ॥१९॥

---

परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् । वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य ( ऋ० सं० १० । १४ । १ ) ॥ परेयिवांसं पर्यागतवन्तं प्रवत उद्वतो निवत इत्यवतिर्गतिकर्मा बहुभ्यः पन्थानमनुपस्पाशयमानं वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्येति दुवस्यती राध्नोतिकर्माग्निरपि यम उच्यते तमेता ऋचोऽनुप्रवदन्ति ॥२०॥

---

१ क. ख. थ. द. सोऽपान्नपा°. २ क. ख. ६ (१९); त. द. ६. ३ ग. °दिति । क°. ४ क. ख. ग. च. ज. घ. झ. ईलते. ५ क. ख. घ. झ. ट. ठ. ड. स्तुवन्ति. ६ क. ख. ६ (१२); ठ. ड. °वति । इति निरुक्तटीकायां ४ ध्याये १९ खण्ड, व. झ. ट. ज. अङ्को नास्ति. ७ ङ. छ. त. द. पन्थामनु°. ८ छ. त. द. 'राध्नोति°. ९ क. ख. ७ (२०); त. द ७.

परेयिवांसमिति[1] । यमस्यार्षम् । याम्ये पशौ वपायां विनियोगः

यमः ( मैत्रा० सं० २ । ५ । ११ ) । परेयिवांसं पर्यागतवन्तं सर्वतः प्राप्तवन्तम् । कान् पुनः ।

प्रवत उद्वता निवतश्च भूतसंघातान् । 'प्रवतः' इति मन्त्रे 'उद्वतो
५ निवतः' इति भाष्यकारोऽध्याजहार तथा सामर्थ्यात् । प्रवतो मनुष्या
उद्वतो देवा निवतस्तिर्यञ्चः तथा गत्युपपत्तेः । तमेतमेवं महीः महतीः
भूतजातीः परेयिवांसं बहुभ्यः[2] पुण्यकृद्भ्यः पापकृद्भ्यश्च पन्थानम् अनुप-
स्पाशयमानम्[3] । अमुना मार्गेणायं प्राणी जीवनादुत्सर्पति तमेव तस्य
स्पाशयित्वा बद्ध्वा तस्कर इव तत्रैव सर्पेश्वरादिरूपो भूत्वा जीवितादुपप-
१० स्यामीत्येवमनुपस्पाशयमानं[4] तमेतमेवंकर्माणं वैवस्वतं विवस्वतः पुत्रं संग-
मनं जनाना सममेव चक्षुः कृत्वा योऽस्माल्लोकादमुं लोकं यथाकृतकर्मफ-
लोपभोगवशेन जनान्[5] गमयति तमेतमेव[6] यम राजानम् ईश्वरं सर्वप्राण-
भृतां हे यजमान हविषा अनेन पशुलक्षणेन दुवस्य । राध्नुहीत्यर्थः ।
परिचरस्वेत्यर्थः ।

१५ 'अवतिर्गतिकर्मा' इत्येतदत्र निर्वचनं कथं संबध्यत इति विज्ञात-
व्यम् । अथवा । प्रवत इत्यवतिरेवायमादिलुप्तः प्रपूर्व इति भाष्यकारा-
भिप्रायः ।

तत्प्रसंगाद्वा शब्दसारूप्याद्वा निगद । 'अग्निरपि यम उच्यते' इति
विचारोपप्रदर्शनाय । 'तमेता ऋचोऽनुप्रवदन्ति' इति प्रतिज्ञातार्थोप-
२० पादनाय । यथाग्निरपि यमशब्देनोच्यते तथेमा ऋचोऽनुप्रवदन्ति[7] ॥ २० ॥

---

**सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत्त्वेषप्रतीका । यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम् ( ऋ० सं० १ । ६६ । ४ ) ॥ तं वश्चराथा वयं वसत्यास्तं न गावो नक्षन्त इद्धम् ( ऋ० सं० १ । ६६ । ५ ) ॥ इति द्विपदाः सेनेव सृष्टा भयं**

---

१ ग. °मिति । हविर्द्धानस्यार्षम्. च. ज. °मिति । हविर्द्धानस्यार्षम्. २ ग. च. ज. '°बहुभ्यः पुण्यकृद्भ्यः पापकृद्भ्यश्च' नास्ति. ३ च. °पस्याश°. ४ घ. झ. ट. ठ. ड. °पयास्या°, च. °पयस्या°. ५ घ. झ. ट. ठ. ड. °नानामयति. ६ क. ख. घ. झ ट. ठ. ड. तमें । ७ क. ख. ७ ( २- ), ठ. ड. °दन्ति° । इति नैरुक्तभाष्ये चतुर्थेऽध्याये ( ह. ४ ध्याये ) २० खण्डः, ग. झ. ट. ज. अङ्को नास्ति.

वा बलं वा दधात्यस्तुरिव दिद्युत्त्वेषप्रतीका भयप्रतीका बलप्र-[1]तीका यशःप्रतीका महाप्रतीका दीप्तप्रतीका वा । यमो ह जात इन्द्रेण सह संगतः । यमाविहेह मातरेत्यपि निगमो भवति । यम इव जातो यमो जनिष्यमाणो जारः कनीनां जरयिता कन्यानां पतिर्जनीनां पालयिता जायानां तत्प्रधाना हि यज्ञसं- ५ योगेन भवन्ति । तृतीयो अग्निष्टे पतिरित्यपि निगमो भवति । तं वश्चराथा चरन्त्या पश्वाहुत्या[2] वसत्या च निवसन्त्यौपधाहुत्यास्तं यथा गाव आप्नुवन्ति तथाप्नुयामेद्धं समिद्धं[3] भोगैर्मित्रः प्रमीते-स्त्रायते संभिन्वानो द्रवतीति वा मेदयतेर्वा तस्यैषा भवति ॥ २१ ॥[4]

१०

---

सेनेव सृष्टेत्येवमाद्याः[5] । पराशरस्यार्षम् । एता द्विपदा विराजः । अग्निरत्र यमः प्रातरनुवाकाश्विनयोर्विनियोगः । सेनेव सृष्टा निक्षिता[6] । अथवा । सेनापतिना विसृष्टा प्रेरिता । अमं दधाति भयं वा बलं वा दधाति । भयं परेभ्यो बलं स्वेभ्यः । अथवा । अतर्किता भयं ददाति अतर्किता बलं ददाति[7] प्रणेतुः । अस्तुर्न दिद्युत् । १५ अस्तुरिव क्षेप्तुर्यथा दिद्युत् आयुधम् । महाप्रतीका । महती या दृश्यते । प्रतीकं दर्शनम् । भयप्रतीका दर्शनादेव भयानका । दीप्तप्रतीका वा दीप्तदर्शना । भयं वा बलं वा ददाति । स्वेभ्यः परेभ्यश्चेति वर्तते । का पुनरसाविति । अग्नेरर्चिः । रक्षोभ्यो भयं ददाति स्वेभ्यो बलम् । यमो ह जातो यमो जनित्वम् । यस्येदमेवंलक्षणमर्चिः स एव यमः अग्निः सर्वमिदं जातं २० जनिष्यमाणं च ।

कथमेतद्गम्यते पार्थिवोऽग्निर्यमशब्देनोच्यते न मध्यमो नोत्तमो वेति । तावपि हि यमावुच्येते । यतो निगमान्तरेण विभज्य दर्शयति । ' यमाविहेह मातरेत्यपि निगमो भवति ' । यत्रैव पादस्तस्मिन्मन्त्रे शक्यते यमशब्देनाग्निरुच्यत इति विभावयितुं व्यपदेशः । तद्यथा । ' बाळित्था[8]

---

१ छ. त. द. ' बलप्रतीका यशःप्रतीका ' नास्ति. २ ङ. ध. ठ. ड. पश्वाहु°; थ. पश्वाहु° श्वा. ३ ड. थ. ध. ठ. ड. समृद्धं. ४ क. ख. ८ ( २१ ); त. द. ८. ५ ग. °माद्याः । प°. ६ ग. ज आक्षिप्ता, घ. अक्षप्ता, ट. प्रक्षि° आक्षिप्ता. ७ ध. ट. ठ. ड. ददातु. ८ ग. बलित्थ, च ज. घ. झ. बलित्थ. २१

महिमा वामिन्द्राग्नी पनिष्ठ आ । समानो वां जनिता भ्रातरा युवं यमा-विहेहमातरौ ’ ( ऋ० सं० ६ । ५९ । २ ) ॥ भरद्वाजस्यार्षम् । ‘ बट् ’ इति सत्य-नाम ( निघ० ३ । १० । १ ) । हे इन्द्राग्नी

अस्यामृचि इन्द्राग्नी द्वावपि यमौ

५ इत्था सत्यम् अमुना प्रकारेण । यः सूक्ते महाभाग्यप्रकारोऽधिकृतस्त-मित्थेत्यभिनयेनोपदिशन् ब्रवीति । महिमा माहाभाग्यं वां युवयोः आ पनिष्ठः सर्वतोऽतिशयेन स्तुत्यः । यौ युवामेवमतिमहानुभावौ तयोः समानो वां जनिता जनयिता सूर्यः । तौ युवामेवं कृत्वा एकपितृकौ एक-जन्मानौ यमौ भ्रातरौ । इहेहमातरौ । इह च पृथिवी-

१० लोके इह चान्तरिक्षलोकेऽवस्थितौ मातारौ सर्वस्य लोकस्य निर्मातारौ । एवमिह मन्त्रे पितृत्वेन सूर्यो व्यपदिष्टः । इन्द्राग्नी यमाविति यमशब्दो मध्यमस्थानपृथिवीस्थानयोः । अत्रापि द्वयोर्यमयोरिह चेह च निर्मातारा-विति प्रथमेन ‘ इह ’ शब्देन अग्निर्यम इति लक्ष्यते । तस्मादिहापि ‘ यमो ह जातो यमो जनित्वम् ’ इति युक्तं यदग्निरेवोच्यते । जारः

१५ कनीनां पतिर्जनीनाम् । स एवाग्निः जारो जरयिता कन्याभावस्य । यदा ह्यग्निसंनिधावूढा भवन्त्यथ तासां कन्याभावो जीर्णो भवति । पतिर्ज-नीना पालयिता जायानाम् । कथम् । तत्प्रधानाः संपद्यन्तेऽग्नौ व्रतोपगम-नादाव्रतविमोकादग्निपारतन्त्र्यात् ।

यथा वै तासां यथाधिकृतो यमो ह जातो यमो जनित्वमित्यग्निरेव यमो

२० ह जातः पतित्वेन कन्याभावस्य जरयिता तथायमपरो निगमः स्फुटतरः । ‘ तृतीयो अग्निष्टे पतिरित्यपि निगमो भवति ’ । ‘ सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पति-स्तुरीयस्ते मनुष्यजाः ’( ऋ० सं० १० । ८५ । ४० ) ॥ सूर्याया आर्षम् । विवाहे विनियोगः ।

कन्यानामग्निस्तुरीयः पतिः

हे कन्ये त्वमुच्यसे । सोमः त्वां प्रथमो विविदे विन्नवान् प्राप्तवान् सौम्ये

---

१ ग. घ. ज. ध. झ. ट. वामिति । भरद्वा°. २ क. ख. घ. झ. ट. °र्षम् । बृहती । ब°. ३ क. ख. ‘ बट् ’ इति, ग. ध. ज. घ. झ. ट. बल्. ४ सर्वेषु पुस्तकेषु ‘ महा ’. ५ ग. ज. ठ. ड. मातरौ. ६ ग. ज. °पायना°, ट. °पगमना° पाय. ७ घ. ज. ध. झ. ट. °विद इति । सूर्या°; म. °विद इति । सू°.

प्रथमकौमारके । गन्धर्वो विविद उत्तरः । उपजायमानचारुताङ्गप्रविभागस्वैरसौष्ठवामीपदनङ्गाङ्गसमाहितहृदयां गन्धर्वो विश्वावसुः त्वां विविदे विन्नवान् । अथ पुनरिदानीं वैवाहिके उपगतायाः कर्मणि तृतीयः अग्निष्टे पतिः । तृतीयस्तवायमग्निः । अत उद्वहनात्परं तुरीयः चतुर्थः तवायं मनुष्यजाः पतिरित्येवमनेनापि मन्त्रेण समवैति जारत्वं पतित्वं चाग्नेः । एवं चेत् यमो ह जातो यमो जनित्वम् इति यदधिकृतं सोऽग्निरेवेति सिद्धम् ।

अग्निर्मह्यमथो इमामिति च केचिदधीयते निगममुपचयहेत्वर्थम् ।

तस्मिन्नेवार्थे अन्या ऋक्

स निरुच्यते । 'सोमो ददद्गन्धर्वाय[2] गन्धर्वो ददद्ग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम्' ( ऋ० सं० १० । ८५ । ४१ ) इति ॥ स एव विनियोगः ( मान० गृ० १ । १० । १० )। आर्षं च। सोम एतां प्रथमं कौमारादभ्युह्य गन्धर्वाय ददत् अदात् । अथ गन्धर्वोऽप्येनामभ्युह्य स्वयौवनाधिकारात् अग्नये ददत् । अथाग्निरप्येनामस्मिन् विवाहे संस्कृत्य रयिं धनं च पुत्रांश्च मह्यमदाद् ददाति । अथो अपि च धनेन च पुत्रैश्च सह मह्यमदात् मह्यं ददाविति ।

तमग्निं यमम् । 'वः' इत्यनर्थकः । अथवा । यजमाना ऋत्विग्भिरुच्यन्ते । चराथा चरन्त्या जंगमया पश्वाहुत्या[3] वसत्या च निवसन्त्या औषधाहुत्या । जंगमेन स्थावरेण च हविषा । अस्तं न गावो नक्षन्ते । अस्तं यथा गृहं गावः अवश्यं नक्षन्ते आप्नुवन्ति स्वेनोपकारेण सायंवासाय तथेममग्निमुभयलक्षणेन हविषा वयमाप्नुयाम इद्धं समिद्धं भोगैः सर्वभोगानामीश्वरं प्रदातारमिति ।

'मित्रः' ( १३ ) कस्मात् । स हि 'प्रमीतेस्त्रायते' । प्रमीतिः

मित्रः कस्मात्

प्रमरणं ततः सर्वलोकं त्रायते वर्षद्वारेण । 'संमिन्वानो द्रवतीति वा' । समन्ततो मिन्वानः उदकेन द्रवत्यन्तरिक्षलोके । 'मेदयतेर्वा' स्नेहनार्थस्य ( धा० पा०

१ घ. ट. ठ. ड. स्वरे सौ°. २ ग. 'र्वायेति'' । स एव°; च. ज. व. झ. ठ. °र्वायेति । स एव°. ३ ड. पश्वाहुत्या.

१० । ८ ) । सर्वं ह्यसावुदकेन स्नेहयति । 'तस्यैषा भवति' ॥२१॥[2]

---

मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम्। मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत (ऋ० सं० ३ । ५९ । १ )॥ मित्रो जनानायातयति प्रब्रुवाणः शब्दं कुर्वन् मित्र एव धारयति पृथिवीं च दिवं मित्रः कृष्टीरनिमिषन्नभिविपश्यतीति कृष्टय इति मनुष्यनाम कर्मवन्तो भवन्ति विकृष्टदेहा वा मित्राय हव्यं घृतवज्जुहोतेति व्याख्यातं जुहोतिर्दानकर्मा कः कमनो वा क्रमणो वा सुखो वा तस्यैषा भवति ॥ २२ ॥

---

मित्रो जनान्यातयति ब्रुवाण इति । विश्वामित्रस्यार्षम् । अत्रवृष्टहोमे प्रायश्चित्तम् । अग्निहोत्रे पूर्वस्यामाहुतौ विनियोगः ( मान० श्रौ० ३ । २ । ८ )। मित्रो जनान्यातयति ब्रुवाणः । आयातयति कृष्यादिषु प्रवर्तयति तत्कर्मपूर्वकत्वात्कृष्यादिकर्मणाम् । न ह्यकृष्टे कृष्यादीन्यायाल्यन्ते । आयातनमारम्भः । तद्यथा । भोजनमायातितमनेनेति । कथमायातयति । प्रब्रुवाणः स्तनयित्नुं कुर्वन् । एवं प्रवर्तयन् कर्मसु अपर्थोत्पादयन्नद्वारेण स एव मित्रो दाधार धारयति पृथिवीं पृथिवीलोकनिवासिनः सर्वान् । उत द्यां धारयति । अमुना प्रकारेण अनुगृह्णन् स मित्रः कृष्टीः मनुष्यान् अनिमिषन्नभिविपश्यति उपकारद्वारेण । यो हि यस्मा उपकरोति स तेन सम्यक् दृष्टो भवति । योऽयमेवमुपकारप्रवृत्तः कृत्स्नस्य लोकस्य तस्मै मित्राय हव्यं घृतवत् घृतेनामिश्रं जुहोत जुहुत हे मनुष्याः ।

---

१ क. ख. घ. च. झ. ट. ठ ड. ग्नाति. २ क. ख. ८ ( १७ ), ठ. °वति । इति निरुक्तटीकाभाष्ये ४ ध्याये २१ खण्ड, ड °वति । इति निरुक्तभाष्ये २१ खण्ड, घ. झ. ट. ज. अङ्को नास्ति ३ ड. थ च ठ. ढ. °ति ब्रुवा°. ४ क. ख. ९ ( २२ ) त ड. ९. ५ ग इति । वि°; ठ. ढ. यातयतीति । वि°. ६ ग. च. ज. 'योग. । आयातयति'. ७ क. ख. घ. झ. ट. ठ. ढ. अनिमिषाभिचष्ट अनिमिष°. ८ ग. च. ज. झ. 'जुहुत' नास्ति.

'कृष्टयः' इति मनुष्यनाम । तत्कस्मात् । नित्यं हि ते कर्मवन्तो

कृष्टयः कस्मात्

भवन्त्यारम्भशीलत्वात्[1] । 'विकृष्टदेहा: वा' । संसृष्टदेहा अन्ये पशवो गवादयः । ते हि न कामकारतोऽङ्गानि प्रसारयितुं शक्नुवन्ति । स तेषां सकर्षः । मनुष्यास्तु कामतः प्रसारयन्त्यङ्गानि । स तेषां विकर्षो देहस्य ।    ५

'कः' (१४) इति वक्तव्यम् । स पुनरेव महानात्मा सर्वात्मा प्राण-बुद्धितत्त्वः । उदाहरिष्यति च 'अथैत[2] महान्तमात्मानम्' अधिकृत्य (निरु० १४ । १) 'क ईषते तुज्यते' (निरु० १४ । २६) इति । स कथं मध्यमो भवति । भवति हि तस्य सूक्ते 'आपो ह यद् बृहतीर्वि-श्वमायन्गर्भं दधाना:' (ऋ० सं० । १० । १२१ । ७) इति ।    १०

क. कथं मध्यमः

विज्ञायते च 'प्रजापतिर्वै कः' (तै० ब्रा० २ । २ । ५) इति । प्रजापतिश्च मध्यमः । तथा च मन्त्रवर्णो भवति राज्ञोऽभिषेकमधिकृत्याश्वलायने 'प्रजापतिश्चरति गर्भे अन्तः'[6] इति समाना प्रथमा । तयोपरिष्टादभिषेकस्य जुहुयात् इति । तस्माद्भवति मध्यमः । स कस्मात्कः । 'कमनो वा' ।    १५

कः कस्मात्

कामिना कामिष्वर्थेषु साधनम् । 'क्रमणो वा' । क्रमणसाधनम् । स्वयमेव वा क्रामति । 'सुखो वा' । कमेव वा कः । सुख इत्यर्थः । 'तस्यैषा भवति[7] ॥२२॥

---

**हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम** (ऋ० सं० १० । १२१ । १) । हिरण्यगर्भो हिरण्यमयो गर्भो हिरण्य-    २०

---

१ घ. झ. ट ठ. ड शोकन्त्वात्. २ क ख. घ. झ. ट. ठ. °थैन. ३ क. ख. घ. झ. ट. ठ. ड. °नामयितुं. ४ क. ख. ग. झ ट ठ ड. तस्मिन्, ग. ज. भगिनि तस्य. ५ ट ड दृशाना जनयन्तीरग्निम् इति (ड. °यन्ती-र्यज्ञम् इति). ६ क ख. घ. झ ट ठ ड °परिष्टा; च. °परिष्टा० वि. ७ क. ख. घ (२२), ठ. ड. °वति । इति निरुक्तभाष्ये उत्तरषट्के चतुर्थेऽध्याये द्वात्रिंश. (ठ. °ध्याये २२) खण्डः, घ छ. ट. ज अङ्को नास्ति.    २८

मयो गर्भोऽस्येति वा गर्भो गृभेर्गृणात्यर्थे गिरत्यनर्थानिति वा यदा हि स्त्री गुणान् गृह्णाति गुणाश्चास्या गृह्यन्तेऽथ गर्भो भवति समभवदग्रे भूतस्य जातः पतिरेको बभूव स धारयति पृथिवीं च दिवं च कस्मै देवाय हविषा विधेमेति व्याख्यातं विधतिर्दानकर्मा सरस्वान् व्याख्यातस्तस्यैषा भवति ॥ २३ ॥

---

हिरण्यगर्भः समवर्तताग्रे इति[2] । हिरण्यगर्भस्यैवार्षम् । सर्वात्मकत्वात्तदार्षत्वेऽपि मन्त्रस्य प्रथमपुरुषप्रयोगोऽविप्रतिषिद्धः । अथवा । परस्य ब्रह्मणो या हिरण्यगर्भावस्था प्रतिकल्पमाविर्भावतिरोभावधर्मिणी बुद्धिपूर्विका नित्या तस्यां च नित्यो मन्त्रोऽविवक्षिताभिधानाभिधातृक आश्रयमात्रेणाभिधातारमुपादाय प्रवर्तमानोऽनुवर्तत्यविवक्षितः पुरुषप्रयोगः । कृतकत्वे हि नियमत एवोत्तमपुरुषप्रयोगो मन्त्रस्याभविष्यत् । भूतस्य अस्य उत्पन्नस्य स्थावरजंगमस्य जगतो हिरण्यगर्भः एव अग्रे समवर्तत समभवत् उदपद्यत । तमुत्पन्नमन्विदं सर्वमनूत्पेदे । स च पुनरग्रे जातः संस्तस्य पश्चाद्भूतस्य एकः असपत्नः अद्वितीयः पतिः पाता रक्षिता ईश्वरः स्वतन्त्र आसीत । कथमिति । स दाधार । यतः पतिः अतः स एव दाधार स एव धारयत्यद्यत्वेऽपि । किमिति । पृथिवीमुत द्याम् । पृथिवीम् अन्तरिक्षम् अपि च द्यां द्युलोकम् । अपि च इमां भूमिम् अन्तरमनुप्रविष्टो बहिश्च वर्षधारकत्वेन । योऽयमेवंभावैः[3] अतिमहानुभावः कः तस्मादस्मै कस्मै काय देवाय हविषा विधेम हविर्दद्मः । अथवा । अनेन चरुलक्षणेनान्यलक्षणेन वा हविषा तं वयं परिचरेम । 'विधतिर्दानकर्मा' इति । तस्माद्धविःशब्दान्तरेण ज्यायसी । शतकृष्णलस्य पुरोनुवाक्या ( मैत्रा० सं० २ । २ । २ ) । अघारश्च प्राजापत्ये पशावनेन मन्त्रेण ( मैत्रा० सं० ३ । १२ । १६ ) ॥

अथ हिरण्यगर्भः[6] कस्मात् । स हि 'हिरण्यमयो' विज्ञानमयो 'गर्भः' सर्वभूतानां तत्कार्यत्वादन्तःप्रकाशश्च । हिरण्मयश्चासौ

---

१ क ख १० ( २३ ), ग छ. १० २ ग इति । हि°. ३ क. ग. घ. च. झ. ञ. °भाव अ°, ग. ज. °वमेव अ°. ४ घ. ठ. ढ. °ष्णलस्य°. ५ ग. ज. °मयो, च °त्मानो ६ ग. घ ज 'हि' नास्ति.

गर्भस्येति समानाधिकरणः । 'हिरण्मयो गर्भोऽस्येति वा' । शरीरेन्द्रियमनोबुद्धिभिश्चेतनमपेक्ष्य परमात्मानं च विज्ञानप्रकाशमात्रसतत्त्वं सर्वविशेषहारित्वाद्धिरण्मयमपेक्ष्य तत्प्रकृतिनं च क्षेत्रज्ञस्यापेक्ष्य सोऽस्य हिरण्मयो हिरण्यप्रकृतिगर्भ इति हिरण्यगर्भः । अथ 'गर्भः' कस्मात् । 'गृभेः' धातोः गृणात्यर्थे वर्तमानस्य । स्तुत्यो हि गर्भः । 'गिरत्यनर्थानिति वा' । सर्वाननर्थानसौ गिरति नाशयति । अथ पुनरयं स्त्रीगर्भः

स्त्रीगर्भस्य मीमांसा

कस्मादिति । यत आह । 'यदा हि स्त्री गुणान् गृह्णाति गुणाश्चास्या गृह्यन्तेऽथ गर्भो भवति' । स्वप्रत्ययः स्त्रीरक्तम् । तद्यदासौ पुरुषाच्छुक्रावस्थान् गुणान् गृह्णाति आत्मानं संपृणक्ति अन्योन्यस्नायुमज्जानः । गुणाश्चास्या रक्तावस्थाः त्वङ्मांससशोणितानि पौरुषेण शुक्रेण गृह्यन्ते । तदेवमितरेतरकोशग्रहणव्यतिषङ्गे रक्तशुक्रयोः स्त्रीगर्भो भवति । अथवा । यदा हि स्त्री गुणान् गृह्णाति पुरुषस्य प्रेम्णा गुणाश्चास्याः प्रेम्णा पुरुषेण गृह्यन्ते तदितरेतरानुरागात् प्रमोदः । प्रमुदितयोः संपर्काद्गर्भग्रहणं च । तदेव गर्भग्रहणहेतुकोऽयमिति प्रेहगर्भः ।

'सरस्वान् (१२) व्याख्यातः' (निरु० २ । २४) सरस्वत्या । केवलं लिङ्गकृतो विशेषः । 'तस्यैषा भवति' ॥ २३ ॥

---

**ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेभिर्नोऽविता भव (ऋ० मं० ७ । ९६ । ५) ॥ इति सा निगदव्याख्याता ॥ २४ ॥**

---

## दशमाध्यायस्य द्वितीयः पादः ॥

सरस्वान्

ये ते सरस्व ऊर्मय इति । वसिष्ठस्यार्षम् । सारस्वते हविषि विनियोगः (आश्व० श्रौ० ३ । ८) । हे

१ क. ख. घ. झ. ट. ठ. ड. 'रण्यगर्भमेर°'. २ ग. ज. गृहेर्धातोर्गृह्णात्य°. ३ क. ख. घ. झ. ट. ठ. ड. सर्वस्य स्तुत्यो. ४ क. ख. १० (२०), ड. °वति । इति निरुक्तटीकायां चतुर्थाध्याये २३ खण्ड; ड. °वति । इति निरुक्तटीकायामन्तरषट्के २४ (?) खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ५ क. ख. ११ (२५); ङ. ड. ९१. ६ ड. थ. ध. 'दश० पाद' नास्ति, छ. त. 'दशमाध्यायस्य' नास्ति, ट. इति निरु० उत्तरार्धस्य दशमः. ७ ग. इति° । ग.

भगवन् सरस्वन् ये[1] ते तव ऊर्मयो यैरूर्णोषि नभो मेघैश्छादयसि मधुमन्त उदकवन्तो घृतश्चुतो[2] घृतवन्तः उदकप्रक्षराः तेभिः तैः त्वमस्माकम् अविता तर्पयिता भवेत्येतदाशास्महे[3] ॥ २४ ॥

पञ्चदशस्य द्वितीयः पादः ।

---

तृतीयः पादः ।

**विश्वकर्मा सर्वस्य कर्ता तस्यैषा भवति ॥ २५[4] ॥**

---

'विश्वकर्मा' (१६) वक्तव्यः । स कस्मात् । 'सर्वस्य कर्ता' । यदिदं किंचिद्भूतं करिष्यमाणं क्रियमाणं च[5] तस्य सर्वस्य कर्ता । वाय्वात्मकत्वात्सर्वचेष्टानां मध्यमः । स कथं सर्वं करोति । पार्थिवाप्यौ धातू तेजसा परिपच्यमानौ वायुर्व्यूहेन विचरन् सर्वभावानुप्रवेशी सर्वमेवमत्यद्भुतमचिन्त्यमकृतात्मभि[6]र्जगत्करोतीति मध्यमः[7] । विश्वकरणाद्विश्वकर्मा । विज्ञायते हि वैश्वकर्मण[8] हविरधिकृत्य साकमेधेषु । 'अथैष वैश्वकर्मणो विश्वानि मे कर्माणि कृतान्यासन्निति विश्वकर्मा हि सोऽभवत्' (मैत्रा० सं० १ । १० । १६) इति । भवति चोदकसम्बद्धं[9] मन्त्रलिङ्गं विश्वकर्माणमधिकृत्य वैश्वकर्मणे सूक्ते 'तमिद्गर्भं प्रथमं दध्र आपः' (ऋ० सं० १० । ८२ । ६) इति । विपुत्रति च वैश्वकर्मणं[11] ब्राह्मणमधिकृत्य विज्ञायते हि 'इन्द्रो वै वृत्रमहन्स इमं लोकमभ्यजयदमुं[12] लोकं नाभ्यजयत्स विश्वकर्मा भूत्वाभ्य-

विश्वकर्मा कस्मात्

स कथं मध्यमः

---

१ ग. च. ज. 'ये' नास्ति. २ ग. च. ज. 'तः' नास्ति. ३ ग. च. २४, क. ख. ७ (२४), ठ. °स्महे । इति पञ्चमाध्याये द्वितीयः पादः । इति निरुक्तभाष्ये ४ अध्याये २४ खण्डः, ड. °स्महे । इति पञ्चदशाध्याये २ पादः । इति निरुक्तभाष्ये २४ खण्डः. ४ क. ख. १ (२५), ठ. ड. १. ५ ग. च. ज. 'च' नास्ति. ६ क. ख. घ. झ. ट. सर्वमिदम°. ७ क. ख. घ. झ. ट. °ति स मध्य°. ८ ग. च. ज. विश्व°. ९ क. ख. घ. झ. ट. ठ. ड. °बद्धमस्य म°. १० ठ. ड. 'आपो यत्र० तस्थुरिति' इति सर्वासु कश्यप्राप्त. ११ ग. ज. °र्मणं ब्र°, घ. झ. ट. ठ. ड. °कर्माणम°. १२ क. ख. ठ. ड. नु°

जयत्'( मैत्रा० सं० ४ । ८ । १० ) इति । तस्यैव ग्रहस्य पुरोरुच-
मधिकृत्य विज्ञायते[1] ' यद्वैन्द्री वैश्वकर्मणीं विद्यात्तैव गृह्णीयात् ' इति ।
स एष एवमादिभ्यो लक्षणेभ्यः सर्वस्थानानुभावित्वेऽपि सति विशेषतो
मध्यम इति मध्यमस्थाने समाम्नातः । ' तस्यैषा भवति[2] ' ॥ २५ ॥

५

---

विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक् ।
तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऋषीन्पर एकमाहुः ( ऋ० सं० १० । ८२ । २ )॥ विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च संद्रष्टा भूतानां तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वाद्भिः सह संमोदन्ते यत्रैतानि सप्तऋषीणानि[3] ज्योतींषि तेभ्यः[4] पर आदित्यस्तान्येतस्मिन्नेकं भवन्तीत्यधिदैवतमथाध्यात्मं विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च संदर्शयितेन्द्रियाणामेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वान्नेन सह संमोदन्ते यत्रेमानि सप्तऋषीणानीन्द्रियाण्येभ्यः पर आत्मा तान्येतस्मिन्नेकं[5] भवन्तीत्यात्मगतिमाचष्टे तत्रेतिहासमाचक्षते विश्वकर्मा भौवनः सर्वमेधे सर्वाणि भूतानि जुहवांचकार स आत्मानमप्यन्ततो जुहवांचकार तदभिवादिन्येषर्ग्भवति । य इमा विश्वा भुवनानि जुह्वदिति[6] तस्योत्तरा भूयसे निर्वचनाय ॥ २६ ॥

१०

१५

२०

---

विश्वकर्मा विमना आद्विहाया इति[7] । भौवनस्य विश्वकर्मणः प्रजापतेरार्षम् । अग्नौ वैश्वकर्मणाभ्यां सूक्ताभ्यां षोडशगृहीतं हूयते तत्र विनियोगः ( मैत्रा० सं० ३ ।

विश्वकर्मा

---

१ क. ख. घ. झ. ट. ठ. ड. °यते हि. २ क. ख. १ ( २५ ); ठ. ड. °षति । इति निरुक्तभाष्ये ४ ध्याये २५ खण्डः. ३ द. सप्तर्षणानि. ४ द. °तीष्ये· तेभ्यः. ५ छ. त. द. तान्यस्मि°. ६ क. ख. २(२६); त. द. २. ७ ग. इति" । भौ°; ठ. ड. विमना इति । भौ°.

३।७॥ २।१०।२ )। विश्वकर्मा विमना: विभूतमना: विभूतप्रज्ञान:। सर्वत्राप्रतिहतमस्य प्रज्ञानम्[1]। किं प्रज्ञानमेव केवलम्। नेत्युच्यते। आद्विहाया:। अप्यसावात्मना विहाया:। आत्मनापि सर्वप्रकारं

मन्त्रस्याधिदैवतं व्याख्यानम्

५ महान्। महत्त्वाच्च व्याप्तो[2] एवं सर्वप्रकारं सर्वस्य जगत:। यत एव च[3] महान् अत एव धाता उत्पादयिता सर्वभूतानाम्। उत्पाद्य च विधाता जीवनस्य। जीवतां च साध्वसाधुषु कर्मसु प्रवर्तमानानां परमोत संदृक् परम: प्रकृष्ट: अव्यवधानेन संदृष्टा[4] सम्यक् प्रविभागेन द्रष्टा। साध्वसाधुप्रविभागद्रष्टा। तेषां च भूतानां यानि[5] इष्टानि प्रियाणि तस्य विश्वकर्मणो दैवीं संपदमभि-
१० संपन्नानि। कामर्थो[6] वा इषि:। यान्यभीप्सितानि तस्य विश्वकर्मण:। मतानि वा अभिमतानि वा। तस्य विश्वकर्मण: नतानि वा प्रह्वीभूतानि तं विश्वकर्माणं प्रति। तत्परिज्ञानश्रद्धोपासनाभावनाप्रक्षपितदुरितानि तेन सहैकीभूतानि विश्वकर्मणा आधिदैविकमात्मानमभिसंपन्नानि। समिषा मदन्ति। इषा उदकेन अद्भि: परिपुताभि:
१५ सुसूक्ष्माभि: सह तेन कर्मणा समानम् अविशेषेण मादन्ते। क। यत्रा सप्तऋषीन्पर एकमाहु:। यत्रैतानि सप्तऋषीणानि[7] रसानामाकर्षणानि दर्शूंषि[8] वा रश्मीन् ज्योतींषि एकं भवन्ति अविभागमुपगच्छन्ति। मण्डले ह्येतेषामविभाग:। किं तत्रैव। नेत्युच्यते। यत्र पर एकमाहु:। क च पुन: पर एकमाहु:। मण्डलाधिष्ठातरि योऽसौ यज्ञदानतपसा भोक्ता 'हिर-
२० ण्यश्मश्रुर्हिरण्यकेश आ प्रणखात्सर्व एव सुवर्ण:' ( छा० उ० १।६।६ ) इति विज्ञायते। एकमेव यमाहुर्देवतासतत्त्वविद:। 'इत्यधिदैवतम्'। देवतामधिकृत्य मन्त्रस्य व्याख्यानमधिदैवतम्।

'अथाध्यात्मम्'। आत्मानमधिकृत्य विश्वकर्मणो व्याख्यानमध्यात्मम्। क: पुनरयमात्मा। विज्ञानसतत्त्वमात्र[9] सविशेषविज्ञानप्रसवबीजं यदेकदेशा:

१ ग. च. ज. ज्ञानं. २ ग. ज. व्याप्नोति. ३ क. ख. घ. झ. ट 'च' नास्ति, च. 'एव—म'. ४ ग. ज. रूदृष्टा. ५ क. ख. घ. झ. ट. ठ. ड. यानि यानि°. ६ क. ख. घ. झ. ट. ठ. ड. कान्त्यर्थो. ७ क. ख. घ. ट. सप्तर्षीणा°. ८ ग.
२५ ज. °णानि दृ वा, च. दृशूणि. ९ क. ख. घ. झ. ट. ठ. ड. °गर्भा .

यष्युता इव सन्तस्ततः कथमप्यविद्याव्यवधानादन्यत्रमिव बिभ्रतः प्रतिश-

आत्मन एकत्वेऽपि तस्याधिदैवाध्यात्मे इति द्वे रूपे

रीरं शास्त्रेण ताद्भाव्यं यावच्छिद्यते । सोऽय-
मात्मा प्रतिशरीर क्षेत्रज्ञत्वेन स्वविशेषविज्ञानश-
त्त्यधिकारमनुभवन् हिरण्यगर्भावस्थामधिदैवमि-
त्युच्यते । अथ पुनरन्यः शारीरावस्थासु वर्तमान- ५

स्तदधिदैवतमनपेक्ष्य प्रतिशरीरं यद्विश्वकर्मभावमनुभवन् मन्त्रेण व्याख्या-
यते तदध्यात्ममस्य ।

विश्वकर्मा सर्वस्य कर्ता परमात्मा प्रतिशरीरं क्षेत्रज्ञत्वेन वर्तमानस्त-

मन्त्रस्याध्यात्मं व्याख्यानम्

त्कृतत्वाद्वायोः क्रियापरिस्पन्दस्य । न केवलं
सर्वक्रियाशक्तिमान् । किं तर्हि । विमनाश्च १०
विभूतमनाः सर्वज्ञातः सर्वतोमुखाभिः विशेष-

विज्ञानशक्तिभिः । आद्विहायाः । अपि च विहायाः महान् । विज्ञायते
हि ' स वा एष महानात्मा अन्नादो वसुदानः ' ( बृह० उ० ४ ।
४ । २४ ) इति । न केवलं महान् । किं तर्हि । धाता स्रष्टा स्वशक्तिवि-
क्षेपस्य । विधाता च तद्योग्यानां विषयाणाम् । विक्षिप्तविहितानां च १५
तेषां परमः प्रकृष्टः इन्द्रियाणां संदर्शयिता तत्कृतत्वाद्विषयविषयिसंबन्ध-
स्येन्द्रियाणां च तदधिष्ठितानां प्रतिविषयमालोकसामर्थ्योपजननात् । तस्य
विश्वकर्मणः परमात्मनः तेषां स्वशक्तिविक्षेपाणां क्षेत्रज्ञविभूतीनां यानि
इष्टानि पूर्ववत्परमात्मज्ञानश्रद्धोपासनाभावनाप्रक्षपितदुरितानि तानि इषा
अन्नेन सह मोदन्ते तृप्यन्ति । क्व । यत्र सप्तऋषीन्परेमानि सप्तर्षीप्री- २०
णानि इन्द्रियाणि द्रष्टॄणि इन्द्रियाणि ज्योतींषि एकमाहुः । क्व । बुद्धौ ।
तस्यामपि ह्येतेषामेकत्वमस्ति । किं तत्रैव । नेत्युच्यते । पर एकमाहुः ।
न यतः परतरमस्ति तस्मिन्परे विश्वकर्मणि यदन्नं शक्तिमात्रं यदुपवि-
ष्टम्भात्परमात्मा नित्यतृप्तस्तेनान्नेन परमात्मनि तद्विज्ञानोपासनात्ताद्भाव्यमु-

---

१ क. ख. ग. ज. घ. झ. ट. ठ. ड. 'विशेषेण विज्ञा°; च. 'विशेषविज्ञा' २५
षेण. २ क. ख. च. घ. झ. ट. ठ. ड. °धिकारमनु°. ३ क. ख. घ. झ. ट. ठ.
ड. 'रीरं क्षेत्रज्ञत्वेन य°. ४ ग च. ज. विभूतप्रज्ञातः स°. ५ क. ख. घ. झ.
ट. ठ. ड. उत्कृष्टः. ६ ग. च. ज. °क्षेपक्षेत्र°. ७ ग. च. ज. ' तानि ' नास्ति.
८ ग. ज. सप्तरिषगानि; च. सप्तर्षिणानि° रि; ट. सप्तर्षणानि° रि; घ. झ.
सप्तर्षणानि. ९ ग. च. ज. द्रष्टूणि; ठ. ड. द्रष्टानि. १० क. ख. घ. झ. ट. ठ.
ड. °त्वमस्ति वर्तते. ११ क. ख. घ. झ ट. ठ. ड. °परतरे वि°. ३१

पगतास्तेन सहभूता मोदन्ते निरशनापिपासा नित्यतृप्ता अतीतशोकमोहजरामृत्यव आत्मविद इत्येवमाहुः सतत्त्वदर्शो ब्राह्मणाः । यथा चानुपक्षीणस्वभाशक्ति नित्यतृप्तं सर्वभावपरं तत्परं ब्रह्म यदात्मविदः प्रतिपद्यन्ते तथा पुराणमृकेऽपि परमेष्ठिन आर्षे मन्त्रो दर्शयति । 'स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास' (ऋ० मं० १० । १२९ । २ ॥ निरु० ७ । ३) इति । एवं सर्वत्र समेयो यावद्विषयो मन्त्राणां योऽय इत्युपप्रदर्शनायोभयथा मन्त्रो वर्णितः ।

'इत्यात्मगतिमाचष्टे' । अमुना प्रकारेण वर्ण्यमान । एष मन्त्र आत्मगतिमाचष्टे प्रख्यापयति । यथा चैषमात्मगतिवाचिका ऋक् 'तत्र' एतस्मिन्नर्थे 'इतिहासमाचक्षते' आत्मविद इतिवृत्तं परकृत्यर्थवादरूपेण । यः कश्चिदाध्यात्मिक आधिदैविक आधिभौतिको वार्थ आख्यायते दिष्टसंदितार्थावभासनार्थं स इतिहास इत्युच्यते । स पुनरयमितिहासः सर्वप्रकारो नित्यमविवक्षितस्वार्थस्तदर्थप्रतिपत्तॄणामुपदेशपरत्वात् ।

विश्वकर्मण आत्मयागे इतिहासः

'विश्वकर्मा ह भौवनः' । यथोदितमिदं वैदिकं कर्म संबन्धदर्शनेन यः सर्वं करोति सर्वात्मकत्वात्सर्वस्य वैश्वकर्मणीमवस्थामात्मन्युन्नीय स यजमानो विश्वकर्मा भुवनानां भूतानामात्मनि होता भूतेषु चात्मानम् । तथाहि विज्ञायते 'हन्ताहं भूतेष्वात्मानं जुहवानि भूतानि चात्मनि' (शत० ब्रा० १३ । ७ । १ । १) इति । तथा च विदुषो दर्शनकृतो सर्वमेधसंपत्सर्वकर्मसु । विज्ञायते ह्यग्निहोत्रमभिकृत्य 'स यत्साय जुहोत्यग्निमेव तदनेन सर्वेणादित्ये जुहोत्यग्निमेवेदं सर्वमनु सर्वं तद्यथानेन सर्वं तेनेष्ट्वा लोकं जयेत तावद् ह प्रातराहुत्या लोकं जयते यस्यैते आहुती नै बद्ध यावज्जीवमाप्नोति स हि बहूनि च नै बद्धान्येनयोरेवैतयोरन्यतरामनु' इति । नै बद्धमित्यनन्तमुच्यते । तदेवं यस्मिन् कस्मि-

विदुषः सर्वकर्मसु सर्वमेधः सम्यग्ज्ञानेन संपद्यते

---

१ ग. च. ज. सभागो. २ ट. ड. °भौतिकमेवार्थ आख्यापयते°. ३ ग. च. ज. दिष्णुदि°. ४ क. ख. व. म. ट. ठ. ड. °कारो हि नि°. ५ ठ. ड. 'ह' नास्ति. ६ क. ख. ध. म. ट ठ. ड. °कृत°. ७ ग. च. ज. नवर्द्धया आव नाप्नोति°. ८ ग. च. ज. °च निबद्धा°. ९ ग. च. ज. न विबद्ध°.

श्विन्मेवे[1] कर्मणि अग्निहोत्रादौ सर्वैः सर्वेण सर्वस्मिन् सर्वस्यै सर्वार्थं हुत्वात्मानं सर्वमेवं[2] भवतीति समासार्थः । स एष सर्वस्य विदुषः सर्वः सर्वहुद्यज्ञः सर्वभावाय संपद्यते दर्शनतः । यो हीतरः सर्वमेधो निरूढसंज्ञोऽहीनस्तद्यथा त्रीण्याश्वमेधिकानि पञ्च पौरुषमेधिकानि वाजपेयाप्तोर्यामौ चेति

निरूढसंज्ञात्सर्वमेधादयं सर्वमेधो भिन्नः

तत्र 'स आत्मानमप्यन्ततो जुहवांचकार' इत्ये-[3] तदात्महोमस्य[4] विधानान्नोपपद्यते । दर्शनतस्तु सर्वमुपपद्यते । 'सर्वभूतानि विशेषान् सामान्यात्मनि जुहाव पश्यन् सामान्यं चात्मानं विशेषे जुहाव पश्यन् सर्वकर्मसु स्वयमेव' । अयमात्मयाजीत्युच्यते । यमधिकृत्य पृष्टं 'तदाहुः । आत्मयाजी श्रेया ३ न् देवयाजी ३ (शत० ब्रा० ११ । २ । २ । १३) इति' । यथा चैतदेवमधिदैवविद आत्मवित् श्रेयान्यमधिकृत्य 'विश्वकर्मा विमना आद्विहायाः' इतीयमृगात्मगत्या निरुक्ता तस्यैवार्थस्येतिहासोक्तस्याभिवादिनी आभिमुख्येन वादिनी 'एषा ऋग्भवति' । यथा । 'य इमा

विदुषः सर्वमेधसंपदस्यामप्यृचि दृश्यते

विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः ।
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ
आ विवेश' (ऋ० सं० १० । ८१ । १) ॥

अनेकेषां समानप्रयोगदर्शनाधिकारवतां यो नाम कश्चित् । किमिति । एवं न्यसीदत् एवं कर्मण्यङ्गभावमुपजगाम । कथम् । ऋषित्वेन होता द्रव्यगुणकर्मदेवतायाथार्थ्यद्रष्टृत्वेन । विश्वा भुवनानि जुह्वत् सर्वभूतान्यमुना सर्वमेधसंपद्दर्शनप्रक्रमेण जुह्वत् हावयन्[9] । तस्य किमिति । स आशिषा । आशीः प्रार्थना कामः प्रयोगदर्शनहेतुः सर्वमिदमहं स्यामिति । येन प्रेर्यमाणः सर्वकर्मसु सर्वमेधं सर्वप्राप्तये प्रायुङ्क्त द्रविणमिच्छमानः प्रयोगजनितापूर्वफलं सर्वभावमिच्छन् । तत्किं नापि[10] । नेत्युच्यते । आप । कथमिति ।

१ ग. ज. श्वि सर्वे क°; च. °श्वित्सेवे. २ क. ख. घ. झ. ट. ठ. ड. 'मेवं भ°. ३ क. ख. घ. झ. ट. ठ. ड. °इति । स एतदा°. ४ क. ख. घ. च. झ. ट. ठ. ड. °मस्य वि°. ५ ग. ज. °द्यते । भूना°. ६ ग. यथा ३° प°. ७ क. ख. घ. ज. घ. झ. ट. जुह्वदिति । अने°; ग. जुह्वदिति । अने°. ८ ग. च. ज. °भाव्यमु°. ९ क. ख. घ. ट. ठ. ड. अहावयत्; ग. ज. हावयत्; झ. 'हावयन्' नास्ति. १० ग. च. ज. °त्किमाप.

प्रथमच्छत् । प्रथमोऽप्रजत्वात् । प्रजापतिभावेन मुख्यस्थे छादयिता यतः संपेदे तथा सन् अवरान् पश्चादुत्पन्नानस्मदादीन् विशेषान् आविवेश व्याप्तवान् व्याप । यस्यैवं प्रयोगफलयोर्वृत्तिः स नः पिता जनिता सोऽस्माकं पिता पाता रक्षिता चेत्येवं विजानीमः । अतस्ताद्गाव्यमश्नुवीमहीति ।

५

यथा चैतदेवं नान्यथेति तयेयम् 'उत्तरा ऋग्भूयसे' बहुतराय 'निर्वचनाय' ॥ २६ ॥

---

विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम्। मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु (ऋ० सं० १० । ८१ । ६ ) ॥ विश्वकर्मन्हविषा वर्धयमानः स्वयं यजस्व पृथिवीं च दिवं च मुह्यन्त्वन्ये अभितो जनाः सपत्ना इहास्माकं मघवा सूरिरस्तु प्रज्ञाता तार्क्ष्यस्त्वष्ट्रा व्याख्यातस्तीर्णेऽन्तरिक्षे क्षियति तूर्णमर्थं रक्षत्यश्नोतेर्वा तस्यैषा भवति ॥ २७ ॥

१०

१५

---

विश्वकर्मन्हविषा वावृधान इति । प्रयोगावस्थां फलावस्थां च विश्वकर्मणः प्रतीत्योच्यते । हे विश्वकर्मन् प्रयोगावस्थित त्वमुच्यसे । अनेन हविषा सर्वमेधदर्शनसंपदादियुक्तेन त्वं वर्धमानो विश्वकर्मत्वमापद्यमानस्तत्फलविपरिणामकाले स्वयं यजस्व स्वयं संगच्छस्व व्याप्नुहि पृथिवीं च दिवं च । सर्वव्यापी भव । अपि च । तथैवं तस्मिन् दर्शनकृते महिम्नि मुह्यन्त्वन्ये अभितो जनासः । मोहमुपगच्छन्तु अभितः सर्वतस्ते जना ये त्वदुपासनापराङ्मुखास्तव सपत्नाः समानं पतित्वमिच्छन्ति ।

विश्वकर्मदेवता अन्या ऋक्

२०

---

१ ग. च. ज. मुख्यच्छाद॰. २ क. ख. घ. झ. ट. ञ. ड. पाता जनयिता र॰. ३ क. ख. २ (२६); ठ. ड. ॰नाय । इति निरुक्तभाष्ये चतुर्थाध्याये षड्विंशतिः (ठ. २६) खण्डः; इतरेष्वङ्को नास्ति. ४ छ. त. द्. जनासः. ५ क. ख. छ. त. द्. तीर्णं अन्त॰. ६ क. ख. ३ (२७); त. द्. १. ७ ठ. ड. हविषेति । प्रयो॰. ८ ग. इति । प्र॰. ९ क. ख. च. झ. ट. तत्रेतस्मिन्. १० ग. च. ज. ॰पासाप॰. ११ क. ख. घ. झ. ट. ठ. ड. ॰खाः सन्तस्तव.

२३

अथ पुनः इह त्वद्दर्शनोपासनाकर्मणि वर्तमानानां भवे मघवा सर्वधनेशानः । सूरिः मेधावी सर्वत्राप्रतिहतप्रज्ञानः प्रज्ञाता विशेषतोऽस्माकमस्त्वित्येतदाशास्महे ।

त्वष्टा विश्वकर्मेत्यधिभूतप्रधानाः पुराणविदः । तथापि कलाकौशलादिसर्वज्ञानहेतुको नामप्रतिलम्भ इत्यविप्रतिपिद्धम् । एवं सर्वासु देवतासु । ५

' तार्क्ष्यः ' ( १७ ) इति वक्तव्यम् । स पुनरेष ' त्वष्ट्रा व्याख्यात :' ।

तार्क्ष्यः कस्मात् — तद्यथा । ' तूर्णमश्नुते ' इत्येवमादि ( निरु० ८ । १३ ) । अथवा ' तीर्णे अन्तरिक्षे ' सर्वतो गते ' क्षियति ' निवसति । अथवा । ' तूर्णम् ' उदकाख्यं 'रक्षत्यश्नुते वा ' । अर्थविकल्पेन तूर्णशब्दात्पूर्वपदं रक्षतेरश्नोतेर्वोत्तरपदम् । ' तस्यैषा भवति ' ॥ २७ ॥ १०

---

त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् । अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ( ऋ० सं० १० । १७८ । १ ) ॥ तं भृशमन्नवन्तं जूतिर्गतिः प्रीतिर्वा देवजूतं देवगतं देवप्रीतं वा सहस्वन्तं तारयितारं रथानामरिष्टनेमिं पृतनाजितमाशुं स्वस्तये तार्क्ष्यमिह ह्वयेमेति कमन्यं मध्यमादेवमवक्ष्यत्तस्यैषापरा भवति ॥ २८ ॥ १५

---

२०

त्यमू षु वाजिनमिति । अरिष्टनेमेरार्षम् । विष्णुवति निष्केवल्ये

तार्क्ष्यः — शस्यते । ' सद्यश्चित् ' ( ऋ० सं० १० । १७८ । ३ ) इति च । यस्तार्क्ष्यो वाजी वेजनवान् भयदाता वा परेभ्यो बलवान् वा तं देवजूतं देवैर्गतं परत्वेन ज्ञातं वा परोऽयमस्माकमिति । देवप्रीतं देवैर्वा समानप्रीतम् । सहावानं सहो

---

१ ग. घ. ञ. भवा. २ क. ख. ३ ( २७ ); ठ. ड. °ति । इति निरुक्तभाष्ये उत्तरषट्के चतुर्थाध्याये ( ठ. ४ ध्याये ) २७ खण्डः; ग. घ. वर्जमितरेष्वङ्को नास्ति. ३ छ. द. °वक्षत्त°. ४ क. ख. ४ ( २८ ); त. द. ४. ५ ग. °र्मिणं । अ°. ६ क. ख. घ. झ. ट. ठ. ड. ' वा ' नास्ति.

बलं तेन तद्वन्तम् । एतदेव मध्यमलिङ्गम् । तरुतारं तारयितारं रथानां रंहितृणां भूतानाम् । गतिमतां गमयितारमित्यर्थो बलहेतुकत्वाद्गमनस्य । समेवमादिगुणयुक्तम् अरिष्टनेमिं केनचिदप्यप्रतिहतवज्रप्रहरणम् । नेमिरिति वज्रनाम । पृतनानां जेतारम् । आशुं शीघ्रं स्वस्तये आत्मनः
५ स्वस्त्ययनाय सुष्ठु वयमेतमिन्द्रकर्मण्याह्वयामहे ।

'तस्यैषा परा भवति'। सा पुनः किमर्थम् । बलकृतिरुपप्रदर्शिता । वर्षकर्मोपप्रदर्श्यतेऽनया । सत्यामपि हि बलकृतौ पक्षिराजे गरुत्मति सन्देहोऽसावपि बलवांश्च तार्क्ष्यनामा च । वर्षकर्म त्वसमानं तेनास्य । अतश्चोक्तमेतदेव विचारास्पदमपेक्ष्य 'कमन्यं मध्यमादेवमवक्ष्यत्' इति ॥२८॥[1][2]

१०

---

**सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान । सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्याम् ( ऋ० सं० १० । १७८ । ३ ) ॥ सद्योऽपि यः शवसा बलेन तनोत्यपः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि सहस्रसानिनी**
१५ **शतसानिन्यस्य सा गतिर्न स्मैनां वारयन्ति प्रयुवतीमिव शरमयीमिषुं मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो[3] वा मन्य-[4] न्त्यस्मादिषवस्तस्यैषा भवति ॥ २९ ॥**[5]

---

सद्यश्चिद्यः[6] शवसा पञ्च कृष्टीरिति[7] । सद्योऽपि यस्तार्क्ष्यो बलेन तनोत्यपो

२० तार्क्ष्य एव — वर्षभावेन । 'सद्यः' शब्दो लक्षणार्थोऽद्य ईव:[8] परश्वः परुत्परारि चेति । 'चित्' इत्यप्यर्थे ।

न कदाचिदप्यन्यः सर्वदा तार्क्ष्य एवेति । कं प्रत्यपस्तनोति । पञ्च कृष्टीः

---

१ ग. च. ज. °वक्षत्. २ क. ख. ४ ( २८ ); ठ. इति । इति निरुक्तभाष्ये ३ ध्याये २८ खण्डः; ड. °इति । इति निरुक्तटीकायामुत्तरषट्के चतुर्थाध्याये २८ खण्डः; ग. घ वर्जमितरेष्वङ्को नास्ति. ३ छ. त. द. 'वधकर्मणो' नास्ति. ४ क. ख. मन्युं त्वस्मा°; छ. त. द. ठ. ड. मन्युंत्वस्मा°. ५ क. ख. ५ ( २१ ); त. द ५. ६ ठ. ड. °श्चिद्य इति. ७ ग. 'रिति । स°. ८ ग. ज. श्वः वयः श्वः पत्परा°; घ. श्वः वयपरुत्प°. ९ क. ख. घ. ठ. ड. किं.

पञ्च मनुष्यजातानि प्रति ब्राह्मणप्रमुखान्निषादपञ्चमान्वर्णान्प्रति । तदनुग्रहपूर्वकत्वात्सर्वलोकानुग्रहस्य कृष्टिग्रहणेन तद्विवक्षा । कथम् । सूर्य इव ज्योतिषा । यथा सूर्यो ज्योतिः प्रकाशं लोकानुग्रहाय तनोति तथा तार्क्ष्यो अपस्तनोति । यथा हविषा विधेमेति नम्यते तत्र कस्मै देवायेति संप्रदानश्रुतेः संप्रदानवैधुर्याय ( निरु० १० । २३ ) एवमिहाप्युपमानोपमेयकारकसंबन्धवैधुर्याय ज्योतिरिति नम्यते । कस्मात्पुनरयमपस्तनोतीति । इतो यस्मात् सहस्रसाः शतसा अस्य रंहिः । बहूंश्च बहुतरांश्च प्रकारान्मेघविदारणाय भजते अस्य तार्क्ष्यस्य रंहिः गतिः । अपि च । एवमसह्यास्य गतिः न स्मा वरन्ते नैव एताम् अस्य वारयन्ति न प्रतिबद्धुं शक्नुवन्ति केचनातिवेगवत्त्वात् । कथम् । युवतिं न शर्याम् । अतिबलवता धनुष्मता मुक्तां शरमयीमिषुम् । अन्येन वान्येन वाकाशप्रदेशेन प्रतिमिश्रयन्तीमात्मानम् । य एवमादिगुणयुक्तस्तार्क्ष्यः स इदं नामास्माकं करोत्विति ।

'मन्युः ( १८ ) मन्यतेः ' क्रोधार्थस्य दीप्त्यर्थस्य वा । उभयमप्युपपद्यते बलवत्त्वान्मध्यमस्य । तस्यैषा भवति ॥ २९ ॥

मन्युः कस्मात्

---

त्वया॑ मन्यो स॒रथ॑मारु॒जन्तो॒ हर्ष॑माणासो धृषि॒ता म॑रुत्वः । ति॒ग्मेष॑व॒ आयु॑धा सं॒शिशा॑ना अ॒भि प्र य॑न्तु॒ नरो॑ अ॒ग्निरू॑पाः ( ऋ० सं० १० । ८४ । १ ) ॥ त्वया मन्यो सरथमारुह्य रुजन्तो हर्षमाणासोऽधृषिता मरुत्वस्तिग्मेषव आयुधानि संशिशयमाना अभिप्रयन्तु नरो अग्निरूपा अग्निकर्माणः संनद्धाः कवचिन इति वा दधिक्रा व्याख्यातस्तस्यैषा भवति ॥ ३० ॥

---

१ ख. °भिखदेपञ्च°. २ ग. ज. घान्ये. ३ ग. ज. वाका°. ४ घ. झ. ट. ठ. ड. प्रमिश्र°. ५ क. ख. ५ (२९), ठ. ड. °वति । इति निरुक्तटीकायामुत्तरषट्के चतुर्थाध्याये ( ठ. ४ ध्याये ) २९ खण्डः; ग घ. वर्जमितरेष्वङ्को नास्ति. ६ क. ख. ६ (३०), म. ड. ६.

त्वया मन्यो सरथमारुजन्त इति[2]। तपसः पुत्रो मन्युर्नाम तस्यार्षम्।

मन्युः

श्येनाजिरादिषु निष्कैवल्ये विनियोगः ( आश्व० श्रौ० ९।८)। हे भगवन् मन्यो त्वया सरथमेकमेव त्वया सह रथं समारुह्य रुजन्तः परान् रुजन्तः[3] अभिभवन्तः हर्षमाणासः तवाश्रयादविकला[4] हृष्यन्तः अधृषिताः अनाधर्षिताः परैः अपि च हे मरुत्वः तिग्मेषव एते अस्मद्योधा आयुधा आयुधानि संशिश्यमानाः तीक्ष्णानामिषूणामायुधानां च योऽर्थस्तमनुतिष्ठन्तः। भिन्दन्त इषुभिश्छिन्दन्त आयुधैः। अमुना प्रकारेणैते नरा अस्मन्मनुष्या योधा अग्निरूपा अग्निकर्माणः अग्नय इवैते सेनामभिभवन्तो यन्त्विति।

'दधिक्राः' ( १९ ) इति वक्तव्यम्। स 'व्याख्यातः' ( निरु० २।२७)। 'दधत्क्रामति' इत्येवमादि सर्वं मध्यमे योज्यम्।

'तस्यैषा भवति[5]॥ ३० ॥

---

आ दधिक्राः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान। सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि ( ऋ० सं० ४।३८।१०) ॥ आतनोति दधिक्राः शवसा बलेनापः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि सहस्रसाः शतसा वाजी वेजनवाानर्वेरणवान्संपृणक्तु नो मधुनोदकेन वचनानीमानीनि मधु धमतेर्विपरीतस्य सविता सर्वस्य प्रसविता तस्यैषा[6] भवति ॥ ३१ ॥

---

आ दधिक्राः[7] शवसा पञ्च कृष्टीरिति[8]। वामदेवस्यार्षम्। आतनोति

दधिक्राः

सर्वतस्तनोति। कोऽसाविति। दधिक्राः। केन। शवसा बलेन। किमातनोति। अपः। क। पञ्च कृष्टीः पञ्च मनुष्यजातानि प्रति। कथम्। सूर्य इव ज्योतिषा।

१ ठ. ड. मन्यो इति. २ ग. इति। त°. ३ ग. ज. भजन्तः हर्ष°; च. ठ. ड. रुजन्तः हर्ष°. ४ ग. च. ज. तवाश्रशया°. ५ क. ख. ६ (३०)· ठ. °वति। इति निरुक्तटीकायामुत्तरषट्के ४ ध्याये ३० खण्डः; ड. °वति। इति निरुक्तभाष्ये ३० खण्डः. ६ क ख. ७ ( ३१ ); तं द्र. १०. ७ ठ. ड. दधिक्रा इति ८ ग. °रिति। वा°.

सहस्रसाः शतसाः बहूनां बहुतराणां चोदकानां संभक्ता वाजी वेजनवान् अर्वा ईरणवान् उदकेरणक्रियायोगात् । य एवमादिगुणयुक्तो दधिक्राः सोऽस्माकम् इमानि स्तुतिवाक्यानि स्तुतिलक्षणानि वचांसि सम्पृणक्तु मध्वा मधुना उदकेन । 'मधु धमतेः' आद्यन्तविपरीतस्य' । उदकं स्तुत्यनन्तरमेव ददात्वित्यर्थः । बलकृतिर्वर्षकर्म चोभयमप्यस्ति तस्मान्मध्यमः ।

'सविता (२०) व्याख्यातः' 'इममेवाग्निं सवितारमाह' (निरु० ७ । ३१) इत्यत्र । स पुनरिह वर्षकर्मयोगान्मध्यमः । तस्यैषा भवति ॥ ३१ ॥

---

सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत् ।
अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्ते बद्धं सविता समुद्रम् ( ऋ० स० १० । १४९ । १ ) ॥ सविता यन्त्रैः पृथिवीमरमयदनारम्भणेऽन्तरिक्षे सविता द्यामदृंहदश्वमिवाधुक्षद्धुनिमन्तरिक्षे मेघं बद्धमतूर्ते बद्धमतूर्ण इति वा त्वरमाण इति वा सविता समुदितारमिति कमन्यं मध्यमादेवमवक्ष्यदादित्योऽपि सवितोच्यते तथा च हैरण्यस्तूपे स्तुतोऽर्चन्हिरण्यस्तूप ऋषिरिदं सूक्तं प्रोवाच तदभिवादिन्येषर्ग्भवति ॥ ३२ ॥

---

सविता यन्त्रैः पृथिवीमरम्णादिति । अर्चन्नाम हैरण्यस्तूप ऋषिरेतराः यास्य । सविता मध्यमः सर्वबलेशानः । किमिति । सविता यन्त्रैः पृथिवीमरम्णात् । यावत्किंचिद्यन्त्र्यते तत्सर्वं बलेनैव । यन्त्रिता चेयं पृथिवी निश्चला । न चान्य इन्द्राद्बलवान्यन्त्रयितास्ति । तस्मादिन्द्र एवेमां संयच्छन् स्थिरामकरोत् । 'रम्णातिः संयमनकर्मा' ( निरु० १० । ९ ) इत्युक्तम् । अथवा । वर्षेणोपकारेण पृथिवीलोकनिवासिनो धारयति । तदस्याः संयमनम् । किमेतावदेव । नेत्युच्यते । अस्कम्भने सविता द्यामदृंहत् । एवमप्येतस्मिन्

---

१ क. ख. ७ (३१); ठ. ड °वति । इति निरुक्तभाष्ये चतुर्थाध्या० ( ट.४ ध्याये ) ३१ खण्डः; च. ज. वर्जमितरेष्वङ्को नास्ति. २ छ. त. °नालम्भनेऽन्त°, द. °नालम्बनेऽन्त°. ३ छ. त. द. °बक्षद्धु°. ४ क. ख. ८ (३२), त. द. ८. ५ ठ. ड. यन्त्रैरिति. ६ ग. °र्चन्निति । अ°. ७ ग च. ज. आङ्गिरस ऋ°. ८ ग. च. ज. °यच्छते. ९ व. ट. कर्ष°, ठ ड. कर्षणेन°.

अस्कम्भने अनारम्भणे अमूर्तेऽन्तरिक्षे यत्र पर्णमपि नालमवस्थानाय तत्रै-वमप्यतिगुर्वी सौवर्णी द्यां सविता एव अदृहत स्थिरामकरोत आभूतसम्प्लवात्[1]। को हि नाम मध्यमात्सवितुरन्य एतदतिदुष्करं[2] कुर्यात् । अपि च । अश्वमिवाधुक्षत् । यथाश्वबन्धोऽश्व धूनुयादुपावृत्तमनायासेन रजस्तस्माद-पनेष्यन्नेवं धुनि समुद्रम् उदकवन्धितार[3] मेघम् अधुक्षत् सविता अधुनोत्[4] अकम्पयत् उदकप्रक्षरणाय । क बद्धम् । अतूर्ते एतस्मिन्नन्तरिक्षे अहिं-सिते । अत्वरमाणे वा सर्वगतत्वात् । आकाशे गमनायायोग्ये वा । यात्मात्मनैव विष्टभ्य निश्चेष्ट वद्धमिवाधुक्षय: सविता सोऽस्माकमिदं नाम करोत्विति । समुदिता समुद्रा मेघ: ।

१० 'कमन्यं मध्यमादेवमवक्ष्यत्' मेघमधूनोदिति । कुत: संशय: ।

अथ सविता मध्यम एव

अन्योऽपि यस्मान्मध्यमात्सवितोच्यते । यत आह । 'आदित्योऽपि सवितोच्यते' इति । यथा चैतदेव 'तथा' एतस्मिन्नेव 'हैरण्यस्तूपे' सूक्ते[5] स्तव: हैरण्यस्तूपमिदं सूक्तमिति । कुत एतत् । अत आह ।

इदं हैरण्यस्तूपे सूक्ते स्पष्टम्

१५ 'अर्चन् हिरण्यस्तूप ऋषिरिदं सूक्तं प्रोवाच' इति । अर्चन्नस्मा हिरण्यस्तूपस्तद्रूप तदन्वनो[6] वा । स यथैतत्सूक्त प्रोवाच 'तदभिवादिन्येषर्भव-ति[7]' अस्मिन्नेव सूक्ते[8] ॥ ३२ ॥

---

२० हिरण्यस्तूपः सवितर्यथा त्वाङ्गिरसो जुह्वे वाजे अस्मिन्[9] ।
एवा त्वार्चन्नवसे वन्दमानः सोमस्येवांशुं प्रति जागराहम्
( ऋ० सं० १० । १४९ । ५) ॥ हिरण्यस्तूपो हिरण्मयः स्तूपो हिरण्मयः स्तूपोऽस्येति वा स्तूपः स्त्यायतेः संघातः सवितर्यथा त्वाङ्गिरसो जुह्वे वाजेऽन्नेऽस्मिन्नेवं त्वार्चन्नवनाय वन्दमानः[10]
२५ सोमस्येवांशुं प्रतिजागर्म्यहं त्वष्टा व्याख्यातस्तस्यैषा भवति॥२३॥

---

1 क. ख. ग. च. ज. ठ. ड. °प्लवान् २ ग. च. ज. °दुःकरं. ३ च. °दक तार. ४ क. ख. घ. झ. ट. ठ. ड. अधूनो°; च. अधुनाद्°. ५ ग. घ. ज. °वक्षन्मे . ६ ग. ज. स्तन.. ७ ग. ज °न्येष ऋग्भ°, च. °न्येषा ऋग्भ°. ८ क. ख. ८ ( ३२ ), ङ. ६. °सूक्ते । इति निरुक्तभाष्ये ४ ध्याये ३२ खण्डः; ग. घ. ग्रन्थनिर्देशो नास्ति. ९ क. ख. छ. त. द. वाजे अन्ने अस्मि°. १० क. ख. ९ ( ३३ ), ङ. ७.

हिरण्यस्तूपः सवितर्यथा त्वेति[2] । हे सवितः यथा अन्यकालीनो हिरण्यस्तूपः त्वामाजुहाव कर्मण्याहूतवान् एवम् अहमप्येतस्मिन्कल्पे हिरण्यस्तूपनामापन्नः अर्चन्नामा अवनाय वाजे अस्मिन् अन्ने सस्कुने हविषि त्वामाहूय वन्दमानः स्तुवन् सोमस्येवांशु सोममिव क्रीत्वा आद्दतः प्रति जागर्मिअनन्यमनास्त्वामायागादुपास इति । 'स्त्यै संघाते' (धा० १ । ९३५) तस्य स्तूप इति ।

सविताऽत्र मध्यमः

'त्वष्टा (२१) व्याख्यातः' (निरु० ८ । १३) । तस्यैषा भवति ॥ ३३[4] ॥



---



**देवस्त्वष्टा सविता विश्वरूपः पुपोष प्रजाः पुरुधा जजान । इमा च विश्वा भुवनान्यस्य महद्देवानामसुरत्वमेकम् (ऋ० सं० २ । ५५ । १९) ॥ देवस्त्वष्टा सविता सर्वरूपः पोषति प्रजा रसानुप्रदानेन बहुधा चेमा[5] जनयतीमानि च सर्वाणि भूतान्युदकान्यस्य महच्चास्मै देवानाममुरत्वमेकं[6] प्रज्ञावत्त्वं वानवत्त्व वापि वासुरिति प्रज्ञानामास्यत्यनर्थानस्ताश्चास्यामर्था[7] असुरत्वमादिलुतं वातो वातीति सतस्तस्यैषा भवति ॥ ३४[8] ॥**



---

देवस्त्वष्टेति[9] । वैश्वामित्रस्य प्रजापतेरार्षम् । वैश्वदेवे विनियोगः ।

त्वष्टा

त्वष्टा देवो मध्यमः सविता सर्वस्य भूतग्रामस्य प्रसविता उत्पादयितोदकसंप्रदानद्वारेण । किमुत्पादयितैव । नेत्युच्यते । पुपोष प्रजाः पुष्णाति रसानुत्पाद्य[10] । न केवलं



---

१ ठ. ड. °स्तूप इति. २ ग. त्वेति[3] । हे. ३ क. ख. घ. झ. ठ. ड. °न्यकालीनो; ट. °न्यकालीनो° कल्पे. ४ क. ख ९ (३३), ठ. ड. °वति । इति निरुक्तभाष्ये ४ ध्याये ३३ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ५ छ. त. द. चेमां. ६ छ. °मेकत्वं प्र°; त. द. °मे कत्वं प्र°. ७ छ. त. °मनर्था. ८ क. ख. १० (३४), त. द. १०. ९ ग. °ष्टेति[10] । वै°. १० क. ख. घ. झ. ट. ठ. ड. °ति चाप्यावुन्माद्य.

पुष्णाति । किं तर्हि । पुरुधा जजानेति । बहुधा चैनौ जनयति वर्धयति । केन पुनरसौ जनयति पुष्णाति वर्धयति च । यत आह । इमा च विश्वौ भुवनान्यस्य । इमानि विश्वानि भुवनानि उदकानि अस्य यतः स्वतायां वर्तन्ते तस्माज्जनयति पुष्णाति वर्धयति च । अनश्च सर्वमिदं शक्तः

५ कर्तुं यतो महद्देवानामसुरत्वमेकम् । महदसुरत्वम् । असुरिति प्रज्ञानाम । तया तद्वत्त्वम् । तया महत्या प्रज्ञया उदकेन साधनेन सर्वमिदं जनयति पुष्णाति वर्धयति च । अप्रज्ञो हि साधनसंपत्तावपि किं कुर्यात् । अथवा । 'अन्नवत्त्वम्' । असुः प्राणस्तेन तद्वत्त्वम् । एवमपि सति प्राणेनैव

असुरत्वमित्यस्यार्थाः

१० शक्यत एतत्सर्वं कर्तुम् । अप्राणो हि किं कुर्यात् । 'अन्नवत्त्वम्' इति केचित् । तेषामन्नहेतुनोदकेन तद्वत्त्वम् । तथापि योज्यम् ।

'असुरिति प्रज्ञानाम' । तत्कस्मात् । 'अस्यति अनर्थान्' । प्रज्ञैव हि प्रज्ञावतोऽस्यति क्षिपत्यनर्थान्नाशयति । 'अस्ताश्चास्यामर्थाः' । न हि तदस्ति यच्छक्यं सर्वं प्रज्ञावता प्रज्ञाया नास्ति । एतावांस्तु विशेषोऽभि-

१५ व्यक्तमनभिव्यक्तमिति । अथवा । यदेतदसुरत्वं वसुमतो भावो वसुरत्वम् एतत् । रो मत्वर्थे । वकारलोपश्च । वसुना उदकेन तद्वानसौ त्वष्टा ।

'वातः' ( २२ ) कस्मात् । 'वातीति सतः' । 'वा गतिगन्धनयोः' ( धा० २ । ४० ) इत्यस्य । सत इति धातुकारकावधारणम् । वायुशब्दो हि

वातः कस्मात्

२० त्रयाणां धातूनां विकल्पेन ( निरु० १० । १ ) । अयं तु वातेरेवेति विशेषः । 'तस्यैषा भवति' ३४ ॥

---

**वात आ वातु भेषजं शंभु मयोभु नो हृदे । प्र ण आयूंषि तारिषत् ( ऋ० सं० १० । १८६ । १ ) ॥ वात आवातु भेष-**

---

१ ग. च. ज. चना, ठ. ड. नमा. २ ग. च. ज. 'च' नास्ति. ३ घ. ट. ठ. ड. विश्वा० न्यस्य. ४ च. विश्वा विश्वानि. ५ घ. ट. ठ. ड. 'देवाना० मेकम्. ६ ग. च. ज. °मनर्थाः. ७ ज. व्यक्तमनभिव्यक्तमिति°. ८ ग. 'प्रज्ञावता' नास्ति. ९ क. ख. १० ( ३४ ), ठ. ड. °वति । इति नैरुक्तभाष्ये चतुर्थाध्याये

२५ ( ४ ध्याये ) ३४ खण्डः, ग. च. वर्गमितरेष्वङ्को नास्ति.

**ज्यानि शंभु मयोभु च नो हृदयाय प्रवर्धयं च न आयुरग्निर्व्याख्यातस्तस्यैषा भवति ॥ ३५ ॥**

---

वात आवातु भेषजमिति। उलस्य वातायनस्यार्षम्। वातः अस्मानाभिमुख्येन भेषजं यद्धत्पथ्यमस्माकं तत्तद्गृहीत्वा आवातु। तच्चास्माकं शंभु अस्तु। शमिति सुखनाम। तद्भावकमस्तु तदात्वे। आयतौ च परिणामे मयोभु अस्तु। मय इति सुखनाम। हृदयाय सुखमस्तु। स्तूयमानः प्रत्यक्षीभूत इव मनसि। यतः प्रत्यक्षमुच्यते। प्र ण आयूंषि तारिषत्। हे भगवन् वायो प्रवर्धय त्वमस्माकमायूंषि सपुत्रपौत्रादिवर्गाणां भैषज्यं च त्वमस्माकं नित्यमावहेत्येतदाशास्महे।

वातः

'अग्निः (२३) व्याख्यातः (निरु० ७। १४)। 'तस्यैषा भवति'॥ ३५॥

---

**प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे। मरुद्भिरग्न आ गहि (ऋ० सं० १। १९। १)॥ तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे सोऽग्ने मरुद्भिः सहागच्छेति कमन्यं मध्यमादेवमवक्ष्यत्तस्यैषापरा भवति ॥ ३६ ॥**

---

प्रति त्यम्। मेधातिथिः ऋग्द्वये। त्यं तम् अङ्गवैकल्यरहितम् अध्वरं प्रति हे भगवन्नग्ने त्वमस्माभिः गोपीथाय सोमपानाय प्रहूयसे आहूयसे। स त्वमेतज्ज्ञात्वा मरुद्भिः सह आगहि आगच्छैतस्मिन्नस्मत्कर्मणि सोमं पातुमित्येतदाशास्महे।

अग्निः

१ क. ख. ङ. थ. ध. ठ. ड. प्रवर्धयतु. २ क. ख. ११ (३५), त. द. ११. ३ ग. °मिति³¹। उ°. ४ क. ख. ध. झ. ट. ठ. ड. °तदात्वे च आयतौ परि°. ५ ग. ज. हृदयसुस्तूय°; च. हृदयसुख°. ६ ग. च. ज. °च्यते. ७ ग. च. ज. °मावाहीत्ये°. ८ क. ख. ११ (३५); ठ. °वति। इति निरुक्तभाष्ये उत्तरखण्डे चतुर्थाध्याये ३५ खण्डः; ड. °वति। इति निरुक्तभाष्ये ३५ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ९ छ. त. द. °वक्षत्त°. १० क. ख. १२ (३६); त. द. १२. ११ ग. °त्यं°। मे°; ठ. ड. त्यमिति. १२ ग. च. ज. तमध्वरं प्र°. १३ ग. च. ज. 'प्रहूयसे' नास्ति. १४ ग. च. ज 'स त्व' नास्ति.

गोपीथाय मरुद्भिः सहेति मध्यमं लिङ्गम्[1] । 'तस्यैषापरा भवति' । सा पुनः किमर्थम् । गोपीथायेत्यव्यक्तं सोमपानम् । व्यक्तसोमपानालिङ्गोत्तरा । तद्यथा[2] ॥ ३६ ॥

---

५ अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भिरग्न आ गहि ( ऋ० सं० १ । १९ । ९ ) ॥ अभिसृजामि त्वा पूर्वपीतये पूर्वपानाय सोम्यं मधु सोममयं सोऽग्ने मरुद्भिः सहागच्छेति[3] ॥ ३७ ॥

दशमाध्यायस्य तृतीयः पादः[4] ॥

---

१० अभि त्वा पूर्वपीतय इति । हे भगवन्नग्ने[5] पूर्वकाले प्रवृत्ताय पानाय त्वाम् अभिसृजामि[6] वदे । किमिति । इदं[7] सोम्यं मधु सोममयं तन्मधु । स त्वमागच्छैतस्मिन्क[8]र्मण्येतत्पातुमित्येतदाशास्महे[9] ॥ ३७ ॥[10]

अग्निरेव

---

१५ पञ्चदशस्य तृतीयः पादः ।

---

चतुर्थः पादः ।

वेनो वेनतेः कान्तिकर्मणस्तस्यैषा भवति[11] ॥ ३८ ॥

२०

---

१ ग. च. ज. मध्यमलिङ्ग. २ क. ख. १२ (३६), छ. °तद्यथा । इति निरुक्तभाष्ये चतु० ३६ खण्डः, ग. च. वर्जनितरेष्वङ्को नास्ति. ३ क. ख. १३ (३७); त. द. १३. ४ छ. थ. ध. 'दश ०० पादः' नास्ति; त. दशमे तृती०; छ. द तृतीयः. ५ ग. इति^४१ । हे°. ६ ग. च. ज. 'अग्न त्वामभिसृ°. ७ ग. च. ज. °वदे इदं°. ८ ग. ज. स त्वमस्मादाग°; च. तत्त्वमस्मदाग°. ९ ग. च. ज. °र्मणि तत्पा°. १० क. ख. १३ (३७), ठ. ड. °स्महे इति पञ्चदशस्य ( ठ. पञ्चमाध्यायस्य ) तृतीयः पादः । इति निरुक्तभाष्ये ३७ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ११ क. ख. १ (३८), त. द. १.

'वेनः' (२४) इति वक्तव्यम् । स एव 'वेनतेः कान्तिकर्मणः' ।

वेनः कस्मात् — सर्वलोककान्तो हि मध्यमः सर्वस्योपकारित्वात् । 'तस्यैषा भवति' ॥ ३८ ॥

---

अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने । इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति (ऋ० सं० १० । १२३ । १ ) ॥ अयं वेनश्चोदयत्पृश्निगर्भाः प्राष्टवर्णगर्भा आप इति वा ज्योतिर्जरायुर्ज्योतिरस्य जरायुस्थानीयं भवति जरायुर्जरया गर्भस्य जरया यूयत इति वेममपां च संगमने सूर्यस्य च शिशुमिव विप्रा मतिभी रिहन्ति लिहन्ति स्तुवन्ति वर्धयन्ति पूजयन्तीति वा शिशुः शंसनीयो भवति शिशीतेर्वा स्याद्दानकर्मणश्चिरलब्धो गर्भो भवत्यसुनीतिरसून्नयति तस्यैषा भवति ॥ ३९ ॥ ५ १०

---

अयं वेन इति । भार्गवस्य वेनस्यार्षम् । शुक्रोऽनया गृह्यते ( मैत्रा० सं० १ । ३ । १० ) । अन्तर्भावितप्रज्ञानस्तास्मिन्मनसि प्रत्यक्षीभूतमभिनयेन दर्शयन्निव कस्मैचिद्ब्रवीति अयं वेन इति । १५

वेनः — किं करोति । चोदयति पृश्निगर्भाः । पृश्निरादित्यः प्राष्टवर्णः । प्रकृष्टो ह्यनेन वर्णः अष्टः आप्तः । यास्तस्य गर्भत्वमुपागता रश्म्यन्तर्गताः परिपक्वा आपो मासाष्टकेन संभृतास्ता वेनश्चोदयति प्रावृषि वर्षभावेन प्रेरयति । किंलक्षणः । ज्योतिर्जरायुः । ज्योतिरस्य विद्युदाख्यं कर्मात्मलक्षणं जरायुस्थानीयं प्रज्ञावतस्तदधिष्ठातुर्मध्यमस्य गर्भस्येव परिवेष्टनं भवति । क्वावस्थितश्चोदयति । रजसो विमाने । रज उदकं तद्यत्र २०

---

१ क. ख. १ ( ३८ ), ठ. °वति । इति निरुक्तभाष्ये उत्तरषट्के चतुर्थाध्याये १८ खण्डः; ड. °वति । इति निरुक्तभाष्ये ३८ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. २ त. थ. ध. °रायुः स्था°. ३ ङ. थ. द. °रायु जर°. ४ छ. त. द. रिहन्ति रिहन्ति लि°. ५ क. ख. छ. त. द. गर्भ इत्यसु°. ६ च. ख. २ ( ३९ ); त. द. २. ७ क. ख. घ. झ. ट. ठ. ह. आप्त ; ट. प्रीप्तः° आ. ८ क. ख. ग. झ. ट. ठ. ह. °मुप°. ९ च. °रायुः स्था°.

निर्मीयते[1] तत्रावस्थितः । अन्तरिक्षलोक इत्यर्थः । योऽयमेवमादिगुण-युक्तो वेनस्तमिमं वेनम् अपां च संगमे सूर्यस्य च संगमे समागमन-स्थाने यत्र सूर्यस्य रश्मिभिरापः सङ्गच्छन्ते तत्र वर्तमानं मध्यस्थाने[2] विप्रा मेधाविनः स्तोतारो मतिभिः स्तुतिभिः प्रज्ञापूर्विकाभिः शिशुमिव रिहन्ति । यथा[3] शिशुर्नित्यं स्तूयत एवं स्तूयते । यदेतत् 'रिहन्ति' इति एतत् 'लिहन्ति' लिहेर्धातोः । वर्धयन्ति पूजयन्ति वेत्यर्थवचनम्[4] ।

**जरायु कस्मात्** 'जरायुः' कस्मात् । तद्धि 'जरया गर्भस्य' भवति । यथा यथा गर्भो भवति तथा तथा तदुत्पद्यते । 'जरया युयत इति वा'[5] । यच्चैतज्जरेति प्रसिद्धं प्रसूताया गोः स्त्रिया वा पश्चात्पतति सा जरेत्युच्यते तया यद्युते मिश्र्यते तज्जरायुरित्युच्यते ।

**शिशुः कस्मात्** 'शिशुः' कस्मात् । स हि 'शंसनीयो भवति' । प्रयोजने वाप्रयोजने वोच्चन्ति यत्किंचनप्रलापेषु । 'शिशीतेर्वा स्यात्' धातोर्दानार्थस्य । दीयते हि स पुरुषेण स्त्रियै धारणाय । भवति च वादः स्त्रीणामभिनवगृहीत-गर्भाणाम् 'अचिरलब्धो[6] मे गर्भः' इति ।

**असुनीतिः कस्मात्** 'असुनीतिः' (२७) इत्येतद्देवतापदम् । स पुनरयमिन्द्रो मध्यमः प्राणः । स पुनर्यदेतस्माच्छरीरादुत्क्रामत्यथेतरान्प्राणान्[7] 'असून्' अन्यत्र 'नयति' । विज्ञायते हि 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' ( बृहदा० उप० ४ । ४ । २ ) इति । 'तस्यैषा भवति' ॥ २९[8] ॥

---

**असुनीते मनो[9] अस्मासु धारय जीवातवे सु प्र तिरा न आयुः । रारन्धि नः सूर्यस्य संदृशि घृतेन त्वं तन्वं वर्धयस्व** ( ऋ० सं० १० । ५९ । ५ )॥ असुनीते मनोऽस्मासु धारय चिरं जीवनाय प्रवर्धय च न आयू रन्धय च नः सूर्यस्य संदर्शनाय रध्यतिर्वशग-

---

१ क. ख. ग. ज. निर्मीय°, ठ. ड. °तयन्तर्निमीय°. २ ठ. ड. मध्यम-स्थाने. ३ क. ख. घ. झ. ट. ठ. ड. यथा हि शि°. ४ क. ख. घ. झ. ट. ठ. ड. °त्यर्थः । ज°. ५ ग. च. ज. 'वा' नास्ति. ६ क. ख. घ. झ. ट. ठ. ड. °चिरलब्धो. ७ ङ. प्राणान् नेनेनास्मच्छरीर एव धारय मा त्वमुत्क्रमीः । त्वदन्यत्र नयति°. ८ क. ख. २ (३२), ठ. ड. °वति । इति निरुक्तभाष्ये ३१ खण्डः; ग. घ. वर्गमितरेषु नास्ति. ९ छ. त. द. मनो अस्मा°.

मनेऽपि दृश्यते । मा रधाम द्विषते सोम राजन्नित्यपि निगमो भवति । घृतेन त्वमात्मानं तन्वं वर्धयस्वेत्याख्यातस्तस्यैषा भवति ॥ ४० ॥

---

असुनीते[2] मनो अस्मासु धारयेति[3] । श्रुतबन्धोरार्षम् । हे असुनीते

**असुनीतिः** प्राण मनः अस्मासु धारय । मनःप्रभृतीनेतान् प्राणानात्मनोऽवस्थानेनास्मच्छरीर एव धारय । मा त्वमुत्क्रमीस्त्वदनुक्रमेणावस्थास्यन्त इति । जीवातवे चिरम् अस्माकं जीवनाय मनो धारय । सु प्रतिरा न आयुः । अमुना प्रकारेण सुष्ठु प्रतिर प्रकर्षेण वर्धयास्माकमायुः । किंच । रारन्धि नः संसाधय । अस्माकं तथानुग्रहाण यथा सूर्यस्य संदृशि संदर्शनायालं स्याम । दिव्यं नः चक्षुरुत्पादय येन सम्यक्सूर्यं पश्येम । सर्वं चैतदन्नप्राचुर्ये सति भवति । यतो ब्रूमः । घृतेन त्वं तन्वं वर्धयस्व । घृतेन उदकेन त्वमात्मानं यथाकालं वर्धयस्व । स्वयमुदकं ददाति सर्वमिदं भवति । गहनिर्भीकत्वादसुनीतेर्घृतमित्युदकनामेत्यत्रोपपद्यते ।

'रध्यतिर्वशगमनेऽपि दृश्यते' । तद्यथा । 'मा रधाम द्विषते' इत्यत्र ।

**रध्यतिर्वशगमनेऽस्यामृचि** 'देवीः षळुर्वीरुरु नः कृणोत विश्वे देवास इह वीरयध्वम् । मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन्' (ऋ० सं० १० । १२८ । ५) इति ॥ वैश्वदेवी । विहव्यस्यार्षम् । वैहवं सूक्तम् । तत्रैषा दर्शपूर्णमासादिषु हविषामभिमर्शने विनियुज्यते । देवीः षट् द्यौश्च पृथिवी च अहश्च रात्रिश्च आपश्चौषधयश्चेति । ता उच्यध्वे । हे देव्यः उर्व्यः षट् सर्वमिदम् ऊर्णुवत्यो यूयं मुष्यध्वे । उरु बहु यद्यद्वयं युष्माभिर्बहु क्रियमाणमिच्छामस्तत्तत् उरु बहु कुरुध्वे । हे विश्वे देवा यूयमपि इह एतस्मिन् कर्मण्यस्माकमङ्गभावमुपगताः सन्तो वीरयध्वं वीरान् पुत्रान्

---

१ क. ख ३ (४०) ; ग. इ ३. २ ठ ड. °नीते इति. २ ग. °र्येति । श्रु°. ४ ग. घ. ज. मुत्क्रमी°. ५ ग घ. भ. °स्य दृशि. ६ ग. घ. ज. घ. भ. चक्षुर्वी°. ७ भ. °णेतीति । देव्य°, घ. ज. घ झ ट. °णोतीति° । वेश्व°. ८ ग. घ ज. बहु उरु.

इच्छत दातुम् । अपि च । जातपुत्राः सन्तः मा हास्महि प्रजया । मास्मान् प्रजा कदाचिदपि हासीत् । कष्टं हि पुत्रमरणम् । मा तनूभिर्वयं स्वाभिर्हास्महि । मास्माकमायुषश्छेदो भूद्युष्मदनुध्यानात् । अपि च । मा रधाम द्विषते सोम राजन् । हे भगवन् सोम राजन् विशेषतः त्वमुच्यसे । सर्वस्या अस्या आशिषस्त्वदनुध्यानान्मा रधाम । मा वशं गच्छेम द्विषते । द्विषन्त एवास्माकमर्थसंप्रदानादिना वश्यतामुपयान्तु यतोऽनिष्टं हि द्विषतो विधेयत्वमिति । सामर्थ्यादिह 'रध्यतिर्वशगमने'।

'ऋतः' (२६) इत्येतत्पदम् । तदेतत् 'व्याख्यात' निर्वचनतः 'ऋतमित्युदकनाम प्रत्यृतं[1] भवति' (नि० २ । २५) इति । इह निघेयो[2] मध्यमः । 'तस्यैषा भवति' ॥ ४० ॥

---

ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति । ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः (ऋ० सं० ४ । २३ । ८) ॥ ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य प्रज्ञा[3] वर्जनीयानि[4] हन्ति ऋतस्य श्लोको बधिरस्यापि कर्णावातृणत्ति बधिरो बद्धश्रोत्रः कर्णौ बोधयन्दीप्यमानश्चायोरयनस्य मनुष्यस्य ज्योतिषो वोदकस्य वेन्दुरिन्धेरुनत्तेर्वा[5] तस्यैषा भवति[6] ॥ ४१ ॥

---

ऋतस्य हि शुरुध इति[7] । वामदेवस्यार्षम् । संपातसूक्ते निष्केवल्ये पृष्ठ्याभिप्लवयोः शस्यते (आश्व० श्रौ० ९ । ७) । ऋतस्य मध्यमस्य ।

ऋतः — किमिति । शुरुधः आपः सन्ति विद्यन्ते । किंलक्षणाः । पूर्वीः अनेककालसंभृताः । यतश्च सो इन्द्रोऽद्रिरतस्तस्य ऋतस्य उदकसंप्रदानद्वारेणानाकाल नाशयन्ती धीतिः

---

१ ग. च. ज. ठ ढ. प्रत्यृच २ क. ख. ३ (४०), ठ. ढ °वति । इति निरुक्तभाष्ये ४० खण्डः; ग च. वर्जमितोऽग्रन्थो नास्ति ३ त. °प्रज्ञा वर्ध (र्ज) नी°; द. °प्रज्ञावर्जनी°. ४ क. ख. छ. त. द हन्त्यृत°. ५ छ. त द. °श्चायनस्य. ६ क. ख. ४ (४१), त द. ४. ७ ग. इति । दा°.

प्रज्ञा सर्वलोकस्य वृजिनानि वर्जनीयानि अयशांसि हन्ति नाशयति । अनाकाले हि क्षुत्परिगृहीतानामयशस्करेषु जिह्वादिषु प्रवृत्तिर्भवति । ददतश्चोदकं सर्वलोकवृजिनापघातायं तस्य ऋतस्य । एवमतिमहान् श्लोकः शब्दः स्तनयित्नुलक्षणो भवति यो बधिरस्यापि बद्धश्रोत्रस्य विधंत्रापि निसर्गतोऽपिहितश्रोत्रस्य आयोः अयनस्य मनुष्यस्य बोधयत्स्मृत इति । कर्णौ अतिदुर्भेदौ आतृणत्ति आभिनत्ति । शुचमानो दीप्यमानो ज्योतिषश्चोदकस्य च श्लोकः । एवं सततो ह्यसावृत इति ।

इन्दुः कस्मात्

'इन्दुः' (२७) इत्येतत्पदम् । स कस्मात् । 'इन्धेः' दीप्त्यर्थस्य । 'उनत्तेर्वा' क्लेदनार्थस्य । उभयमपीन्दावुपपद्यते चन्द्रमसि । 'तस्यैषा भवति' ॥ ४१ ॥

---

प्र तद्वोचेयं भव्यायेन्दवे हव्यो न य इषवान्मन्म रेजति रक्षोहा मन्म रेजति । स्वयं सो अस्मदा निदो वधैरजेत दुर्मतिम् । अव स्रवेदघशंसोऽवतरमव क्षुद्रमिव स्रवेत् ( ऋ० सं० १ । १२९. ६ ) ॥ प्रब्रवीमि तद्भव्यायेन्दवे हवनार्ह इव य इषवानन्नवान्कामवान्वा मननानि च नो रेजयति रक्षोहा च बलेन रेजयति स्वयं सोऽस्मदभिनिन्दितारम् । वधैरजेत दुर्मतिम् । अवस्रवेदघशंसस्ततश्चावतरं क्षुद्रमिवावस्रवेदभ्यासे भूयांसमर्थं मन्यन्ते यथाहो दर्शनीयाहो दर्शनीयेति तत्परुच्छेपस्य शीलं परुच्छेप ऋषिः पर्ववच्छेपः परुषि परुषि शेपोऽस्येति वेतीमानि सप्तत्रिंशतिर्देवतानामधेयान्यनुक्रान्तानि सूक्तभाञ्जि हविर्भाञ्जि तेषामेतान्यहविर्भाञ्जि वेनोऽसुनीतिर्ऋत इन्दुः प्रजापतिः प्रजानां पाता वा पालयिता वा तस्यैषा भवति ॥ ४२ ॥

---

१ क. ख. च. °पघाता°. २ क. ख. ४ ( ४१ ); ठ. °वति । इति नैरुक्तभाष्ये ४१ खण्डः; ड. °वति । इति निरुक्तभाष्ये ४१ खण्डः, ग. घ. वर्जमितरेष्वङ्को नास्ति. ३ क. ख. छ. त द सो अस्म°. ४ छ. त. द. 'पर्ववच्छेपः' नास्ति. ५ क. ॥ ५ ( ४२ ), त. द. ५.

प्र तद्वोचेयमिति। अतिच्छन्दाः। पारुच्छेपी। षष्ठेऽहनि मरुत्वतीये शस्यते (आश्व० श्रौ० ८।१)। यदिदं तस्येन्दोस्तत्तदहं प्रब्रवीमि अस्मै इन्दवे प्रीत्यर्थम्।

इन्दुः

किंलक्षणः[1] यः इन्दुः। भव्यो[2] भवनार्ह[3] आत्मकामानाम्[4] अभिप्रेतानां पात्रभूत

५ इत्यर्थः। भव्यो भावनार्ह इव। यो हविषा भावनमर्हति न च भाव्यतेऽहवि-र्भावत्वात्। हव्यो न हवनार्ह इव यो यज्ञेन च पुनरर्ह्यतेऽहविर्भावत्वादेव। इषवान् नित्यम् अन्नवान्। कामवान् वा। कामिनां स्तोतॄणां[5] नित्यमभिमत-फल[6]संप्रदानोन्मुखः। तत्संप्रदानोन्मुखतया च नित्यमस्माकं मन्म रेजति मन-नानि प्रज्ञानानि रेजयति आकम्पयति। आकम्पितहृदयान् उपकारितया

१० नित्यमस्मान् करोति कथं नामैतं नित्यं स्तुयामेति। अपि च। रक्षोहा रक्षांसि बलेन घ्नन् सुतरामस्माकं मन्म रेजति। किंच। स्वयं सो अस्म-दानिदः। स्वयमाददानः भूत्वा स इन्दुः अस्मदानिदः अस्मदभिनिन्दितारं वज्रप्रहारैरतिदुःसहैः अजैत जयेत् क्षिपेद्वा। दुर्मतिं पापमतिं योऽस्मान् प्रति। तेन वातिबलवतेन्दुना हन्यमानोऽस्मद् अघशंसः अस्माकं यः

१५ पापानां शंसिता कथयिता खलानामपि स्तुतिकर्ता जनपदे असौ अवस्रवेत्[7]। अधोगतिः स्यात्। अवतरमक्ष[8] क्षुद्रमिव स्रवेत्। यावच्च प्रथमं स्रुतं। अधोगतस्ततोऽवतरं ततोऽप्यवतरमिति तावत्स्रवेत्क्षुद्रमिव[9] द्रव्यं किंचिद्यावदामूलतो नष्टमित्येतदाशास्महे। बलकृतेर्मध्यम इति।

इह्याभ्यासबाहुल्यं दृष्ट्वा 'रेजति रेजति स्रवेत् स्रवेत्' इति प्रतिसमा-

२० धत्ते 'अभ्यासे भूयांसमर्थं मन्यन्ते' इति। शब्दाभ्यासे यत्रान्यो विशेषो नास्ति तत्रैवं[10] विशेषमाचार्या मन्त्रार्थस-तत्त्वविदो मन्यन्ते 'यदुतार्थभूयस्त्वम्' इति।

अभ्यासे भूयानर्थः

न ह्यकस्मात्स एव शब्दः पुनरभ्यस्यते। लोकेऽपि चैतद् दृष्टं शब्दाभ्यासेऽ-

१ ग. °मिति^६। अ°. २ ग. °क्षणाय इन्दु°. ३ ग. च. ज. भव्याय भव-

२५ नार्ह°. ४ क. ख. घ. झ. ट. °राहय°. ५ ग. च. ज. स्तोत्रीणां. ६ ग. च. ज. °फलकाममंप्र, ट. °फले° काम ७ ग. च. ज. ठ ड. श्रुतः. ८ क. ख. घ. झ. ट. ठ. ड. °प्यवतर°. ९ क. ख. घ. झ. ट. ठ ड. तत्रैवं. १० ग. च. न. इति। स्रव (ग. ज. स्रवे, च. वे) दिति प्रथमं स्रुतस्ततोऽवरं (च. °स्रुतं) ततोऽप्यवातरमिति तावत्स्रवेत्क्षुद्रमिव द्रव्यं किंचिद्यावदामूलतो नष्टमि-

३० त्येतम् (ग. ज. °मिति ण.)। न्॰.

र्भूयस्त्वमिति ' यथाहो[1] दर्शनीयाहो दर्शनीयेति ' । गुणातिशये हि[2] स्त्रियाः शब्दाभ्यासः । तस्मान्मन्त्रेष्वपि तद्वदेवेति न्याय्यम् । ' तत् '[3]

अभ्यासः परुच्छेपस्य शीलम्

च पुनरेतत् ' परुच्छेपस्य ' मन्त्रदृशः ' शीलम् ' । स हि नित्यमभ्यस्तैः शब्दैः स्तौति । स त्वदृशोऽपि स्वभाव उपेक्ष्य इत्युपप्रदर्शनायेदमुक्तम् । अथ पुनः ' परुच्छेपः ' कस्मात् । ' परुच्छेप ऋषिः ' ।

परुच्छेपः कस्मात्

तस्य हि ' पर्ववत् ' महान् ' शेपः ' प्रजननम् । ' परुषि परुषि शेपोऽस्येति वा ' । सर्वाङ्गसन्धिषु शेपैः[4] कृतो योगसुखात्किल । तस्य शेपाऽस्येति वा ।

' इतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रान्तानि ' । इतिकरणः प्रकारवचनः । एवमेतानि यथासमाम्नातानि सप्तविंशतिः सप्ताधिका विंशतिः । देवतानामधेयानि ' वायुः ' इत्यत आरभ्य यावत् ' इन्दुः ' इति । तेषां पुनः किमर्थमनुकीर्तनम् । विशेषविवक्षया । कः पुनरसाविति । तेषां कानिचित् ' सूक्तभाञ्जि हविर्भाञ्जि ' च । सूक्तं च हविश्चोभयं भजन्ते । कानिचित्सूक्तमेव न हविः । ' तेषामेतान्यहविर्भाञ्जि ' । तद्यथा । ' वेनोऽसुनीतिर्ऋत इन्दुः ' इति । एभ्यो यान्यन्यानि त्रयोविंशतिस्तान्युभयं भजन्ते सूक्तं हविश्च ।

एषु सप्तविंशतिदेवतानामधेयेषु कानिचित्सूक्तभाञ्जि हविर्भाञ्जि च

कानिचित्सूक्तभाञ्जि एव

देवतास्वभावोपप्रदर्शनार्थमिदमुक्तम् । घृतेन उदकेन स्वमात्मानं वर्धयस्वेत्येवमाद्यभिधानार्थं विशेषप्रविभागप्रशंसये[5]ऽहविर्भाक्त्वादुदकमत्र घृतमित्येवमादि तद्वदेतेषु मन्त्रेषु विशेष उपेक्ष्य[6] इति ।

प्रजापतिः कस्मात्

' प्रजापतिः ' ( २८ ) प्रजानां पाता वा पालयिता वा । ' तस्यैषा भवति ' ॥ ४२ ॥[7]

---

**प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।**
**यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्**

---

१ ग. च. ज. ' अहो ' नास्ति. २ ग. च. ज. ' हि ' नास्ति. ३ च. यत्. ४ क. ख. घ. झ. ट. शेपकृतो योगः सु°; च. °सन्धिशेपः कृतो योगसुखा°. ५ ग. ज. °इमाय हवि°; च. °प्रज्ञाप्तयहवि°. ६ ग. च. ज. पेक्ष्यत इ°. ७ क. ख. ५ ( ४२ ), ट. ड. °वाति । इति निरुक्तभाष्ये ४२ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति.

( ऋ० सं० १०। १२१ । १० ) ॥ प्रजापते न हि त्वदेतान्यन्यः सर्वाणि[1] जातानि तानि परिबभूव यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणामित्याशीराहिर्व्याख्यातस्तस्यैषा भवति[2] ॥ ४२ ॥

---

प्रजापते न त्वदेतानीति[3] । प्राजापत्यस्य हिरण्यगर्भस्यार्षम् । पितृयज्ञ उपस्थाने विनियुक्ता ( मैत्रा० सं० १ । १० । १९ ) । राजसूये च विनियोगो होमे ( मैत्रा० सं० २ । ६ । १२ ) । हे प्रजापते न त्वदन्यो न कश्चिदपि एतानि सर्वदेवतारूपाणि परिबभूव परिगृह्य भवति । त्वमेवैतानि सर्वाणि सर्वतः परिगृह्य सर्वतो भवति[4] । यत एव त्वा[5] वयं सर्वतो विभूतं पश्यामः[6] सर्वस्येशानमतो ब्रूमः । यत्कामास्ते येन येन युक्ताः सन्तो वयं तुभ्यं जुहुमस्तन्नो अस्तु । स कामोऽस्माकं त्वदनुध्यानात्समृध्यताम्[7] । नित्यमेव च वयं स्याम पतयो रयीणाम् । रयीणां धनानां पतयः । 'इति' इयमपरा 'आशीः' द्वितीया । यत्कामा इति प्रथमा । अथवा । 'आशीः' इत्याचार्यो दर्शयति । इयं मन्त्रगतैव यत्रापि न स्यात्तत्राप्यध्याहार्येति स्तुत्याशिषोर्नित्यसंबन्धादिति ।

प्रजापतिः

'अहिः ( २९ ) व्याख्यातो' निर्वचनतः 'अहिरयनात्' ( निरु० २ । १७ ) इति । इह त्वभिधेयो मध्यमः । 'तस्यैषा भवति'[8] ॥ ४३ ॥

---

अब्जामुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु षीदन्[9]

( ऋ० सं० ७ । ३४ । १६ ) ॥ अप्सुजेमुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसूदकेषु[10] सीदन्बुध्नमन्तरिक्षं बद्धा[11] अस्मिन्धृता आप[12]

---

१ छ त द. जातानि परि तानि बभूव. २ क. ख. ६ ( ४२ ), त. द. ६. ३ ग. °नीति । प्रजा°; घ. ज. °नीति । प्रजा°; ठ. ड. °तान्यन्य इति. ४ ग. घ. ज. भवति. ५ ग. घ. ज. त्वा. ६ ग. घ. ज. 'भूतं वयं प°. ७ ग. घ. ज. °त्समुद्यता. ८ क. ख. ६ ( ४३ ), ठ. ड. °षति । इति निरुक्तभाष्ये चतुर्थाध्याये ४३ खण्डः; ग. घ. वर्जमितरेष्वङ्क नास्ति. ९ छ. त. द. अप्सुजामु°. १० छ. त. द °जः सु षद्°. ११ छ त. द बुद्धा १२ छ. त. द. आप इव°.

**इति वेदमपीतरद् बुध्नमेतस्मादेव बद्धा अस्मिन्धृताः प्राणा इति योऽहिः स बुध्न्यो बुध्नमन्तरिक्षं तन्निवासात्तस्यैषा भवति ॥४४॥**

---

अब्जामुक्थैरिति[3] । वसिष्ठस्यार्षम् । दशरात्रस्य चतुर्थेऽहनि वैश्वदेवे विनियोगः ( आश्व० श्रौ० ८।८ )। 5

अहिः हे स्तोतस्त्वमेनम् अहिम् अप्सुजम् उदकजन्मानम् उक्थैर्गृणीषि स्तौषि बुध्ने नदीनां नदनानाम् अपां बन्धने एतस्मिन्नन्तरिक्षे वर्तमानं रजःसु सीदन् उदकेषु लब्धव्येषु निमित्तभूतेषु एतस्मिन्कर्मण्यङ्गभावमुपगच्छन् ।

' बुध्नमन्तरिक्षं बद्धा अस्मिन् धृता आपः इति । इदमपीतरत् ' 10

बुध्नं कस्मात् शरीरं बुध्नमित्युच्यते । ' बद्धा अस्मिन् धृताः प्राणाः इति । योऽहिः स बुध्न्यः ' । एतावांस्तु विशेषः । ' बुध्नमन्तरिक्षं तन्निवासात् ' अहिर्बुध्न्यः (३०) । ' तस्यैषा भवति ॥ ४४ ॥

अहिर्बुध्न्यः कस्मात्

---

15

**मा नोऽहिर्बुध्न्यो रिषे धान्मा यज्ञो अस्य स्रिधदृतायोः ( ऋ० सं० ७ । ३४ । १७ ) ॥ मा च नोऽहिर्बुध्न्यो रेषणाय धान्मास्य यज्ञोस्खा च स्रिधद्यज्ञकामस्य सुपर्णो व्याख्यातस्तस्यैषा भवति ॥ ४५ ॥**

---

20

मा नोऽहिर्बुध्न्य इति[8] । पूर्वया समानं सर्वमिति । मा अस्मान्

अहिर्बुध्न्यः अहिर्बुध्न्यो रिषे धात् रेषणाय हिंसनाय कस्मैचित्[10] । किंच । मा यज्ञो अस्य स्रिधदृतायोः[11] ।

मा यज्ञोऽस्य ऋतायोः अस्य यजमानस्य यज्ञकामस्य मा स्रिधत्[12] मा मुखवत्[13] । नित्यमविनाशेन वर्ततामिति । 25

---

१ छ. त. द. बुद्धा. २ क. ख. ७ (४४). त. द. ७. ३ ग. 'रिति । वास°. ४ ग. घ. ज. वासिष्ठस्य पराशरस्यार्षं. ५ ग. ज. °तरद्बुध्नगरी°. ६ क ख. ७ ( ४४ ); ठ. ह. °वति । इति निरुक्तभाष्ये ४४ खण्डः; ग. च. वर्जमिन्नेष्वङ्को नास्ति. ७ क. ख ८ ( ४५ ), त. द. ८. ८ ग इति । पू°. ९ क. ख. घ. झ. ट ठ. धात् मा रे°. १० क. ख. घ झ ट 'चित् धात् । कि°. ११ क. ख. ग. घ. ज. स्रुध°. १२ ग. घ. ज. स्रुध°. १३ ग. घ. ज. मा विस्र (स्र?) वतु. 

‘ सुपर्णो (३१) व्याख्यातः ’ ‘ सुपतनः ’ ( निरु० ३ । १२ ॥[1] ४ । ३ ) इति । इह त्वभिधेयो मध्यमः । ‘ तस्यैषा भवति ’ ॥ ४५ ॥

---

**एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे । तं पाकेन मनसापश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरम् (ऋ० सं० १० । ११४ । ४) ॥ एकः सुपर्णः स समुद्रमाविशति स इमानि सर्वाणि भूतान्यभिविपश्यति तं पाकेन मनसापश्यमन्तित इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता तं माता रेळ्हि वागेषा माध्यमिका स उ मातरं रेळ्हि पुरूरवा बहुधा रोरूयते तस्यैषा भवति[3] ॥ ४६ ॥**

---

एकः सुपर्ण[4] इति । सर्वेभिरस्य[5] वेयमार्षम् । एक एवाद्वितीयः । यस्य

**सुपर्णः**

पतने गमने प्रतिमान[6]न्यद्वितीय नास्ति । स सुपर्णः सुपतनो वायुः समुद्रम् अन्तरिक्षं नित्यम् आविशति । न कदाचिदप्यनाविष्टस्तत्र । स च पुनः सर्वभूतानुप्रवेशी तदाविश्य विश्वं भुवनं सर्वाणि इमानि भूतानि अभिविपश्यति यथा द्रष्टव्यानि । तमेव वर्तमानमहं पाकेन मनसा विपक्वप्रज्ञानेन सर्वगतमपि सन्तम् अन्तिकम् इव अपश्यम् । ऋषिर्दृष्टदेवतामनस्कः कस्मैचिदाचक्षाणो[7] ब्रवीति । तं माता रेळ्हि[8] स उ रेळ्हि मातरम् । माता माध्यमिका[9] वाक् तम् उपर्जीवति । परस्पराश्रयत्वात्तयोर्वृत्तेरन्योन्यमवदिति ।

‘ पुरूरवाः ’ (३२) मध्यमः । विज्ञायते हि ‘ प्राण एव हि

**पुरूरवाः कस्मात्**

पुरूरवाः ’ इति । स ‘ बहुधा रोरूयते ’ स्तनयति[10] । तेन पुरूरवाः । ‘ तस्यैषा भवति ’ ॥ ४६ ॥

---

१ क ख. ८ (४५), ठ. ड भवति । इति निरुक्तभाष्ये चतुर्थाध्याये ४५ खण्डः, ग. घ. वर्जमितरेष्वङ्को नास्ति. २ क ख. ठ ड रेळ्हि, छ त. द रेळ्हि. ३ क. ख. ९ (४६), ठ. ड ९. ४ ग. इति । स°. ५ ग. च. ज. °स्येर्गमिदं-षस्य वे°. ६ क ख. ष. झ ट. प्रतिमायानम°. ७ ग. च. ज. °चक्ष्याणो. ८ ग. च. ज. ष झ रेळ्हि. ९ ग घ ञ. वाक् नास्ति. १० क ख. ५ (४६), ठ. ड. °भवति । इति निरुक्तभाष्ये चतुर्थाध्याये ४६ खण्डः, ग घ. वर्जमितरेष्वङ्को नास्ति.

**समस्मिञ्जायमान आसत ग्ना उतेमवर्धन्नद्यः[1] स्वगूर्ताः ।**
**महे यत्त्वा पुरूरवो रणायावर्धयन्दस्युहत्याय देवाः ( ऋ० सं० १० । ९५ । । ७ ) ॥ समासतास्मिञ्जायमाने ग्ना गमनादापो देवपत्न्यो वापि चैनमवर्धयन्नद्यः स्वगूर्ताः स्वयंगामिन्यो महते च यत्त्वा पुरूरवो रणाय रमणीयाय संग्रामायावर्धयन्दस्युहत्याय च देवा देवाः ॥ ४७ ॥**        ५

---

समस्मिञ्जायमान इति । उर्वश्या आर्षम् । एतस्मिन् पुरूरवसि

पुरूरवाः

जायमाने वर्षकर्मण्यात्मानं प्रतिलभमाने प्रावृट्काले । ' कर्मजन्मान ' ( निरु० ७ । ५ )        १०

इति ह्युक्तम् । समासत ग्नाः । आपः समागम्य तं परिवार्य तद्विधेयतामुपगम्य आसते तिष्ठन्ति । उत अपि च यथार्थैवमृतुवशाद्वर्षासु नद आरोहति तथातथैनं ता नद्यः नदना आपः स्वगूर्ताः स्वयंगामिन्यो भूत्वा सुतरां तद्विधेयतामुपगच्छन्त्यस्तदधिकारोद्भवेन ईम् एनम् वर्धयन्ति । अतः परं स्तूयमानः प्रत्यक्षीभूतः । प्रत्यक्षकृत उत्तरोऽर्धर्चः ।        १५
हे पुरूरवः यत्त्वा महे रणाय यस्मात्त्वां महते रणाय मेघेन सह रमणीयाय संग्रामाय अवर्धयन् वर्धयन्ति माध्यमिका देवाः दस्युहत्याय च मेघवधाय चेति तस्मात्त्वामवश्यं ग्नाः समागम्यासते वर्धयन्ति च नद्यः । सर्वथापि महानुभावस्त्वं सर्वमेव त्वय्युपपद्यत इति ।

' देवपत्न्यो वा ' इति पृथक्त्वेन दर्शयति । तथापि योज्यते । समागम्यैतस्मिन्नैडे पुरूरवसि आसत ग्नाः सर्वा देवपत्न्यः । स हि स्त्रीणां स्वभावो यत्प्रजायमानां स्त्रियं परिवार्यासते । उतेमवर्धन् । अपि चैनमवर्धयन् । नदनास्ताः स्तुतिपरास्तस्य । स्वगूर्ताः स्वयंगामिन्यः अपरप्रणेया ईश्वराः । अपि च । सर्वमेतदुपपद्यते पुरूरवस्त्वयि यस्मात्तस्मान्महते रणाय        २०

---

१ छ. त. द 'स्वगूर्ताः' नास्ति २ क. ख. १० (४७); त. द १८. ३ ठ. ड. °स्मिन्निति. ४ ग. इति । उ°. ५ ग. ज. °ग्नाः समासतास्मिन् कुर्यमाणं य आपः°. ६ म. च. ज. °यथैतम्°. ७ क. ख. ब. म ट. ठ. ड ' च ' नास्ति. ८ ट. °मानां स्त्रि° नं पि. ९ क. ख. घ. म. ट. °ना ग्नाः स्तु° १० ग. ज. °रमाहयाः; च. °पहेयाः; ट. °रमणपाः° हे.        २१

रमणीयाय संग्रामाय असुरैः सह दस्युहत्याय शत्रुवधाय अवर्धयन् । स्तैर्महिमभिस्त्वं नोऽसुरान् जेष्यसीति पुरश्चक्रुर्देवा इति । द्विरभ्यासोऽध्यायपरिसमाप्तौ यस्मात्तल्लक्ष्यते समाप्तम् ॥ ४७ ॥

---

[4]आर्जवार्थायां निरुक्तवृत्तौ पञ्चदशोऽध्यायः समाप्तः ।

---

* अथातो मध्यस्थाना वायुर्वायाह्यास त्वं णासो नीचीनवारं तमू ष्विमा रुद्राय या ते दिद्युज्जरा बोधाद्दर्यो जातो वि ह्यक्षानश्नीं पिनद्धमश्मास्य मत्सं क्षेत्रस्य पतिः क्षेत्रस्य पतिना क्षेत्रस्य पतेऽमी अहा पुनरहियो अनि +ध्मपरा पर्वा संसमिद्युवस्तृष्टा मित्रो जनान् हिरण्यगर्भो ये ते मे रस्त्वो विश्वकर्मा सर्व×स्य विश्वकर्मा विमना विश्वकर्मन्हविषा त्यमू षु सत्रे स्वित्त्वयाम न्यो आ दधिक्राः सविता हिरण्यस्तूपो देवस्त्वष्टा वातं आ वातु प्रतित्यम भि त्वा वेनो वेन ते रयं वेनोऽसुनीत ऋतस्य हि प्रतद्वोचेयं प्रजापतेऽजामु क्ष्यैमानो हि रेकः सुपर्णः समस्मिन्नष्टचत्वारिंशत् = ॥

इति निरुक्त उत्तरषट्के चतुर्थोऽध्यायः ॥

---

१ क. ख. ग. झ. ट. °स्मालक्ष्य°, ठ. ड. 'माप्तौ । अस्मालक्ष्य°. २ ठ. ड. ' समाप्त ' नास्ति. ३ क. ख. १० ( ४७ ), ठ. ड. °लक्ष्यते । इति निरुक्तटीकायामुत्तरषट्के चतुर्थोऽध्याये ४७ खण्डः । समाप्तश्चतुर्थोऽध्यायः. ४ क. ख. ग. झ. ट. ठ. ड. इति श्री (ठ. ड. ' श्री ' नास्ति) जम्बूमार्गाश्रमवा (ठ. ड. निवा ) सिन आचार्यभगवद्दुर्गकृतावृज्वर्थाया निरुक्तवृत्तौ ( ठ ड. निरुक्तटीकया निघण्टाध्यायपञ्चकेन सह नैरुक्त) पञ्च°. * छ. त द. अथातो इत्यादिका खण्डशृङ्खला नास्ति. + क. ख. ग. °निध्मापo. × ट. ड. सर्वस्य कर्ता विश्व°. = ठ. ड. °शत् । इति बालबोधार्थवैदिकस ( ड. ११ ) प्रत्यायानुसारी खण्डानुक्रमणी समाप्ता, ' इति० ध्यायः ' नास्ति ५ छ. इति निरुक्ते दशमोऽध्याय , त. दशमोऽध्यायः समाप्त ; द. इति दशमोऽध्यायः, ग. इति नरुक्त दु. दु क. ख. ड. °ध्यायः समाप्त..

## प्रथमः पादः ।

ॐ[1] । श्येनो व्याख्यातस्तस्यैषा भवति ॥ १ ॥

श्येनो[2] ( निघ० ५ । ५ । १ ) व्याख्यातः 'श्येनः शंसनीयं गच्छति'[3] ( निरु० ४ । २४ ) इति । इह त्वभिधेयो मध्यमः । तस्यैषा भवति ॥ १ ॥

आदाय श्येनो अभरत्सोमं सहस्रं सवाँ अयुतं च साकम् । अत्रा पुरंधिरजहादरातीर्मदे सोमस्य मूरा अमूरः ( ऋ० सं० ४ । २६ । ७ ) ॥ आदाय श्येनोऽहरत्सोमं सहस्रं सवानयुतं च सह सहस्रं सहस्रसाव्यमभिप्रेत्य तत्रायुतं सोमभक्षास्तत्संबन्धेनायुतं दक्षिणा इति वा तत्र पुरंधिरजहादमित्रानदाना[4]नीति वा । मदे सोमस्य मूरा अमूर[5] इत्यैन्द्रे च सूक्ते सोमपानेन च स्तुतस्तस्मादिन्द्रं मन्यन्त ओषधिः सोमः सुनोतेर्यदेनमभिषुण्वन्ति बहुलमस्य नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन तस्य पावमानीषु निदर्शनायोदाहरिष्यामः ॥ २ ॥

आदाय श्येन इति[6] । वामदेवस्यार्षम् । श्येनाजिरादिषु मरुत्वतीये शस्यते ( आश्व० श्रौ० ९ । ७ ) । ऋत्विग्भिर्विधानतः प्रत्तं श्येनः इन्द्रः सोमम्

श्येनः आदाय अभरत् अपिबत् । क । सहस्रं सवान्
सहस्रं सुत्यानां यत्र कुर्वन्ति अयुतं च दक्षिणाः

प्राप्नुवन्ति न तु दीयन्ते सत्रत्वात् । पृष्ठ्यशमनाभिप्रायं वा दक्षिणादानं

---

१ ङ. ढ. हरिः ओम् । श्ये°; थ. 'ओ ३ म् । श्ये'; छ. नुं । श्ये°; ध. हरिः॥ ओम् ॥ श्ये°; त. द. 'ॐ' नास्ति. २ ग. ज. नुं । श्ये°; च. पुस्तके श्येन इत्यादि सोमस्य तृप्ताविदन्तं नास्ति ३ ठ. ड. इति निरुक्तोत्तरषट्कभाष्ये पञ्चमाध्याये प्रथमः खण्डः; क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति. ४ छ. त. द. °नानीति. ५ क. ख. छ. त. द. °रः । ऐन्द्रे. ६ ग. इति । वा°. ७ ग. घ. ज. ठ. ड. प्रत्तं, ट. प्रत्न श्ये° तं. ८ ग ज. °प्रायेण.

स्यात्सहस्रसाव्ये सत्रे तेषां तत्सबन्धात्। अत्रा पुरन्धिः अत्र अस्मिन् सहस्रसाव्ये सत्रे स श्येनः पुरन्धिः बहुनो धनस्य दाता मदे सोमस्य तृप्तौ सोमस्य प्राप्तायाम् अजहादरातीः असुरानमित्रान् पृथक् त्वपक्षेऽप्यजयत् प्राणैर्मूढान् अप्रतिपत्तिकान् कृत्वा विषादमुपनीय अमूढो निःसाध्वसः। त्रित्वपक्षे तु 'अदानानिति वा' इति। रातिर्दानार्थः। तत्प्रतिषेधेनारातिः। प्राक्सोमपानमदप्राप्तेः अदानानिति न दास्यामीत्येवंधियो मूढमतयः कार्पण्यसंयुक्ता ये आसन् तान् प्रति सोमस्य मदे प्राप्ते अमूढः अकृपणो भूत्वा अजहात् अत्यजत्। दाता संपेदे।

' सहस्रसाव्यमभिप्रेत्य तत्संबन्धेनायुतं दक्षिणा इति वा '। 'इति वा'-

सहस्रसाव्यसंबन्धेन वा अयुतं दक्षिणा

शब्देन किं विकल्प्यते। सहस्रसाव्यं वा सत्रं यत्पठन्ति याज्ञिकाः। तद्यथा। अतिरात्रयोर्मध्ये सहस्रमहानि शतकृत्वो दशरात्रस्यावृत्तिरग्नेः सहस्रसाव्यमिति (आश्व० श्रौ० १२।५)। तदहां सहस्रं दशभिश्चमसैर्गुणितं चमसपरिसंख्ययोपलक्ष्यमाणमयुतं सोमभक्षाणां संपद्यते। सोमभक्षा निष्क्रयश्रुतिश्च दक्षिणानामस्ति। ' या सदस्येभ्यो ददाति सोमपीथं तया निष्क्रीणीते ' ( मैत्रा० सं० ४।८।३ ) इति। न चासति प्रश्ने रूढित्यागो न्याय्य इति। असत्यपि दक्षिणादानसंबन्धे सहस्रसाव्यमेव सत्राणाम्।

अथवा अयुतशब्देन प्रासर्पका द्योत्यन्ते

प्रासर्पकाभिप्रायं वा अयुतम्। अथवा। सहस्रमिति

अथवा बह्वर्थे सहस्रायुतशब्दौ

बहुनाम। सहस्रं सत्वान्। अभिपत्वा बहवः प्रतिसवनमभिपत्वमभिप्रेत्य। यस्मिन् कस्मिंश्चिद्दक्षिणावति सोमे अयुतं च दक्षिणाः बहव इत्यर्थः। अस्ति हि प्राप्तिः। विशेषशब्दाः सामान्येषु भवन्तीति। तद्यथा। हिमेनोदकेनेति ( निरु० ६। ३६ )। अदक्षिणत्वात्सत्राणामेवं वेत्यभिप्रेत्य ' वा ' शब्दं चकार।

---

१ ग. च. ज. तृप्त°. २ ग. ज. °नानीति, च. °नानीति° .नि. ३ ग. ज. कार्मण्यमिसं, च °र्मण्यमिसं° कार्पण्य. ४ क. ख. घ. ट. ठ. ड °कृपणम्°. ५ ग. ज. °पीथं. ६ ग. ज. निःक्रीत, इति च. निःक्री°; घ. ट. निक्री°. ७ क. ख घ. ट. ठ. ड °पि रूढि त्य°, च. °पि रूढि° रूढित्याग्.

'सोमः' (२) इति वक्तव्यम्। स पुनरेव 'ओषधिः' सोमः।

सोमः कस्मात्

हैमवतो मौजवतो वा। स कस्मात्। 'सुनोतेः'। 'षुञ् अभिषवे' (धा० ५। १) इत्यस्य। अभिषूयते ह्यसौ यज्ञे। 'यदेनमभिषुण्वन्ति' इति कर्मकारकं दर्शयति। स कथं मध्यमस्थानः[1]। भवति हि तमधिकृत्य 'यत्ते सोम दिवि ज्योतिः'[2] ५

स कथं मध्यमः

(मैत्रा० सं० १। ३। ३) इति। 'सोमो वै वाजस्तस्य चन्द्रमास्तृतीयमयं यः पवते स तृतीयमिति स तनूकरणे तं सर्वं स्वैतनूभूतमाप्याययति'[3] (मैत्रा० सं० ४। ५। ४) इति। तस्मादस्यैवैष सर्वा तनूर्यच्चन्द्रमा रसात्मकत्वात्। वायुर्वा सोममेवमात्मानमापाद्याभिषूयत इति भवति स मध्यमः[4]। १०

'बहुलमस्य नैघण्टुकं वृत्तम्'। अस्वार्था स्तुतिः परार्था। तद्यथा।

सूक्तेषु गौणवृत्त्या स स्तूयते। प्राधान्येन क्वचिदेव

प्रायः पावमानं मण्डलम्। 'आश्चर्यमिव प्राधान्येन'। स्वप्रधाना स्तुतिः क्वचिदाश्चर्यं चित्रतः स्तुतिः स्यात्। 'तस्य पावमानीषु' ऋक्षु 'निदर्शनाय' उभयम् 'उदाहरिष्यामः' परार्थत्वं १५ स्तुतेः स्वार्थत्वं च। परार्थं तावदुदाहियते। तद्यथा[5] ॥ २ ॥

---

**स्वादिष्ठया मदिष्ठया पवस्व सोम धारया। इन्द्राय पातवे सुतः (ऋ० सं० ९। १। १) ॥ इति सा निगदव्याख्याताथैषापरा भवति चन्द्रमसो वैतस्य वा ॥ ३ ॥** २०

---

स्वादिष्ठया मदिष्ठयेति[7]। मधुच्छन्दस आर्षम्। प्रावर्स्तोत्रे (आश्व०

सोमः

श्रौ० ५। १२)[8]। हे सोम स्वादिष्ठया स्वादुतमया मदिष्ठया मदयितृतमया त्वं धारया पवस्व प्रक्षर। किमर्थम्। इन्द्राय इन्द्रार्थं पातवे पानाय सुतः अभिषुतः। २० इन्द्रार्थं पवस्वेत्यस्वार्थता लक्ष्यते।

---

१ ग. ज. घ. ट. ठ. ड. मध्यस्था°. २ ग. च. ज. ड. दिव ज्यो°. ३ ग. च. ज. सुतनू°. ४ ग. ज. स्वतेनू°; ठ. ड. स्व तनू° च. स्वैतेनू° स्वात. ५ क. ख घ. ट. ठ. ड. साऽयमे°; ग. ज. सोममेतमा°; च. सोममेऽय°. ६ ठ. ड. °यथा। इति निरुक्तभाष्ये पञ्चमाध्याये द्वितीयः खण्डः; क. ख. ग. च. वर्गमितेरब्वङ्को नास्ति. ७ ग. °येति। म°. ८ क. ख. घ. ट. ठ. ड. °स्तोत्रे विनियोगः। हे°, च. °स्तोत्रे। हे विनियोग.. २७

'अथैषापरा भवति चन्द्रमसो वैतस्य वा' इति। 'अथ' शब्देन विशेषाधिकारवाचिना स्वप्रधानतां स्तुतेरधिकरोति। चन्द्रमसो वेति चन्द्रत्वमापन्नस्यौषधिसोमस्य। यथोक्तं 'स तनूकरणे' ( निरु० ११। २ )। इतरथा ह्यप्राकृतप्रक्रिया स्यादनधिकारादस्मिन् प्रक्रमे चन्द्रमसः। चन्द्रमसो वाधिदैवमापन्नस्य। ओषधिसोमस्य वाधियज्ञमापन्नस्य। तदेतदुभयथा दर्शयति ॥ ३ ॥

एषापरा ऋक् चन्द्रमस एतस्य वा

---

**सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिम्। सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ( ऋ० सं० १०। ८५। ३ )॥ सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिमिति वृथासुतमसोममाह सोमं यं ब्रह्माणो विदुरिति न तस्याश्नाति कश्चनायज्वेत्यधियज्ञमथाधिदैवतं सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिमिति यजुःसुतमसोममाह सोमं यं ब्रह्माणो विदुश्चन्द्रमसं न तस्याश्नाति कश्चनादेव इत्यथैषापरा भवति चन्द्रमसो वैतस्य वा ॥ ४ ॥**

---

सोमं मन्यते पपिवानिति सूर्याया आर्षम्। विवाहे विनियोगः ( आश्व० गृ० १। ८। १३ )। यत्संपिंषन्ति सचूर्णयन्ति अभिषुत्य पिबन्ति सोममोषधिं केचिद्रासायनिकाः। ते मन्यन्ते सोमं पपिवांसः सोममपास्मै इति। न च पुनस्ते सोमपाः। वृथासोमपास इति। अनेन तावदर्धर्चेनाय मन्त्र एव 'वृथासुतमसोममाह' पातृंश्च। अथ कः सोमः के च सोमपाः। यतो ब्रवीति। सोमं य ब्रह्माणो विदुर्न तस्याश्नाति कश्चन। यं ब्राह्मणाः सोमं विदुः अधियज्ञे अङ्गभूतं न तस्याश्नाति कश्चन अयज्वा अनधिकृतो यजमानत्वेन। 'इत्यधियज्ञम्' इति विषयमुपप्रदर्शयति।

अधियज्ञे सोमः

१ ग. ज. °स्याप्योष°. २ क. ख. घ. ट. °मस्य वा। य°; च. °मस्य°। य° वा. ३ ग. ज. ओष°. ४ क. ख. घ. ट. प्रदर्श°; च. °था°दृ° प्र, ठ. ड. प्रदर्शयति। इति निरुक्तभाष्ये पञ्चमाध्याये उत्तरषट्के तृतीयः खण्डः; क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति. ५ ग. °निति°। स°. ६ ग. ज. किंचि°; च. किंचि° के. ७ क. ख. °पास्यमिति, घ. ट. ठ. ड. °पास्य इति. ८ ग. ज. इति च; च. इति चै.

'अथाधिदैवतम्' इति विषयान्तरमाविष्करोति । उक्तं हि 'चन्द्रमसो वा' (निरु० ११ । ३) इति । तदुपप्रदर्शनार्थमाह । सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिमिति 'यजुःसुतम्' अधियज्ञं चन्द्रमसमपेक्ष्य 'असोममाह' । यथा पूर्वस्मिन् रासायनिकसोमस्यासोमत्वमाधियज्ञमपेक्ष्यैवमिहाप्यधियज्ञसोमस्यासोमत्वमधिदैवसोमं चन्द्रमसमपेक्ष्य । एवं कृत्वा सोमं यं ब्रह्माणो विदुश्चन्द्रमसं न तस्याश्नाति कश्चन अदेव इति । देवानां हि भक्षत्वेन विपरिणतश्चन्द्रमाः । 'सोमो नूनमेव तद्देवानामन्नम्' इति ह विज्ञायते । एवमस्य स्वप्रधाना सोमस्य स्तुतिः ॥

अधिदैवते चन्द्रमाः

'अथैषापरा भवति चन्द्रमसो वैतस्य वा' । सा किमर्थम् । 'अश्वर्यमिव प्राधान्येन' इत्युक्तम् (निरु० ११ । २) । तथा चेयमपरा अन्या प्राधान्यस्तुतिरप्यस्ति सोमस्येत्युपप्रदर्शनार्थमाह ॥ ४ ॥

---

यत्त्वा देव प्रपिबन्ति तत आप्यायसे पुनः । वायुः सोमस्य रक्षिता समानां मास आकृतिः (ऋ० सं० १० । ८५ । ५) ॥

यत्त्वा देव प्रपिबन्ति तत आप्यायसे पुनरिति नाराशंसानभिप्रेत्य पूर्वपक्षापरपक्षाविति वा वायुः सोमस्य रक्षिता वायुमस्य रक्षितारमाह साहचर्याद्रसहरणाद्वा समानां संवत्सराणां मास आकृतिः सोमो रूपविशेषैरोषधिश्चन्द्रमा वा चन्द्रमाश्चायन्द्रमति चन्द्रो माता चान्द्रं मानमस्येति वा चन्द्रश्चन्दतेः कान्तिकर्मणश्चन्दनमित्यप्यस्य भवति चारु द्रमति चिरं द्रमति चमेर्वा पूर्वं चारु रुचेर्विपरीतस्य तस्यैषा भवति ॥ ५ ॥

---

१ क. ख. घ. ट. ठ. ड. भक्षयत्ये°; च. भक्षैक्ष्य. २ ग. ज. सोमस्तु°. ३ क. ख. घ. ट. ठ. ड. °न्या स्वार्थप्रा°; ग. ज. प्रधानस्तु°. ४ ठ. ड. °माह । इति नैरुक्तभाष्ये उत्तरषट्के चतुर्थाध्याये चतुर्थः खण्डः; क. ख. ग. घ. वर्जमितरेष्वङ्को नास्ति.

यत्त्वा देव प्रपिबन्तीति[1] । यदा त्वां हे देव सोम प्रपिबन्ति प्रारभन्ते पातुमृत्विग्यजमानाः त्रिषु[2] सवनमुखेषु । तदा किमिति । तत आप्यायसे पुनः । ततः अनन्तरं पुनः आप्यायसे । तदुक्तमधियज्ञे " आप्यायनमाप्यायस्व[3] 'सं ते पयांसि' ( ऋ० सं० १ । ९१ । १८ ) भक्षशेषान्[4] " ( मान० श्रौ० २ । ४ । १ । ४६ ) इति । वायुः सोमस्य रक्षितेति । वायव्येष्वसौ पात्रेषु गृहीतो रक्ष्यत इति ' वायुमस्य रक्षितारमाह ' मन्त्रदृक् । ' साहचर्याद्रसहरणाद्वा ' । वायुसहचरितो[5] ह्यसौ । तेन नित्यं सहचरणादविनाभावात्क्रमेण । रसहरणाद्वा सर्वरसापहारी वायुः समर्थः सन्यत्न शोषयति[6] तेन सोमो रक्षितो भवति । समानां संवत्सराणां मासो माता निर्माता सोम ओषधिः[7] । सर्वस्य किलौषधिसोमस्य चन्द्रमसः कलोपचयमनु प्रत्यहमेकैकश्येन कला इव चन्द्रमसः पर्णान्युपचीयन्ते । स पौर्णमास्यां पञ्चदशपर्णः संपद्यते । पौर्णमास्याः पुनः परतः कलाहानौ चन्द्रमस इव एकैकं पर्णमपचीयते इति[8] ओषधेः सोमस्य चन्द्रमसः सपद्यते । तदायुर्वेदविदः सोमलक्षणं रसायनतन्त्रे[9] स्मरन्ति । अमुना प्रकारेणोपचयापचयाभ्यां पर्णाना मासोपलक्षणद्वारेण[10] समाना संवत्सराणाम् आकृतिः आकर्ता भवति सोमो ' रूपविशेषैः ' । तदेवं पर्णानामुपचयापचयाभ्यामन्यदन्यद्रूपं प्रतिपद्यते । एवमधियज्ञेऽपि स एव ओषधिः सोमः ।

अस्यामपि सोमश्चन्द्रमा वा । अधियज्ञे सोमः

वायुः कथं सोमस्य रक्षिता

अथाधिदैवे । यत्त्वा देव प्रपिबन्ति तत आप्यायसे पुनरित्यपरपक्षेषु पीयते रश्मिभिः । तदुक्तम् ' यमक्षितिमक्षितयः[11] पिबन्तीति ' ( निरु० ५ । ११ ) । तत आप्यायसे पुनः । तं पूर्वपक्ष आप्याययन्तीति । तदप्युक्तम् । ' यथा देवा

अधिदैवे चन्द्रमाः

---

१ ग. 'न्तीति' । य'. २ ग च. ज. तृषु. ३ ग. ज. ठ. ड 'आप्यायस्व ' नास्ति; च. 'यनं' सं' आप्यायस्व. ४ क. ख. घ. ट. ठ. ड. भक्ष्यशे°; ग. ज. °सीति इति भक्षशे°; च. सीति इति भक्षशे° ष्य. ५ च. वायुः समर्थः° युसहचरित इत्यादि सर्वं रसापहारी वेत्यन्तं. ६ क. ख. घ. ट. ठ. ड. °षति सोमं तेन; च. °यति °तेन° सोमं. ७ घ. ट. ओष°. ८ ठ. ड. °इति । स निष्पर्णोऽमावास्यायामोषधेः°. ९ ग. च. ज. °यनं तन्त्रे. १० क. ख. घ. सोमलक्ष°; च सोमल° मासो, ट. सोमल° मासोप. ११ ठ. ड. क्षितम'.

अंशुमाप्याययन्तीति ' ( निरु० ५ । ११ ) । वायुं सोमस्य चन्द्रमसो रक्षितारमाह । एष ह्येनं सूक्ष्मया रश्मिनाड्या सुषुम्नाख्यया पुनर्यथाकाल-मापूरयति । समानां संवत्सराणां मापः । चन्द्रमाः सोमो(प?)लक्षणत्वान्मासः । द्वादशकृत्वो मासभूतमात्मानमावर्तयन् संवत्सराणां कर्ता भवति । ' रूप-विशेषैः ' इति कलानामुपचयापचयविशेषाभ्या रूपविशेषाश्चन्द्रमसः प्रतितिथि भवन्ति ।  ५

' स्वादिष्ठया मदिष्ठया ' इत्यस्यामपि केचिदधिदैवमर्थं[1] व्याचक्षते ।

'स्वादिष्ठया मदिष्ठया ' इत्येतस्यामप्यृचि अधिदैवं चन्द्रमा इति केचित्

तन्मतेनोच्यते । हे भगवन् सोम चन्द्र स्वादिष्ठया अतिशयेन स्वादुतमया मदिष्ठया अतिशयेन मदयितृतमया पवस्व प्रक्षर[2] धारया प्रत्यहमेकैकया कलया इन्द्राय सूर्याय पातवे सुतः आपूरितः सुषुम्नेन[3] रश्मिना ।  १०

' चन्द्रमाः ' ( १ ) कस्मात् । स हि ' चायन् ' पश्यन्[4] सर्वभूतानि उपर्यवस्थितो ' द्रमति ' गच्छति । चायतेः पूर्वपदं द्रमतेरुत्तरपदम् । अथवा । ' चन्द्रो माता ' । चन्द्रश्चासौ माता च निर्माता सर्वस्येति चन्द्रमाः । चन्द्रः पूर्वपदं मातोत्तरपदम् । ' चान्द्रं मानमस्येति वा[5] ' । तदेवोत्तरपदम् । केवलं तु समानाधिकरणः पूर्वो बहुव्रीहिरुत्तरः । अथ ' चन्द्रः ' कस्मात् । ' चन्दतेः कान्तिकर्मणः ' । नित्यकान्तो ह्यसौ । ' चन्दनमित्यप्यस्यैव ' चन्दतेः ' भवति ' । तदपि हि कान्तम् । अथवा । ' चारु द्रमति ' । चारुशब्दात्पूर्वपदं द्रमतेरुत्तरपदम् । चार्विति द्रमतिक्रियाविशेषणम् । अथवा । ' चिरं द्रमति ' । तदेवोत्तरपदं चिरशब्दात्पूर्वपदम् । ' चमेर्वा पूर्वं ' द्रमतेरेवोत्तरपदम् । कोऽर्थः । चम्यमानो भक्ष्यमाणो देवैरसौ द्रमतीति चन्द्रमाः । अथ ' चारु ' कस्मात् । ' रुचेः ' अत्यन्तं विपरीतस्य ' दीप्तिकर्मणः । ' तस्यैषा भवति[6] ' ॥ ५ ॥

चन्द्रमाः कस्मात्  १५

चन्द्रः कस्मात् चन्दनं च  २०

चारु कस्मात्  २५

---

१ ग. घ. ज. °देवतमर्थं°. २ ग. ज. क्षरस्व. ३ ग ज. सुषु पश्यन् रश्मिना; च. सुषु पश्यन् ४° म्नेन. ४ क ख. घ. ट. पश्यन् ५ क. ख. च ट. ठ ड. वा चन्द्रमाः । चन्द्रः पूर्वपद तदे°; घ. वा । तदे° चन्द्रमाः । चन्द्र. पूर्वपदं. ६ ठ. ड. °वति । इति नरुक्तभाष्ये पञ्चमाध्याये पञ्चमः खण्डः; क. ख. ग. चतुर्ष्वपि कोशेषु ग्रन्थो नास्ति.

पौर्णमास्यदर्शनेऽमावास्यायाम्' (मान० श्रौ० ४ । १ । १) इति ह विज्ञायते । य एतत्करोति चन्द्रमाः स प्रतिरते प्रवर्धयते ईजानानां दीर्घमायुः । वयमपि च यजामहे तमनेन हविषा । अतः सोऽस्माकमप्येतत्करोत्वित्येतदाशास्महे ।

'आदित्यदैवतो द्वितीयः पाद इत्येके' । 'पूर्वापरं चरतो माययैतौ' (ऋ० सं० १० । ८५ । १८) इत्यतोऽनन्तरमेवेयम् । मैत्रायणीये समाने हविषि विनियोगः (मैत्रा० सं० २ । २ । ७ ॥ ४ । १२ । २) इत्यपेक्ष्येयमपि सौर्या च द्रमसी त्वह्नां केतुरित्यतो विशेषलिङ्ग ब्रवीति 'आदित्यदैवतो द्वितीयः पादः' इति । तदर्थयोजना । यश्चन्द्रमा नवो नवो भवति जायमानो यश्च भागं देवेभ्यो विदधात्यायन् यश्च प्रतिरते दीर्घमायुः सोऽस्माकमप्येतत्करोतु । अयं पश्य सूर्योऽह्नां केतुः कर्ता उदयास्तमयाभ्याम् उपमा चाग्रमेति मुख्यत्वमागच्छति तत्कृतत्वा- द्वृत्तो जन्मनः । तद्रश्मिप्रान्तप्रोत्सार्यमाणे हि तमस्युषसो जायन्ते । स तासां जनयितेति मुख्यः । अतः सोऽस्माकमेतदेवं करोत्वित्येतदाशास्महे ।

आदित्यदैवतो द्वितीयः पाद इत्येके

इह तु कथं चन्द्रमा मध्यस्थानः । ननु सूर्यादुपरितः शतसहस्रे योजनानां चन्द्रमसः स्थानमिति पौराणिकाः स्मरन्ति (ब्रह्मपुराणं २३ । ५) । सत्यं स्मरन्ति । कर्मसंयोगेन तु द्युस्थानत्वे सति सर्वदेवतानां विशेषस्थाननियमो विवक्षितः । तदेतदैन्द्रं कर्म रसानुप्रदानं वृत्रवधो बलकृतिरिति । तथा बाहुल्येनैन्द्रेषु दृष्टत्वात् । बलकृतिश्च चन्द्रे दृष्टा । यथा । 'वत्रेरजत दुर्मतिर्म्' (निरु० १० । ४२) । प्रसिद्धं चेदमिन्दुश्चन्द्रमा इति । रसात्मकत्वाच्चन्द्रमसो रसानुप्रदानसम्बन्धः । एवं चेन्द्रश्चन्द्रमाः । तस्य मेघवधविकारसम्बन्धात्कर्तृत्वेन सूर्यादर्वागिति युक्तं मध्यस्थानश्चन्द्रमाः । अपि च । ओषधिसोमश्चन्द्रमा भवत्यधियज्ञमापन्नः । स चन्द्रस्यात्मा । अन्नं चान्नादस्यात्मसाद्भवत्यधमानस्थानत्वेनास्या-

चन्द्रमाः कथं मध्यस्थानः

१ ठ. ड सर्वा ऋक् पठ्यते २ क. ख. घ ट. ठ. ड. यश्च; च. ैवि यश्च. ३ क. ख. घ ट. ठ. ड. °न्तोऽसाः स'; च. °न्तोऽस° – त. ४ क. ख. घ. ट. ठ. ड. 'तु' नास्ति. ५ क. ख. घ. ट. ठ. ड. 'ऽन्यतः स्था°. ६ ग. ज. °तिश्चन्द्रे, च. 'तिश्चन्द्रे' श्च. ७ ग. च. ज. तथा. ८ ग. ज. 'तिमिते । प्र°; च. 'तिमते । प्र° ति. ९ क. ख. घ. ट. 'मन्त्रः कर्तृ', ख. 'ऋकृत्कृते'.ठा.क.

नात । इत्यतो युक्तं मध्यस्थान इति । यथो च सक्तानो वायुर्विशेषतो मध्यस्थान इति । एवम् । इत्यतोऽयोगः ।

' मृत्युः ' ( ४ ) इति देवतम् । स कस्मात् । ' मारयतीति सतः ' । मध्यमो हि प्राणो मृत्युः । उत्क्रामञ्छरीरादितरैः प्राणैः प्राणिनो वियोजयति । एवं

५ मृत्युः कस्मात्

मारयति । विज्ञायते हि । ' प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति ' ( बृ० उप० ४ । ४ । २ ) इति । अथवा । ' मृतं च्यावयति ' । य एवोपक्षीणायुर्भवत्युपक्षीणकर्मा तमेतसितबलानमेन प्रच्यावयति । ' शत-बलाक्षो मौद्गल्यः ' आचार्यो मन्यते । बहुबलानि अक्षाणि इन्द्रियाणि

१० यस्य स शतबलाक्षः बहिरिन्द्रियः । मुद्गलस्यापत्यं मौद्गल्यः । ' तस्य ' मृत्योः ' एषा भवति ' ॥ ६ ॥

---

**परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान्**

**१५ ( ऋ० सं० १० । १८ । १ ) ॥ परं मृत्यो ध्रुवं मृत्यो ध्रुवं परेहि मृत्यो कथितं तेन मृत्यो मृतं च्यावयते भवति मृत्यो मदेर्वा मुदेर्वा तेषामेषा भवति ॥ ७ ॥**

---

परं मृत्यो अनु परेहि पन्थामिति । सङ्कुसुको नाम । तस्यार्षम् । आज्यहोमः । पुत्रकामके कर्मणि स्थालीपाकवि-

२० मृत्युः

धाने षडाहुतिः ( मान० गृ० २ । १८ । २ ) । हे मृत्यो परम् अन्यम् अनुपरेहि अनुपरागच्छ त्वं पन्थानं यः ते स्वः । कतमः सः । इतरो देवयानात् । यस्माद्देवयाने पथि वयं स्थिता अनाबाध्यास्तव पितृयानं पन्थानमनुपरेहि त्वम् । अपि च । चक्षुष्मते

२५ शृण्वते च ते तुभ्यं ब्रवीमि । मा त्वमस्माकं प्रजा पुत्रान् पौत्रांश्च रीरिषो हिंसीः । मा उत वीरान् अन्यानपि येऽस्मदाश्रयाः पुरुषास्तानपि मा हिंसीरिति ॥ ७ ॥

१ ठ. ह. °वति । इति निरुक्तभाष्ये पञ्चमाध्याये षष्ठः खण्डः; क. ख. ग. च. वर्जमितरेष्वेकत्रे नास्ति. २ ठ. ह. मृत्यो इति. ३ ग. °मिति । स°. ४ ग. ज. °रीरिषो री°, च पुत्रांश्च री° त्रान् पौत्रा°. ५ ठ ह. °रिति । इति ७ खण्डः; ग. ज. ह. नास्ति.

त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति । या मर्त्याय प्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ( ऋ० सं० १ । १५५ । २ ) ॥ इति सा निगदव्याख्याता । विश्वानरो व्याख्यातस्तस्यैषा भवति ॥ ८ ॥

५

'विश्वानरः व्याख्यातः' अभिधानतोऽभिधेयतश्च ( निरु० ७ । २१ ) । 'तस्यैषा भवति' ॥ ८ ॥

प्र वो महे मन्दमानायान्धसोऽर्चा विश्वानराय विश्वाभुवे । इन्द्रस्य यस्य सुमखं सहो महि श्रवो नृम्णं च रोदसी सपर्यतः ( ऋ० सं० १० । ५० । १ ) ॥ प्रार्चत यूयं स्तुतिं महतेऽन्धसोऽन्नस्य दात्रे मन्दमानाय मोदमानाय स्तूयमानाय शब्दाय्यमानायेति वा विश्वानराय सर्वं विभूतायेन्द्रस्य यस्य प्रीतौ सुमहद्बलं महच्च श्रवणीयं यशो नृम्णं च बलं नृनतं द्यावापृथिव्यौ वः परिचरत इति कमन्यं मध्यमादेवमवक्ष्यत्तस्यैषापरा भवति ॥९॥ १०

१५

प्र वो महे इति । वैकुण्ठस्यार्षम् । जगती । महाव्रते विनियोगः ( ऐ० आ० ५ । ३ । १ ) । हे स्तोतारः प्रार्चत प्रोच्चारयत स्तुतिम् उच्चार्यमाणां चान्यैः प्रपूजयत ।

विश्वानरः

कस्मै । विश्वानराय । किंलक्षणाय विश्वानराय । महे महते अन्धसः अन्नस्य दात्रे मन्दमानाय हृष्यमाणाय । अथवा । शब्दाय्यमानाय स्तोतृभिः । विश्वभुवे सर्वप्रकारविभूतियुक्ताय । इन्द्रस्य ईश्वरस्य यस्य विश्वानरस्य सुमखं १०

१ ठ. त्वेषमित्थेति महाराष्ट्रगुर्जरवैदिकपाठः । त्वेषमित्था० (सर्वा ऋक्पठ्यते) । इति सा निगदव्याख्याता । विश्वानरो व्याख्यातस्तस्यैषा भवति । इति निरुक्तभाष्ये उत्तरषट्के पञ्चमाध्याये अष्टमः खण्डः; ड. त्वेषमित्थेति महाराष्ट्रगुर्जरवैदिकपाठः । इति सा निगदव्याख्याता ॥ ८ ॥ इति निरुक्तभाष्ये ८ खण्डः । विश्वानरो°. २ घ. ट. ञ. अङ्को नास्ति. ३ क. ख. छ. त द. शब्दाय्यमा°. ४ छ त. द. °वक्षत्त°. ५ ग. इति । वे°. १८

सहः सुमहद्बलं महि महत्त्वम् आप्रीतं यशो बलमायतिर्महती नैगमं च नूनं पुनरपि न प्रतिप्रद्विशेषतो नतं बलं तस्य यस्य महत् । अपि चैना वः स्तुतिं यस्य विश्वानरस्य प्रोच्यमाना द्यावापृथिव्यौ परिचरतः पूजयतः अभिनन्दतः । सर्वभूतानामियमभिमता स्तुतिरस्त्वित्यभिप्रायः ।

'तस्यैषापरा भवति'। सा पुनः किमर्थम् । द्युस्थानोऽपि हि विश्वानरः समाम्नातः ( निघ० ५ । ६ । १२ )। अस्या तु परस्यां व्यपदेशादुत्तमेन ज्योतिषा विश्वानरस्यासंशयं मध्यमत्वमित्येवमुदाह्रियते ॥ ९ ॥

---

**उदु ज्योतिरमृतं विश्वजन्यं विश्वानरः सविता देवो अश्रेत् ( ऋ० सं० ७ । ७६ । १ )॥ उदशिश्रियज्ज्योतिरमृतं सर्वजन्यं विश्वानरः सविता देव इति धाता सर्वस्य विधाता तस्यैषा भवति ॥ १० ॥**

---

उदु ज्योतिरिति । वसिष्ठस्यार्षम् । प्रातरनुवाके विनियोगः ( आश्व० श्रौ० ४ । १४ )। उदश्रेत उच्छ्रयति ऊर्ध्वमुपनयति विश्वानरो मध्यमो वायुः । किम् । एतत्

स एव

ज्योतिः अमृतं सूर्याख्यम् । सर्वगन्त्रणा वायुपूर्वकत्वादुद्गमनस्योपपद्यते । विश्वजन्यं सर्वलोकहितम् ।

एवमत्र विश्वानरो ज्योतिरुच्छ्रयतीति व्यपदेशान्मध्यमो विश्वानरः । एवं चाभिप्रेत्योक्तं 'कमन्यं मध्यमादेवमवक्ष्यत्' ( निरु० ११ । ९ ) इति ।

ओवस्योऽर्धर्च उत्तर इति भाष्यकारो नाधिजगे । प्रसङ्गतस्तु निर्ब्रूमः । यदा तज्ज्योतिर्द्युस्थानमुपनीयते विश्वानरेणाथ तदा कृत्वा तत्कर्मणा

---

१ ग. ज. स्तुतिमस्य, च. स्तुतिमस्य° ति य. २ ठ. ड. °वति । निरुक्तभाष्ये पञ्चमाध्याये नवमः खण्डः. ३ ग. ज. °स्थानोऽपि°. ४ क. ख. ग. घ. वर्जमितरेष्वङ्कं नास्ति. ५ छ. त. द. °शिश्रय°. ६ ग. °ति व°. ७ क. ख. प. ट. ञ. ह. धाय: सविता । कि°; च वायुः । कि° सविता. ८ ग. ज. °पूर्वत्वा°. ९ ग. ज. °स्थानमुदयमु°.

देवानां रश्मीनां चक्षुः ख्यातं प्रकाशः अजनिष्ट जायते उषाः। सा च पुनर्जाता आविरकः भुवनं विश्वं सर्वमाविः करोति भूतजातमित्यर्थः।

'धाता' (६) कस्मात्। स हि सर्वस्य विधाता स्रष्टा। उदकपूर्वकत्वात्सर्वविश्वस्य, मध्यमः। 'तस्यैषा भवति' ॥ १० ॥

धाता कस्मात्

५

---

धाता ददातु दाशुषे प्राचीं जीवातुमक्षिताम्। वयं देवस्य धीमहि सुमतिं सत्यधर्मणः (अथ० सं० ७।१७।२॥ मैत्रा० सं० ४।१२।६)॥ धाता ददातु दत्तवते प्रवृद्धां जीविकामनुपक्षीणां वयं देवस्य धीमहि सुमतिं कल्याणीं मतिं सत्यधर्मणो विधाता धात्रा व्याख्यातस्तस्यैष निपातो भवति बहुदेवतायामृचि ॥ ११ ॥ १०

---

धाता ददातु दाशुषे इति। वामदेवस्यार्षम्। देविकासु धात्रे हविषि विनियोगः (मैत्रा० सं० ४।३।५)। य एव कश्चिद्धात्रे दत्तवान् हविर्भवति तस्मै दाशुषे स ददाति। किं ददाति। प्राचीं जीवातुमक्षिताम्। प्राचीं प्रवृद्धां महतीं जीवातुं जीविकाम् अक्षिताम् अक्षीणाम्। यत एवमतो ब्रूमः। वयं देवस्य धातुः धीमहि धारयामहे सुमतिं कल्याणीं मतिं नित्यं हविर्दानयुक्ता सत्यधर्मणः नित्यमवितथार्थकारिणः। १५ २०

धाता

'विधाता (७) धात्रा व्याख्यातः' (निरु० ११।१०)। धातेव विधाता। 'तस्यैव निपातो भवति' स्तुतिसाधारण्येन 'बहुदेवतायामृचि' ॥ ११ ॥

---

१ क. ख. घ. ट ठ. ड. ख्यानं, च ख्यातं॰ न. २ ठ. ड. 'भवति'। इति निरुक्तभाष्ये पञ्चमाध्याये १० खण्डः; क. ख. ग. च वर्जमितरेष्वङ्को नास्ति. ३ छ त. द. कल्याणीं मतिं सुमतिं. ४ इति। वा॰. ५ ग. ज. सत्यम॰; च. सत्य॰। नि ६ ठ. ड. ॰मृचि। इति निरुक्तभाष्ये पञ्चमाध्याये ११ खण्डः; क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति.

सोमस्य राज्ञो वरुणस्य धर्मणि बृहस्पतेरनुमत्या उ शर्मणि।
तवाहमद्य मघवन्नुपस्तुतौ धातर्विधातः कलशाँ अभक्षयम् ( ऋ० सं० १० । १६७ । ३ ) ॥ इत्येताभिर्देवताभिरभिप्रसूतः सोमकलशानभक्षयमिति कलशः कस्मात्कला अस्मिञ्छेरते मात्राः
५ कलिश्च कलाश्च किरतेर्विकीर्णा मात्राः ॥ १२ ॥

इत्येकादशाध्यायस्य प्रथमः पादः ।

---

सोमस्य राज्ञः इति[3]। विश्वामित्रस्यार्षम् । सोमस्य राज्ञो धर्माणि कर्मणि यत्र

विधाता — सोम इत्युच्यते तस्योपस्तुतौ वर्तमानस्तेन प्रसूतः
१० सोमकलशान् अभक्षयम् । वरुणस्य चैवमेव ।

बृहस्पतेश्च अनुमत्याश्च शर्मणि शरणे आश्रये वर्तमानस्ताभ्यामभिप्रसूतः । तवाहमद्य मघवन् उपस्तुतौ युवयोश्च हे धातः[6] विधातः सर्वैर्भवद्भिरनुज्ञात एतान् सोमकलशान् अभक्षयमिति ।

'कलशः कस्मात् । कला अस्मिन् शेरते मात्राः' । कला

कलशः कस्मात् — अवयवाः सोमसमुदायात्केचित्पृथक्कृताः । ते
१५ शेरते आसते अस्मिन् । कलाशब्दात्पूर्वपदं शीङ उत्तरपदम् । अथ कलिः कस्मात् । अत आह कलानिर्वचनप्रसङ्गेन । 'कलिश्च कलाश्च किरतेर्विकीर्णा

कलाः कस्मात् कलिश्च — मात्राः' । 'कॄ विक्षेपे' ( धा० ६ । १२८ )
२० इत्यस्य । कलौ वचांसि परस्परं विक्षिप्यन्ते ।

कला अपि विक्षिप्ता भवन्ति कृतार्थसमुदायादिति[10] ॥ १२ ॥

षोडशस्याध्यायस्य प्रथमः पादः ।

---

१ छ. त. द. 'कलशः कला°. २ छ. प्रथ°, त. एकादशा प्रथ°; ढ. थ ध. ठ. ड. 'इत्ये० पादः' नास्ति. ३ ग. उति। वि° ४ क. ख. ध घ. ठ ड प्रसूते', ख. °वर्त° प्र. ५ क ख. घ. ट. ठ. ड. तवाहं हे मघवन्नद्य उप°; च. तवाह [हे हे] मघवन्नु° नु अद्य उ°. ६ क. ख. घ. ट. ठ. ड. °धातः हे वि°, च. °धात. वि° हे. ७ ग. ज. °भक्षमि°. ८ ग. ज शयते. ९ क. ख घ. ट. °वचनानिर्वचनप्रस°;
२५ च. 'वचनेन क° नानिर्वचनप्रसङ्गे. १० ठ. ड. °दिति । इति षोडशाध्यायस्य प्रथमः पादः । इति निरुक्तभाष्ये उत्तरषट्के पञ्चमाध्याये १२ खण्डः; क. ख. ग.
३० च. 'षोडशाध्याये' नास्ति.

द्वितीयः पादः ॥

**अथातो मध्यस्थाना देवगणास्तेषां मरुतः प्रथमागामिनो भवन्ति मरुतो मितराविणो वा मितरोचिनो वा महद्द्रवन्तीति वा तेषामेषा भवति ॥ १३ ॥**

---

'अथातो मध्यस्थाना देवगणाः' । अथातःशब्दावुक्तार्थौ । तयोः पुनरुपन्यासो बहुवचनविशिष्टोऽयमपरोऽधिकार इति । मध्यस्थाना देवगणा इतीदमपि प्रसिद्धमेव । 'तेषां मरुतः (८) प्रथमागामिनो भवन्ति'। कस्मात् । वायुरेव हि भेदेनापेक्ष्यमाणो मरुदभिधानो बहुवचनभाग् भवति । तेषां प्राथम्यं वायुना व्याख्यातम् । एतावांस्तु विशेषः । बहुसाध्ये कर्मणि बहुधा मध्यमो भवति । पृथक्त्वेन तु विज्ञाता मरुतः शुक्रज्योतिश्च चित्रज्योतिश्चेत्येवमादयः सप्तसप्तका देवगणा मारुतेषु गणेषु सप्तकपालेषु । अग्नौ पुराणे चैते एव प्रसिद्धाः सप्तस्कन्धवायुविचारिणो मारीचात्कश्यपाद्दित्या ये जज्ञिरे । नैरुक्तसमयस्तु सर्व एव गणा मरुतः । उक्तं च वार्तिके । 'मध्यमा वाक्स्त्रियः सर्वाः पुमान्सर्वश्च मध्यमः । गणाश्च सर्वे मरुतो गणभेदाः पृथक्कृताः' (बृहद्दे० ५ । ४८) ॥

अथ 'मरुतः' (८) कस्मात् । 'मितराविणो वा' । मितं नाम सुश्लिष्टम् । यथा तेषां योग्यं रवितुं तथा रुवन्ति स्तनयन्ति । अथवा । 'मितरोचिनः' । तथैव । सुश्लिष्टं रोचन्ते ।

**मरुतः कस्मात्**

'अमितराविणः' इति केचिदिच्छन्ति 'मरुतोऽमितराविणः' इति समानसंहितत्वाद्रूपस्य तेषाम् । बहुप्रकारं च ते रुवन्तीत्यर्थः । 'मितरोचिनः' इत्यत्राप्येवमेव । 'महद्द्रवन्तीति वा' ।

---

१ क. ख. थ. ध महद्द्रव°. २ क ख. १ (१३), त. द १ ३ ठ. ड °गणा इति । अथा°. ४ ग घ. ज. चैत ए°. ५ क. ख. ग. ठ. ढ. सप्तधा पुत्रश्चावि°; च. सप्तस्कन्धवायुवि° धा पुत्रा°; ट. सप्तधा पुत्रैस्ते वि° स्कन्धवायु. ६ क. ख. घ. ट. ठ ड. °पादाद्दित्या, च पादिद्दित्या° द. ७ ट. 'मध्यमा०' अस्य पाठान्तरं प्रान्ते लिख्यते 'सर्वा स्त्री मध्यमस्थाना पुमान्मध्यश्च सर्वगः । गणाश्च सर्वे मरुत इति वृद्धानुशासनम्' ॥ इति, इदं पाठान्तरं ठ. ड. पुस्तकयोर्मूलेऽन्तर्भाव्यते; च. पुस्तके इदं प्रान्ते लिख्यते. ८ क. ख घ. ट ठ. ड. अमित°. ९ ग. ज. महद्द्रुव°.

'रुद्राः[1] व्याख्याताः (निरु० १० । ५) । तेषामेषा भवति' ॥ १४ ॥

---

आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन । इयं वो अस्मत्प्रति[2] हर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे (ऋ० सं० ५ । ५७ । १) ॥ आगच्छत रुद्रा इन्द्रेण सहजोषणाः सुविताय कर्मण इयं वोऽस्मदपि[2] प्रतिकामयते मतिस्तृष्णज इव दिव उत्सा उदन्यवे इति तृष्णक्तृष्यतेरुदन्युरुदन्यते-ऋभव उरु भान्तीति वर्तेन भान्तीति वर्तेन भवन्तीति वा तेषामेषा भवति[3] ॥ १५ ॥

---

आ रुद्रास इति[4] । श्यावाश्वस्यार्षम् । जगती । आग्निमारुते शस्यते ।

**रुद्राः** हे रुद्राः आगच्छत यूयम् । इन्द्रवन्तः । 'इदि परमैश्वर्ये (धा० १ । ६३)' । सजोषसः परमैश्वर्येण नित्यमासेविताः । पृथक्त्वपक्षे तूपरयत एव इन्द्रेण सह प्रीयमाणा इति । हिरण्यरथाः उदकहरणार्थे रंहणाः । पृथक्त्वपक्षे तु हिरण्यविकृतरथाः । सुविताय एतस्मै[5] कर्मणे सुष्ठु सगुणाय[6] यथाशास्त्रं क्रियमाणाय प्राप्त्यर्थम् । किमिति आगच्छत । वः युष्मान् इयमस्मन्मतिः प्रतिहर्यते प्रतिकामयते । युष्मद्विनाकृतमिदं कर्म गुणवदप्येतैरङ्गैर्माभूद्विगुणमित्येवमर्थं प्रतिहर्यते । अपि च । हविः पूर्वं देवताः प्रेप्सन्ति ब्राह्मणा इवोपनिमन्त्रणम् । ततो यजमानः संस्कृते हविषि तदव्यापत्तये यागकालानतिक्रमणाय चान्नपतिरिवान्ने संस्कृते तदव्यापत्तये भोजनकालानतिक्रमणाय च देवताः प्रतिप्रेप्सति । विज्ञायते हि । 'देवता वै सर्वा आशंसन्ति ग्रहे गृह्यमाणे मह्यं ग्रहं गृह्णाति' (मैत्रा० सं० ४ । ८ । ७) इति । अत इदमुक्तम् 'इयं वो अस्मत्प्रति हर्यते मतिः' इति ।

---

१ क. ख. २ (१४); ट. ड. °वति । इति निरुक्तभाष्ये उत्तरषट्के पञ्चमाध्याये चतुर्दशः खण्डः; क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति. २ क. ख. छ. त. द. न. वो अस्म°. ३ क. ख. ३ (१५), त. द ३. ४ ग. इति[12] । श्या°. ५ ग ज. °तस्मिन्कर्मणि, (स्मै) च °तस्मिन्; कर्मणि (णे) ६ च ट. सगणाय; ठ. ढ. सुगणनाय. ७ . ७ म. ग. °द्वन्तैर°.

कथं पुनः प्रतिहर्यते । तृष्णजे न तृष्णज इव । तृडुपजायते यस्मिन्
विशेषतः काले स तृडुपजः कालो घर्मान्तः । तस्मिन यथा दिव उत्सा
द्युलोकादुत्साः उत्सप्रभवा मेघा आपः उदन्यवे उदकमिच्छते लोकाय
आगच्छन्ति प्रावृषि तथास्मन्नत्या प्रतिहर्यमाणा आगच्छतेति । उदन्यु-
५ श्चातक इति केचित् । तस्य प्रेप्सतो यथा दिव उत्सा मेघा आगच्छन्ति
तथास्माकमागच्छतेत्येवं तेषां योजना ।

ऋभवः कस्मात्

'ऋभवः ' ( १० ) कस्मात् । ' उरु भान्तीति वा ' । ते हि
बहु भान्ति दीप्यन्ते । उरुशब्दात्पूर्वपदं भातेरुत्त-
रपदम् । ' ऋतेन भान्तीति वा ' । यज्ञेन
१० सत्येन वा भान्ति । तदेवोत्तरपदम् । पूर्वपदे विकल्पः । ' ऋतेन भव-
न्तीति वा ' । भवतेर्वोत्तरपदम् । ते हि ऋतेन सत्येन वा भवन्ति यज्ञेन
वा भवन्ति । भूत्या देवत्वेन सर्वे युज्यन्ते । ' तेषामेषा भवति ' [१] ॥१५॥

---

विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः ।
१५ सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः
( ऋ० सं० १ । ११० । ४ ) ॥ कृत्वा कर्माणि क्षिप्रत्वेन
वोढारो[२] मेधाविनो वा मर्तासः सन्तोऽमृतत्वमानशिरे[३] सौधन्वना
ऋभवः सूरख्याना वा सूरप्रज्ञा वा संवत्सरे समपृच्यन्त धीतिभिः
कर्मभिर्ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा
२० बभूवुस्तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन
तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशत-
यीषु सूक्तानि भवन्त्यादित्यरश्मयोऽप्यृभव उच्यन्ते । अगोह्यस्य
यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ । अगोह्य आदि-
त्योऽगूहनीयस्तस्य यदस्वपथ गृहे यावत्तत्र भवथ न तावदिह
२५ भवथेत्याङ्गिरसो व्याख्यातास्तेषामेषा भवति[४] ॥ १६ ॥

---

१ क ख. ३ ( १५ ) ठ. ढ °वति । इति निरुक्तभाष्ये पञ्चमाध्याये पञ्च-
दशः ए०३ ; ग. च. वर्जमितरेष्वत्र नास्ति २ छ. त. द वोल्हारो ३ क ख.
२९ छ त द. सन्तो अमृ°. ४ क. ख. ४ ( १३ ), त. द. ४.

विष्टी शमीति । कुत्सस्येयमार्षम् । आर्भवे विनियोगः ( आश्व० श्रौ० ७ । ७ ) । 'विष्टी शमी' इति द्वे अपि कर्मनामनी ( निघ० २ । १ ) । यतोऽजामितायै भाष्यकारः पूर्वं तावन्निराह 'कृत्वा' इति । किं कृत्वा । शमी कर्माणि । कथम् । तरणित्वेन क्षिप्रत्वेन क्षिप्रकारित्वेन सर्वयज्ञसंपद्दर्शनेन । वाघतो वोढारो यज्ञस्यानुष्ठातारो मेधाविनो वा । न ह्यमेधाविनः संवत्सरेण सकलं कर्म समापयितुं शक्ताः । ते तु संवत्सरेऽखिलं कृत्वा मर्तासः मनुष्याः सन्तः अमृतत्वम् अमृतभावं देवत्वम् आनशिरे प्राप्तवन्तः । के पुनस्ते । सौधन्वनाः सुधन्वनः पुत्राः ऋभवः सूरचक्षसः सूर्यविख्याताः सूर्यसमानदर्शनाः सूर्यसमानप्रज्ञा वा । यत ईदृशास्तेऽतः संवत्सरे समपृच्यन्त समयुज्यन्त धीतिभिः कर्मभिः । अतश्च देवा अभवन्निति ।

ऋभवः

'ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः' इति । आर्भवाणां मन्त्राणां स्वभावोपप्रदर्शनार्थमाह । 'तेषां प्रथमोत्तमाभ्याम्' ऋभुणा वाजेन च बहुवन्निगमा भवन्ति न मध्यमेन विभ्वा । स ह्यार्भवाणां मन्त्राणां स्वभावः । 'तदेतत्' उच्यते 'ऋभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति' । तद्यथा । 'इदं तृतीयं सवनं कवीनामृतेन ये चमसमैरयन्त' ( तै० सं० ३ । १९ ) इति ।

ऋभ्वादय आङ्गिरसस्य त्रयः पुत्राः । ऋभुणा वाजेन च बहुवन्निगमा भवन्ति न विभ्वना । ऋग्वेदे बहूनि सूक्तानि येषु ऋभुभिः कृतं चमसस्य चतुर्धाकरणं स्तूयते

'आदित्यरश्मयोऽप्यृभव उच्यन्ते' इत्यभिधेयव्यभिचारमुपप्रदर्शयति । क्व च पुनस्त उच्यन्ते । यतः पठति । 'उद्वत्स्वस्मा अकृणो-

१ ग. °मीति । कु° . २ घ. ट. ठ. ड. °मित्याये; च. °मित्यै° त्वा. ३ ग. ज. °ख्यानाः; च. °ख्यानाः°ताः. ४ ग. ज. °मानसंज्ञा. ५ क. ख. घ. ट ठ ड. °त्सरे संवत्सरावयवे वसन्तादिकाले स° . ६ क. ख. घ. ट. °ति । अगोह्यस्य यदस्स्वनेति । उद्° ; च. °ति ° । उद्° अगोह्यस्य यदस्स्वनेति, ठ. ड. °ति । अगोह्यस्येति । ऋक् । उद्वत्स्व° .

तना तृणं निवत्स्वपः स्वपस्यया नरः। अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ' ( ऋ० सं० १।१६१।११ )॥

अस्यामृचि आदित्यरश्मय ऋभवः.

दीर्घतमस आर्षम्। जगती। उद्वत्सु ये उन्नताः प्रदेशाः भुवः अङ्गिरनाक्रान्तास्तेषु अस्मै लोकाय उपकारिष्यन्तो यूयमृभवः अकृणोतन प्रतिसंवत्सरं कुरुथ तृणं कुशादि वर्षेणादित्यमण्डलादौ वर्तमानाः। निवत्सु पुनर्निम्नेषु भुवः प्रदेशेषु अपः उदकं कुरुथ स्वपस्यया लोकानुग्रहप्रवृत्तया[2] वर्षक्रियया हे नरः। किंच। अगोह्यस्य योऽयम् अगोह्यः आदित्यः अगूहनीयः[3] न[4] गूहितुं शक्यः केनचिदपि अस्य यदसस्तना गृहे यावदस्य मण्डले सुप्ता इव निगूढा[5] भवथ। तदद्येदमृभवो नानुगच्छथ। हे ऋभवो यावत्तत्र निगूढा भवथ रात्रौ न तावदिह भवथ। ततश्च युष्मद्विनाभावे निरालोकोऽयं लोकः सम्पद्यते। एतद्वो महाभाग्यमहमनुकीर्तयामि। ते यूयमिदं नामास्माकं कुरुथेति।

'अङ्गिरसो (११) व्याख्याताः' एकवचनेन 'अङ्गारेष्वङ्गिराः' ( निरु० ३।१७ ) इति। 'तेषामेषा भवति'॥ १६॥

---

विरूपास इदृषयस्त इद्गम्भीरवेपसः। ते अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरे ( ऋ० सं० १०।६२।५ )॥ बहुरूपा ऋषयस्ते गम्भीरकर्माणो वा गम्भीरप्रज्ञा वा तेऽङ्गिरसः[8] पुत्रास्तेऽग्नेरधिजज्ञिर इत्यग्निजन्म पितरो व्याख्यातास्तेषामेषा भवति[10]॥ १७॥

---

१ ग. °तनोति। दी°, ख. ट. च ज. 'तनोति। दी°. २ ग. 'प्रवृत्तया; च. 'प्रवर्तया त, ज. प्रवर्तया, ट. प्रवृत्या वर्त. ३ ग. ज. गूह°, च. 'गूह° अ. ४ च. निगू° न, ज. निगू ५ ग. ज. निरूढा; च. निरूढा° गू ६ ग. च. ज. महा°. ७ क. ख. ४ (१६); ट. ह. १६। इति निरुक्तभाष्ये पञ्चमाध्याये पादशः खण्डः ग. च. वर्जमितरेष्वङ्का नास्ति. ८ क. ख त. द. ते आङ्गि°. ९ क. ख. ३ ग. ह. 'स्ते अग्ने'. १० क. ख ५ (१७); ट. ह ५.

विरूपास इति[1] । नाभानेदिष्ठस्यार्षम् । अनुष्टुप् । षष्ठेऽहनि विनियोगः ( आश्व० श्रौ० ८ । १ ) । विरूपाः नानारूपाः । के पुनस्त इति । ऋषयः अतित्यस्य ब्रह्मणो द्रष्टारः । न केवलं पश्यन्ति । अपि च । गम्भीरवेपसः अप्रमेयकर्माणः । अप्रमेयबुद्धयो वा । ऋष्यनेकत्वे कतमास्त इति । अङ्गिरसः सूनवः । येऽङ्गिरसः सूनवस्त एते विवक्षिताः । कथं पुनस्ते अङ्गिरसो जज्ञिरे । अत[3] आह । ते अग्नेः परि जज्ञिरे इति । अग्नित्वमापन्नस्याङ्गिरसोऽपि[4] सकाशाद्ये जज्ञिरे ते एते विरूपा गम्भीरवेपसश्च मन्दं नाम कुर्वन्त्विति[5] ।

अङ्गिरसः

'पितरो (१२) व्याख्याताः' 'द्यौर्मे पिता' ( निरु० ४ । २१ ) इत्यत्र । 'तेषामेषा भवति'[6] ॥ १७ ॥

---

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः । असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ( ऋ० सं० १० । १५ । १ ) ॥ उदीरतामवर उदीरतां पर उदीरतां मध्यमाः पितरः सोम्याः सोमसंपादिनस्तेऽसुं ये प्राणमन्वीयुरवृका अनमित्राः सत्यज्ञा वा यज्ञज्ञा वा ते न आगच्छन्तु पितरो ह्वानेषु माध्यमिको[8] यम इत्याहुस्तस्मान्माध्यमिकान्[9] पितॄन्मन्यन्तेऽङ्गिरसो व्याख्याताः पितरो व्याख्याता भृगवो व्याख्याता अथर्वाणोऽथनवन्तस्थर्वतिश्चरतिकर्मा तत्प्रतिषेधस्तेषामेषा साधारणा भवति[10] ॥ १८ ॥

---

उदीरतामवर इति[11] । शङ्खस्यार्षम् । पितृमेधे विनियोग ( आश्व० श्रौ० २ । १९ ) । ये तावत् अवरे पितरः पृथिवीमाश्रितास्ते तावत् उदीरताम् ऊर्ध्वं गच्छन्तु । अथ पुनर्ये परे द्युलोकमाश्रिताः तेऽप्युदीरताम् । तेषामप्यप्रत्यु-

पितरः

१ ग. इति । ना°. २ क. ४. व ट. त अ. ३ ग. ज यत°. ४ ट. सोऽपि° म्रि. ५ ग. ज कुरुध्वमिति, च. कुर्वन्त्विति वन्ति. ६ क. ख. ५ (१७), ठ ड °वति । इति निरुक्तभाष्ये पञ्चमध्याये सप्तदशः खण्ड:, ग. च. वर्जमितरेषु नास्ति. छ. त द. °वमुर्ना°. ८ छ त द °ध्यमको°. ९ छ. त. द. °ध्यमा°. १ क ख. ६ (१८), न. द. ६. ११ ग. इति । श°.

तिरन्तु मुच्यन्तां वा तदधिकारप्रक्षये । उन्मध्यमाः पितरो येऽपि मध्यमा मध्यस्थानाश्रयास्तेऽप्युदीरताम् उत्तमं लोकमाश्रयन्ताम् । सोम्यासः सोमसंपादिनः कर्मण्यङ्गभावमुपगच्छन्तो ये सोमं संपादयन्ति । किंप्रकाराः । असुं य ईयुः प्राणमात्रमूर्तयः अस्थूलविग्रहाः । अवृका अनमित्राः परं साम्यमुपगताः । ऋतज्ञाः यथावत्सत्यस्य वेदितारो यज्ञस्य वा । य एवमादिगुणयुक्ताः पितरस्ते अस्माकं अवन्तु नित्यम् आगच्छन्तु हवेषु आह्वानेष्वित्येतदाशास्महे ।

पितृणां कथं माध्यमिकत्वम्

'माध्यमिको यम इत्याहुः ' नैरुक्ताः । ' तस्मात्पितॄन्माध्यमिकान्मन्यन्ते ' स हि तेषां राजेति ।

अत उत्तरे ' अथर्वाणो (१३) भृगवः ' (१४) इत्येते पदे समाम्नाते । न चैतयोः समस्तयोः प्रत्येकं वा स्तुतिरस्ति । अस्ति तु पित्रङ्गिरोभृगुभिः साधारणा स्तुतिः । यतस्तदङ्गनिर्वचनाय प्रसङ्क्ष्यमाणानभिप्रेत्याथर्वशब्दनिर्वचनप्रसङ्गं ब्रवीति । ' आङ्गिरसो व्याख्याताः ' ( निरु० ३ । १७ ) येऽस्यामृचि वक्ष्यमाणाः । ' पितरो व्याख्याताः ' ( निरु० ४ । २१ ) । ' भृगवो व्याख्याताः ' ( निरु० ३ । १७ ) । ' अथर्वाणः ' कस्मात् । ते ह्येते ' अथनवन्तः ' । किमिदमथनं येन ते तद्वन्तः । यत आह । ' थर्वतिश्चरतिकर्मा ' गच्छत्यर्थः । ततः किम् । ' तत्प्रतिषेधः ' । पुरस्तादकारः । न थर्वन्तीत्यथर्वाणः । स्थिरप्रकृतयो हि ते । ' तेषामेषा साधारणा भवति ' अङ्गिरःप्रभृतीनाम् ॥ १८ ॥

---

अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः । तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ( ऋ० सं० १० । १४ । ६ ) ॥ अङ्गिरसो नः पितरो नवगतयो नवनीत-

१ ग. ज. °नो । तेषां°; च °नो । ~ तेषां° स नि. २ ग. ज. अस्ति पितृभृग्वङ्गिरोभिः सा°; च. अस्ति °पि° तु ३ क ख. घ. ट. ठ. ड °लक्षमा°, ग. ज. °सक्षमाणानभि, च. °सक्षमाणानभि° न. ४ घ. ट. °माणाः श्रा पि°, च. °माणाः पि° या, ठ. ड. °मागाया पि°. ५ क ख ३ ( १८ ), ट. ड. १८ खण्डः, ग. ज. चर्मिनेत्यङ्को नास्ति.

मतयो ऽथर्वाणो भृगवः सोम्याः सोमसंपादिनस्तेषां वयं सुमतौ कल्याण्यां मतौ यज्ञियानामपि चैषां भद्रे भन्दनीये भाजनवति वा कल्याणे मनसि स्यामेति माध्यमिको देवगण इति नैरुक्ताः पितर इत्याख्यानमथाप्यृषयः स्तूयन्ते ॥ १९ ॥

५

---

अङ्गिरसो नः पितर इति । यमस्यार्षम् । अङ्गिरसः अस्माकं सोमसंपादिनः नित्यं कल्याण्या मतौ वर्तन्ते । पितरश्च नवग्वाः नवगतयः पितृयज्ञानागन्तुं येषां प्रतिमासं नवा गतिर्भवति । 'नवनीतगतयो वा' । नवनीतं प्रति येषां मनसो गतिरिदमस्माकं भवति । नवग्वाः । विज्ञायते हि । 'स्वयं विलीनं पितृणाम्' (मैत्रा० सं० ३।६।२) इति । पितरश्चैवंलक्षणाः अथर्वाणश्च भृगवश्च य एते सोमसंपादिनः । अस्माकं कल्याण्या मतौ वयमपि तेषां सुमतौ कल्याण्या मतौ उपकारप्रवृत्तायां यज्ञियानां यज्ञसंपादिनां स्याम । अपि च । तेषां भद्रे भन्दनीये स्तुत्ये सौमनसे कल्याणे मनसि स्याम । 'भाजनवति वा' । येन मनसा भाजयन्त्यभिमतैरर्थैः स्तोतृंस्तस्मिन् शोभने च संकल्पे शोभने वा अध्यवसाये स्यामेत्यर्थः ।

अथर्वाणः

१०

'माध्यमिको देवगण इति नैरुक्ताः' । कथमेतेऽङ्गिरसो भृगवोऽथर्वाण इति स्तुत्युपपत्तेर्देवतापदमध्ये समाम्नानादेकैकं एषां देवगण इति नैरुक्ता मन्यन्ते । 'पितर इत्याख्यानम्' । को विशेषः । अग्न्यादिदेवतानां विपर्ययस्तद्धर्मदेवताप्रकार एवायं य एते पितरो नाम । त एव ऋभुसनत्कुमारादय इत्याख्यानविदः स्मरन्ति । असावपि मन्त्राणां विषय इत्युपेक्ष्यः । अपि च । देवगणा एत उत पितरः

अथर्वादयो माध्यमिको देवगण इति नैरुक्ताः

पितर इत्याख्यानम्

१५

२०

---

१ छ. त द. कल्याण्यां मतौ सुमतौ. २ छ. त. द. °ध्यमको. ३ क. ख. ७ (१९), त. द. ७ ४ ग. इति । य°; ठ. ड. न इति. ५ क. ख. घ. ट. ठ. ड. °र्षम् । त्रिष्टुप् । अ°; घ. °र्षम् । ॰ अ° त्रिष्टुप्. ६ क. ख. घ. ट. ठ. ड. 'कैकश ए'. ७ क. ख. घ ट. ठ. ड. °वतापद्विप°.

२८

अथवा एते ऋषयः स्युर्यस्मादेषय ऋग्वेदे स्तूयन्ते

इति कुतो विचारः । ऋभवोऽङ्गिरसो भृगव इत्येवमादीनामभिधानानामृषिषु प्रसिद्धेः । 'अथापि' इदमपरं कारणमृषय एवैत इति यतोऽन्येऽपि 'ऋषयो' हि 'स्तूयन्ते' ।

५ तद्यथा । वसिष्ठाः ॥ १९ ॥

---

**सूर्यस्येव वक्षथो ज्योतिरेषां समुद्रस्येव महिमा गभीरः । वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा अन्वेतवे वः ( ऋ० सं० ७ । ३३ । ८ ) ॥ इति यथा आप्त्या आप्नोतेस्तेषामेष निपातो भवत्यैन्द्र्यामृचि ॥ २० ॥**

१०

---

सूर्यस्येव वक्षथ इति । इन्द्रस्यार्षम । यथा सूर्यस्य दीप्तिरवभासिका

अस्यामृचि वसिष्ठाः स्तूयन्ते

अर्थानाम् एवम् एषां वसिष्ठानां वक्षथो वचनस्य दीप्तिरविदर्वादिगतानामर्थानामसंदेहेनावभासिका वान्येऽर्थे । अपि च । न केवलमेवामसंदिग्धार्थानि वचांसि गम्भीराणि च महार्थवन्ति गम्भीरार्थतया

१५

दुरवगाहानि । यत आह । समुद्रस्येव महिमा गभीरः । यथोदकमपारिमेयं समुद्रे एवमपारिमेयार्थानि । सन्त्यपि च महार्थवन्ति नैते विलम्बितस्तुतयः । किं तर्हि । वातस्येव प्रजवः । प्रकृष्टो जवः आशुप्रतिपत्तिः । तुष्टूपता वर्णादेव वयेत् निर्मलमनोवाग्वृत्ति शब्दार्थावसङ्गेन प्रतिपद्येते । अपि च ।

२०

एवमतिमहानुभावा एते नैतेषामन्यः स्तोता वचनपदवीमनुगन्तु शक्तः । यतो ब्रवीमि । नान्येन केनचित्स्तोत्रा हे वसिष्ठाः । प्रत्यक्षाकृत्योत्तरेण पादेन ब्रवीति । एष स्तोम इयं स्तुतिर्भावत्की असंदिग्धार्था गम्भीरा विलम्बिता च नान्येनान्वेतवे नानुगन्तुमन्येन शक्या । क एनामनुकरिष्यतीति स्तुतिपरितुष्ट इन्द्रो वसिष्ठानस्तौत् ।

---

१ क. ख ७ ( १२ ), ठ. ड. °सिष्ठा. । इति निरुक्तभाष्ये पञ्चमाध्याये १५ खण्डे; ग. च. वर्जमितरेष्वङ्को नास्ति. २ क. ख. ८ ( २ ); न. द ८. ३ ग. इति । इ; ठ. ड. सूयस्तीति. ४ ग. च. ज. °नामेषा ५ ग. ज. °विद्वा°. ६ व. ट. ठ ड नास्ति. ७ ग. ख. ज °र्भावत्की.

२५

एवमृषयोऽपि स्तूयन्त इति प्रदर्शयत्ययमप्यस्तीति मन्त्राणां विषय इति ।

अपरे पुनः । सूर्यस्येव वक्षथः सूर्यतेजःसमानदीप्तरस एते वसिष्ठास्तेजस्विनः समुद्रोपमगम्भीरस्वभावाश्च शीघ्रगतयश्च सर्वत्राप्रतिहतजवाः । नैषामन्येन गतिरनुगन्तुं शक्येति वर्णयन्ति । 5

अन्येषां मते ऋचोऽन्योऽर्थः

'आप्त्याः' (१५) अपीन्द्रसहचारेण ऋषय एकतद्वितत्रिताः । 'ते इन्द्रेण सह चेरुः' इति विज्ञायते (शत० ब्रा० १ । २ । ३ । २)। अम्बादयोऽप्येतस्मादेव दर्शनाद्दिवि पक्षे मध्यस्थानाः । ते कस्मात् । 'आप्नोतेः'। आप्नुवन्ति हि ते स्तुतिभिः स्तुत्यान् । तेषामेव निपातो भवत्यैन्द्र्यामृचि' इन्द्रो यस्यां स्तूयते तस्यामृचि[1] ॥ २० ॥ 10

आप्त्याः कस्मात्

---

स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम् । आ दर्षते शवसा सप्त दानून्प्र साक्षते प्रतिमानानि भूरि (ऋ० सं० १० । १२० । ६)॥ स्तोतव्यं बहुरूपमुरुभूतमीश्वरतममाप्तव्यमाप्तव्यानामाद्दणाति यः शवसा बलेन सप्त दातृनिति वा सप्त दानवानिति वा प्रसाक्षते प्रतिमानानि बहूनि साश्नोतिराप्नोतिकर्मा[2] ॥ २१ ॥ 15

एकादशाध्यायस्य[3] द्वितीयः पादः ॥ 20

---

स्तुषेय्यं पुरुवर्पसमिति[4] । बृहद्दिवस्यार्षम् । महाव्रते विनियोगः (ऐ० आ० ५ । १ । ६)। स्तुषेय्यं स्तोतव्यम् अहं स्तौमीन्द्रम् । किंलक्षणम् । पुरुवर्पसं बहुरूपम् ऋभ्वम् उरुभूतम् इनतमम् ईश्वरतमम् आप्त्यम् आप्त्यानामृषीणां स्तुति-

आप्त्याः

---

१ क. ख. ८ (२०), ठ. ड. °मृचि । इति निरुक्तभाष्ये पञ्चमाध्याये विंशतिः खण्डः; ग. च. वर्जयित्वेत्थन्नं नास्ति २ क. ख. ९ (२१); त. द. ९. ३ छ. द्विती'; त. इति एकादशमोध्याये द्वि°; द एकादशमाध्या°; ङ. थ. ध. ठ. ड. 'एका० पादः' नास्ति ४ ग. °मिति । बृ°. 25

भिरतिशयेन आदृत्यम् । आदर्शने आदृणाति यः शवसा बलेन आदार-
यति । किम् । सप्त दानून् सप्त दानून् मेघान् । असुरान् दानवान् ।
नमुचिप्रभृतीन्पृथक्त्वपक्षे । केन । शवसा बलेन । प्रमाक्षने च य
आप्नोत्यभिभवति च प्रतिमानानि भूरि बहून्यपि । तदुक्तम् । 'येनैनं
५ प्रतिमिमते नैन तानि दम्नुवन्ति' ( निरु० ५ । १२ ) इति ।
'माक्षतिराप्नोतिकर्मा' ॥ २१ ॥

षोडशस्य द्वितीयः पादः ।

---

तृतीयः पादः ।

१० **अथातो मध्यस्थानाः स्त्रियस्तासामदितिः प्रथमागामिनी भवत्यदितिर्व्याख्याता तस्या एषा भवति ॥ २२ ॥**

---

'अथातो मध्यस्थानाः स्त्रियः' । बहुवचनविशिष्टस्य मध्यमस्य

मध्यस्थानाः स्त्रियः: गणशोऽवस्थितस्य विभवो व्याख्यातः । लिङ्ग-
१५ विशिष्टस्येदानीं यथासमाम्नायमेव व्याख्यातव्यः ।

तदर्थं पुनर्विशेषतोऽधिकारवचनम् 'अथातः' इति । मध्यम् आसां
स्थानमिति 'मध्यस्थानाः' इति । ताः पुनस्ताः । स्त्रियः इति ।
वक्ष्यन्त इति शेषः । 'तासामदितिः (१६) प्रथमागामिनी भवति' ।
सा कस्मात् । उक्तं हि 'अदितिर्देवमाता' ( निरु० ४ । २२ )
२० इति । 'तस्या एषा भवति' ॥ २२ ॥

---

१ ग. ज. सप्तद्वा सप्त सप्त°. २ क. ख. घ. ट. ठ. ड. °रान्वा दा°. ३ च. 'न वाने' न्वा. ४ क. ख. १ (२१); ठ. ड. °कर्मा । इति निरुक्तभाष्ये पञ्चमाध्याये एकविंशतिः खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ५ घ. ट. षोडशाध्यायस्य द्वि°, ठ. ड. इति निरुक्तभाष्ये निरुक्तपञ्चमाध्यायेन सह षोडशाध्यायस्य द्वितीयः पादः. ६ क. ख. १ (२२), त. द. १. ७ च. मध्य°मा° म. ८ क. ख. १ (२२); ठ. ड. °इति । इति निरुक्तभाष्ये द्वाविंशतिः खण्डः; ग. २८ घ. वर्जमितरेष्वङ्को नास्ति.

दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवाससि।
अतूर्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु (ऋ० सं० १०।६४।५)॥ दक्षस्य वादिते जन्मनि व्रते कर्मणि राजानौ मित्रावरुणौ परिचरसि विवासतिः परिचर्यायां हविष्मां आविवासतीत्याशास्तेऽतूर्तपन्था अत्वरमाणपन्था बहुरथोऽर्यमादित्योऽरीन्नियच्छति सप्तहोता सप्तास्मै रश्मयो रसानभिसंनामयन्ति सप्तैनमृषयः स्तुवन्तीति वा विषमरूपेषु जन्मसु कर्मसूदयेष्वादित्यो दक्ष इत्याहुरादित्यमध्ये च स्तुतोऽदितिर्दाक्षायणी। अदितेर्दक्षो अजायत दक्षाद्वदितिः परीति च। तत्कथमुपपद्येत समानजन्मानौ स्यातामित्यपि वा देवधर्मेणेतरेतरजन्मानौ स्यातामितरेतरप्रकृती अग्निरप्यदितिरुच्यते तस्यैषा भवति॥ २३॥

---

दक्षस्य वादित इति। गयस्यार्षम्। वैश्वदेवे शस्यते। अहोरात्रे मित्रावरुणौ। तयोर्या सन्धिवेला तस्यां प्रथममवश्यायस्यानुप्रदानसंबन्धात्तां मध्यमामदितिमभिप्रेत्योच्यते। (अदितिः) दक्षस्य वादिते इति। 'वा'शब्दः किमर्थः। यदा आदित्यस्त्वत्तो जातस्त्वं वा आदित्यात्। सन्धेः ह्यनन्तरं ह्यादित्यस्योदयो जन्म। तदेवास्य व्रतं कर्म। तदुक्तम्। 'कर्मजन्मतः' (निरु० ७।५) इति। अथ तदेवं दक्षस्य जन्मनि उदये चावर्तिन्यादित्ये यतो वा लब्धात्मिका त्वम् अपि अहोरात्रे उभे विवाससि परिचरसि सर्वतो व्याप्नोषि। अर्धेनाहर्व्याप्नोषि मित्रम् अर्धेन च रात्रिं वरुणम्। राजानौ सर्वलोकेश्वरौ स्वाधिकारयुक्तास्थितिकर्तव्यतामु तदधीनत्वात्प्रवृत्तेरिति। किंलक्षणो यो दक्षस्तस्य जन्मनीति। यत आह। अतूर्तपन्थाः योऽयमादित्यः अत्वरमाणपन्थाः अत्वरमाणः पथि वर्तते नियतगतिः प्रतिमुहूर्तं प्रत्यहं च। पुरुरथः बहुरंहणः अर्यमा अरीणां तमसां नियन्ता। सप्तहोता। सप्तास्मै रश्मयो रसानभिसंनामयन्ति। तदस्य सप्तहोतृत्वम्। 'सप्तैनमृषय आह्वयन्ति'

---

१ छ. त. द. कर्मणि व्रते. २ क. ख. र (२३); त. द २. ३ ग. इति। ग°. ४ ग. ज. तस्याः प्रथमस्यायस्य°, ५ च. ड. °न्धाता. ६ क. ख. ग. ज. ढ. ट. ठ. ड. यदा दक्ष आदि°, च. यदा दित्य° दक्ष आ.

नमन्ति स्तुवन्ति वसिष्ठ्यास्तद्वास्य समहे तृत्वम । विषमरूपेषु जन्मसु ।
विषमरूपेषु । अन्यस्मिंश्चान्यस्मिंश्च नभसः प्रदेशे अयमुदेति मण्डलान्तरं
हित्वा दक्षिणोत्तरायणयोः । तदस्य विषमरूपत्वं विषमजन्मता । ततो
लब्धात्मिका तं वा जनयन्ती या त्वमेतौ मित्रावरुणौ परिचरसि सा
५ त्वमिद नामास्माकं कुरुष्वेत्येतदाशास्महे इति समस्तार्थः ।

अथवा । दक्षस्य वा । यदा दक्षस्त्वत्तो जातो वो च कर्मणि प्रवृत्तः

ऋचोऽन्योऽर्थः स्वाधिकारयुक्तोऽयम् अनुतपन्थाः पुत्रथो अर्यमा सहहोता विषेरूपेषु जन्मसु । य एव
वर्तते भगवानादित्योऽथ तदा मित्रावरुणौ विवासस्यागास्से समैतावपि पुत्रत्वे
१० लोकप्रकाशित्वेन सम्यग्वर्तेयाता यथैव दक्ष इत्येतिहासिकपक्षे योजना ।

'विवासतिः परिचरणायाम्' इत्यत्र निगमः । 'हविष्मां आविवासति' ।

'यो अग्निं देववीतये हविष्माँ आविवासति । तस्मै पावक मृळय'

अस्यामृचि विवासतिः परिचर्यायाम् ( ऋ० सं० १ । १२ । ९ ) ॥ मेधातिथेरार्षम् । गार्हपत्यानुगमने पूर्णाहुतिरनया हूयते
१५ ( आश्व० श्रौ० ३ । १३ ) । हे पावक
अग्ने देववीतये देवयोजनाय हविष्मान् हविःसम्प्रयुक्तो यस्त्वाम् आविवासति परिचरति तस्मै मृळय उपदयां रक्षां कुर्वित्येतदाशास्महे ।

'आदित्यो दक्ष इत्याहुः' देवतामतत्त्वविदः । केन दर्शनेन ।
२० दक्ष आदित्यो यस्मादादित्यानां मध्ये स्तुतः 'आदित्यमध्ये च स्तुतः' । चशब्दो हेत्वर्थः । यस्मादादित्यमध्ये स्तुतः । स्तुतिर्प्रामाणिका हि ते देवतामतत्त्वचिन्तां प्रति । कथमादित्यमध्ये स्तुत इति । 'इमा गिरः' ( ऋ० मं० २ ।
२७ । १ ) इत्युपक्रम्य ब्रवीति 'तुविजातो वरुणो दक्षो अंशः'
२५ ( ऋ० मं० २ । २७ । १ ) इति आदित्यमध्ये स्तुतेरादित्य एवासाविति ।

---

१ क. ख. घ. ट. ठ. ड. 'विषरू°; च. विषेम° पु. २ क. ख. घ. ट. ठ. ड. °न्तरं मण्डलान्तरं हि°; च. °न्तरं म° °ण्डलान्तरं. ३ क. ख. घ. ट. ठ. ड. °रथो० जन्मसु. ४ ग. ज. विषमरू°. ५ ग. यो अग्निं देववीतये० मृळय; घ. च. यो अग्निं० मृळय, ट. यो अग्नि० मृळय. ६ ज मृळय. ७ ग. घ. च. ज. मृळय. ८ च. °स्तुतिर्प्रमा° प्रा.

यद्येवं नन्विदमपरं विरुध्यते यदैतिहासिका आहुः 'अदितिर्दाक्षायणी' इति । उभयमपि चैतन्निगमे श्रूयत आदित्यो दक्षो दाक्षायणश्चादितिरिति । तद्यथा । 'अदितेर्दक्षो अजायत दक्षाद्वदितिः परि । भूर्जज्ञ उत्तानपदो भुव आशा अजायन्त' ( ऋ० सं० १० । ७२ । ४ ) ॥ अदितेर्दाक्षायण्या आर्षम् । उत्तानपद्राजा कश्चित्पुराणेऽपि स्मर्यते । ततस्तावद्भूर्नाम कश्चिज्जज्ञे । ततोऽपि भुव आशा दिशः अजायन्त । विश्वजननभावमसौ कथमपि बिभर्ति देवताजन्मप्रतिक्रियया वा । अदितेर्दक्षो अजायत प्रादुर्बभूव । दक्षाच्च परि अधि सकाशात् अदितिः प्रादुर्बभूव ।

'तत्' इतरेतरविरुद्धं 'कथमुपपद्येत'। यतः प्रतिसमाधानं ब्रवीति । 'समानजन्मानौ स्यातामिति'। समनन्तरजन्मानौ समानजन्मानौ यथोपवर्णितं मन्त्रे । 'दक्षस्य वादिते' इत्यत्र । 'अपि वा देवधर्मेण'। महदात्मनादितिमपेक्ष्य तस्याः कारणत्वं च कार्यत्वं च दक्षस्य । अथवा । महदात्मना दक्षमपेक्ष्यादितेः कार्यत्वम् । एवं कृत्वोक्तम् 'इतरेतरजन्मानावितरेतरप्रकृती' इति ।

अदितेर्दक्षोऽजायत दक्षाच्चादितिरिति कथमुपपद्येत

अधुना व्यभिचारं दर्शयति । 'अग्निरप्यदितिरुच्यते' इति । 'तस्य' अग्नेरदितिशब्दवाच्यत्वे 'एषा भवति' ॥ २३ ॥

---

यस्मै त्वं सुद्रविणो ददाशोऽनागास्त्वमदिते सर्वताता । यं भद्रेण शवसा चोदयासि प्रजावता राधसा ते स्याम ( ऋ० सं० १ । ९४ । १५ ) ॥ यस्मै त्वं सुद्रविणो ददास्यनागास्त्वमनपराधस्त्वमदिते सर्वासु कर्मततिष्वाग आङ्पूर्वाद्गमेरेन एनः किल्बिषं किल्भिदं सुकृतकर्मणो भयं कीर्तिमस्य भिनत्तीति वा यं भद्रेण

१ ग. ज. तद् ° २ क. ख घ. ट चैतस्मिन्नि° ३ च. °था । अदितेर्दाक्षा० अदितेर्दक्ष इत्यादि, ठ. ड. 'भूर्जज्ञ' इति पूर्वार्धे यथा संहितायाम्. ४ ग. परि ॥ भू. ५ ग. ज. दक्षाद्वरि°. ६ ग. च. ज. °कृती त इति ७ क. ख. २ (२३), ग ह °वति । इति निरुक्तभाष्ये उत्तरषट्के पञ्चमाध्याये त्रयोविंशतिः खण्डः ; ग. च. वर्जमितरेष्वङ्को नास्ति. ८ छ. त. द °वृशोना°, क. द्वाश्यना°. ९ छ. त. द. °राधित्व°. १० छ. °कर्माणो°.

शवसा बलेन चोदयसि प्रजावता च राधसा धनेन ते वयमिह स्यामेति सरमा सरणात्तस्या एषा भवति ॥ २४ ॥

---

यस्मै त्वं सुद्रविण इति । कुत्सस्यार्षम् । प्रातरनुवाके विनियोगः

५ अस्यामृचि अग्निरदितिः: ( आश्व० श्रौ० ४ । १३ ) । हे सुद्रविणः सुधन अदिते अग्ने यस्मै त्व ददाशः ददासि । किमिति । अनागास्त्वम अनपराधत्व सर्वताता सर्वासु कर्मततिषु इष्टिपशुसोमलक्षणासु अवैगुण्यं करोषि । यं भद्रेण शवसा बलेन स्वजात्यविरोधिना प्रजावता च राधसा प्रजासंयुक्तेन च धनेन त्वं

१० चोदयसि अनुगृह्णासि । ते वयमेवानुगृह्यास्तव स्यामेत्येतदाशास्महे ।

' [illegible] इरु [illegible] ' । [illegible] गच्छति कर्तारमित्यागः । प्रसङ्गादाह । ' एन एतेः ' । तदप्येवमेवावश्यमेवैति । यदेतत् ' किल्बिषम् ' एतत ' कीर्तिं भिनत्ति ' ।

' सरमा ' ( १७ ) देवशुन्यैतिहासिकपक्षेण । माध्यमिका वाङ्नैरुक्तपक्षेण । सा कस्मात । ' सरणात ' गमनात् । ' तस्या एषा भवति ' ॥ २४ ॥

१५ सरमा कस्मात्

---

किमिच्छन्ती सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः पराचैः । कास्मेहितिः का परितक्म्यासीत्कथं रसाया अतरः पयांसि ( ऋ० सं० १० । १०८ । १ ) ॥ किमिच्छन्ती सरमेदं प्रानट्

२० दूरे ह्यध्वा जगुरिर्जङ्गम्यतेः पराञ्चनैरञ्चितः का तेऽस्मास्वर्थहितिरासीत्किं परितकनं परितक्म्या रात्रिः परित एनां तक्म तक्मेत्युष्णनाम इति सतः कथं रसाया अतरः पयांसीति रसा नदी रसतेः शब्दकर्मणः कथंरसानि तान्युदकानीति वा

१ छ. त द. °धसा ते. २ क. ख. ३ (२५), त. द. ३. ३ ग. इति । कु°; ठ. ड. यस्मै त्वमिति. ४ क. ख. घ ट. ठ ड. य च भ°. ५ ग. ज. यं चो°; घ. °न चो° त्व. ६ ग. ज तद°, च. तदे° घ. ७ क. ख. २ ( २४ ), ठ. ड. °वति । इति निरुक्तभाष्ये पञ्चमाध्याये २४ खण्ड, ग. च. वर्मामितेरष्टमी

२१ नास्ति. ८ छ. प्रापद; त. द. प्रापत्.

**देवशुनीन्द्रेण प्रहिता पणिभिरसुरैः समूद इत्याख्यानं सरस्वती व्याख्याता तस्या एषा भवति ॥ २५ ॥**

---

किमिच्छन्तीति[3] । देवपणयः किलासुराः देवगवीरपजह्रुः । ततः किलेन्द्रस्तदन्वेषणाय तदाख्यं सरमां प्राहिणोत् । ते च देवपणयस्तां दृष्ट्वा पप्रच्छुरनयर्चा 'किमिच्छन्ती सरमा' इति । इदमस्मन्निवासस्थानं सरमा किमिच्छन्ती किमस्मत्तः प्रार्थयन्ती प्रानट् प्राप्तवती कदाचिदप्यनागतपूर्वेति । अपि च । दूरे ह्यध्वा । महदेतदध्वान न यदृच्छया शक्यमागन्तुम् । य एव जगुरिः स्यात् भूमिगन्ता स एव शक्त आगन्तुम् । परं च परस्तादनैरचितं परः कुतो अश्वैर्गमनैः अचिता गतो विप्रकृष्टो देवानामन्तात् । को नो भूमः । हे सरमे कास्मेहितिः । का तव अस्मास्वर्थोहितिः अर्थस्थापनम् । कोऽस्मत्तोऽर्थस्तव प्राप्तव्योऽभिमत आसीद्येनायमतिमहानध्वा व्यवसित आगन्तुम् । कौ परितक्म्यासीत् । किं परितक्म् । अपि सुखा रात्रिः अन्तरा तवासीत् । परितक्म्या रात्रिः । 'तक्मेत्युष्णनाम' तकतेर्गत्यर्थस्य । सर्वतो हि तद्गतं भवति । तदेनामुभयतः परिगृह्य वर्तते इति परितक्म्या रात्रिः । अपि च । कथं रसाया अतरः पयांसि । रसा नाम नदी अध्यर्धयोजनविस्तारा । तस्याः पयांस्यतिदुस्तराणि कथमतरः कथं तीर्णवत्यसि । अथवा । कथं रमाणि तान्युदकानि । अपि नाम स्वादूनि । अपि श्रान्तायास्तवान्तरा वासाः क्षेष्वासन्निति ।

सरमा

'देवशुनीन्द्रेण प्रहिता' इति निदानप्रख्यानं मन्त्रार्थाभिव्यक्तये । समूदे संवादं कृतवतीत्यर्थः । इत्याख्यानविद एवं मन्यन्ते ।

वाक्पक्षे तु चिरकालीनवृष्ट्युपरमे कदाचिदभिनवमेवमं वे सहसैव स्तनयित्नुमुपश्रुत्य कुतो इयं माध्यमिका वाक् चिरेणागमेति विस्मितस्तामभूयन्निव ब्रवीति 'किमिच्छन्ती सरमा' इति । इदमस्मच्छेत्रं चिरमनागम्य

वाक्पक्षे ऋचोऽर्थः

1 छ. स्मू मु 2 क ख. ४ (२५), त. द. २४ 3 ग. °न्तीति । दे°. 4 क. ख. व ट. ठ. ड. °स्यभिया°. 5 क. ख. व. ट. ठ. ड. अपि च । का°; च. ४ का° अपि च 6 च. °तवमां° कथा 7 क. ख. व. ट ट. ड. अपि नाम गु°; च अपि ४ सु° नाम. 8 क ख. व ट. ठ ड. अन्तरा; च. अन्त° न. 9 च °तवमा.

सरमा माध्यमिका वाक् किमिच्छन्ती प्रानट् प्राप्तवती । अपि च । दूरे ह्यध्वा । चिरकालश्चेयमस्माभिः । जगुरि. भृशं यो गन्ता स्यात्सा चिरविच्छिन्नमेतद्वर्त्म पुनरागच्छेत् । पतनुयात्संर. चैः पेर ङ्मुवैः एतदचिन्त्यम् । चिरनष्टमित्यर्थः । अपि च । क ऽऽहितिः । किमस्मोस्वर्थाभिधानमासीत्पूर्वं तव हे सरमे येनागमः । किं वा न जातं येनापुनरागमः । अपि च । चिरप्रोषितायास्तव किं परितकनमासीत् । अन्तरिक्षनद्या अपि महत्या रसायाः कथमतरः पयासि । कथमतिबहून्युदकानि संक्षोभ्यात्मानं प्रतिलब्धवत्यसि । 'वाग्वै सरमा' ( मैत्रा० सं० ४ । ६ । ४ ) इति हि विज्ञायते ।

सरस्वती ( १८ ) व्याख्याता नदीवत् ( निरु० २ । २३ ) इति । 'तद्यद्देवतावत्' इत्युक्तमिदं तत् । 'तस्या एषा भवति' ॥ २५ ॥

---

**पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ( ऋ० सं० १ । ३ । १० ) ॥ पावका नः सरस्वत्यन्नैरन्नवती यज्ञं वष्टु धियावसुः कर्मवसुस्तस्या एषापरा भवति ॥ २६ ॥**

---

पावका नः सरस्वतीति । मधुच्छन्दस आर्षम् । प्रउगे विनियोगः

सरस्वती ( आश्व० श्रौ० २ । ८ ) । सारस्वते हविषि च ( मैत्रा० सं० २ । १ । ७ ॥ २ । ५ । २ ॥ २ । ५ । ४ ॥ ४ । ७ । ८ ) । पावका प्रक्षालयन्त्युदकेन । का पुनरसाविति । सरस्वती माध्यमिका वाक् । वाजेभिर्वाजिनीवती । अन्नेन हविषोदकेन वा तद्वती । यज्ञमेतमस्माकं वाजेभिः अन्नैः युक्तं वष्टु कामयताम् । अथवा । ऋगादिभावमापन्ना देवान्प्रति वहतु । वक्ष्यति हि ' । विश्वरूपाः पशवो वदन्ति ' ( निरु० ११ । २९ ) इति । धियावसुः कर्मधना । 'तस्या एषा अपरा भवति' स्फुटतरोदकलिङ्गा ॥ २६ ॥

---

१ ग. ज प्राङ्क्रम्. २ ग ज. 'मस्मत्स्वर्था°, च. 'मस्मैत्स्वर्था स्मास्व ३ क ख. घ. ट. ठ ड च. °वत्यसीति वा । व.. ४ ग. च. २५. क. ख. ४ (२५). ठ. ड. वा । इति निरुक्तभाष्ये ५ ध्याये १५ खण्डः; ग च. वर्जमितर व्यङ्को नास्ति. ५ . . ५ / २ ). त ड. १५ ६ ग इति । म ; ठ ड. पावका म इति ७ क. ख. घ. ट. ठ. ड. सारस्वते च हविषि च °स्वतन्ह° च. ८ क ख. ५ ( २६ ). ठ. ड. °वति । इति निरुक्तभाष्ये ५ ध्याये २६ खण्ड., ग. च. वर्जमितरेष्वङ्को नास्ति.

महो अर्णः सरस्वती प्र चेतयति केतुना । धियो विश्वा वि रा॰जति ( ऋ० सं० १ । ३ । १२ ) ॥ महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्मणा प्रज्ञया वेमानि च सर्वाणि प्रज्ञानान्यभिविराजति वागर्थेषु विधीयते तस्मान्माध्यमिकां वाचं मन्यन्ते वाग्व्याख्याता तस्या एषा भवति ॥ २७ ॥ ५

---

महो अर्ण· सरस्वतीति । पूर्ववदार्षं[3] विनियोगश्च । महो अर्णो महदुदकं सरस्वती माध्यमिका वाक् । किं करोति । प्रचेतयति प्रज्ञापयति आविःकरोति वर्षभावेन । केन पुनराविःकरोति । केतुना स्वेन कर्मणा प्रज्ञया वा । न ह्यप्रज्ञानवत्यबलिष्ठा चैनच्छक्ता कर्तुम् । एवं चोदकमाविःकुर्वती धियो विश्वा विराजति । सर्वाणि प्रज्ञानान्यभिविराजति । कथम् । उदकादन्नमन्नात्प्रज्ञानमित्येवं सर्वप्रज्ञानानामसावीष्ट इति । १०

सैव सरस्वती

'वागर्थेषु विधीयते' इत्युपपत्तिवचनम । के पुनर्वाचोऽर्थाः । 'चतस्र ऊर्जं दुदुहे पयांसि' ( निरु० ११ । २८ ) इत्येवमादय उदकविकारलक्षणाः । तांश्चयमपि सरस्वती विधीयते 'महो अर्णः' इत्येवमादिषु । 'तस्मान्माध्यमिकां वाचं मन्यते' नैरुक्ताः । १५

सरस्वती माध्यमिका वाक्

'वाक्' (१९) वक्तव्या । सा पुनः 'व्याख्याता' 'वचेः'[4] ( निरु० २ । २३ ) इति । 'तस्या एषा भवति' ॥ २७ ॥ २०

---

यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा । चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम ( ऋ० सं० ८ । १०० । १० ) ॥ यद्वाग्वदन्त्यविचेतनान्यविज्ञातानि राष्ट्री देवानां निषसाद मन्द्रा मदना चतस्रोऽनु दिश ऊर्जं दुदुहे पया·

---

१ छ. त. द. °णि भूतान्यभि°. २ क. ख. ६(२१).त. द. ६. ३ ग. °तीति । पू°. ४ क. ख. ६ (१७), ठ ड. °वति' इति निरुक्तभाष्ये ५ ध्याये २७ खण्डः; ग. च. सर्जामित्येतत् नास्ति. २८

**सि क्व स्विदस्याः परमं जगामेति यत्पृथ्वीं गच्छतीति वा यदादित्यरश्मयो हरन्तीति वा तस्या एषापरा भवति ॥ २८ ॥**

---

यद्वाग्वदन्तीति । नेमस्यार्षम् । सारस्वते पशौ विनियोगः ( आश्व० श्रौ० ३ । ८ ) । यदा माध्यमिका वाग्वदन्ती वाक् निचयन्ती । कानि । अविचेतनानि अविज्ञातार्थानि शब्दरूपाणि स्तनयित्नुलक्षणानि । राष्ट्री ईश्वरी माध्यमिकानां देवतानाम् । निषसाद निषीदति व्याप्नोति आत्मानं वर्षकर्मणि मन्द्रा मदना हर्षकरी तर्पयित्री वा लोकस्य । अथ तदा । किमिति । चतस्र ऊर्जं दुदुहे पयांसि । चतस्रो दिशः प्रति अनुदिशश्च दुदुहे दुग्धे प्रक्षरति ऊर्जम् अन्नं पयांसि उदकानि । तेषां च पयसां क्व स्विदस्याः परमं जगाम । केन निष्पादितः पर्यागच्छन्ति कुतो वा प्रतिसंवत्सरं पुनरागच्छन्तीति कस्तत्त्वं जगाम जानाति यानि पृथिव्यामवतिष्ठन्ते यानि वादित्यरश्मयो हरन्तीति एवमनुपक्षीणपयस्कैयमिति श्रूयते ।

' तस्या एषापरा भवति ' । सा पुनः किमर्थम् । इयमेव वाक्संप्रापयन्तर्गता माध्यमिका सर्वार्थाभिवादिनी भवतीति विभूत्युपप्रदर्शनार्थम् ॥ २८ ॥

---

**देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ( ऋ० सं० ८ । १०० । ११ ) ॥ देवीं वाचमजनयन्त देवास्तां सर्वरूपाः**

---

१ क. ख. ७ (२८), ठ. ड. ७. २ ग. °न्तीति । नि°. ३ क. ख. घ. ट. °चयन्ती, च. °चर्न्ती य; ठ. ड. प्रज्ञापयन्ती. ४ ग. ज. °ग या माध्य°; च. °ग माध्य° या, ठ. ड. °श्वरी माध्य°. ५ ग. ज. °यितृ, च. °यितृ० त्री. ६ ग. ज. °र्गति पथा, च. °रति पथा ऊर्जमन्न. ७ क. ख. घ. ट. ठ. ड. केन नि नि°. ८ ग. ज. जानाति जगाम, घ. ट. ठ. ड. जगाम जजान । यानि°, च. जानाति. जगाम ९ क. ख. घ. ट. ठ. ड. वादि°, च. वादि° वा. १० ग. ज. °मिति नियम्यते. ११ क. ख. ७ ( २८ ), ठ. ड. °नार्थम् । इति निरुक्तभाष्ये ऽध्याये २८ खण्डः, ग. ज. वर्जमितोऽग्रेऽपि नास्ति.

पशवो वदन्ति व्यक्तवाचश्चाव्यक्तवाचश्च सा नो मदेनान्नं च रसं च दुहाना धेनुर्वागस्मानुपैतु सुष्टुतानुमती राकेति देवपत्न्याविति नैरुक्ताः पौर्णमास्याविति याज्ञिका या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राकेति विज्ञायतेऽनुमतिरनुमननात्तस्या[1] एषा भवति ॥ २९ ॥ ५

---

देवीं वाचमजनयन्तेति[3] । तदेवार्षम्[4] । देवीं दात्रीमुदकानां या वाचम् अजनयन्त माध्यमिका देवास्तामेवैता यथाभिमतार्थाभिधायिका विश्वरूपाः सर्वरूपाः पशवो वदन्ति[5] व्यक्तवाचश्चाव्यक्तवाचश्च । व्यक्तवाचो मनुष्यादयोऽव्यक्तवाचो गवादयः । यैवं सर्वपशुभिरुच्यते सा नः सास्माकं मन्द्रा मदना इषं[6] चोर्जं च दुहाना प्रक्षरन्ती धेनुः तर्पयित्री वागस्मानुपैतु सुष्टुते[7]स्येतदाशास्महे । १०

वागेव

'अनुमती राकेति देवपत्न्याविति नैरुक्ताः' । सह पदयोरुपन्यासस्तुल्योऽनययोरभिधेयविचार इति । मध्यस्थाने देवपत्न्याविति निर्ज्ञाते तदभिधाने इति नैरुक्ताः । पौर्णमास्याविति याज्ञिकाः । ते च ब्राह्मणमुदाहरन्ति 'या पूर्वा पौर्णमासी' ( ऐ० ब्रा० ३२ । ९ ) इत्येवमादि । कालाधिदैवते चन्द्रमहचारिण्याविति मध्यस्थाने । पौर्णमास्यमावास्ययोर्नक्षत्रेष्टकामध्य उपधानात् ( तै० सं० ३ । ५ । १ ॥ ४ । ४ । १० ) नक्षत्रत्वम् । अतश्च प्रदर्शनात्सर्व एवायं ज्योतिर्गणो ग्रहनक्षत्रतारकारूपो रसप्रायो मूर्तिमाप्नुवन्मध्यस्थान एवेति लक्ष्यते । १५ २०

अनुमतिः राका च देवपत्न्यौ इति नैरुक्ताः
पौर्णमास्यौ इति याज्ञिकाः

'अनुमतिः ( २० ) अनुमननात्' । अनुमता किलेयमृषिभिर्देवै-

---

१ छ. त. द. मनना°. २ क. ख. ८ ( २९ ); त. द. ९. ३ ग. °न्तेति। त°, ठ. ड. वाचमिति. ४ ग. ज. दात्तम्°; च. दात्तम्° श्री. ५ क. ख. घ. ट. ठ. ड. °न्ति तत्पूर्वकत्वाद्वागप्रवृत्तेः. ६ क ख. घ. ट. ठ. ड. इषम् अन्नं पयोघृतादिरूपं रसं च ऊ°; च. इषं° वा° अन्नं पयोघृतादिरूपं रसं. ७ क. ख. घ. ठ. ट. ड. सुष्टु स्तुते°; च. सुष्टु स्तुते. ८ ग. ज. ब्रह्म°. २१

अनुमतिः कस्मात् चातुर्दशके पक्षेऽस्त्वियं पौर्णमासीति । 'तस्या एषा भवति' ॥ २९ ॥

अन्विदनुमते त्वं मन्यासै शं च नस्कृधि । क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषः ( तै० सं० ३ । ३ । ११ ) ॥ अनुमन्यस्वानुमते त्वं सुखं च नः कुर्वन्नं च नोऽपत्याय धेहि प्रवर्धय च न आयू राका रातेर्दानकर्मणस्तस्या एषा भवति ॥ ३० ॥

अन्विदनुमत इति । वामदेवस्यार्षम् । देविकासु विनियोगः ( मैत्रा० सं० ४ । ६ । ४ ) । हे अनुमते त्वम् अनुमन्यासै अनुमन्यस्व अस्माकं यदनुमन्तव्यं त्वया । शं च नस्कृधि । सुखं चास्माकं कुरु । इषम् अन्नं चास्माकं तोकाय अपत्याय धेहि । आयूंषि च नः प्रतारिषः प्रवर्धानि कुर्विस्येतदाशास्महे ।

सैव पौर्णमासी पञ्चदशके पक्षे 'राका' ( २१ ) इत्युच्यते । सा पुनः कस्मात् । 'रातेर्दानकर्मणः' । हविर्दाननिमित्तं हि सा भवति । 'तस्या एषा भवति' ॥ ३० ॥

राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ( ऋ० सं० २ । ३२ । ४ ) ॥ राकामहं सुह्वानां सुष्टुत्याह्वये

१ क. ख. ८ ( २९ ); ठ. ड. 'वति । इति निरुक्तभाष्ये ९ ध्याये २९ खण्डः, ग. घ. वर्जमितरेष्वग्रो नास्ति. २ क. ख. ५ ( ३० ); त. ड. ५. ३ ग. इति । वा ; ठ. ड. मते त्वमिति. ४ क. ख. घ. ट. ठ. ड. कुरु वर्धयेत्ये'; घ कुर्विन्त्ये' न र्धये'. क. ख. ९ (३०), ठ ड. 'वति । इति निरुक्तभाष्ये

शृणोतु नः सुभगा बोधत्वात्मना सीव्यत्वपः प्रजननकर्म सूच्याच्छिद्यमानया सूची सीव्यतेर्ददातु वीरं शतदमुक्थ्यं वक्तव्यप्रशंसं सिनीवाली कुहूरिति देवपत्न्याविति नैरुक्ता अमावास्ये इति याज्ञिका या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूरिति विज्ञायते सिनीवाली सिनमन्नं भवति सिनाति भूतानि वालं पर्व वृणोतेस्तस्मिन्नन्नवती वालिनी वा वालेनेवास्यामणुत्वाच्चन्द्रमाः सेवितव्यो भवतीति वा तस्या एषा भवति ॥ ३१ ॥

---

राकामहं सुहवामिति[3] । गृत्समदस्यार्षम् । देविकासु विनियोगः ( मैत्रा० सं० २ । ६ । ४ )। राकामहं सुहवां स्वाह्वानां यस्याः शोभनमाह्वानं तां सुष्टुत्या शोभनया स्तुत्या आह्वये । सा पुनः सुभगा सुधनास्माभिराहूयमाना शृणोतु । श्रुत्वा च बोधतु । कर्तव्यतया तदवगच्छतु । यदपि च न ब्रूमहे तदपि आत्मना एव बुध्यताम् । अपि चेदमुच्यते । एवं सीव्यतु अपः । संतनोतु प्रजननकर्म अस्माकम् । सूच्या अच्छिद्यमानया अविच्छिन्नेन प्रजासंतानेन । न च पुनः प्रजामात्रमर्थयामहे । किं तर्हि । ददातु वीरं पुत्रम् । किंलक्षणम् । शतदायं बहुप्रदम् । उक्थ्यम् वक्तव्यप्रशंसं च अपरिसमाप्तस्तुतिम् ।

राका

‘ सिनीवाली कुहू. ’ इति पूर्ववदुपन्यासः । ‘ अमावास्ये इति याज्ञिकाः ’ । तथैव ब्राह्मणमपि चोदाहरन्ति । ‘ तथैव पूर्वा सिनीवाली उत्तरा कुहूः ’( ऐ० ब्र० ३२ । ९ ॥ मैत्रा० सं० ४ । ३ । ५ ) ।

‘ सिनीवाली ’ (२२) कस्मात् । ‘ सिनमन्नं भवति ’ । तत्कस्मात् । ‘ सिनाति ’ बध्नाति ‘ भूतानि ’ रसादिभिर्धातुभिः । ‘ वालं ’ किमुच्यते । ‘ पर्व ’ । तत्कस्मात् । ‘ वृणोतेः ’ । वृण्वन्ति देवास्तत्र हवींषि । ‘ तस्मिन् ’ पर्वण्यसौ सिनिनी ‘ अन्नवती ’ इति सिनीवाली । अथवोत्तरपदे विकल्पः । ‘ वालिनी ’ वाले-

सिनीवाली कस्मात्

सिनम्

वालम्

---

१ क. ख. ङ थ .ध. ठ. ड सीव्यत°. २ क. ख. १० (३१); त. द. १०. ३ ग. °मिति । गृ°; ठ ड. °मइमिति. ४ क. ख. ट. ट. ठ. ह. सा च पु°; च. सा °पु° च. ५ क. ख प. ट. ठ ड. ‘ च ’ नास्ति; च. चैं. ६ च. ज. ड. चाले°.

'यमी (२४) व्याख्याता' यमेन (निरु० १०।१०)। लिङ्गमात्रविशेषः। "तस्या एषा भवति" ॥ ३३ ॥

---

**अन्यमू षु त्वं यम्यन्य उ त्वां परि ष्वजाते लिबुजेव वृक्षम्। तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्राम् ( ऋ० स १०। १०। १४ ) ॥ अन्यमेव हि त्वं यम्यन्यस्त्वां परिष्वङ्क्ष्यते लिबुजेव वृक्षं तस्य वा त्वं मन इच्छ स वा तवाधानेन कुरुष्व संविदं सुभद्रां कल्याणभद्रां यमी यमं चकमे तां प्रत्याचचक्ष इत्याख्यानम् ॥ ३४ ॥**

**एकादशाध्यायस्य तृतीयः पादः ॥**

---

अन्यमू षु त्वमित्यन्य इति। यमी किल यमं चकमे भ्रातरम्। तां किल यमोऽनयर्चा प्रत्याचचक्षे। कथम्। हे यमि अन्यमू षु त्वम् अन्यमेव त्वं परिष्वजस्व मैथुनाभिप्रायेण। लिबुजेव वृक्षं वल्लीव काचिद्यथा समीपजं वृक्षम्। अन्य एव त्वां परिष्वजतां यस्य योग्या त्वमनेनाभिप्रायेण परिष्वक्तुम्। तस्य वा त्वं मन इच्छ। तस्य च त्वं मनः प्रवेष्टुमिच्छ। स वा तव। अथैवमेकचित्त्यमुपगम्यमानेन समानेन सह कृणुष्व संविदं सङ्कल्पादिमैथुनकार्यम्। सुभद्रां कल्याणभद्रां सोऽदमुभयलोकाविरोधिनीमित्यभिप्रायः। (यमी)

निरुक्तपक्षे तु माध्यमिको यमो माध्यमिकां वाचमुपसमात्मनः प्रतिभक्तामिव कृत्वा ... ब्रवीति। हे यमि अतीतमेतदस्य परिष्वङ्गसमयः। प्रभातमिदानीम्। लिबुजेव वृक्षं सूर्यस्थानं परिष्वक्तुमिच्छ। तस्य च त्वं मनः प्रकाशमनुप्रवेष्टुमिच्छ। स च तव प्रकाशमनुप्रविशतु। अथ- (माध्यमिकपक्षे यमी उषाः)

१ क. ख. १२ (३३); ठ. ह. ०वति। इति निरुक्तभाष्ये पञ्चमेऽध्याये ३२ खण्डः; ग. च वर्जमितरेष्वङ्का नास्ति. २ छ इच्छा, त. इच्छां स० छ ३ छ. त द. ०चक्षस्व. ४ क ख. १३ (३४), त द. १३. ५ छ. द. तृती०; त एकादशाध्याये तृ०, ड. थ ध ठ. ह. 'एका० पाद०' नास्ति. ६ ग इति०। य०, ठ. ड. अन्यमू षु त्वमिति. ७ क. ख. सकल्पा०, ग ट. सङ्कल्पा०. ८ ग. ज. ०पक्षे मा०. ९ क. ख. माध्यमिको. १० ग. ज. ०मिच्छति सा च मनः प्रकाशमनुप्रवेष्टु तस्य०, च ०मिच्छति सा च मनः प्रकाशमनुप्रविशतु तस्य०. ११ च. ट. ठ. ह. ०ति०.

वमितरेतरसंपर्कात्तेन सहैकीभूता लोकोपकाराय कुरुष्व परस्परसंविदं संवित्साधनं प्रकाशमिति ॥ ३४ ॥

षष्ठाध्यायस्य तृतीय: पाद: ।

---

चतुर्थ: पाद: । ५

**उर्वशी व्याख्याता तस्या एषा भवति ॥ ३५ ॥**

' उर्वशी व्याख्याता ' । ' उर्वशी ' ( २५ ) वक्तव्या । सा पुन: ' व्याख्याता ' । तदिहापि देवताया योऽयम् । ' उर्वश्यश्नुते ' । बहूदकं व्याप्नोति । ' उरुर्वा वशोऽस्या ' । महानस्या: काम उदके ( निरु० ५ । १३ ) । ' तस्या एषा भवति ' ॥ ३५ ॥ १०

---

**विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि । जनिष्टो अपो नर्य: सुजात: प्रोर्वशी तिरत दीर्घमायु: ( ऋ० सं० १० । ९५ । १० ) ॥ विद्युदिव या पतन्त्यद्योतत हरन्ती मे अप्या काम्यान्युदकान्यन्तरिक्षलोकस्य यदा नूनमयं जायेता- १५ द्भयोऽध्यप इति नर्यो मनुष्यो नृभ्यो हितो नरापत्यमिति वा सुजात: सुजाततरोऽथोर्वशी प्रवर्धयते दीर्घमायु: पृथिवी व्याख्याता तस्या एषा भवति ॥ ३६ ॥**

---

विद्युन्न या पतन्तीति । मध्यम: पुरूरवा: त्रित्वपक्षे ब्रवीति । आत्मनो २० उर्वशी ज्योतिष: शब्दस्य च विभागमिव कृत्वा । विद्युन्न विद्युदिव । संप्रत्यर्थे वा नकार: । किमिति । या पतन्ती गच्छन्त्यन्तरिक्षे मेघोदरेषु दविद्योत् पुन:पुनर्द्योतते पुन:पुनरात्मानं प्रतिलभते । कथम् । भरन्ती हरन्ती मे मम स्वभूतानि

---

१ क. ख १३ ( ३४ ), ठ ड. °मिति । १ ? ध्यायस्य ३ पाद: । ३४, २५ ग. च. वर्जामनेऽष्वङ्को नास्ति. २ क. ख. १ ( २५ ), त द १. ३ क. ख. घ. ट. ठ. ड. ' उर्वशी व्याख्याता ' नास्ति; च उर्वशी व्याख्याता ४ क. ख. १ ( ३५ ): ट. ड. °वति । इति निरुक्तभाष्ये ५ ध्याये ३५ खण्ड:, ग च. वर्जमितरेष्वङ्को नास्ति. ५ छ मर्त्यो. ६ क. ख. २ ( ३६ ), त. द. २. ७ ग. °न्तीति । म° ३०

अप्या अप्यानि काम्यानि उदकानि अन्तरिक्षरमाणानि अन्तरिक्षलोकस्य अधिपत्नी योर्वशी सा यदैवमुदकानि हरन्ती मेघेभ्यः पतन्ती भृशं स्वयं विद्योतते नूनं निश्चयेन तदा जनिष्टो अपः अध्यपः अधिक उदकोर्मि- र्जायते यः सर्वमिदमाच्छादयति नर्यो नृभ्यो हितः पथ्यः सस्यसंपत्करः।
५ 'नरापत्यमिति वा' इत्यैतिहासिकपक्षं द्योतयति । सुजातः सुजाततरः शोभनादपि शोभनतरः उदकोर्मिः । अथ तेन महतोदकोर्मिणा सस्यम- भिनिष्पाद्य लोकस्यान्नसंप्रदानद्वारेण प्रोर्वशी तिरते प्रतिरते प्रवर्धयते दीर्घमायुः ।

ऐतिहासिकपक्षे त्वैलः पुरूरवाः उर्वश्या अप्सरसा वियुक्तो ब्रवीति ।

१० ऐतिहासिकपक्षे अर्थः: विद्युदिव या पतन्ती अद्योतत भृशं वपुष्मत्तया भरन्ती धारयन्ती अनेकानि स्त्रीगतानि हाव- भावादीनि काम्यानि वस्तूनि मे मम अप्या नित्यमासक्त्या प्रिया । सा च पुनराहितगर्भा यतोऽतो ब्रवीमि । जनिष्टो अपः निश्चयेन जनिष्यते अध्यपः अधिककर्मा नर्यः नृभ्यो हितः सम्य-
१५ क्परिपालयिता नराणाम् । अथवा । मम नरस्यापत्यमायुर्नाम राजा यं पुरा- णविदः कथयन्ति । सुजातो मच्छुक्रात् वीर्यवतो जातो विशेषेन उर्वश्याः क्षेत्रगुणात्सुजाततरः । तस्य चावश्यमुर्वश्यस्मदसान्निध्येऽपि प्रवर्धयते तद्योग्यैः कर्मभिर्दीर्घमायुरिति ।

'पृथिवी(३६)व्याख्याता' । 'अथ वै दर्शनेन पृथुः'( निरु० १।
२० १४ ) इत्यत्र । इह तु माध्यमिका । 'तस्या एषा भवति' ॥ ३६ ॥

---

**बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि। प्र या भूमिं प्रव- त्वति मह्ना जिनोषि महिनि ( ऋ० सं० ५।८४।१ )॥ सत्यं त्वं पर्वतानां मेघानां खेदनं छेदनं भेदनं बलममुत्र धारयसि पृथिवि**

२५ १ क. ख. घ. ट. ठ ड. अक्षरमाणा°; च. अन्तरिक्ष°. २ क. ख. घ. ट. ठ. ड. °हितः सम्य°, च. पथ्यः. ३ ग. ज. प्रोर्वशी प्र . च प्रोर्वशी° प्र° तिरते. ४ ट. ठ. ड. त्वेळ.. ५ ग ज. पुरूरवाः, च. पुरूरोरवाः° रूर. ६ घ. ट. ठ. ड. नरपस्या°, च. नरस्या° प. ७ क. ख. २ (३६); ठ. ड. °वति । इति निरुक्तोत्तरषट्के ५ ध्याये ३६ खण्डः, ग च वर्जमितरेष्वंशो नास्ति. ८ क.
३० ख. छ. न. द. न. बलित्था.

**प्रजिन्वसि या भूमिं प्रवणवति महत्त्वेन महतीत्युदकवतीति वेन्द्राणीन्द्रस्य पत्नी तस्या एषा भवति ॥ ३७ ॥**

---

बळित्था पर्वतानामिति । अत्रेरार्षम् । बळ् इति सत्यस्य नाम (निघ० ३।१०।१)। इत्थेति अमुत्रेत्यर्थः । हे पृथिवि माध्यमिके सत्यं यथाभूतम् अमुत्र अमुष्मिन्नन्तरिक्षलोके वर्तमाना खिद्रं खेदनं छेदनं येन पर्वताः मेघाश्छेत्तुं शक्यन्ते तद् बलं बिभर्षि धारयसि । हे प्रवत्वति प्रवणवति गमनवति या त्वं भूमिं प्रजिन्वसि वर्षमुत्सृजन्ती मह्ना महत्त्वेन हे महिनि महति । अथवा । उदकवति । या त्वमेवं भूमिं प्रजिन्वसि सा कथं न मेघानां पर्वताना छेदनसमर्थं बलं धारयसीत्यभिप्रायः ।

पृथिवी

पृथिवि त्वं भूमिं प्रजिन्वसीति व्यपदेशान्मध्यस्थाना । हिरण्यनाशेष्यां भौमस्यैककपालस्येयं याज्या (मैत्रा० सं० ४ १२।२)। तत्र विज्ञायते । 'अथ यद्भौमोऽस्यां हि स तदविन्दत्' (मैत्रा० सं० २।२।७) इति । तेन तत्रेयं भूमिरिज्यते । न च भूमिरस्यामृचि प्रधानत्वेन वर्तते । यथा चायमाचार्यो निराह तदयमस्योदाहरणाभिप्रायः । स च विनियोग इति विरोधः । अविरोधमेनयोर्मेधाविनः समनुगंस्यन्ते ।

यास्कस्याभिप्रायो मैत्रायणीसंहितायां दत्तविनियोगेन विरुद्धः

'इन्द्राणी (२७) इन्द्रस्य पत्नी' । इन्द्रस्य विभूतिः पृथक्त्वे वा इन्द्राणी कस्मात् निर्ज्ञाता पौराणिकैः । 'तस्या एषा भवति' ॥ ३७ ॥

इन्द्राणी कस्मात्

---

१ छ. ड. प्रणवति, त. प्रवणवति, ठ. प्रवति. २ क. ख. ३ (३७); त. द. ३. ३ क. ख. ग. च. ज. घ. बळित्था. ४ ग. °मिति । अ°. ५ ठ. ड. बट्. ६ क. ख. घ. ट. ठ. ड. सत्यनाम. ७ ग. ज त्वमुत्र, च. त्वमुत्र. ८ च. प्रवणवति° व. ९ क. ख. घ. ट. त. ड. धारयिष्यसि । अवश्यं धारय°; च. धारय° यिष्यसि । अवश्यं धार. १० क. ख. घ. इत्यविरोधोऽनयो°; च. इत्यविरोधः। अभिप्रणवन्ति, विरोधमेन° अंथसमानार्था मे, ट. इत्यविरोधः अनयो° असमानार्थो म इति पाठः । इति निरोधः अशण्वति विरोधमेनयोर्मेधाविनः समनुगंस्यन्ते इति वा पाठः; ठ. ड. इत्यविरोधः । इति विरोधः अशृण्वति विरोधमेनयोर्मेधाविनः समनुगस्यन्ते इति वा पाठः. ११ क. ख. घ. ट. °विना स°. १२ क. ख. घ. ट. नुगस्यते; ग. च. ज. °गम्यंते. १३ क. ख. ३ (३७); ठ ड. °वति । इति निरुक्तभाष्ये उत्तरषट्के ५ ध्याये ३७ खण्डः; ग. च. वर्जमितरेषु खण्डो नास्ति.

इन्द्राणीमासु नारिषु सुभगामहमश्रवम्। न ह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः (ऋ० सं० १०।८६।११)॥ इन्द्राणीमासु नारीषु सुभगामहमशृणवं न ह्यस्या अपरामपि समां जरया म्रियते पतिः सर्वस्मादिन्द्र उत्तरस्तमेतद्ब्रूमस्तस्या एषापरा भवति[3] ॥ ३८ ॥

---

इन्द्राणीमासु नारिष्विति। वृषाकपेरार्षम्। पृष्ठ्यस्य षष्ठेऽहनि ब्राह्मणाच्छंसिनः शस्त्रे विनियोगः (आश्व० श्रौ० ८।३)। निर्वाच्य ब्रवीति। सर्वास्वेव आसु नारीषु इन्द्राणीमेव अहं सुभगां सौभाग्ययुक्तां लक्षणैरिमाम् अश्रौषम् अशृणवम्। केन हेतुना। यत आह। न ह्यस्या अपरं चन। 'हि'शब्दो हेत्वर्थे। चनेत्यप्यर्थे। यस्मादस्या अपरामपि समां संवत्सरं पतिर्न कदाचिदपि पतिर्म्रियते नापि जीर्यते यथान्यासां प्राकृतानां नारीणाम्। कतमः पतिः। विश्वस्मात् सर्वस्मात् जगतो य इन्द्रः उत्तरः। योऽयमिन्द्र उद्गततरः। तमेतम् इन्द्रमधिकृत्य ब्रूम इत्याचार्यो ब्रवीति।

इन्द्राणी।

'तस्या एषापरा भवति'। सा पुनः किमर्थम्। ऋषिर्वृषाकपिः प्रसिद्धः। स पुनरादित्यो योऽभिप्रेतो नैरुक्तानाम्। तद्रूपप्रदर्शनायापरामाह ॥ ३८ ॥

---

नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते। यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः (ऋ० सं० १०।८६।१२)॥ नाहमिन्द्राणि रमे सख्युर्वृषाकपेर्ऋते यस्येदमप्यं हविरप्सु शृतमद्भिः संस्कृतमिति वा प्रियं देवेषु निगच्छति सर्वस्मादिन्द्र उत्तरस्तमेतद्ब्रूमो गौरी रोचतेर्ज्वलतिकर्मणोऽयमपी-

१ द. थ. नारीषु २ छ. °मश्रव° अशृण. ३ क. ख. ४ (३८), त. द. ४. ४ ठ. ड. इन्द्राणीमिति ५ ग. °ष्विति। वृ°. ६ क. ख. घ. ट. ठ. ड. °र्षम्। पङ्क्तिः। पृ°, च. °र्षम। ... पङ्क्तिः। ७ ग. ज. °श्रव केन, च. °श्रव केन° अशृणवं. ८ घ. ऋषिः स एव। स पुन°, ट. ऋषिः स एव। स पुन° वृषाकपिः प्रसिद्धः. ९ क. ख. ४ (३८); ठ. ड. °माह। इति निरुक्तभाष्ये ५ ध्याये ३८ खण्डः, ग. च. वर्गमितरेष्वङ्को नास्ति.

तरो गौरो वर्ण एतस्मादेव प्रशस्यो भवति तस्या एषा भवति ॥ ३९ ॥

---

नाहमिन्द्राणीति । समानो विनियोगः पूर्वयापि च । इन्द्रो ब्रवीति ।

इन्द्र एव — विभक्तामिवेन्द्राणीमात्मनः कृत्वाह । नाहमिन्द्राणि रारण । न रमे अहम् । सख्युर्वृषाकपेर्ऋते । य एव मम सखा वृषाकपिस्तस्मादृते । किं योऽयमपि मनुष्येषु प्रसिद्धः । नेत्युच्यते । यस्येदमप्यं हविः । अप्सु शृतं चरुपुरोडाशादि वा । 'अद्भिः संस्कृतमिति वा' । सोऽस्य मे प्रियं इष्टः सर्वेष्वपि देवेषु । निर्धार्योच्यते । यस्य विशेषतो गच्छति । विश्वस्मात् सर्वस्मात् अपि जगतो योऽहम् इन्द्र उत्तर उद्गततरः सोऽप्यहमेवं ब्रवीमीति ।

'गौरीः (२८) रोचतेः' ज्वलत्यर्थस्य । माध्यमिका वाक् । सा पुनर्दीप्तिमती । 'अयमपीतरो' यो 'गौरो वर्णः' सोऽपि 'एतस्मादेव' रोचतेः । स दीप्तिरूपत्वात्कृष्णादीनपेक्ष्य 'प्रशस्यो भवति' । 'तस्या एषा भवति' ॥ ३९ ॥

गौरी: कस्मात्

---

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ( ऋ० सं० १ । १६४ । ४१ ) ॥ गौरीर्निर्मिमाय सलिलानि तक्षती कुर्वत्येकपदी मध्यमेन द्विपदी मध्यमेन चादित्येन च चतुष्पदी दिग्भिरष्टापदी दिग्भिश्चावान्तरदिग्भिश्च नवपदी दिग्भिश्चावान्तरादिग्भिश्चादित्येन च सहस्राक्षरा बहूदका परमे व्यवने तस्या एषापरा भवति ॥ ४० ॥

---

१ क. ख. ५ ( ३९ ), त द ५. २ ग °णीति ; स°. ३ क. ख. °या आर्षे च । इन्द्रो°; घ. ट. °याः आर्षं तु इन्द्रो°, ठ ड °या आर्षं तु इन्द्रो°. ४ ग ज. चरु च पु°. ५ क ख. ५ (३९), त. ड. °वति । इति निरुक्तभाष्ये ५ध्याये ३१ खण्डः, ग. घ. वर्णमितरेष्वङ्को नास्ति. ६ क ख. ६ ( ४० ); त. ड. ६.

गौरीर्मिमायेति[1] । अस्यवामीये दीर्घतमस आर्षम् । गौरी सर्वमिदं

गौरी: निर्मिमीते । कथम् । सलिलानि तक्षती कुर्वती । उदकपूर्वकत्वात्सर्वनिर्माणस्य । कथमुदकानि

कुर्वती । एकपदी अभूवुषी एकपदी भवती मध्यमेन सहैकत्वमापन्ना । द्विपदी मध्यमेन चादित्येन च । चतुष्पदी दिग्भिः अनपेक्ष्येन्द्रादिभ्यो । अष्टापदी दिग्भिश्चावान्तरदिग्भिश्च । नवपदी दिग्भिश्चावान्तरदिग्भिश्च सह आदित्येन च । सहस्राक्षरा बहूदका परमे व्यवने । विभक्तानां भूतानां यत्परममवनमेकं सर्वभावानामविभक्त एक आत्मा यस्तदात्मनैवभूता[3] सलिलेनेमेण परेण सर्वमिदं निर्मिमीते ।

'तस्या एषापरा भवति' । सा पुनः किमर्थमिति । गौरीति गुणाभिधाननप्रसङ्गमिमेय[4] छन्दसि देवतायाम् । अतः परया समर्थयति[5] ॥४०॥

---

तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः ।

ततः क्षरत्यक्षरं तद्विश्वमुप जीवति ( ऋ० सं० १ । १६४ । ४२ ) ॥ तस्याः समुद्रा अधिविक्षरन्ति वर्षन्ति मेघास्तेन जीवन्ति दिगाश्रयाणि भूतानि ततः क्षरत्यक्षरमुदकं तत्सर्वाणि भूतान्युपजीवन्ति गौर्व्याख्याता तस्या एषा भवति[6] ॥ ४१ ॥

---

तस्याः समुद्रा अधि वि क्षरन्तीति[7] । अलिङ्गो मन्त्र इति चेत्तस्या इत्येतदेव लिङ्गमन्वादिश्यते मन्त्रान्यादृचाः । तस्मान्नालिङ्गः । तस्याः गौर्याः अधि सकाशात्

गौरी एव

समुद्राः मेघाः अधिविक्षरन्ति वर्षन्ति । तेन उदकेन जीवन्ति प्रदिशश्चतस्र ।

[1] ग. °येति । अ°. [2] ठ. ढ. 'वती वायुना इन्द्रेण वा मध्य' ( ट पुस्तके 'मध्यमेन' इत्यस्यार्थ. 'वायुना इन्द्रेण वा' इति प्रान्ते लिख्यते ). [3] क. ख. घ. ट. ठ ड. °नैव भूतानां स°, च. 'नैव भूतानां स° व भूतानां [4] ग. ज. समर्धयते; च. समर्चयति° र्थ. [5] क. ख. ६ ( ४० ), ठ. ढ. °यति । इति निरुक्तभाष्ये ५ ध्याये ४० खण्ड; ग. च. वर्जमितरेष्वङ्को नास्ति. [6] क. ख. ५ ( ४१ ), न ढ. ३. ७ ठ. ढ समस्ता इति [7] ग °न्तीति । अ°.

घर्मधुक्पक्षे । गौरेव गौः अन्वमीमेत् अनुशब्दयति वत्समेव वत्सं

घर्मधुक्पक्षे अर्थः मिषन्तं तमेवोन्मुखं पश्यन्तम् । एवमपि च प्राप्य मूर्धानम् अस्य उपघ्राय हिङ्ङित्येवं शब्दं

करोति । स हि गोः स्वभावः । मातवै कथं नामायं मा जानीयान्माता

५ ममेयमिति । सृक्वाणं तामेव प्रत्यभिमुखं सरणं हरणं पयसाम् अभिवाव-

शाना पुनः पुनर्वाश्यमाना प्रत्यहमेव शब्दं करोति प्रप्यायते च पयोभिः

वत्सम् । अस्मांश्च या वर्धयति सा नित्यमेवमस्त्विति ।

'धेनुः (१०) धयतेर्वा' । धीयतेऽसौ वत्सेनेति । 'धिनोते-

१० धेनुः कस्मात् र्वा' । तर्पयत्यसावुदकेन पयसा वा । 'तस्या एषा भवति' ॥ ४२ ॥

---

**उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम् । श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदु षु प्र वोचम् ( ऋ० सं० १ । १६४ । २६ ) ॥ उपह्वये सुदोहनां धेनुमेतां कल्याणहस्तो**

**१५ गोधुगपि च दोग्ध्वेनां श्रेष्ठं सवं सविता सुनोतु न इत्येष हि श्रेष्ठः सर्वेषां सवानां यदुदकं यद्वा पयो यजुष्मदभीद्धो घर्मस्तं प्रब्रवीमि वागेषा माध्यमिका घर्मधुगिति याज्ञिका अघ्न्याहन्तव्या भवत्यघघ्नीति वा तस्या एषा भवति ॥ ४३ ॥**

---

२० उप ह्वये सुदुघामिति । पूर्वयैव समानमार्षं विनियोगश्च । उपगम्य

धेनुः मनसा आह्वयेऽहं स्तुतिभिः सुदुघां कल्याण- मुदकं या दुग्धे ता धेनुं तर्पयित्रीं सर्वलोकस्य

एतां माध्यमिकां वाचम् । अपि च । मयैतामुद्दूनां सुहस्तः कल्याण-

हस्तो गोधुक् इन्द्रो दोग्धु प्रक्षारयत्नुदकानि । अमुना प्रकारेण श्रेष्ठम्

२५ अतिशयेन प्रशस्यमेतं सवम् उदकं योऽयम् अभीद्धो घर्मो मध्यस्थानो

विद्युदाख्यः असौ विषत् स सनोतु नित्यं ददात्विति तं सुष्ठु प्रब्रूमः ।

---

१ क. ख. ब. ट. ठ. ह. अपि च प्रा°; च एवमपि° अपि च २ क. ख. घ. ट. ट. ह. घर्म हर°; च. °रण हर घर्म. ३ ग. ज. पुनर्वाश्य°; च. पुनर्वाश्य°. ४ क. ख. ८ (४२); ठ. ह. °वति । इति निरुक्तभाष्ये ५ ध्याये ४२ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ५ क. ख. ङ. थ. ध. ठ. ह. दोग्ध्येनां; छ. त. दोग्येनां. ६ क. ख. ९ (४३); त. द. ९. ७ ठ ह. ह्वय इति. ८ ग. °मिति । पू°. ९ क. ख. घ. ट ट. ह. °मानार्षं. १० क. ख. घ. सः सावि°; च. असा° म; ट. सः सा° अ.

घर्मधुक्पक्षे । धेनुरेव धेनुः । तामुपह्वये सुदुघां सुदोहां धेनुमेताम्

घर्मधुक्पक्षे अर्थः

अस्मिन्कर्मण्यङ्गभावमुपगताम् । होता ब्रवीति । मया चैवमुपहूतां सुहस्तः गोधुक् अध्वर्युरपि च दोग्ध्येनाम् । श्रेष्ठम् अतिशयेन प्रशस्यमेतं सवम् एतत् यजुष्मत्पयः साविषत् सुनोतु अभ्यनुजानातु सविता । यद्धि सवित्रा प्रसूतं क्रियते तदेव साधु भवति । अभीद्धः एष घर्मो रुचितो महावीरः । स्तमधिकृत्य प्रश्नः । आहरैतस्मिन् पय आसेचनायेति ।

'अघ्न्या' (३१) कस्मात् । सा हि सर्वस्यैव 'अहन्तव्या भवति'।

अघ्न्या कस्मात्

'अघघ्नीति वा' । सा हि पापं हन्ति यदि वाग्यदि गौः । 'तस्या एषा भवति' ॥ ४३ ॥

---

**सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम। अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ( ऋ० सं० १ । १६४ । ४० ) ॥ सुयवसादिनी भगवती हि भवाथेदानीं वयं भगवन्तः स्यामाद्धि तृणमघ्न्ये सर्वदा पिब च शुद्धमुदकमाचरन्ती तस्या एषापरा भवति ॥ ४४ ॥**

---

सूयवसादिति[४] । पूर्ववदार्षम् । माध्यमिका वागुच्यते । शोभनं यव-

अघ्न्या

समुदकमध्यात्मीकृत्य सूर्यात् तेन भगवती धन-वती उदकेनोदकवती भव । अथ इदानीमेव त्वयि भगवत्यां वयमपि त्वदुत्सृष्टेनोदकेन भगवन्तो धनवन्तः स्याम । सा च पुनरेवं प्रतिसंवत्सरम् अद्धि तृणं मेघम् । तृद्यतेऽसाविति तृणः । तमद्धि संचूर्णय । विश्वदानीं सर्वदा यथाकालं पिब च सूर्यरश्म्युपहृतम् उदकम् आचरन्ती आसेचन्ती शुद्धम् अकलुषं सर्वतो मध्यस्थाने चरन्ती ।

---

१ ग. ज. दोग्धेनां; च. दोग्धेनां° ग्धे. २ क. ख. ९ (४३); ठ. ड. °वति। इति निरुक्तभाष्ये पञ्चमाध्याये ४३ खण्डः, ग च. वर्जमितरेष्वङ्को नास्ति. ३ क. ख. १० (४४); त द. १०. ४ ग. °दिति । पू°. ५ क. ख. घ. ट. ठ. ड. अथ पुनः इदा°; ग. ज. अथवा इदा°; च. अथवा इदा° पुनः. ६ ग. ज. संवत्सरं प्रतिना अद्धि°; च. संवत्सरं प्रति अद्धि°.

घर्मधुक्पक्षे । पयसैव पयसम् । तज्जग्ध्वा पयस्विनी भव ।

घर्मधुक्पक्षे अर्थः वयमपि च त्वत्प्रत्तेन पयसा धनवन्तः स्याम । या त्वमस्माकमेवमुपकारिणी सा त्वं नित्यमद्धि तृणमघ्न्ये । विश्वदानी नित्यकालं पिब च शुद्धमकलुषमुदकमाचरन्ती आसेवन्ती आ सर्वतो यथाकाममरण्ये चरन्ती ।

' तस्या एषापरा भवति ' । सा पुनः किमर्थम् । रूपतो हि पूर्वस्मिन्मन्त्रे घर्मधुक् सुतरामुपपद्यते । यतः परया वसुभिर्देवैः संबन्धान्माध्यमिकैव देवतेत्युपपादयति ॥ ४४ ॥

---

हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् । दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ( ऋ० १ । १६४ । २७ ) ॥ इति सा निगदव्याख्याता पथ्या स्वस्तिः पन्था अन्तरिक्षं तन्निवासात्तस्या एषा भवति ॥ ४५ ॥

---

हिङ्कृण्वतीति । पूर्ववदार्षादि । हिङ् इत्येवंप्रकारं शब्दं स्तनयित्नु कुर्वती वसुपत्नी वसूनामुदकानामीश्वरा । वसूनां वा आदित्यरश्मीनां मरुतां वा । वत्स आदित्यः । अघ्न्या एव मध्यस्थानो वा रसहरणाद्वत्सः । तम् इच्छन्ती मनसा या माध्यमिका वाक् नित्यम् अभ्यागात् सेयम् अश्विभ्यां द्यावापृथिवीभ्यां सूर्याचन्द्राभ्यां वा वर्षाय दुहां दुग्धां प्रक्षरतां पयः उदकम् । अमुना प्रकारेण प्रतिसंवत्सरं वर्धताम् उदकेनास्माकं महते सौभगाय । यथा महत्सौभाग्यं धनैवत्त्वं स्यात्तथा वर्धतामिति ।

१ क. ख. घ. ट. च ततः त्व°; च. च ‹ त्व° ततः; ठ. ड. च ततः त्वत्प्रसादेन पय°. २ ग. ज. °रन्ती सेव°; च. रन्ती ‹ से° आ. ३ क. ख. १० ( ४४ ); ठ. ड. °वति । इति निरुक्तभाष्ये पञ्चमाध्याये ४४ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ४ क. ख. ११ ( ४५ ); ठ. ड. ११. ५ ग. °तीति । पू°. ६ ग. ज. °दार्षं । हिहि°; च. दार्ष । हिहि° षी. ७ ग. ज. कुर्वती; च. कुर्वती° वे. ८ ग. ज. °भ्यां व°; च. भ्यां व° वा. ९ ठ. 'धन' इत्यनन्तरमध्यायस्य पत्राणि नष्टानि. १० ग. ज. °मिति वर्धयामेति, च. °मिति वर्धयामेति.

' पथ्या ( ३२ ) स्वस्तिः ' ( ३३ ) इति वक्तव्यम् । अत्र पूर्वपदं

पथ्या कस्मात् — पन्था अन्तरिक्षम् । तन्निवासात् पथ्या । स्वस्तिरित्युक्तं निर्वचनम् ( निरु० ३ । २१ ) ।

यथा प्रायणीयायां यजतिप्रयोगो दृष्टस्तथा समाम्नातः ' पथ्यां स्वस्ति पूर्वा[1] यजति ' इति । ' तस्या एषा भवति '[2] ॥ ४५ ॥ ५

---

**स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति । सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा ( ऋ० सं० १० । ६३ । १६ ) ॥ स्वस्तिरेव हि प्रपथे श्रेष्ठा रेक्णस्वती धनवत्यभ्येति या वसूनि वननीयानि सा नोऽमा गृहे सा निरमणे सा निर्गमने पातु स्वावेशा भवतु देवी गोप्त्री देवान्गोपायत्विति देवा एनां[3] गोपायन्त्विति वोषा व्याख्याता तस्या एषा भवति ॥ ४६ ॥** १०

---

स्वस्तिरिद्धिरिति[4] । वसुकर्णस्यार्षम् । ' इत् ' इत्यवधारणार्थे । १५

स्वस्तिः — स्वस्तिरेव हि प्रपथे अन्तरिक्षे श्रेष्ठा प्रशस्या सर्वदेवताभ्यः । रेक्णस्वती धनवती उदकेन । अभि

या वाममेति । या वननीयानि उदकानि अभ्येति[5] । तस्याः किमिति । सा नः सा अस्मान् अमा । अमेति गृहनाम ( निघ० ३ । ४ । ११ ) । गृहे वसतः अरणे अरण्ये[6] च निर्गमने च बहिर्गृहात् पातु रक्षतु । २० स्वावेशा सुपचरणा भवतु अस्माकम् । देवगोपा देवी चासौ गोप्त्री चेति देवगोपा । देवान्[7] दातॄनस्मान्[8] गोपायत्विति वा । हविषो[9] गोपायतु[10] । अथवा । देवा माध्यमिका द्युस्थाना वा रश्मय एनां गोपायन्त्विति वा ।

---

१ ग. ज. पूर्वार्द्धे; च. पूर्वार्द्धं य °र्वां. २ क. ख. ११ ( ४५ ); ङ. °वति । इति निरुक्तभाष्ये ५ ध्याये ४५ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ३ क. २५ ख. १२ ( ४६ ); त. द. १२. ४ ग. °रिति । २°. ५ क. ख. घ. ट. ठ. ङ. °कानि नित्यमभ्येति; च. °कान्यभ्येमत्य. ६ ग. ज. °मणे; च. °मणे च° ने. ७ क. ख. घ. ट. ङ. देवान्गोपायत्विति वा । दातॄनस्मान् । किम् । सर्वस्माद्धविषो गोपायतु । अथ°; च. देवान् गोपा॰ दातॄ॰ यत्विति वा. ८ च. °नस्मान् यत्विति वा. ९ च. ॰ हवि° कि सर्वस्मात्. १० च. हवि॰ गोपा° वो. ३०

' उषा ( ३४ ) व्याख्याता ' ( निरु० २ । १८ ) । ' तस्या एषा भवति ' ॥ ४६ ॥

---

**अपोषा अनसः सरत्संपिष्टादह बिभ्युषी । नि यत्सीं शिश्नथद्वृषा ( ऋ० सं० । ४ । ३० । १० ) ॥ अपासरदुषा अनसः संपिष्टान्मेघाद्बिभ्युष्यनो वायुरनितेरपि वोपमार्थे स्यादनस इव शकटादिवानः शकटमानद्धमस्मिन्श्चीवरमानितेर्वा स्याज्जीवनकर्मण उपजीवन्त्येनन्मेघोऽप्यन एतस्मादेव यन्निरशिश्नथद्वृषा वर्षिता मध्यमस्तस्या एषापरा भवति ॥ ४७ ॥**

---

अपोषा अनसः सरदिति[3] । वामदेवस्यार्षम् । परा च । अपासरदुषाः । उषाः अपासर्पत् । कुतः । अनसो वायोः । यदा संपिनष्टि वायुर्मेघं तदा तन्निवासिन्युषा मामप्ययं हनिष्यतीति बिभ्यत्यपसरति । नि यत्सीं शिश्नथत् । यदा निरशिश्नथत् निर्जघान निर्हन्ति वृषा वर्षिता वायुः तदा अपासरदुषाः ।

' अनो वायुरनितेः ' धातोः प्राणनार्थस्य । ' अपि वोपमार्थे[4] स्यात् । अनस इव शकटात् । यथा शाकटिकः शकटात्केनचित्संपिष्यमाणादपसर्पेदेवं वायुना संपिष्यमाणान्मेघादपासरदुषा इति द्वितीया कल्पना ।

' तस्या एषापरा भवति ' । सा पुनः किमर्थम् । उत्तमापि ह्युषा आदित्यसंश्रयाद्भवति । इयं तु मध्यमा मेघसंश्रया वायोरेव संस्तवादिति मध्यमास्वभावप्रायोवृत्त्युपप्रदर्शनार्थम्[5] ॥ ४७ ॥

---

**एतदस्या अनः शये सुसंपिष्टं विपाश्या । ससार सीं परावतः ( ऋ० सं० ४ । ३० । ११ ) ॥ एतदस्या अन आशेते**

---

१ क. ख. १२ ( ४६ ); ङ. °वति । इति निरुक्तभाष्ये ५ ध्याये ४६ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. २ क. ख. १३ ( ४७ ); त. द. १२. ३ ग. °दिति । वा°; ङ. अपोषा । इति. ४ च. °मानार्थे. ५ क. ख. १३ (४७); ङ. ' °त्युपप्रदर्शनार्थम् । ४७ । ' इति नास्ति; ग. च. वर्जमितरेष्वङ्को नास्ति.

सुसंपिष्टमितरदिव विपाशि विमुक्तपाशि ससारोषाः परावतः प्रेरितवतः परागताद्वेळा व्याख्याता तस्या एषा भवति ॥ ४८ ॥

---

एतदस्या अनः शय इति । विशीर्णमुदकभावेन पृथिव्यां संक्षय अवस्थितं दर्शयन् ब्रवीति मेघम् । एतदस्याः उषा एव उषसः अनो मेघाख्यमाश्रयभूतं सुसंपिष्टं सुष्ठु संचूर्णितं वायुना इतरदिव शकटानः विपाशि छिन्नसर्वपाशबन्धनम् आशेते आतत्य पृथिव्यां शेते आस्ते यतः संपिष्यमाणात् ससार माध्यमिका उषाः परावतः दूराद्दूरतरं ननाशेति ।          ५

'इळा' ( ३५ ) व्याख्याता ' 'ईळेः स्तुतिकर्मणः ' ( निरु० ८।७) इति । ' तस्या एषा भवति ' ॥ ४८ ॥          १०

---

अभि न इळा यूथस्य माता स्मन्नदीभिरुर्वशी वा गृणातु । उर्वशी वा बृहद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्यायोः ( ऋ० सं० ५ । ४१ । १९ ) ॥ सिषक्तु न ऊर्जव्यस्य पुष्टेः ( ऋ० सं० ५ । ४१ । २० ) ॥ अभिगृणातु न इळा यूथस्य माता स्मदभि नदीभिरुर्वशी वा गृणातूर्वशी वा बृहद्दिवा महद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्य प्रभृतस्यायोरयनस्य ज्योतिषो वोदकस्य वा सेवतां नोऽन्नस्य पुष्टे रोदसी रुद्रस्य पत्नी तस्या एषा भवति ॥ ४९ ॥          १५          २०

---

१ क. ख. छ. त. द. °येला. २ क. ख. १४ ( ४८ ), त. द. १४. ३ ग. इति । नि; ङ. एतदस्या इति. ४ क ख. ग. व. च. ज. इला. ५ क. ख. १४ ( ४८ ); ङ. °वति । इति भाष्ये ५ ध्याये ४८ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ६ क. ख. छ. त. द. इला. ७ क. ख. ङ. थ. ध. ड. माता सर्वस्य माता स्म°. ८ क. ख. ङ. थ. ध. ड. °मेस्य मनुष्यस्य ज्यो°. ९ क. ख. १५ ( ४९ ); त. द. १५.

अभि न इळेति । अत्रेरार्षम् । शक्वरी । अभिगृणातु अभिशब्द-यत्वस्मान् । कासौ । इळा । किंलक्षणा । यूथस्य माता मेघयूथस्य निर्मात्री मध्यमा । केनाभिगृणातु । नदीभिः नर्दनाभिरद्भिः । उर्वशी वा । उर्वशीति वा योच्यते इळेति वा सा गृणातु नः अस्मानिति अभिस्तनयतु । उर्वशी

५ वा बृहद्दिवा गृणाना । उपमार्थे वा 'न'शब्दो भेदापेक्षया । उर्वशीव बृहत् महत् गृणातु दिवा द्योतनवता विद्युत्सहितेनोदकसमूहेन अभ्यू-र्ण्वाना सर्वमिदमभिप्रच्छादयन्ती प्रभृतस्य प्रकर्षेण संभृतस्य आयोः अयनस्य गमनशीलस्य उदकस्य समूहेन सिषक्तु सेवताम् अस्मान् ऊर्ज-व्यस्य पुष्टेः यवादेः अन्नस्य पोषणाय ।

१० रोदसी कस्मात् 'रोदसी (३६) रुद्रस्य पत्नी' रुद्रस्य विभूतिः । 'तस्या एषा भवति' ॥ ४९ ॥

---

रथं नु मारुतं वयं श्रवस्युमा हुवामहे । आ यस्मिन्तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी (ऋ० सं० ५।५६।८) ॥

१५ रथं क्षिप्रं मारुतं मेघं वयं श्रवणीयमाह्वयामह आ यस्मिन्तस्थौ सुरमणीयान्युदकानि बिभ्रती सचा मरुद्भिः सह रोदसी रोदसी ॥ ५० ॥

---

१ क. ख. ग. घ. च. ज. ट. इलति । अ°. २ ग. ज. °णातुइति अभि°;

२० च. °णातु इति अभि°. ३ क. ख. ग. घ. च. ज. इला. ४ ग. ज. °नद्राभि°; च. °नद्राभि° द्भना. ५ ग. ज. उर्वश्यर्थे, च. उर्वश्यर्थे° पमा. ६ क. ख. घ. ट. ड. °हेन गृणाना शब्दयन्ती अ°, च. °हेन अ° गृणाना शब्दयन्ती ७ क. ख. १५ (४९); ड. °वति । इति नैरुक्तोत्तरषट्के भाष्ये ५ ध्याये ४९ खण्डः; ग. च. वर्गमितरेष्वङ्को नास्ति. ८ ङ. त. ड. 'मेवं' नास्ति. ९ क. ख. १६ (५०); त.

२५ ढ. १६; ड. ५० इति नैरुक्तोत्तरषट्के पञ्चमाध्यायः समाप्तः.

न्द्राणिंगौरीमिमायतस्याःसंमुद्रागौरमीमेदुर्पद्मयेसूर्यंवसाद्धिंकेण्व-
तीस्वांस्त रिद्धेघपोर्षां एतदस्याअमिनइळारथंनुं पञ्चाशत् ।

इति निरुक्त उत्तरषट्के पञ्चमोऽध्यायः ।

---

१ थ. °रिद्पों'. २ छ. इति नैरुक्ते एकादशोऽध्यायः; त. द. इत्येकादशमोऽ-
ध्यायः समाप्तः; थ. इति नैरु० ड. 'इति० ध्यायः' नास्ति.

## अथ द्वादशाध्यायस्य

### प्रथमः पादः ।

ॐ ॥ अथातो द्युस्थाना देवतास्तासामश्विनौ प्रथमागामिनौ भवतोऽश्विनौ यद्व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषान्योऽश्वैरश्विनावित्यौर्णवाभस्तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके राजानौ पुण्यकृतावित्यैतिहासिकास्तयोः काल ऊर्ध्वमर्धरात्रात्प्रकाशीभावस्यानुविष्टम्भमनु तमोभागो हि मध्यमो ज्योतिर्भाग आदित्यस्तयोरेषा भवति ॥ १ ॥

---

व्याख्याता मध्यस्थाना देवताः सवचनलिङ्गविशेषाः । अधुना तेनैव समाम्नायानुक्रमेण द्युस्थाना व्याख्येयाः । तदर्थं विशेषतः पुनरधिकारवचनम् । ' अथातो द्युस्थाना देवताः ' इति । बहुवचनं पक्षेऽर्थवत् । द्यौस्तेषां स्थानमिति द्युस्थानाः । देवता व्याख्यास्यन्त इति शेषः । 'तासामश्विनौ प्रथमागामिनौ भवतः ' । तौ कस्मात् । कालतो हि द्युस्थानानां देवतानां विशेषो विवक्षितः । आश्विने च स्तुतशस्त्रके कर्माणि प्रथममश्विनोः कालः संधौ । एकश्चाश्वी मध्यस्थान एको द्युस्थानो नैरुक्तानाम् । अतो द्युस्थानमध्यस्थानत्वात्तयोरश्विनोरुपन्यासः । यद्येवमेकस्य मध्यस्थाने एकस्य द्युस्थाने उपदेशः प्राप्नोति । न । एकैकस्य तयोरश्विशब्दस्य पृथग्भावेन स्तुत्यभावादश्विद्वन्द्वस्य चात्यन्तमवियोगान्नासत्याविति च पृथक्स्तुत्यभावात् । सत्यप्यैकवियोगे प्राथम्यात्प्रथमस्य समाम्नानं युक्तमिति चेन्न तत्कालेन मध्यस्थानस्य हीयमानरूपत्वाद् द्युस्थानस्य च वर्धमानरूपत्वात् अतोऽनन्तरं च द्युस्थानदेवतारूपान्तरसंस्थानादिति ।

अश्विनौ किमर्थं प्रथमं कथ्येते

द्वयोरेकत्र कथने किं कारणम्

---

१ ङ. ढ. हरिः ओम्; छ. नुं; थ. ओ३म् ; ध. ॐम्. २ छ. त. द. ढ. °त्तमो. ३ ग. ष. ज. नुं व्या°; प. ट. श्रीगणेशाय नमः । व्या° ४ ग. ज. °वनपक्षे°. ५ च. मध्यस्था° म. ६ च. ट. °कस्यैं तयोरश्वि° हा. ७ ग. ज. 'अपि' नास्ति ८ ग. ज. °मातं.

'अश्विनौ' (निघ० ५।६।१) कस्मात्। 'यद्व्यश्नुवाते सर्वम्'। केन।

अश्विनौ कस्मात्

'रसेनान्यः'। रसेनोदकेन सर्वम् व्यश्नुते व्याप्नोति। ज्योतिषैकः। 'अश्वैरश्विनावित्यौर्णवाभः'। अश्वैस्तद्वन्तौ तावित्यौर्णवाभ आचार्यो मन्यते।

५ 'तत्कौ अश्विनौ' इति विचारः। तदिति वाक्योपादाने। कावेतावश्विनाविति विचारार्थः प्रश्नः। 'द्यावापृथिव्यावित्येके'। विज्ञायते हि 'तौ यौ प्रत्यक्षदैवतमश्विनाविमे एव ते द्यावापृथिव्यौ' इति। द्यौर्ज्योतिषा व्याप्नोति पृथिव्यन्नेन। 'अहोरात्रावित्येके'। अहर्ज्योतिषा व्यश्नुते रात्रिरवश्यायेन।

कौ अश्विनौ

१० 'सूर्याचन्द्रमसावित्येके'। सूर्यो ज्योतिषा व्यश्नुते रसेन चन्द्रमाः। 'राजानौ पुण्यकृतावित्यैतिहासिकाः'। 'अश्वैरश्विनौ' इत्येतन्निर्वचनमथाश्विन्पक्षे इतिहासे समवैति।

'तयोः काल ऊर्ध्वमर्धरात्रात्प्रकाशीभावस्यानुविष्टम्भम्'। ज्योतिषा व्यतिभिद्यमानमूर्ध्वमर्धरात्रात्तमो यदा ज्योतिरनुविष्टभ्नाति सोऽश्विनोः कालः। ततः प्रभृति संधिस्तोत्रं पुरोदयादाश्विनम्। उदिते सौर्याणि। तत्र यत्तमोऽनुप्रविष्टं ज्योतिषि तद्भागो मध्यमस्य रूपम्। यज्ज्योतिस्तमस्यनुप्रविष्टं तद्भागं तद्रूपम् 'आदित्यः'। तावेतौ मध्यमोत्तमाविति स्वमतमाचार्यस्य। यतः समर्थनायोदाहरति। 'तयोरेषा भवति' ॥ १ ॥

१५ तयोः कालः

२०

---

**वसातिषु स्म चरथोऽसितौ पेत्वाविव। कदेदमश्विना युवमभि देवाँ अगच्छतम्॥ इति सा निगदव्याख्याता तयोः समानकालयोः समानकर्मणोः संस्तुतप्राययोरसंस्तवेनैषोऽर्धर्चो भवति**

---

१ क. ख. ग. ट. ठ. ड. °केन सर्वं व्य°; च. °केन ˘व्य° सर्वं. २ ग. ज. द्यावाभ्यि°; च. °द्यावाभ्यि क्षा. ३ क. ख. ग. ट. ठ. ड. मध्यमः। तन्मध्यमस्य; च °ो म ध्य° ध्यमः। तन्म°. ४ ठ वति। इति नि- निघण्टवं० १ खण्डः; ड. °वति। इति निरुक्तटीकायां निघण्टपञ्चकेन सह सप्तदशाध्याये प्रथमः खण्डः;- क ख. ग च. वर्जमितरेष्वाह्यो नास्ति. ५ क. ग. च. ठ. ड. °श्यात। वसातिषु स्म च रथो वसातयो रात्रयो वसन्ते स्म इतौ [illegible] सितौ पेत्वाविव। अश्व. वृत्रहणा सुगन्त्रोस्त्र ओ.°.

२५ ३०

वासात्यो अन्य उच्यत उषःपुत्रस्तवान्य इति तयोरेषापरा भवति ॥ २ ॥

---

वसातिषु रैमेति । उपजातदेवतादर्शनचक्षुरतीतेषु रात्रिपर्यायेषु संध्यो प्राप्ते सहसैवाश्विनौ दृष्ट्वा मन्त्रदृगब्रवीति । वसातिषु रात्रिषु । तासु हि प्राणिनो वसन्ति । किं तास्विति । चरथो युवाम् । कथम् । असिताविव पेत्वौ । कृष्णाविव मेषौ समानरूपौ । उषसि कथमपि मया कक्षितौ । यतो ब्रवीमि । कदेदमश्विना युवम् । कदेदमस्मत्कर्म प्रति ये देवा आगतास्तान्प्रति हे युवामश्विनौ आगच्छतम् आगतवन्तौ स्थः ।

अश्विनौ

'तयोः' अश्विनोः 'समानकालयोः'। उभयोरपि हि तयोरूर्ध्वमर्धरात्रात्काल इति समानैककालः । 'समानकर्मणोः'। उभयोरपि तयोरेकं कर्म। तिरोअह्न्याः सोमा आश्विनश्च द्विकपालः। 'संस्तुतप्राययोः'। प्रायेण हि तयोर्बाहुल्येन संस्तव एव। तयोः पुनः 'असंस्तवेनैषोऽर्धर्चो भवति'।

तयोः कालः कर्म च समाने सूक्तानि ऋचश्च प्रायः स्तुतिरूपाणि असंस्तवरूपोऽर्धर्चः

नन्वस्यामृचि वसातिषु स्म चरथ इति वसातयो हि जनपदा अपि प्रसिद्धाः। तदधिपती राजानौ पुण्यकृतौ अश्विनौ स्तद्वन्ताविति शक्यते कल्पयितुम्। तद्यथा। वासात्यौ तद्देशाधिपती कौचिद्राजानौ बहुस्वौ पुण्यकृतौ यज्ञकर्मणि देवान्प्रति गतौ केनचिदुच्येते । यौ युवां वसातिषु जनपदेषु नित्यमसिताविव पेत्वौ समानवेषौ चरथस्तौ युवामिदं देवस्थानं प्रति ये देवा वर्तन्ते तान्प्रति कदा हे अश्विनौ युवामागच्छतमागतवन्ताविति । मा भूदेषा मन्त्रार्थयोजनेत्यत आह । 'वासात्यो अन्य उच्यत उषः-

नायमर्धर्चोऽश्विपर इति केचित्

१ ग. श्मेति । उ°; ज. श्मेति । उ°. २ क. ख. घ. ट. ठ. ड. निय°. ३ क. ख. घ. ट ठ. ड. °वीति. ४ ग. ज. °मानः का°. ५ ग. ज. 'मनु' नास्ति. ६ ग. ज. 'तिशु स्म च°; 'तिशु स्म च' षु स्म. ७ क. ख. घ. ट. ठ. ड. पुण्यकृतौ राजानौ. ८ क. ख. घ. ट. ठ. ड युवामागतव°. ९ क. ख. घ. ट. ठ. ड. °त्यो ऽन्य°.

अश्विपरोऽर्थः

पुत्रस्तवान्य इति ' । एको वासात्य उच्यत एकश्च उषसः पुत्र इति । एवमेतस्मिन् भिन्न-स्तुतावर्धर्चे उषसः पुत्रेण सूर्येण सह समानस्थानादसंशयं मध्यमो वासात्यो रात्रेः पुत्र इति ।

५ ' तयोरेषापरा भवति ' । सा पुनः किमर्थम् । मध्यमोत्तमावश्विना-वित्यस्यैवार्थस्य दृढतायै स्फुटं यदेतस्यामेतत्परस्यामृचि ॥ २ ॥

---

इहेह जाता समवावशीतामरेपसा तन्वा३ नामभिः स्वैः । जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे

१० ( ऋ० सं० १ । १८१ । ४ )॥ इह चेह च जातौ संस्तूयेते पापेनालिप्यमानया तन्वा नामभिश्च स्वैर्जिष्णुर्वामन्यः सुमहतो बलस्येरयिता मध्यमो दिवोऽन्यः सुभगः पुत्र ऊह्यत आदित्यस्त-योरेषापरा भवति ॥ ३ ॥

---

१५ इहेह जातेति । अगस्त्यस्यार्षम् । प्रातरनुवाकाश्विनयोर्विनियोगः ( आश्व० श्रौ० ४ । १५ ) । हे अश्विनौ युवामुच्येथे । इहेह जातौ

अश्विनौ

इह च मध्यस्थाने इह च द्युस्थाने जातौ समवा-वशीतां संस्तूयेथे । केन । अरेपसा तन्वा अपापया तन्वा यथासंकल्पकृतया नामभिः स्वैः । परमनाश्रित्य यानि स्वनिमित्तानि तैः ।

२० किंच । जिष्णुर्वामन्यः । नित्यमेव जेता युवयोरन्यः । सुमखस्य सूरेः सुमहतो बलस्येरयिता शत्रुषु । स च नान्यो मध्यस्थानादिति मध्यस्थानः । दिवो अन्यः सुभगः पुत्रः सुभगः सुधनः ऊहे उह्यते वायुना नित्यम् । स च नान्यः सूर्यादित्येवमत्रापि मध्यमोत्तमाविति ।

---

१ क. ख. घ. ट. ठ. ड. °मानव्यास्त्या°. २ ठ. ड. °मृचि । इति निरुक्तभाष्ये द्व्याये २ खण्डः; क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति. ४ छ. त. सुमहतो महतो बल°. ५ क. ख. छ. त. द. दिवो अन्यः. ६ क. ख. ड. थ. ध. ठ. ड. ऊह्य. ७ ग. °तेति । अ°. ८ क. ख. घ. ट. ठ. ड. °ल्पतया; च. °ल्पकृत°. ९ क. ख. घ. ट. ठ. ड. स्वस्तुतिनि°; च. स्वभनि° स्तुति. १० क. ख. घ. ट.

२१ ठ ड. ऊह्य°.

'तयोरेषापरा भवति'। सा पुनः किमर्थम्। संस्तुतप्रायावेतौ समानकालौ समानकर्माणावित्युक्तं तदुपप्रदर्शनार्थम् ॥ ३ ॥

---

प्रातर्युजा वि बोधयाश्विनावेह गच्छताम्। अस्य सोमस्य पीतये (ऋ० सं० १। २२। १) ॥ प्रातर्योगिनौ विबोधयाश्विनाविहागच्छतामस्य सोमस्य पानाय तयोरेषापरा भवति ॥४॥ ५

प्रातर्युजेति। मेधातिथेरार्षम्। प्रातरनुवाके विनियोगः (आश्व० श्रौ० ४।१५)। हे स्तोतः यावेतौ प्रातर्युज्येते हविषा स्तुत्या च। तावेतौ अश्विनौ विस्पष्टाभिः स्तुतिभिरस्मदर्थं विबोधय। विबोधितौ च त्वया इह कर्मणि आगच्छताम् अस्माकम् अस्य सोमस्य पीतये पानाय ॥ १०

तौ एव

'तयोरेषापरा भवति'। सा पुनः किमर्थम्। नैवानयोरन्यस्मिन् काले इज्यास्ति। यद्यपि क्रियेतानिज्यैव सेति सुतरां परया संस्तवं कालं चोपप्रदर्शयति ॥ ४ ॥

--- १५

प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम्। उतान्यो अस्मद्यजते वि चावः पूर्वः पूर्वो यजमानो वनीयान् (ऋ० सं० ५। ७७। २) ॥ प्रातर्यजध्वमश्विनौ प्रहिणुत न सायमस्ति देवेज्या अजुष्टमेतदप्यन्योऽस्मद्यजते वि चावः पूर्वः पूर्वो यजमानो वनीयान्वनयितृतमस्तयोः कालः सूर्योदयपर्यन्तस्तस्मिन्नन्या देवता ओप्यन्त उषा वष्टेः कान्तिकर्मण उच्छतेरितरा माध्यमिका तस्या एषा भवति ॥ ५ ॥ २०

---

१ ठ ड. °नार्थम्। इति निरुक्तभाष्ये पञ्चाध्याये तृतीयः खण्डः; क. ख. ग. घ. वर्जमितरेष्वङ्को नास्ति २ ग. °जेति। मे°. ३ ठ ड. °यति। इति निरुक्तभाष्ये द्ध्याये ४ खण्डः; क. ख. ग. घ. वर्जमितरेष्वङ्को नास्ति. ४ क. ख. छ. त. द. °प्यन्यो अस्म°. ५ छ. त. द. उच्य°. २५

प्रातर्यजध्वमिति । अत्रेरार्षम् । प्रातरनुवाके विनियोगः ( आश्व० श्रौ० ४ । १५ ) आश्विने च ( आश्व० श्रौ० ६ । ५ ) । हे स्तोतारो यूयमुच्यध्वे ।

तौ एव

तौ अश्विनौ प्रातः एव यजध्वम् । कथमिति । यतो ब्रवीमि । प्रहिणोत प्रकर्षेण तौ प्रति स्तुतीर्हवींषि च गमयतेति । किमित्येवं ब्रवीति प्रातर्यजध्वमिति । इतो यस्मात् न सायमस्ति देवया: । अनयोर्देवयोर्न सायमस्ति इज्या । यद्यपि कथंचित्स्यात् अजुष्टम् अनासेवितं च तदश्विभ्यां कर्म । उतान्यो अस्मद्यजते । अपि च अनादृते त्वयि अन्यैः अस्मत्त एतावश्विनौ यजते । वि च भावः । व्यावयति च तर्पयति हविर्भिः । पूर्वः पूर्वो यजमानः प्रथमः प्रथमो यजमानो वनीयान् वनयितृतमः संभक्तृतमः आदृततमात् । तस्यैव हविरासेवेते अश्विनौ नेतरस्येति ।

'तयोः कालः सूर्योदयपर्यन्तः' । 'प्रकाशीभावस्यानु विष्टम्भम्' ( निरु० १२।१ ) इत्यतः कालप्रभृति सूर्योदयपर्यन्तस्तयोः कालः । ततःपरं यागकालः । ततः किम् । 'तस्मिन्नन्या देवताः' । तस्मिन् स्तुतिकालेऽन्या देवता आश्विने शस्त्रे याः स्तुतिं लभन्ते ताः

आश्विने काले अन्यासां देवतानामावापः

'ओप्यन्ते' तासामावापस्तत्कालस्तुतिप्रतिलम्भ इति । तत्र तावदुषाः प्रथममोप्यते । तद्देवतानि सूक्तानि शस्यन्ते । 'उषा ( २ ) वष्टेः कान्तिकर्मणः' । 'वश कान्तौ' ( धा० २ । ७० ) इत्यस्य । यथोक्तम् 'उच्छतीति सत्याः' ( निरु० २ । १८ ) इति तदिदं विकल्पेन द्युस्थानायाः । या पुनः 'इतरा माध्यमिका' उषा न तस्या विकल्पः । किं तर्हि । 'उच्छतेः' एव सा विवासनार्थस्य । उदकानि विवासयति विवास्यते वा मेघान्मध्यमेनेति । 'तस्या एषा भवति' ॥ ५ ॥

तासु उषाः प्रथमा

उषाः कस्मात्

---

१ ग. ज. प्रातरेतावश्विनौ य°; घ. प्रातरेतावश्विनौ य°. २ क. ख. घ. ट. ठ. ड. 'च' नास्ति. ३ ग. ज. °न्योऽप्यस्म°. ४ घ. ट. °तोऽसम्. ५ ग. ज. °सेवितो श्विनौ; घ सेवितोऽश्वि° ते अ. ६ ग. ज. उप्य°; घ. उप्य° ओ. ७ ग. घ. ज. °थमोप्य°. ८ ठ. ड. °वति । इति निरुक्तभाष्ये द्वादशाध्याये ५ खण्डः; क. ख. ग. ज. वर्गमितरेष्वङ्कं नास्ति.

उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति । येन तोकं च तनयं च धामहे ( ऋ० सं० १ । ९५ । १३ ) ॥ उषस्तच्चित्रं चायनीयं मंहनीयं धनमाहरास्मभ्यमन्नवति येन पुत्रांश्च पौत्रांश्च दधीमहि तस्या एषापरा भवति ॥ ६ ॥

५

उषस्तच्चित्रमा भरेति[2] । गोतमस्यार्षम् । प्रातरनुवाके[3] ( आश्व० श्रौ० ४ । १५ ) आश्विने ( आश्व० श्रौ० ६ । ५ ) उषाः[4] च विनियोगः । हे उषः तदस्माकं चित्रं चायनीयं धनम् आहर त्वं येन त्वत्प्रत्तेन वयं पुत्रांश्च पौत्रांश्च अविच्छेदेन तृप्तान् दधीमहि ।

१०

' तस्या एष परा भवति ' । सा पुनः किमर्थम् । पूर्वस्यामृचि चित्रं धनमाहरेत्युक्तम् । तत्र पुनरुभयोरप्युषसोरविशिष्टम् । विशिष्टं तु परस्यामुत्तमलिङ्गं ' पूर्वे अर्धे रजसो भानुमञ्जते ' इति । अतः परोदाह्रियते[5] ॥ ६ ॥

१५

एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते । निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ( ऋ० सं० १ । ९२ । १ ) ॥ एतास्ता उषसः केतुमकृषत प्रज्ञानमेकस्या एव पूजनार्थे बहुवचनं स्यात्पूर्वेऽर्धेऽन्तरिक्षलोकस्य[6] समञ्जते भानुना । निष्कृण्वाना आयुधानीव धृष्णवः । निरित्येष समित्येतस्य स्थाने[7] एमीदेषां निष्कृतं जारिणीवेत्यपि निगमो भवति । प्रतियन्ति गावो गमनादरुषीरारोचनान्मातरो

२०

१ छ. त द. 'स्तच्चायनीयं धन°. २ ग. 'रेति । गो°. ३ ग. ज. °वाके वि°; च. °वाके ' वि° आश्विने च. ४ क. ख. घ. ट. ठ. ड. उषः वाजिनीवति त°; च. उषः ' त' वाजिनीवति. ५ ठ. ड. °यते । इति निरुक्तभाष्ये ६ ध्याये ६ खण्डः; क. ख. ग. ज. वर्ग्गमितरेष्वङ्को नास्ति. ६ क. ख. द. °स्पूर्वे अर्धे अन्त°; त. °त्पूर्वेर्धे अन्त°. ७ क. ख छ. त. द. स्थाने । एमी°.

२५

भासो निर्मोऽयः सूर्या सूर्यस्य पत्न्येषैवाभिसृष्टकालतमा तस्या दृष्टा भवति ॥ ७ ॥

---

एता उ त्या इति। पूर्ववदार्षं विनियोगश्च। याः पूर्वे अर्धे अन्तरिक्षलोकस्य समञ्जते भानुना भासा आत्मानं संसमभिव्यञ्जयन्ति। एतास्ता उषसः। किमिति। केतुमकृत अकृषत कुर्वन्ति लोकस्य प्रज्ञानम्। कथं ताः प्रज्ञानं लोकस्य कुर्वन्ति। अत आह। निष्कृण्वाना आयुधानीव धृष्णवः। 'निरित्येष समित्येतस्य स्थाने'। यथा संस्कुर्वाणाः नित्यं निर्मृजन्तः आयुधानि निर्मलानि कुर्वन्ति धृष्णवः धर्षयितारः ते आयुधैरुपजीवना एवं भानुना स्वेन भासा तमोमलमपनीय निर्मलानि प्रज्ञानानि लोकस्योषसः संस्कुर्वन्ति। ततश्च प्रति गावोऽरुषीर्यन्ति मातरः। यत एवोदितमस्तमेव सूर्यं प्रति यन्ति तत्रैवान्तर्धीयन्ते। सूर्यस्यैव हि रश्मिप्राप्तिप्रोत्सार्यमाणे तमस्यपररात्रे जाते प्रकाश उपजायते। ता उषस इत्याचक्षते। स एव परमार्थतः सूर्य एव स्त्रीलिङ्गविशिष्टो भवति सूर्यकार्यत्वात्प्रकाशस्य।

'एकस्या एव पूजनार्थे बहुवचनम्' इति वचनभेदप्रतिसमाधानम्।

निरित्येष समित्येतस्य स्थाने — 'निरित्येष समित्येतस्य स्थाने' सामर्थ्यादुपत्यथः। संस्क्रियमाणानि ह्यायुधान्यतिनिर्मलानि भवन्ति।

यथा चोपपद्यते उपसर्गव्यत्ययस्तथा निगममुदाजहार। 'एमीदेषाम्' इति। 'यदा दीध्ये न दविषाण्येभिः परायद्भ्योऽवहीये सखिभ्यः। न्युप्ताश्च

तस्योदाहरणम् — बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव' (ऋ० सं० १० । ३४ । ५ ) ॥ कवषस्य वाक्षस्य वार्षम्। कृतनिवृत्तिर्देवनादशक्नुवन्नात्मानं धारयितुं ब्रवीति।

---

१ छ. °भिवित्रृ°. २ ग. इति । पू°. ३ ग. च. ज °र्धेऽन्त°. ४ क. ख. च. ट ठ. ड. °नमभि°. ५ क. ख च. ट. ठ. ड. °न्तर्लीय°; च. °र्धा° टी. ६ भ. °ष्णीति । कव°; अ. °याणीति । कव°; घ. ठ. °याण्येभि । कव°.

यदा दीध्ये भृशमभिध्यायामि निश्चयेन न दविषाणि न देविष्यामि एभिः अक्षैरिति अथ तदा सखिभ्यः समानख्यानेभ्यः कितवेभ्यः परावद्भ्यः परागच्छद्भ्यो देवनस्थानम् अहमेभ्यः अवहीये भृशं हीनोऽस्मीति । यदा च पुनस्ते प्रक्ष्य आस्फारं निवपन्ति अक्षान् अथ पुनस्तदा तैर्न्युताश्च ते बभ्रवः बभ्रुवर्णा अक्षा वाचमक्रत शब्दमकुर्वत । अथ तदा निवृत्तिमविगणय्य एमीत् आगच्छाम्येव एषाम् अप्येषाम् अप्येवं निष्कृतं संस्कृतमक्षस्थानम् आस्फारं संस्कृतं जारिणीव व्यभिचारिणीव काचित्स्त्री चैरैवमात्मनोऽविगणय्येति ।

'सूर्या' (३) इति वक्तव्यम् । सा पुनरियं 'सूर्यस्य पत्नी

का सूर्या

'एषैव' उषा 'अभिसृष्टकालतमा' । यथा सूर्यस्योदयकालं प्रत्यभिसृष्टतमा भवति गततमा भवति तथा तथा नैषा उषाः सूर्या संवृत्ता । 'तस्या एषा भवति' ॥ ७ ॥

---

सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् । आ रोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व (ऋ० सं० १० । ८५ । २० ) ॥ सुकाशनं शल्मलं सर्वरूपमपि वोपमार्थे स्यात्सुकिंशुकमिव शल्मलिमिति किंशुकं क्रंशतेः प्रकाशयतिकर्मणः शल्मलिः सुशरो भवति शरवान्वारोह सूर्ये अमृतस्य लोकमुदकस्य सुखं पत्ये वहतुं कुरुष्व सवितः सूर्या प्रायच्छत्सोमाय राज्ञे प्रजापतये वेति च ब्राह्मणं वृषाकपायी वृषाकपेः पत्न्येषैवाभिसृष्टकालतमा तस्या एषा भवति ॥ ८ ॥

---

सुकिंशुकं शल्मलिमिति । सूर्याया आर्षम् । विवाहे विनियोगः

सूर्या

(आश्व० गृ० १ । ८ । १२ ) । त्रिर्त्वे तावदुच्यते । येनैव विनियुज्य प्रमामात्मनो

---

१ ग. ज. 'व्याण्येभि°, च. 'व्याण्येभि° ष्ये; ट. 'व्याम्येभि° ण्ये; ठ. ह. 'व्याण्येभि°. २ ग. °प्य'स्फरं, ज. °प्य स्फुरं ३ क. ख. घ. ट. ठ. ह. °चिन्नवृः-स्त्री; च. °चित् स्त्री° वृः ४ ठ. ड. °वति । इति निरुक्तभाष्ये उत्तरषट्के षष्ठाध्याये सप्तमः खण्डः; क. ख. ग च. वर्जमिनरेष्वङ्को नास्ति. ५ ग. °मिति । सू°; ठ. ह. सुकिंशकमिति. ६ क. ख. °. ट. ठ. ह. °च्यते प्रमा°, ग. ज. ता प्रमा°.

विभजते तदभिदेवता ब्रवीति । सुकिंशुकं सुष्ठु काशनं दीपनं लोकानां शल्मलिं शल्मलं व्यपगतमलं विश्वरूपं सर्वरूपं हिरण्यवर्णं हिरण्योपमवर्णं हिरण्यमिव वरणीयं सुवृत सुवर्तन शोभनैर्वा रश्मिभिर्वृतं सुचक्रं सुचक्रनं सुदीप्तम् । एतमेवंलक्षणं मण्डलं रथम् आरोह त्वं हे सूर्ये अमृतस्य

५ उदकस्य लोकं स्थानम् । तत एतमधिरुह्य स्योनं सुखम् एतस्मै पत्ये मण्डलाधिष्ठात्रे वहतुं कृणुष्व कुरुष्वेति ।

पृथक्त्वपक्षे तु रथ एव रथः सूर्या उढा कन्या सूर्योच्यते । एवंलक्षणं रथमारोहेति ।

'अपि वोपमार्थे स्यात् । सुकिंशुकमिव शल्मलिमिति' । किंशुकमिति

१० सुकिंशुकमित्यादि रथविशेषणम् । अथवा उपमार्थे स्यात्

पलाशपुष्पे प्रसिद्धिः । इह तु रक्तपुष्पत्वसामान्यात्सुपुष्पितमिव शल्मलिमिति सामर्थ्यात् तेनोपमानयोग आदित्यस्य पुष्टतर इति किंशुकशब्दः पुष्पिते शल्मलौ गौण इति भाष्यकाराभिप्रायः ।

'किंशुकं क्रंशतेः' धातोः प्रकाशनार्थस्य । तद्धि दीप्तिमद्भवति ।

१५ 'शल्मलिः सुशरो भवति' । 'शॄ हिंसायाम्' ( धा० ९ । १६ ) इत्यस्य धातोः । स हि मृदुत्वात्सुहिंस्यो भवति । 'शरवान् वा' ।

ब्राह्मणवचनस्य नैरुक्तपक्षेऽर्थः

कण्टकैरसौ हिनस्ति हिंसायाम् । 'सविता सूर्यां प्रायच्छत्सोमाय राज्ञे प्रजापतये वेति च ब्राह्मणम्' । नैरुक्तपक्षे ज्योत्स्ना सोमाय ददाति ।

२० यदुक्तम् । 'आदित्यतोऽस्य दीप्तिर्भवति' ( निरु० २ । ६ ) इति । 'प्रजापतये वेति' । उपसं वा मध्यस्थानाय प्रजापतये ददाति । केचित्त्वैतिहासकपक्षे इच्छन्ति । तेषामितिहासं शृणु कथमेतदिति ।

---

१ क. ख. घ. ट. ठ. ड. विभज्य; म. ज. विभजयते. २ ग. ज. वार'; च. वारणी' वैरम, ठ. ड. रमणीयं. ३ ग. च. ज. 'पत्ये वहतुं मण्डलाधिष्ठात्रे कृ°. ४ क. ख. घ. ट. ठ. ड. 'इति' नास्ति. ५ ठ. ड. 'ढोढा । पत्ये सोमायेत्यादि । कन्या° ( ट. च. पुस्तके इदं प्रान्ते लिखितम् ). ६ घ. ट. ठ. 'वमायोग. ७ क. ख. घ. ट. °वान्वा । हिंसावान् । क'. ८ क. ख. घ. ट. ठ. ड. हि; च. हिंसायां. ९ क. ख. घ. ठ. ठ. ड. निरु'. १० म. °हासो सूर्यं; च. °हासं सोमसूर्ययोः शृणु, ज. °हासो सूर्य कथ°.

'वृषाकपायी (४) वृषाकपेः पत्नी' । वृषाकपिरादित्यः । तस्य

का वृषाकपायी

पत्नी तद्विभूतिः उषःकाले यदवश्यायान् वर्षति कम्पयति च तद्गुणयोगात् । सा पुनः 'एवैव' सूर्या 'अभिसृष्टकालतमा' वृषाकपायीत्युच्यते । 'तस्या एषा भवति' ॥ ८ ॥ ५

---

वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे । घसत्त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः (ऋ० सं० १० । ८६ । १३ )॥ वृषाकपायि रेवति सुपुत्रे मध्यमेन सुस्नुषे माध्यमिकया वाचा स्नुषा साधुसादिनीति वा साधुसानिनीति वा १० स्वपत्यं तत्सनोतीति वा प्राश्नातु त इन्द्र उक्षण एतान्माध्यमिकान्त्संस्त्यायानुक्षण उक्षतेर्वृद्धिकर्मण उक्षन्त्युदकेनेति वा प्रियं कुरुष्व सुखाचयकरं हविः सुखकरं हविः सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यं सरण्यूः सरणात्तस्या एषा भवति ॥ ९ ॥

---

१५

वृषाकपायि रेवतीति । इन्द्रस्यार्षम् । षष्ठे पृष्ठ्याहनि वृषाकपौ विनियोगः ( अश्व० श्रौ० ८ । ३ ) । हे वृषाकपायि रेवति रयिमति धनवति । सुपुत्रे मध्यमेन

वृषाकपायी

इन्द्रेण रसहरणसामान्यात्सहस्थानसामान्यात् । सुस्नुषे माध्यमिकया वाचा मिथुनसामान्यात् । किमिति । घसत्त इन्द्र उक्षणः । प्राश्नातु ते इन्द्रः तव २० स्वभूतान् एतान्माध्यमिकान् उक्षणः अवश्यायसंस्त्यायान् एष इन्द्र आदित्यः । स हि तानुद्यन् पिबति । प्रियम् इष्टम् एतत्काचित्करं हविः । कमिति सुखनाम । तस्य यत् आचितम् आचयनं करोति तद्भवति काचित्करम् । किं पुनस्तत् । हविः उदकम् । तत्कुरुष्वावश्यायलक्षणं हविः । अन्नमवश्यायैरभिनिष्पादय । किमर्थम् । विश्वस्मात् य एष इन्द्र आदित्यः उत्तरः २५ तदर्थमिति ।

---

१ ग. ज. °पत्नी न्वकाले°; च. तद्विभूति. २ च. ट. ठ. ड. कम्पति. ३ ठ. ड. °वति । इति निरुक्तभाष्ये ६ ध्याये ८ खण्डः; क. ख. म. च. वर्जमितरेष्वयं नास्ति. ४ छ. त. द. 'हविः सुखकरं' नास्ति. ५ ग. 'तीति° । इ°. ६ क. ख. घ. ट. ड. ड. धनवति रयिमति. ७ ग. ज तदर्थमिति उत्तरः; च. °तदर्थमिति उत्तरः' इत्यरः.

'स्नुषा साधुसादिनीति वा साधुसानिनीति वा'। संतानलक्षणे[1]

स्नुषा कस्मात्

सीदति अङ्कभावमुपैति[2] स्नुषा। साधु सनोति संततिं संभजतीति वा स्नुषा। 'स्वपत्यं तत्सनोतीति वा'

५ सु इत्यपत्यनाम प्रसूयते हि तदिति। तदियं श्वशुरस्य सनोति संभजतीति वा स्नुषा। उक्षणः उक्षतेः वृद्ध्यर्थस्य। वर्धयन्ति हि[4] ओषधीरवश्यायाः। त एव वा बहुत्वाद्वृद्धा भवन्ति। उक्षतेर्वा सेचनार्थस्य। 'उदकेन' ह्यवश्यायाः सर्वमिदं सिञ्चन्ति।

'सरण्यूः' (५) इति वक्तव्यम्। सैव यदा सूर्यं प्रति अविभागेन

१० सरण्यूः कस्मात्

प्रसृता[5] भवति तदा 'सरणात्' सरण्यूरित्यु-[6]च्यते। 'तस्या एषा भवति' ॥ ९ ॥

---

अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामददुर्विवस्वते। उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः ( ऋ० सं० १०।

१५ १७।२ )॥ अप्यगूहन्नमृतां[7] मर्त्येभ्यः कृत्वी सवर्णामददुर्विवस्वतेऽप्यश्विनावभरद्यत्तदासीदजहाद् द्वौ मिथुनौ सरण्यूर्मध्यमं च माध्यमिकां च वाचमिति नैरुक्ता यमं च यमीं चेत्यैतिहासिकास्तत्रेतिहासमाचक्षते त्वाष्ट्री सरण्यूर्विवस्वत आदित्याद्यमौ मिथुनौ जनयांचकार सा सवर्णामन्यां प्रतिनिधायाश्वं रूपं कृत्वा प्रदुद्राव

२० स विवस्वानादित्य आश्वमेव रूपं कृत्वा तामनुसृत्य संबभूव ततोऽश्विनौ जज्ञाते सवर्णायां मनुस्तदभिवादिन्येषर्ग्भवति॥ १०॥

---

१ क. ख. घ. ट. ठ. ड शोभनेऽर्थे श्वशुरस्य संता°; च. ˇ संता° शोभनेऽर्थे श्वशुरस्य. २ क. ख. घ. ट. ठ. ड. °पैतीति सु ; च. पै ˇ ति° ती. ३ च. सु° सु. ४ क. ख. घ. ट. ठ. ड. हि ते ओ°; च. हि ˇ ओ° ते. ५ क. ख. सृता प्रसृता; घ. ट. ठ. ड. सृता भ,° च. ˇ प्रसृ° सृता. ६ ठ. ड. °वति। इति निरुक्तभाष्ये ६ ध्याये १ खण्ड. क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति. ७ छ. न. द. अपगु°.

अप.गूहन्निति । देवश्रवस अर्थम् । अपागूहन् अमृताम् एतामुषसं

सरण्यूः

सूर्याकपाख्यवस्थायां मर्त्येभ्यो मनुष्येभ्यः । के ते । रश्मयः । कृत्वी सवर्णामददुर्विवस्वते । सवर्णामेतां कृत्वा सरण्युम् अददुः विवस्वते आदित्याय । उताश्विनावभरत् स्तुतिभिः सा उषाः । स आश्विनोः स्तुतिकालः । अथवा । सरण्यूरभरद्द्विधा । स आश्विनोर्योगकालः । यत्तदासीत् उषसो रूपं सरण्वा वा अजहात् अत्यजत् द्वा द्वौ मिथुना मिथुनौ सरण्यूः । 'मध्यमं

नैरुक्तमते मिथुनौ मध्यमो माध्यमिका च वाक्

च माध्यमिकां च वाचमिति नैरुक्ताः'। यदा हि सरण्यूरादित्यस्य सकाशं मण्डलमनुप्रविष्टा भवत्यविभागेन तदोदिते आदित्ये विच्छिद्यते मध्यमस्य माध्यमिकायाश्च वाचः काल इत्येष तयोस्त्यागः ।

'यमं च यमीं चेत्यैतिहासिकाः' । तन्मतेन मन्त्रार्थस्य योजना । त एव

यमो यमी चेत्यैतिहासिकाः

रश्मयः प्राणाधिदेवताभावमापन्नास्तेषु [1] ध्यस्तं रूपं चेत्यैतिहासिको व्यवहारः । तां त्वाष्ट्रीं सरण्युमश्वां कृत्वा तथा सत्यश्विनोर्जन्म भविष्यं [2] पश्यन्तो लोकहिताय अमृताम् अमरणधर्मिणीं देवीमपागूहन् अन्तर्हितां चक्रुः मर्त्येभ्यो [3] मनुष्येभ्य. । उत्तरान् कुरून् प्रति निन्युः । ततश्चान्यां तत्सवर्णां छायाप्रभवां कृत्वा तामददुर्विवस्वते । उताश्विनावभरत् । यत् आश्वं तदा रूपमसीत्तेन [4] सा सरण्यूरश्विनावभरत् अजनयत् अपुष्णात् उत्तरेषु कुरुषु । अजहादु द्वा मिथुना सरण्यूः । द्वावन्यौ मिथुनौ यमं च यमीं चेति विवस्वतः सकाशादजहात् हित्वा ननाशेति ' तत्रेतिहासमाचक्षते ' । ऋजुरितिहासार्थः । यथा त्वाष्ट्री सरण्युर्विवस्वतोढा सा च तस्मान्ननाश । ' तदभिवादिन्येषर्ग्भवति ' [5] ॥ १० ॥

१ ग. 'न्निति' । दे°. २ क. ख. घ. °स्तेष्वन्यस्तद्रूपं°; ग. ज. 'स्तेष्वन्यद्रूपं; च. °स्तेष्वन्यद्रूपं °व्यस्तं रूपं° (तद्रू ) ट. 'स्तेष्वन्यत्तद्रूपं' व्यस्तं रू; ठ. ड. स्तेष्वन्यस्तद्व्यस्तं तद्रूपं°. ३ क. ख. घ. ट. ठ. ड. भविष्यत्; च. भविष्यं° ष्यत्. ४ ग. च. ज. °भरत् । आश्वं°. ५ ठ. ड. °वति । इति निरुक्तभाष्ये ६ ध्याये १० खण्ड.; क. ख. ग च. वर्जमितरेष्वङ्को नास्ति.

त्वष्टा दुहित्रे वहतुं कृणोतीतीदं विश्वं भुवनं समेति। यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश ( ऋ० सं० १० । १७ । १ ) ॥ त्वष्टा दुहितुर्वहनं करोतीतीदं विश्वं भुवनं समेतीमानि च सर्वाणि भूतान्यभिसमागच्छन्ति यमस्य माता पर्युह्यमाना महतो जाया विवस्वतो ननाश रात्रिरादित्यस्यादित्योदयेऽन्तर्धीयते ॥ ११ ॥

इति द्वादशाध्यायस्य प्रथमः पादः ।

---

त्वष्टा दुहित्र इति । पूर्वयैव समानार्थे विनियोगश्च । त्वष्टा देवो विश्वकर्मा यं पुराणविदो वदन्ति स दुहितुः वहतु वहनं विवाहं करोतीति इदं विश्व भुवनं भूतजातं विवाहदर्शनप्रेप्सया समेति। स हि विवहानां स्वभावः । यमस्य माता । भविष्यता योगेनोच्यते। पर्युह्यमाना पर्यूढा यमं च यमीं च जनयित्वा ततो महो महतो जाया विवस्वतो देवस्य जाया भार्या हित्वा अपत्ये मिथुनो अश्वं रूपं कृत्वा ननाशेति ।

सैव

नैरुक्तपक्षे तु त्वष्टा मध्यमस्तमोभागस्योषसो दुहितुः दूरे हितायाः प्रकाशरूपाया वहतुं वहनं विवस्वत. करोति । इदं विश्वं भुवनं समेति । प्रभातमिति मत्वा सर्वाणि भूतानि स्वौस्वितिकर्तव्यतासु अभिसमागच्छन्ति । यमस्य माता पर्युह्यमाना । यमस्य मध्यमस्य माता देवधर्मेण । अथवा । द्युस्थानस्यैव जाया सा मातेति । जायतेऽस्यां पुत्रत्वेन पतिः जाया भार्या । महतो विवस्वतः प्रकाशेन प्रोत्सार्यमाणा ननाश नश्यति । संक्षेपतो भाष्यकारोऽर्थं निराह। ' रात्रिरादित्यस्य ' उषा जाया। सा 'आदित्यस्योदयेऽन्तर्धीयते ' ॥ ११ ॥

नैरुक्तपक्षेऽर्थः

सप्तदशाध्यायस्य प्रथमः पादः।

---

१ छ. त. द. ' इति इदं विश्वं भुवनं समेति ' नास्ति. २ छ. प्रथम. पादः; त. इति द्वादशमोऽध्यायस्य प्र°; त. इति प्रथ°; ह. थ ध. 'इति पादः' नास्ति. ३ ग. इति"। पू°. ४ क ख ट. ठ. ड. स्वासु स्ग°; च ० स्वा° स्वासु ५ क. ख. ट. °यत इति, च. °यते° त इति, ठ. ड. °यत इति । इति निरुक्तोत्तरषट्कभाष्ये षष्ठाध्याये एकादशः खण्ड । इति निवण्टुच्छकेन सह सप्तदशा°. ६ क. ख. ग. च. पर्यन्तमितरेष्वेको नास्ति.

द्वितीयः पादः ।

सविता व्याख्यातस्तस्य कालो यदा द्यौरपहततमस्काकीर्ण-रश्मिर्भवति तस्यैषा भवति ॥ १२ ॥

'सविता' (७) इति वक्तव्यम् । स पुनरेव 'व्याख्यातः' अभिधानतः ( निरु० ७ । ३१ ॥ १० । ३१ ) । इह पुनरादित्यः । 'तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति' । यदा यस्मिन् काले द्यौरेवापहततमस्का भवति न पृथिवी । पृथिव्यां तमो भवति । दिव्यपहते तमसि विक्षिप्ता अस्यां रश्मयो भवन्ति । स सावित्रः कालः । तस्मिन् काल आदित्यः सवितोच्यते । 'तस्य' सवितुस्तत्कालोपलक्षितस्य 'एषा' प्राधान्यस्तुतिः 'भवति' ॥ १२ ॥

विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे । वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो वि राजति ( ऋ० सं० ५ । ८१ । २ ) ॥ सर्वाणि प्रज्ञानानि प्रतिमुञ्चते मेधावी कविः क्रान्तदर्शनो भवति कवतेर्वा प्रसुवति भद्रं द्विपाद्भ्यश्च चतुष्पाद्भ्यश्च व्यचिख्यपन्नाकं सविता वरणीयः प्रयाणमनूषसो विराजत्यधोरामः सावित्र इति पशुसमाम्नाये विज्ञायते कस्मात्सामान्यादित्यधस्तात्तद्वेलायां तमो भवत्येतस्मात्सामान्यादधस्ताद्रामोऽधस्तात्कृष्णः कस्मात्सामान्यादित्यग्निं चित्वा न रामामुपेयाद्रामा रमणायोपेयते न धर्माय कृष्णजातीयैतस्मात्सामान्यात्कृकवाकुः सावित्र इति पशुसमाम्नाये विज्ञायते कस्मात्सामान्यादिति कालानुवादं परीत्य कृकवाकोः पूर्वं शब्दानुकरणं वचेरुत्तरं भगो व्याख्यातस्तस्य कालः प्रागुत्सर्पणात्तस्यैषा भवति ॥ १३ ॥

१ क. ख. १ (१२); त द्. १. २ क. ख. घ. ट. ग. ड. °षा ऋक् प्रा°. ३ क. ख. १ ( १२ ); ठ. ड. °वति । इति निरुक्तभाष्ये ६ ध्याये १२ खण्डः; ग. घ. वर्जमितरेष्वङ्को नास्ति. ४ छ. त. व्यख्यपन्ना°; दृ. व्यख्यन्ना°. ५ ड. ध. ठ. ड. °द्वेळायां ६ क. ख. २ ( १३ ). त दृ. २.

विश्वा रूपाणि[1] प्रति मुञ्चते कविरिति[2] । श्यावाश्वस्यार्षम् । आभिप्लविके प्रथमेऽहनि विनियोगः ( आश्व० श्रौ० ७ । ५ ) शिक्यपाशप्रतिमोके च यजमानस्याग्नौ ( मैत्रा० सं० ३ । २ । १ ) । विश्वानि सर्वाणि रूपाणि रूपवत्सु अर्थेषु प्रतिमुञ्चते आबध्नाति[3] तमोऽपघ्नन् रूपाण्याविःकुर्वन् कविः क्रान्तदर्शनः । अथवा । कवतेः धातोर्गत्यर्थस्य कविः । गच्छत्यसौ नित्यम्[4] । किंच । कवित्वादेव प्रासावीत् प्रसुवति जनयति अभ्यनुजानाति च भद्रं द्विपदे चतुष्पदे द्विपद्भ्यश्च मनुष्यादिभ्यः चतुष्पाद्भ्यश्च गवादिभ्यः । यद्यत्तेषां भद्रं कल्याणं तत्तत्प्रसुवति । किंच । वि नाकमख्यत् । विख्यापयति नाकं द्यां च विदर्शयति । तदा हि तस्यां विकीर्णा रश्मयो भवन्ति । किंच अनुप्रयाणमुषसो विराजति । उषसः प्रयाणमनु विराजति प्रकाशते । सोऽस्माकं नामेदं करोत्वित्याशिषा स्तुतिर्निराकाङ्क्षा ।

सविता

' वि नाकमख्यत् ' इति सवितुः कालोपलक्षकं मन्त्रलिङ्गं[5] तत्पशुगुणसामान्येन समर्थयन्नाह । ' अधोरामः सावित्रः ( काठकसं० ५ । ८ । २ । तै० सं० ५ । ५ । २ । वाज० सं० २९ । ५८ ) इति पशुसमाम्नाये विज्ञायते ' । ' कस्मात् ' गुण ' सामान्यादिति ' ।

अधोरामः किमिति सावित्र इत्युच्यते

' अधस्तात्तद्वेलाया तमो भवति ' । उपरिष्टाच्च ज्योतिः । शुक्लं तदा दिवि भवति कीर्णरश्मित्वात्तस्याः । अधस्तात्तु भूम्यां तदा तमो भवति । एतस्मात् कालदेवतागुणसामान्यात् पशुरपि तथारूप एव भवति सावित्रः ।

अधोरामः कस्मात्

आह ' अधोरामः ' इति किमुक्तं भवति । उच्यते । ' अधस्तात्कृष्णः ' इति यदुक्तं स्यात्तदुक्तं भवत्यधोराम इति ।

१ ठ. ड. रूपाणीति श्यावा°. २ म. °रिति । श्या°. ३ म. च. ज. °ध्नातीति. ४ क. ख. घ. ट. ठ. ड. कवति गच्छ°. ५ क. ख. घ. ट. ठ. ड. °लक्षणकं. ६ ट. ठ. ड. °द्वेलाया.

आह । कृष्णः ' कस्मात्सामान्यात् ' राम इत्युच्यते । शृणु । विज्ञायते हि ' अग्निं चित्वा प्रथमं चित्वा न रामामुपेयात् ' ( काठकसं० २१ । ७ ) इति । ' रामा ' इति शूद्रोच्यते । सा हि ' रमणाय ' एव ' उपेयते न धर्माय ' ( वासिष्ठधर्मशास्त्रम् । १८ । १८ ) । रमणार्थमेव सा । ' कृष्णजातीया ' । इत्येकार्थौ शब्दौ । अधुनोत्सृज्य रामां स्त्रियं प्रवीणादिशब्दवत्पशावयं रामशब्दो वृत्तः कृष्णसामान्यमात्रेण ।

रामशब्दस्य कथं कृष्ण इत्यर्थः

' कृकवाकुः सावित्रः ( मैत्रा० सं० ३ । १४ । १५ ) इति पशुसमाम्नाये विज्ञायते ' । स ' कस्मात्सामान्यात् ' इति । उच्यते । ' कालानुवादं परीत्य ' । सवितुः कालमसौ वक्तीत्येवं परीत्य परिज्ञाय समाम्नाये तस्य सावित्रत्वम् । कृकवाकुशब्दमधुना निर्वक्ति । 'कृकवाकोः पूर्वं शब्दानुकरणम् ' । कृकवाकुशब्दस्य पूर्वपदं शब्दानुकरणम् । ' कृकः ' इत्येवमसौ शब्दं करोति । ' वचेरुत्तरं ' वाकुरित्येतत् । कृक इत्येवं वक्तीति कृकवाकुः ।

कृकवाकुः किमर्थं सावित्र इत्युच्यते

कृकवाकुः कस्मात्

' भगो ' (८) वक्तव्यः । स पुनरेव ' व्याख्यातः ' ( निरु० ३ । १६ ) स्त्रीभगेन शब्दव्युत्पत्तितः । तस्मात्सावित्रात्कालात्परत एतदुत्तमं ज्योतिर्भगाख्यं भवति । ' तस्यैषा[1] भवति ' ॥ १३ ॥

---

प्रातर्जितं भगमुग्रं हुवेम वयं पुत्रमदितेर्यो विधर्ता । आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ( ऋ० सं० ७ । ४१ । २ ) ॥ प्रातर्जितं भगमुग्रं ह्वयेम वयं पुत्रमदितेर्यो विधारयिता सर्वस्याध्रश्चिद्यं मन्यमान आढ्याद्दरिद्रस्तुरश्चित्तुर इति यमनाम तरतेर्वा त्वरतेर्वा त्वरया तूर्णगतिर्यमो राजा चिद्यं भगं भक्षीत्याहान्धो भग इत्याहुरनुत्सृप्तो न दृश्यते प्राशित्रमस्याक्षिणी निर्जघानेति च ब्राह्मणं जनं भगो गच्छतीति वा[3] जनं गच्छत्यादित्य उदयेन सूर्यः सर्तेर्वा सुवतेर्वा स्वीर्यतेर्वा तस्यैषा[4] भवति ॥ १४ ॥

---

१ ठ. क. ख. २ (१३); °वति । इति निरुक्तभाष्ये ६ ध्याये १३ खण्डः ( ङ. पुस्तके इदं नास्ति ); ग. घ. वर्जमितरेष्वङ्को नास्ति. २ ङ. थ. 'ह्याकुर्द°'. ३ क. ख. छ त. द. वा विज्ञायते ज°. ४ क. ख. ३ (१४); त. द. ३.

प्रातर्जितं भगमिति[1] । वसिष्ठस्यार्षम् । प्रातः प्रातः तमांसि यो जयति स भवति प्रातर्जित् । तं प्रातर्जितं भगं सूर्यम् उग्रम् उद्गूर्णम् अभ्युद्यतमुदयाय हुवेम आह्वयामहे वयं पुत्रमदितेः यो विधर्ता विधारयिता सर्वस्य जगतः स्वेनानुग्रहेण । किंच । आध्रश्चिद्यं मन्यमानः । आढ्य लुः आढ्यानां । स्पृहयिता दरिद्रः । स यं मन्यमान आकाङ्क्षन् हअन्यहनि पूजन् आस्तेऽपि नामोदियाद्भगस्ततो वार्तायै पर्यटयमिति । तुरश्चित् । तुरोऽपि यमस्तूर्णगतिः । सर्वान् प्राणिन आभिमुख्येनोपसंहाराय तूर्णगतिस्त्वरितगतिः । यं मन्यमान आस्ते प्रेताधिपतिः । तदुदयाद्धि कालातिक्रमेणासावुपसंहरति प्राणिनः । राजाचित् । राजापि चार्थिनां कार्यचिकीर्षया यं भगं भक्षि उदयं भजेत्येवमाह । तं वयं भगम ह्वयामहे ।

भगः

आह । ' अन्धो भगः ( कौषी० ब्रा० ६ । १३ ॥ शत० ब्रा० १ । ७ । ४ । ६ ) इत्याहुः ' । तस्य कोऽर्थ इति । उच्यते । स हि सूर्यभावम् ' अनुत्सृतो न दृश्यते ' । नास्मिन् द्रष्टृणा[2] ध्यानं दर्शनमस्तीत्यन्धः । न पुनरसावेव न पश्यतीति । " ' प्राशित्रमस्याक्षिणी निर्जघान ' इति च " ( कौषी० ब्रा० ६ । १३ ) इत्यैतिहासिकपक्षाभिप्रायोऽयमर्थवादः प्राशित्रस्य[3] भागस्यानन्वीक्षणस्तुत्यर्थम् । ' जनं भगो गच्छति ' ( मैत्रा० सं० १ । ६ । १२ ) इति । तदेतत्प्रसिद्धमेव । यदा तदात्मना जनमादित्यो गच्छति ।

भगोऽन्ध इति किमर्थमुच्यते

' सूर्यः ' ( ९ ) इति वक्तव्यम् । स पुनरयं भगकालात्सुतः सूर्यो भवति । ' सर्तेर्वा ' सूर्यः । ' सुवतेर्वा ' प्रसवार्थस्य । स एव हीदं सर्वं प्रसुवति । जनयतीत्यर्थः । ' स्वीर्यतेर्वा ' । सुपूर्वस्य वा ईरयतेर्गत्यर्थस्य । वायुना ह्ययं सुष्ठु ईर्यते । प्रेर्यत इत्यर्थः । ' तस्यैषा भवति ' प्राधान्यस्तुतिः ॥ १४ ॥[4]

सूर्यः कस्मात्

---

१ म. °मिति । क°. २ क. ख. ध. ट. ठ. ड. ' इति ' नास्ति. ३ क. ख. व. ट. ठ. ड. °शित्रभा°. ४ क. ख. ३ ( १४ ); ठ. ड. °स्तुतिः । इति नैरुक्तभाष्ये ६ ध्याये १४ खण्डः; ग. ज. वर्जमितरेष्वङ्को नास्ति.

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ( ऋ० सं० १ । ५० । १ ) ॥ उद्वहन्ति तं जातवेदसं रश्मयः केतवः सर्वेषां भूतानां दर्शनाय सूर्यमिति तस्यैषापरा भवति ॥ १५ ॥

---

उदु त्यं जातवेदसमिति । प्रस्कण्वस्यार्षम् । आश्विने विनियोगः

सूर्यः

( आश्व० श्रौ० ६ । ५ ) । यम् उद्वहन्ति उदयमुपनयन्ति जातवेदसम् इति सूर्यं केतवः रश्मयः अश्वा वा यमुद्वहन्ति सर्वेषां भूतानां दृशे दर्शनाय सूर्यं तं वयमभिप्रेतार्थसिद्धयेऽभिष्टुमः ।

' तस्यैषा अपरा भवति ' । सा पुनः किमर्थम् । जातवेदसं सूर्यमिति श्रवणात्संदेहः किमियं जातवेदस्युत सौरीति । परा त्वसंशयमेव सौरीति परा निजगाद ॥ १५ ॥

---

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ( ऋ० सं० १ । ११५ । १ ) ॥ चायनीयं देवानामुदगमदनीकं ख्यानं मित्रस्य वरुणस्याग्नेश्चापूपुरद् द्यावापृथिव्यौ चान्तरिक्षं महत्त्वेन सूर्य आत्मा जंगमस्य च स्थावरस्य चाथ यद्रश्मिपोषं पुष्यति तत्पूषा भवति तस्यैषा भवति ॥ १६ ॥

---

चित्रं देवानामिति । कुत्सस्यार्षम् । आश्विने विनियोगः ( आश्व० श्रौ० ६ । ५ ) । चित्रं चायनीयं पूजनीयम् ।

स एव

किं पुनस्तत् । देवाना रश्मीनां यदेतत् उदगात् अनीकं समूहः । किमस्य । चक्षुर्मित्रस्य वरुणस्याग्नेः । एतस्मिन् मित्र-

---

१ क. ख. ङ. थ. ध. ठ. ड. °मिति कमन्यमादित्याद्देवमवक्ष्यत्तस्यै°. २ क. ख. ४ ( १५ ); त. द. ४. ३ ठ. ड. त्यमिति । प्रस्क°. ४ ग. °मिति । प्र°. ५ ग. ज. °न्ति य इष्टाः स°; च. °न्ति यैं इष्टाः स°. ६ क. ख. ४ (१५); ठ. ड. °गाद । इति निरुक्तभाष्ये ६ ध्याये १५ खण्डः; ग. च. वर्जमिनरेष्वङ्को नास्ति. ७ क. ख. ङ. थ. ध. ठ. ड. °त्वेन तेन सू°. ८ क. ख. ५ ( १६ ); त. द. ५.

स्य वरुणस्याग्नेश्चक्षुः । ख्यानम् इत्यर्थः । य एष सूर्य आत्मा जङ्गमस्य च स्थावरस्य च सर्वभूतानुप्रवेशी आप्राः आपूपुरत् आपूरयति द्यावापृथिव्यौ च अन्तरिक्षं च । महत्त्वेन सूर्य आत्मा । एतस्मिन् मित्रवरुणाग्न्यादीनां देवतानां ख्यानम् । अनेन सूर्यात्मना य एतान् मित्रप्रभृतीन् पश्यति स ५ साधु पश्यतीत्यभिप्रायः । विज्ञायते हि रहस्यब्राह्मणे ' य एष सूर्य आत्मा जगतस्तस्थुषश्च ' ( ऐ० आ० २ । २ । ४ ) इति । एतदिहै-वोपेक्ष्यमिति ।

भेदपक्षे तु मित्रप्रभृतीनामेतच्चक्षुरिति । याज्ञिकपक्षे चक्षुषा ते पश्यन्तीति । तत्रापि विज्ञायते हि । ' एष वै विश्वेषां देवानां चक्षुः ' इति ।

१० ' अथ यत् ' यदा ' रश्मिपोषम् ' आपूर्णस्तेजसा रश्मीन् सूर्यः 'पुष्यति' बिभर्ति 'तत्' तदैव ' पूषा (१०) भवति । 'तस्यैषा भवति' ॥ १६ ॥

पूषा कस्मात्

---

शुक्रं ते॑ अ॒न्यद्य॑ज॒तं ते॑ अ॒न्यद्विषु॑रूपे॒ अह॑नी॒ द्यौरि॑वासि । विश्वा॒ १५ हि मा॒या अव॑सि स्वधावो भ॒द्रा ते॑ पूषन्नि॒ह रा॒तिर॑स्तु ( ऋ० सं० ६ । ५८ । १ ) ॥ शुक्रं ते अन्यल्लोहितं ते अन्यद्यजतं ते अन्यद्यज्ञियं ते अन्यद्विषमरूपे ते अहनी कर्म द्यौरिव चासि सर्वाणि प्रज्ञानान्यवस्यन्नवन् भाजनवती ते पूषन्निह दत्तिरस्तु तस्यैषापरा भवति[4] ॥ १७ ॥

२०

---

शुक्रं ते अन्यदिति । भरद्वाजस्यार्षम् । चातुर्मास्येषु विनियोगः पौष्णे हविषि (मैत्रा० सं० १ । १० । १ ॥ ४ । १० । ३ ) । हे पूषन् शुक्रम् अन्यत् तव रूपम् यल्लोहितम् अन्यत्तव रूपम् । शुक्लेन व्यपदेशात्सामर्थ्याल्लोहितादि । यजतं २५ यज्ञियं यज्ञार्हम् अन्यत् । अयज्ञियमयज्ञार्हमन्यत् । भगाशरूपेण हि नायमिज्यते । विज्ञायते हि ' तस्मादेतौ भगांशौ यज्ञे न यजन्ते ' (मैत्रा० सं १ । ६ । १६ ) इति । किंच । विषुरूपे भवतः । एते शुक्लकृष्णे

पूषा

---

१ क. ख. घ. ट. ठ. ड. °ग्नेश्च चक्षुः; च. 'ग्नेश्च चक्षुः' च. २ ग. ज. °षा पश्यती°; च. °षा पश्यन्तीति°; ते पश्यन्ती. ३ क. ख. ५ (१६); ट. ड. °वति । इति निरुक्तभाष्ये ६ ध्याये १६ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ४ क. ख. ६ (१७); त. द. ६. ५ ग. ज. °शौ न यज्ञेन य°; च. °शौ न यज्ञेन य°.

रूपे । अहनी अहोरात्रे । कर्मणा उदयेन शुक्लमहः करोषि अस्तमयेन कृष्णम् । द्यौरिवासि । यथा द्यौराकाशं सर्वं वर्तत एवं त्वमपि । विश्वा[1] हि मायाः सर्वाः प्रज्ञाः प्रज्ञावतां त्वम् अवसि पालयितो[2] पालयसि उद्यन्ननुगृह्णासि । हे स्वधावः[3] पूषन् यं त्वामेवमादिगुणयुक्तमद्राक्ष्म तव तस्य भद्रा भन्दनीया स्तुत्या रातिः दानम् इह अस्मिन् कर्मणि अस्मान् प्रति अस्तु इत्येतदाशास्महे । ५

‘ तस्यैषा अपरा भवति ’ । सा पुनः किमर्थमिति । पथि रक्षितृत्वे पूष्णोऽधिकारः । तत्परिप्रख्यापनार्थम् । अथवा । इयं वै पूषा[4] ( मैत्रा० सं० २।५।५ ) इति विज्ञायते । तद्व्युदासार्थम् ॥ १७ ॥

———

१०

**पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानळ्र्कम्[5] । स नो रासच्छुरुधश्चन्द्राग्रा धियंधियं सीषधाति प्र पूषा (ऋ० सं० ६।४९।८ )॥ पथस्पथोऽधिपतिं वचनेन कामेन कृतोऽभ्यानळ्र्कमभ्यापन्नोऽर्कमिति वा स नो ददातु चायनीयाग्राणि धनानि कर्म कर्म च नः प्रसाधयतु पूषेत्यथ यद्विषितो भवति[6] तद्विष्णुर्भवति विष्णुर्विशतेर्वा व्यश्नोतेर्वा तस्यैषा भवति ॥ १८ ॥** १५

———

पथस्पथः परिपतिमिति । ऋजिश्वन आर्षम् । पौष्णे हविषि पञ्चमेऽहनि व्यूढे विनियोगः । पथस्पथः । सर्वमार्गाणामित्यर्थः । किमिति । परिपतिम् अधिपतिं २०

स एव

वचस्या वचनेन स्तुत्या कामेन स्वेन पूषणं कामेनैव प्रत्यभिमुखीकृत्य अर्कम् अहम् अभ्यानट् । स्तुत्या कामप्राप्त्यर्थमभिव्याप्नोमि[7] । सोऽभिव्याप्तः सन् नोऽस्मभ्यं रासत् ददातु । किम् । शुरुधश्चन्द्राग्राः । शुचं संरुन्धन्ति यानि धनानि चायनीयाग्राणि अभिपूजितागमानि । धर्म्य आगमो येषाम् । किंच । तैर्धनैर्धर्मलब्धैः धियं धियं सीषधाति साध- २५

---

१ क. ख. घ. ट. ठ. ड. किंच । विश्वाः. २ क. ख. घ. ट. ठ. ड. °यितृत्वात्पाल°; च. °यितॊ पॊ° तृत्वात्पा. ३ क. ख. घ. ट. ठ. ड. °धावः अभवन् पू°; च. °धावः᳓पू° अभवन्. ४ क. ख. ६ (१७); ठ. ड. °सार्थम् । इति निरुक्तभाष्ये ६ ध्याये १७ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ५ छ. त. द. °नळर्क°. ६ क. ख. ७ (१८); त. द. ७. ७ क. ख. ग. च. म. °प्नोति. ३०

याति प्र पूषा । कर्म कर्म अस्माकम् इष्टिपशुसोमादिलक्षणं प्रसाधयतु पूषा । यागायाविघ्नेनोपनामयत्वित्यर्थः ।

५ 'अथ यत् यदा 'विषितो' व्याप्तोऽयमेव सूर्यो रश्मिभिः 'भवति' तदा 'विष्णुः (११)भवति' । 'विश· विष्णुः कस्मात् तेर्वा' । यदाविष्टः प्रविष्टः सर्वतो रश्मिभिर्भ- वति तदा विष्णुर्भवति । 'व्यश्नोतेर्वा' । विपूर्वस्य वाश्नोतेः । यदा रश्मिभिरतिशयेनायं व्याप्तो भवति व्याप्नोति वा रश्मिभिरयं सर्वं तदा विष्णुरादित्यो भवति । 'तस्यैषा भवति' ॥ १८ ॥[1]

---

१० इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूळ्हमस्य पांसुरे (ऋ० सं० १ । २२ । १७) ॥ यदिदं किंच तद्विक्रमते विष्णुस्त्रिधा निधत्ते पदं पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः समूळ्हमस्य पांसुरे प्यायनेऽन्तरिक्षे पदं न दृश्यतेऽपि वोपमार्थे स्यात्समूळ्हमस्य

१५ पांसुल इव पदं न दृश्यत इति पांसवः पादैः सूयन्त इति वा पन्नाः शेरत इति वा पिशनीया भवन्तीति वा ॥ १९ ॥

## इति द्वादशाध्यायस्य द्वितीयः पादः ॥

---

इदं विष्णुरिति । मेधातिथेरार्षम् । प्रायश्चित्ते (आश्व० श्रौ० ३ ।· १० ॥ मैत्रा० सं० १ । ८ । ९) आज्या-

२० विष्णुः सादने (मैत्रा० सं० ४ । १ । १२) च विनियोगः । यदिदं किंचिद्विभागेनावस्थितं तद्विक्रमते विष्णुरादित्यः । कथमिति । यत आह । त्रेधा निदधे पदं निधत्ते पदम् । निधानं पदैः क । तत्र तावत् 'पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः' । पार्थिवोऽग्नि-

२५ र्भूत्वा पृथिव्यां यत्किंचिदस्ति तद्विक्रमते तदधितिष्ठति । अन्तरिक्षे विद्युदा·

---

१ क. ख. ७ (१८); ग. ङ. °वति । इति निरुक्तभाष्ये ६ ध्याये १७ खण्ड·, ग. घ. पर्जमिनरेष्वङ्को नास्ति २ क. ख. छ. त. द. 'मूल्हम°. ३ क. ख. ङ. थ. ध. ठ. ङ पदं त्रेधाभावाय पृ°. ४ छ. त. द. 'पासुरे' नास्ति. ५ ङ. थ. घ. ठ. ङ. पंसनी°. ६ ङ. ख. ८ (१८); त. द. ८. ७ छ. द्विती°; त. द्वादशमोध्याये द्वि°; द इति द्वि°; ङ. थ. ध. ठ. ङ. 'इति· पादः' नास्ति.

त्मना दिवि सूर्यात्मना । यदुक्तम् । 'तमू अकृण्वन् त्रेधा भुवे कम्' ( ऋ० सं० १० । ८८ । १० ) इति । 'समारोहणे' उदयगिरावुद्यन् पदमेकं निधत्ते । 'विष्णुपदे' मध्यन्दिनेऽन्तरिक्षे । 'गयशिरसि' अस्तंगिरौ । 'इत्यौर्णवाभः' आचार्य एवं मन्यते । समूळ्हमस्य पांसुरे । अस्मिन् प्यायने एतस्मिन् अन्तरिक्षे सर्वभूतवृद्धिहेतौ यन्मध्यन्दिनं पदं वैद्युदात्मकं तत् समूळ्हम् अन्तर्हितम् । न नित्यं दृश्यते । तदुक्तम् । 'तवैमेतन्मध्यमं ज्योतिरनित्यदर्शनम्' इति (निरु० ५ । ३ ) । 'अपि वोपमार्थे स्यात्समूळ्हमिव पांसुले पदं न दृश्यत इति' । यथा पांसुले प्रदेशे पदं न्यस्तमुत्क्षेपणसमनन्तरमेव पांसुभिराकीर्णत्वान्न दृश्यते एवमस्य मध्यमं विद्युदात्मकं पदमाविर्भूतिसमकालमेव व्यवधीयते । यावत्तिष्ठत इत्यर्थः ।

'पांसुरे' इति रो मत्वर्थः । अथ 'पांसवः' कस्मात् । ते हि 'पादैः सूयन्ते' । जन्यन्त इत्यर्थः । अथवा । 'पन्नाः शेरत इति' । अथवा । 'पिंशनीया' ध्वंसनीया ध्वंसनार्हास्ते 'भवन्ति' तदाकीर्णस्य दुर्दर्शीकत्वात् ॥ १९[६] ॥

सप्तदशस्य द्वितीयः पादः[७] ।

---

तृतीयः पादः[८] ।

**वैश्वानरो व्याख्यातस्तस्यैष निपातो भवत्यैन्द्र्यामृचि ॥ २०[९] ॥**

---

विश्वानरो ( १२ ) वक्तव्यः । स पुनरेष 'व्याख्यातः' अभिधानव्युत्पत्तितः 'प्रत्यृतः सर्वाणि भूतानि' ( निरु० ७ । २१ )

---

१ क. ख. घ. ट. ठ. ड. मन्यत एवम्. २ क ख. घ. च. ज. °मूळ्ह°. ३ ट. स्वैमेमे° स्वपन; ठ. ड स्वपनमे°. ४ ग. च. ज. °वि: कृ°. ५ ग. ज. °इति । पिंशनीयाः दुर्द°; च. °इति ४ पि° अथवा. ६ क. ख. ८ ( १९ ); ठ. ड. °कत्वात् । इति नैरुक्तभाष्ये ६ ध्याये १९ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ७ ठ. ड. इति निघण्टपञ्चकेन सह सप्तदशाध्यायस्य द्वितीयः पादः. ८ च. पादः समाप्तः. ९ क. ख. १ ( २० ); ठ. ड. १.

इति । इह तु नियमतो द्युस्थानः । ' तस्यैष निपातो भवत्यैन्द्र्या-मृचि ' ॥ २० ॥

---

विश्वानरस्य वस्पतिमनानतस्य शवसः । एवैश्च चर्षणीना-मूती हुवे रथानाम् ( ऋ० सं० ८ । ६८ । ४ ) ॥ विश्वानर-स्यादित्यस्यानानतस्य शवसो महतो बलस्यैवैश्च कामैरयनैरव-नैर्वा चर्षणीनां मनुष्याणामूत्या च पथा रथानामिन्द्रमस्मिन्यज्ञे ह्वयामि वरुणो व्याख्यातस्तस्यैषा भवति ॥ २१ ॥

---

विश्वानरस्य वस्पतिमिति । ' आ त्वा रथं यथोतये ' ( ऋ० सं० ८ । ६ । ८ ) इत्येतस्मिन्नैन्द्रे सूक्ते प्रियमेधेन दृष्टे । निष्केवल्ये विनियोगः । विश्वानरस्य आदित्यस्य अनानतस्य शवसः अनानतज्योतिर्बलस्य अनभिभूतप्रकाश-स्याग्न्यैर्ज्योतिर्भिः बलपतिं पातारं रक्षितारमिन्द्रम् अस्मिन्यज्ञे युष्माक-मर्थसिद्धये आह्वयामः । केनेति । एवैश्च कामैरयनैः चर्षणीनां मनुष्या-णाम् अवनैः गमनैः तं प्रति निमित्तभूतैः ऊत्या च पथा येन मार्गेण रंहणा रश्मय इमं लोकमागच्छन्ति तेन पथा भवतामहमिन्द्रमाह्व-यामि ।

विश्वानरः

' विश्वानरस्य वस्पतिम् ' इति पतिशब्देनेन्द्रवाचिना व्यपदेशात्प्र-ष्ठ्यन्तरय विश्वानरशब्दस्य द्युस्थानवाचित्वे सामर्थ्यमुपपद्यते ।

' वरुणो । ( १२ ) व्याख्यातः ' निर्वचनतः (निरु० १० । ३) । इह त्वादित्यः । ' तस्यैषा भवति ' ॥ २१ ॥

---

१ क. ख. १ ( २० ); ठ. ड °मृचि । इति निरुक्तभाष्ये ६ ध्याये २० खण्डः; ग. घ. वर्जमिनरेष्वङ्को नास्ति. २ ध. बलस्यै°. ३ ङ. थ. ध. छ. २१. ४ ग. °मिति । आ°. ५ क. ख. घ. ट. ठ. ड. °ज्ञे वः यु°; घ. °ज्ञे ^ यु° वः. ६ क. ख. २ ( २१ ); ठ. ड. °वति । इति निरुक्तभाष्ये उत्तरषट्के ६ ध्याये २१ खण्डः; ग. च. वर्जमिनरेष्वङ्को नास्ति.

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ( ऋ० सं० १ । ५० । ६ ) ॥ भुरण्युरिति क्षिप्रनाम भुरण्युः शकुनिर्भूरिमध्वानं नयति स्वर्गस्य लोकस्यापि वोह्ळा तत्संपाती भुरण्युरनेन पावकख्यानेन । भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि । तत्ते वयं स्तुम इति वाक्यशेषोऽपि वोत्त- ५
रस्याम् ॥ २२ ॥

---

येना पावक चक्षसेति । प्रस्कण्वस्यैताः सर्वा आर्षम् । आश्विने विनियोगः ( आश्व० श्रौ० ६ । ५ ) । 'भुरण्युरिति क्षिप्रनाम' (निघ० २।१५।१४)। १०

वरुणः

' भुरण्युः ' क्षिप्रगामी ' शकुनिः ' । स पुनरयमेव योऽधियज्ञे अग्निश्चीयते । स सुपर्णः । विज्ञायते हि ' स्वर्गाय वै लोकायाग्निश्चीयते ( मैत्रा० सं० ३ । ४ । ८ ) इति । ' तत्संपाती ' तेन युक्तोऽग्निचित् उपात्तापूर्वसंभारः स्वर्गं लोकं प्रति तदैव शीघ्रं यः पतति गन्तुमिच्छति स भुरण्यति । हे भगवन् वरुण पावक पावयितः येन ख्यानेन दर्शनेन १५ अनुग्राहकेण त्वं पुण्यकृतो जनाननु भुरण्यन्तं पूर्वेषां पुण्यकृतां मार्गेण देवयानेन क्षिप्रं गच्छन्तमनुपश्यसि । किं तस्य दर्शनस्येति । अपरिसमाप्तं वाक्यमिति यद्वृत्तमपेक्ष्य तद्वृत्तमध्याजहार। ' तत्ते ' दर्शनमनुग्राहकं ' वयं स्तुमः ' इति वाक्यशेषः । २०

' तत्ते वयं स्तुमः ' इत्यध्याहृत्य वाक्यसमाप्तिः

' अपि वोत्तरस्याम् ' । अपि चैवं यथोक्तमपि चैवमन्यथा स्यात् । कथमिति । यथोत्तरा ऋक् । तयापि सहैकवाक्यतोपेक्ष्या । कथमिति । यतः पुनः पठति ॥ २२ ॥

---

२५

१ छ. त. द. वोह्ला; ठ. ड. °स्यामि वोह्ला. २ ' °मुत्तरस्यामन्वयस्तेन ध्येति ' इति सायणभाष्ये निरुक्तमूलम्. ३ क. ख. ३ ( २२ ); त. द. ३. ४ ग. °क्षेति । प्र°; ठ. ड. पावकेति प्र°. ५ ग ज. तदं शी°. ६ च. चैव° चै. ७ क. ख ३ ( २२ ); ठ. ड. °ठति । इति निरुक्तभाष्ये ६ ध्याये २१ खण्डः; ग. घ. दर्जमितेत्वङ्को नास्ति. ३०

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ( ऋ० सं० १ । ५० । ६ ) ॥ वि द्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः । पश्यन्जन्मानि सूर्य (ऋ० सं० १ । ५० । ७)॥ व्येषि द्यां रजश्च पृथु महान्तं लोकमहानि च मिमानो अक्तुभी
५ रात्रिभिः सह[1] पश्यन् जन्मानि जातानि सूर्यापि वा पूर्वस्याम् ॥ २३ ॥

---

येना पावकेति[2] । येन हे पावक वरुण ख्यानेन जनाँ अनु भुरण्यन्तं पश्यसि तेनैव ख्यानेन तथैव ख्यात्या प्रज्ञया युक्तस्त्वं वि द्यामेषि विविधमेषि । अतिशयेन वा एषि । किमेषि । द्युलोकम् । रजश्च

१० अथवा उत्तरया वाक्यशेषः

पृथु महान्तं लोकम् अन्तरिक्षम् । किं कुर्वाणः । अहानि च मिमानः कुर्वन् अक्तुभिः रात्रिभिः सह पश्यंश्च जन्मानि जातानि सर्वभूतान्यनुग्राहकत्वेन सूर्य ।

१५ अपि वोत्तरस्यामेकवाक्यता स्यात् ।[3] ' अपि ' तर्हि ' पूर्वस्याम् ' अभ्युपेक्ष्या । कथमिति । यतः पठति ॥ २३ ॥

---

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ( ऋ० सं० १ । ५० । ६ ) ॥ प्रत्यङ् देवानां विशः
२० प्रत्यङ्ङुदेषि मानुषान् । प्रत्यङ् विश्वं स्वर्दृशे ( ऋ० सं० १ । ५० । ५ ) ॥ प्रत्यङ्ङिदं सर्वमुदेषि प्रत्यङ्ङिदं[4] ज्योतिरुच्यते प्रत्यङ्ङिदं सर्वमभिपश्यसीत्यपि[5] वैतस्यामेव ॥ २४ ॥[6]

---

१ क. ख. ४ ( २३ ); त. द. ४. २ म. 'केति । ये°. ३ क. ख. ४ (२३); त. द °ठति । इति निरुक्तभाष्ये द्व्याये २३ खण्डः; ग. च. वर्जमितरेष्वेषो नास्ति. ४ क. ख. छ त. द. 'ज्योतिरुच्यते प्रत्यङ्ङिदं ' नास्ति. ५ क.
२५ ख. छ. त. द. सर्वमिदमभि°. ६ क. ख. ५ ( २४ ); त. द. ५.

येना पावकेति । हे वरुण पावक येन ख्यानेन यथैवानुग्रहबुद्ध्या जनाननु भुरण्यन्तं पश्यसि तथैव ख्यात्या प्रज्ञया युक्तः प्रत्यङ् देवानां या विशः ताः कृत्वा पुरस्तात्तासाम् उदेषि । मानुषांश्चैवमेव प्रत्यङ् कृत्वा तेषामपि पुरस्तादेवोदेषि । किं बहुना । हे स्वः आदित्य प्रत्यङ् इदं सर्वम् आत्मनः कृत्वा पुरस्तादुद्यन् सर्वमभिविपश्यसि । ५

न चेत्पूर्वस्यामुत्तरस्यां वा एकवाक्यता स्यात् 'अपि' तर्हि 'एतस्यामेव' । कथमिति । यतः पुनः पठति ॥ २४ ॥

---

**येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि । तेन नो जनानभिविपश्यसि केशी केशा रश्मयस्तैस्तद्वान् भवति काशनाद्वा तस्यैषा भवति ॥ २५ ॥** १०

---

येना पावकेति । हे पावक वरुण येन ख्यानेन यथैवानुग्राहकप्रज्ञया जनाननु भुरण्यन्तं पश्यसि त्वं पुण्यकारिणः तेनैव ख्यानेन तथैवानुग्रहकारकबुद्ध्या अस्माकं जनानभिविपश्येति । १५

अथवा ऋच्येव वाक्यसमाप्तिः

को विशेषः प्रथमादध्याहारात् । प्रथमे हि तत्ते वयं स्तुम इति स्तुत्या परिसमापितम् । इह पुनराशिषा 'तेन नो जनानभिविपश्य' इति । स्तुत्याशिषोः संबन्धनित्यत्वाद्वाक्यस्य । एष साकाङ्क्षाणां मन्त्राणामेकवाक्यताप्रकार उपप्रदर्शितः । २०

'केशि' (१४) इति वक्तव्यम् । अत्र 'केशा रश्मयस्तैस्तद्वान्' आदित्यो यो मध्यंदिने भवति । 'काशनाद्वा' । प्रकाशनादित्यर्थः । रश्मयोऽपि केशाः काशनादेव । 'तस्यैषा भवति' ॥ २५ ॥

केशि कस्मात्

--- २५

१ ग. °केति । हे°. २ ग. ज. °वानां विशः या°; च. °वानां विशः याः°. ३ क. ख. ५ ( २४ ), ग. च. वर्जमितरेष्वङ्को नास्ति. ४ क. ख. ङ. °नाद्वा प्रकाशनाद्वा त°. ५ क. ख. ६ ( २१ ); त. द. ६. ६ ग. °केति । हे°. ७ ग. ज. °भिपश्ये°; च. °भिश्ये°. ८ क. ख. ५ ( २५ ); ठ. ड. °वति । इति निरुक्तभाष्ये ६ ध्याये २१ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ३०

केश्यर्ग्निं केशी विषं केशी बिभर्ति रोदसी । केशी विश्वं स्वर्दृशे केशीदं ज्योतिरुच्यते ( ऋ० सं० १० । १३६ । १ )॥ केश्यग्निं च विषं च विषमित्युदकनाम विष्णातेर्विपूर्वस्य स्नातेः शुद्ध्यर्थस्य विपूर्वस्य वा सचतेर्द्यावापृथिव्यौ च धारयति केशीदं ५ सर्वमिदमभिविपश्यति केशीदं ज्योतिरुच्यत इत्यादित्यमाहाथाप्येते इतरे ज्योतिषी केशिनी उच्येते धूमेनाग्नी रजसा च मध्यम स्तेषामेषा साधारणा भवति ॥ २६ ॥

---

केश्य१ग्निमिति । सूक्तेरार्षम् । केश्यग्निं बिभर्ति चर्मगोदकेनौषधीरभिनिष्पादयन् । आहुतिद्वारेण केशी विषं बिभर्ति । ‘ विषमुदकं विष्णातेर्विपूर्वस्य स्नातेः शुद्ध्यर्थस्य । विपूर्वस्य वा सचतेः ’ । सर्वत्र ह्यतिशयेन यत्सक्तमिति तदपि केशी बिभर्ति । रोदसी अपि च केश्येव बिभर्ति । तन्निवासीनि भूतान्यनुगृह्णाति । अपि चाय स्वरादित्यः केशी विश्वमिदं सर्वमिदम् अभिविपश्यति यथाभिद्रष्टव्यम् । कोऽयं केशीति । यत आह दर्शयन्नेवादित्यं केशीदं ज्योतिरुच्यत इति ।

केशी (१०)

अतः परं विचारः । ‘ अथाप्येते इतरे ज्योतिषी ’ प्रथममाध्यमिके ‘ केशिनी (१५) उच्येते ’ । तत्र तावत् ‘धूमेनाग्निः ’ केशी । स हि तस्य प्रकाशनाय निगूढस्यापि भवति । ‘ रजसा च मध्यमः ’ । असावप्यमूर्तत्वादप्रकाशः सन् रजसोद्धूतेन प्रकाशतेऽसौ वायुरागच्छतीति । उदकेन च वैद्युतः । ‘ तेषां ’ त्रयाणामपि केशिनाम् ‘ एषा ’ साधारण्येन प्रधानस्तुतिः ‘ भवति ’ ॥ २६ ॥

इतरे ज्योतिषी अपि केशिनी उच्येते (२०)

---

१ छ त. द. °र्वस्य वा सचते°. २ क. ख. छ. त. द °ध्यमस्तयोरेषा भवति. ३ क. ख. ७ ( २६ ), त. द. ७. ४ ग. °मिति । जु°. ५ ग. घ. ज. तु. ६ क. ख. ७ ( २६ ); ठ. ढ. °वति । इति निरुक्तभाष्ये ६ ध्याये २६ खण्डः; ग. घ. वर्जमितरेष्वङ्को नास्ति. (२८)

त्रयः केशिन ऋतुथा वि चक्षते संवत्सरे वपत एक एषाम् । विश्वमेको अभि चष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपम् ( ऋ० सं० १ । १६४ । ४४ ) ॥ त्रयः केशिन ऋतुथा विचक्षते काले कालेऽभिविपश्यन्ति संवत्सरे वपत एक एषामित्यग्निः पृथिवीं दहति सर्वमेकोऽभिविपश्यति कर्मभिरादित्यो गतिरेकस्य दृश्यते न रूपं मध्यमस्याथ यद्रश्मिभिरभिप्रकम्पयन्नेति तद्वृषाकपिर्भवति वृषाकम्पनस्तस्यैषा भवति ॥ २७ ॥

---

त्रयः केशिन इति । दीर्घतमस आर्षम् । महाव्रते वैश्वदेवे शस्यते ( ऐ० आ० ५ । ३ । २ ) । य एते त्रयः केशिनः अग्निवायुसूर्याः ऋतुथा कालेकाले विचक्षते । पर्वकालम् अभिविपश्यन्ति । स्वकर्माधिकारयुक्तेनानुग्रहेण लोकमनुगृह्णन्ति । तेषाम् एकः पृथिवीस्थानः अग्निः संवत्सरे पृथिवीं वपते । दहतीत्यर्थः । तथा हि सा कर्मण्या संपद्यते । विश्वमेको अभि चष्टे । स्वाधिकारयुक्तैः कर्मभिः अभिविपश्यति अनुगृह्णाति आदित्यः । ध्राजिरेकस्य ददृशे । गतिरेकस्य रजसेद्धेन पार्थिवेनोदकेन वा दृश्यते न रूपं मध्यमस्य ।

अग्निवायुसूर्यास्त्रयोऽपि केशिनः

'अथ यद्रश्मिभिरभिप्रकम्पयन्नेति' । यदा रश्मिभिः उपसंहृतैरुपसंपन्नैः भूतानि अभिप्रकम्पयन्नेति तदा 'वृषाकपिः (१६) भवति' । वर्षिता चावश्यायानां कम्पनश्च भूतानाम् । सर्वो हि भगवत्यदृश्ये तद्भयात्कम्पते । तस्यैषा भवति ॥ २७ ॥

वृषाकपिः कस्मात्

---

१ क. ख. ८ ( २७ ); त. द. ८ २ ग. इति । दी°. ३ ग. ज. ठ. ढ. 'ग्निर्वायुः सूर्याः. ४ ग. ज. °था काले विच. ५ च. ट. पर्व° यथा, ठ. ढ. यथा कालम्. ६ ग. ज. वपति; च. वपनि° व. ते. ७ क. ख. घ. ट. अथ यत् यदादित्यो रश्मि°. ८ क. ख. ८ ( २७ ); ठ. ढ. °वति । इति निघण्टपञ्चकेन सह निरुक्तसप्तदशाध्यायभाष्ये सप्तविंशतिः खण्डः; ग. च. चर्जमिनरेष खण्डो नास्ति.

पुनरेहि वृषाकपे सुविता कल्पयावहै । य एष स्वप्ननंशनोऽ-
स्तमेषि पथा पुनर्विश्वस्मादिन्द्र उत्तरः ( ऋ० सं० १०।८६।
२१ )॥ पुनरेहि वृषाकपे सुप्रसूतानि वः कर्माणि कल्पयावहै य
एष स्वप्ननंशनः स्वप्नान्नाशयस्यादित्य उदयेन सोऽस्तमेषि पथा
५ पुनः सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यं यमो व्याख्यात-
स्तस्यैषा भवति ॥ २८ ॥

---

पुनरेहि वृषाकप इति । वृषाकपेरार्षम् । पृष्ठ्यस्य षष्ठेऽहनि ब्राह्मणा-
च्छंसिनः शस्त्रे विनियुक्ता ( आश्व० श्रौ०
वृषाकपिः
१० ८।३ ) । हे वृषाकपे भगवन् य एष त्वं स्वप्न-
नाशनः स्वप्नान् उदयेन नाशयसि सोऽस्तमेषि पथा पुनः । यश्च त्वं
विश्वस्मात्सर्वस्मात् जगत इन्द्रः ईश्वरः उत्तरः उद्गततरः स त्वं पुनः एव
हि उदयं प्राप्नुहि । तत आवां सुविता सुप्रसूतानि सुप्रवृत्तानि शोभन-
मर्थमुद्दिश्य जगतोऽनुग्रहमेतानि शोभनानि कर्माणि प्रवृत्तानि कल्पयावहै
१५ सगुणानि कुर्वः त्वमुदयेनाहमनुष्ठानेनेति ।

'यमो (१७)वक्तव्यः । स पुनः 'व्याख्यातो' निर्वचनतः ( निरु०
१०।१९ ) । इह त्वादित्योऽभिधेयः । 'तस्यैषा भवति' ॥ २८ ॥

---

यस्मिन्वृक्षे सुपलाशे देवैः संपिबते यमः । अत्रा नो विश्पतिः
२० पिता पुराणाँ अनु वेनति (ऋ० सं० १०।१३५।१)॥ यस्मिन् वृक्षे
सुपलाशे स्थाने वृतः क्षये वापि वोपमार्थे स्याद्वृक्ष इव सुपलाश
इति वृक्षो व्रश्चनात्पलाशं पलाशनाद्देवैः संगच्छते यमो रश्मिभिरा-
दित्यस्तत्र नः सर्वस्य पाता वा पालयिता वा पुराणाननुकामयेताज

---

१ क. ख. छ. त द. °यत्यादि°. २ क. ख. ९ ( २८); त. द. ९. ३ ग. इति । वृ°. ४ क. ख. घ. ट. ठ. ड. पुनरायाहि उदयं°; च. पुनरेवं ह्यु° राया. ५ ग. ज. त्वंदुद°; च. त्वंदुद° उ. ६ क. ख. ९ (२८), ठ. ड. वति । इति
२५ निरुक्तभाष्ये ६ ध्याये २८ खण्डः, ग. च. पर्जमितरेण्वङ्को नास्ति.

**एकपादजन एकः पाद एकेन पादेन पातीति वैकेन पादेन पिबतीति वैकोऽस्य पाद इति वा । एकं पादं नोत्खिदतीत्यपि निगमो भवति तस्यैष निपातो भवति वैश्वदेव्यामृचि ॥ २९ ॥**

---

यस्मिन्वृक्षे[2] सुपलाश इति[3] । कुमारस्य यामायनस्यार्षम् । यस्मिन्वृक्षे

यमः

आदित्ये । स हि स्वगत्या कालमतिक्रामयन् सर्वभूतानामायूंषि क्षपयति । 'वृश्चतीति वृक्षः । वृतः क्षये वा' । पुण्यकृद्भिर्वृतो[4] निवासः[5] इत्यर्थः । सुपलाशे सुष्ठु पराशीर्णमले

'सुपलाशे' 'वृक्षे' इत्यस्य विशेषणम्

दीप्तिमति देवैः सह रश्मिभिः संपिबते संगच्छते अस्तं गच्छन्नादित्यः । तत्र किमिति । अत्र[7] नः अस्मान् पुण्येन कर्मणा विद्यया च तत्प्राप्तिक्रयागतान्नः पुराणान् इव तन्निवासिनः अनुवेनतु कामयतु । संप्रीणयतीत्यर्थः ।

'वृक्षे इव सुपलाशे इति' ऐतिहासिकपक्षे । स्वगृहमुपेगतानस्मान्

अथवा वृक्षे इव सुपलाशे इत्युपमा

सुपलाशवृक्षप्रख्यं[10] सुखनिवासं[11] पितृराजो यमः पुराणान् इव तल्लोकनिवासिनः पितॄन् अनुकामयतु । अस्मिन् पक्षे देवैः संपिबत इति तदनुचारिणो गृह्यन्ते देवा इति ।

'अज एकपात्' (१८) इति वक्तव्यम् । स पुनरयमादित्यो-

कः अजपात् कस्माच्च

नित्यम् 'अजनो' गमनः । 'एकः' च 'पादो' भक्षणः । विज्ञायते हि 'अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः' (छा० उप० ३ । १८ । २) इति । 'एकेन पादेन पातीति वा' । सर्वमिदं जगदेकेनांशेनानुप्रविश्य

---

१ क. ख. १०(२९). त द. १०. २ ठ ह वृक्ष इति. ३ म इति । कु° ४ क. ख. घ. ट. ठ. ड. वृतक्षये. ५ क. ख. घ. ट. ठ. ह. °वृते; च. °वृतो° ते ६ क. ख. घ निवासे; ट. निवासे यस्मिन्स्थाने; ठ. ड. निवासे यस्मिन्स्थाने इत्यर्थः. ७ ग. ज. अत्रा; च. अत्रा^ नः' अ. ८ क. ख. घ. ट. ठ. ड. °यविद्य°. ९ क. ख. घ. ट. ठ. ड. 'सुपाम°. १० क. ख. ध. ट. ठ. ड. °प्रख्यसु°; च. °प्रख्य' ख्य. ११ क. ख. घ. ट. ड. 'वासे; च. °वासं °से.

पाति रक्षति स्वापकाले प्राणात्मनाऽन्नं पचन्। अजनश्चैत्यज एकपात्।
'एकेन पादेन पिबतीति वा'। एकेनांशेनोदकं सर्वस्माज्जगतः पिबत्य-
जनश्चेत्यज एकपात्। अथ 'वा'। अजनो गमनः 'एकोऽस्य पाद
इति' अज एकपात्। जीवभूतोऽस्य कृत्स्ने जगति एकः पादोऽनुप्रविष्टः।

५ 'निगमोऽपि हि भवति' एतस्मिन्नर्थे। "एकं पादं नोत्खिदति

जीवोऽस्य ब्रह्मण एकः पाद इत्यर्थे निगमः

सलिलाद्धंस उच्चरन्। स चेत्तमुद्धरेदङ्ग न मृत्युर्नामृतं भवेत्"। एकमात्मनः पादमंशं नोत्खिदति नोद्धरति आदित्यो हंसः महतस्तमसो बाधनो वा हन्ता। कुतः पुनर्नोत्खिदति।

१० सलिलात् सन्मात्रे ब्रह्मणि लीनादेतस्माज्जगत उच्चरन्। अहन्यहनि उद्यन्नित्यर्थः। स चेत्तं जीवभूतमात्मनः पादमेतस्माज्जगतः उद्धरेत् नततस्तदुद्धरणसमकालमेव अङ्ग क्षिप्रं न मृत्युर्नामृतं भवेत्। सर्वमिदमव्यप-देश्यं मदेव स्यादित्यर्थः।

'तस्यैष निपातो भवति' साधारण्येन 'वैश्वदेव्यामृचि'॥ २९ ॥

१५

---

पावीरवी तन्यतुरेकपादजो दिवो धर्ता सिन्धुरापः समुद्रियः।
विश्वे देवासः शृणवन्वचांसि मे सरस्वती सह धीभिः पुरंध्या
(ऋ० सं० १०। ६५। १३)॥ पविः शल्यो भवति यद्विपु-
नाति कायं तद्वत्पवीरमायुधं तद्वानिन्द्रः पवीरवान्। आततस्थौ
२० पवीरवानित्यपि निगमो भवति। तद्देवता वाक्पावीरवी पावीरवी
च दिव्या वाक्तन्यतुस्तनित्री वाचोऽन्यस्या अजश्चैकपाद्दिवो
धारयिता च सिन्धुश्चापश्च समुद्रियाश्च सर्वे च देवाः सरस्वती च
सह पुरंध्या स्तुत्या प्रयुक्तानि धीभिः कर्मभिर्युक्तानि शृण्वन्तु
वचनानीमानीति पृथिवी व्याख्याता तस्या एष निपातो भवत्यै-
२५ न्द्राग्न्यामृचि॥ ३०॥

---

१ च. °का अस्य. २ ग ज. जीवोऽस्य, च जीवो ऽस्य° भूतो. ३ च. °मंशे-नो°. ४ क ख. (१०) ९; ठ ह. °मृचि। इति निरुक्तभाष्ये ६ ध्याये २१ खण्डः, ग. च वर्जमितरेष्वङ्को नास्ति ५ छ. त. द. 'च' नास्ति. ६ क. ख.
३० ११ (३०); त. द. ११.

पावीरवी तन्यतुरिति । वसुकर्णस्यार्षम् । वैश्वदेवे शस्त्रे विनियोगः ।

**पावीरवी कस्मात्**

'पविः शल्यो भवति' । कस्मात् । 'यद्विपुनाति' विदारयति 'कायम्' । तेन शल्येन 'तद्वत्पवीरमायुधम्' । रो मत्वर्थे । तेन शल्यवतायुधेन 'तद्वानिन्द्रः पवीरवान्' ।

**पवीरवान् इन्द्रः**

यथा चैत्र मन्त्रदृगाह 'अतितस्थौ पवीरवानिति'। 'यो जनान्महिषाँ इवातितस्थौ पवीरवान् । उतापवीरवान्युधा' ( ऋ० सं० १० । ६० । ३ ) ॥ विप्रबन्ध्वोरार्षम् । यः इन्द्रो महिषान् अतिमहतोऽप्यसुरजनान् युधा युद्धेन अतीत्य तस्थौ तिष्ठति पवीरवान् आयुधवान् । अपि च अपवीरवान् । अनायुध इत्यर्थः । सायुधो निरायुधश्च नित्यमसुरजनान् महतोऽपि अतितिष्ठति यः स इदं नामास्माकं करोत्विति ।

'तद्देवता वाक् पावीरवी' । स इन्द्रो यस्या वाचो माध्यमिकाया देवता सा ऐन्द्री वाक् पावीरवी । तन्यतुः तनयित्री वाचोऽन्यस्याः । तदुक्तम् । 'तां विश्वरूपाः पशवो वदन्ति' (ऋ० सं० ८ । १०० । ११ ॥ निरु० ११ । २९ ) । सा च दिव्या वाक् अजश्चैकपात् दिवो धारयिता । एतदत्र द्युस्थानत्वम् अजस्यैकपदः ।

**अज एकपात्**

सिन्धुश्च नदः आपश्च समुद्रियाः । विश्वे च देवाः शृण्वन् शृण्वन्तु इमानि वचनानि स्तुतिलक्षणानि । किं वचनान्येव । न । किं तर्हि । सह धीभिः कर्मभिः हविर्दानयुक्तैः सहितानि । सरस्वती च शृणोतु पुरन्ध्या सह बहुधान्या माध्यमिकया वाचेत्येतदाशास्महे ।

निर्वचनस्यास्यामृच्युत्तरे पादे सम्यक्पाठोऽन्वेष्यः ।

'पृथिवी ( १९ ) व्याख्याता ( निरु० १ । १४ ) । तस्या एष

---

१ ग. °रिति । व°. २ क. ख. घ. ट. ठ. ड. चैतदेवं तथैष निगमः अति°; च. चैवं मन्त्रदृगाह' तदेवं तथैष निगमः. ३ घ. ट. °षाँ इव । विप्रव°. ४ क. ख. घ. ट. ठ. ड. माध्यमिकाया वाचो; च. माध्यमिकायां वाचो. ५ क. ख. घ. ट. ठ. ड. °स्तनयित्री. ६ ग. ज. °जस्यैकपादः; घ. ठ. ड. °जश्चैक°; ट. °जश्चैक° स्ये. ७ क. ख. घ ट. ठ. ड. 'देवाः सर्वे; च. देवाः सू°. ८ ग. ज. निर्वचनस्यास्युत्तरे°.

निपातो भवति ’ दिवः पृथिव्या ‘ ऐन्द्राम्न्यामृचि ’ न स्तुत्यत्वेन । किं तर्हि । नैघण्टुकत्वेन केवलम् ॥ ३० ॥

---

यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुत स्थः ।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ( ऋ० सं० १ । १०८ । १० ) ॥ इति सा निगदव्याख्याता समुद्रो व्याख्यातस्तस्यैष निपातो भवति पावमान्यामृचि ॥ ३१ ॥

यदिन्द्राग्नी परमस्यामिति । कुत्सस्यार्षम् । हे इन्द्राग्नी यदि युवां पृथिवी परमस्यां पृथिव्यां द्युलक्षणायां यदि मध्यमायाम् अन्तरिक्षे यदि अवमस्यामेव भूम्याम् । उत स्थः तथापि पर्यायातम् अस्मान् प्रति । पर्येत्य अथ सोमस्य पिबतम् अभिषुतस्य स्वमंशमिति ।

‘ समुद्रो ( २० ) व्याख्यातः ’ ( निरु० २ । १० ) । इह आदित्य इति विशेषः । अत्रापि ‘ समुद्रवन्त्यस्मादापः ’ इत्येवमादि तदेव निर्वचनम् । ‘ तस्यैषः ’ समुद्रस्य ‘ निपातो भवति पावमान्यामृचि ’ ॥ ३१ ॥

---

पवित्रवन्तः परि वाचमासते पितैषां प्रत्नो अभि रक्षति व्रतम् ।
महः समुद्रं वरुणस्तिरो दधे धीरा इच्छेकुर्धरुणेष्वारभम् ( ऋ० सं० ९ । ७३ । ३ ) ॥ पवित्रवन्तो रश्मिवन्तो माध्यमिका देवगणाः पर्यासते माध्यमिकां वाचं पितैषां प्रत्नः पुराणोऽभिरक्षति व्रतं कर्म महः समुद्रं वरुणस्तिरोऽन्तर्दधात्यथ धीराः शक्नुवन्ति

---

१ क. ख. ११ (३०); ठ. ढ. °वलम् । इति निरुक्तभाष्ये ६ ध्याये ३० खण्डः; ग. घ. वर्जमितरेष्वङ्को नास्ति. २ क. ख. १२ ( ३१ ); त. द. १२. ३ ग. °मिति । कु°. ४ क. ख. ध. ट. ठ. ढ. °ग्नीवृषणौ य°; च. °ग्नी ˇ य °वृषणौ. ५ क. ख. घ. ट. ठ. ढ. °मस्यामस्यामेव°. ६ क. ख. घ. ट. ठ. ढ. इह तु आ°; च. इह ˇ आ° तु. ७ क. ख. १२ (३१ ); ठ. ढ. °मृचि । इति निरुक्तभाष्ये ६ ध्याये ३१ खण्डः; ग. घ. वर्जमितरेष्वङ्को नास्ति. ८ छ. त. द. माध्यमका. ९ छ. त. द. °सते मध्यमः पितै°.

धरुणेषूदकेषु कर्मण आरम्भमारब्धुमज एकपाद्व्याख्यातः पृथिवी व्याख्याता समुद्रो व्याख्यातस्तेषामेष निपातो भवत्यपरस्यां बहुदेवतायामृचि ॥ ३२ ॥

---

पवित्रवन्तः परि वाचमिति । पवित्रस्यार्षम् । प्रवर्ग्ये विनियोगः ( आश्व० श्रौ० ४ । ६ ) । रश्मयः पवित्रवन्तः ; अमुष्मादादित्यमण्डलात्प्रसृता मध्यस्थाने मरुत्प्रभृतिभिर्देवगणैः संयुज्यन्ते । तत्संयोगात् माध्यमिका देवगणाः पवित्रवन्तो भवन्ति । ते च पर्युपासते । ते च परिवार्य माध्यमिका वाचम् आसते विद्युदाख्याम् । स वरुणो विद्युदाख्यो मध्यमः पिता पाता रक्षिता तेषां मरुत्प्रभृतीनां प्रत्नः पुराणः व्रतं कर्म तदधिकारयुक्तम् अभिरक्षति । कथमिति । तदुच्यते । महः महान् वरुणो मध्यमः महान्तं वा समुद्रम् आदित्यं मेघजालेन यदा तिरोदधाति दुर्दिनं कृत्वा वर्षति ओषधीषु अर्थ धीरा धीमन्तः धरुणेषु उदकेषु शेकुः शक्नुवन्ति कर्मणः कृष्यादेर्वैदिकस्य वा आरम्भं प्रारम्भम् इत्येवमभिरक्षति तेषां माध्यमिकानां व्रतम् । यदि ह्यसावावृणोति मेघैस्ततस्तेषामधिकारप्रतिलम्भो भवति ।

समुद्रः

'अज एकपाद् ( १८ ) व्याख्यातः' ( निरु० १२ । २९ ) । इह तूत्तमः । 'पृथिवी (१९) व्याख्याता' ( निरु० १ । १४ ) । 'समुद्रो ( २० ) व्याख्यातः' ( निरु० २ । १० ) । 'तेषामेष निपातो भवति' स्तुतिसाधारण्येन 'अपरस्यां बहुदेवतायामृचि' ॥ ३२ ॥

---

१ छ. त. °रब्धम°. २ क. ख. १३ ( ३२ ); त. द. १३. ३ ठ. ड. °वन्त इति । पवि°. ४ ग. 'मिति' । प°. ५ क. ख. घ. ट. ठ. ड. पवित्रे तेऽमु°; च. पवित्रवन्तोऽमु° त्रं तेऽ. ६ क. ख. घ. ट. ठ. ड. माध्यमिकां वाचं परिवार्य; च. परिवार्य माध्यमिका वाचं. ७ क. ख. घ. ट. ठ. ड. 'विद्युदाख्यां' नास्ति; च. विद्युदाख्या. ८ ग. ज. °धीषु धीराः; च. °धीषु धीराः °अथ. ९ क. ख. घ. ट. ठ. आरभं; च. ज. आरम्भं° भं. १० ग. ज. यदि पोति मेघै°; च. ह्यसौ वृ° सावावृ. ११ क. ख. १३ ( ३२ ); ठ. ड. °मृचि । इति निरुक्तभाष्ये ६ ध्याये ३२ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति.

उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः। विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु ( ऋ० सं० ६ । ५० । १४ )॥ अपि च नोऽहिर्बुध्न्यः शृणोत्वजश्चैकपात्पृथिवी च समुद्रश्च सर्वे च देवाः सत्यवृधो वा यज्ञवृधो वा हूयमाना मन्त्रैः स्तुता मन्त्राः कविशस्ता अवन्तु मेधाविशस्ता ५ दध्यङ्प्रत्यक्तो ध्यानमिति वा प्रत्यक्तमस्मिन् ध्यानमिति वाथर्वा व्याख्यातो मनुर्मननात्तेषामेष निपातो भवत्यैन्द्र्यामृचि ॥ ३३ ॥

---

१० उत नोऽहिर्बुध्न्यः शृणोत्विति । ऋजिश्वन आर्षम् । आग्निमारुते विनियोगः ( आश्व० श्रौ० ५ । २० ) । अयमस्माकम् अहिर्बुध्न्यः शृणोतु । अपि अज एकपाद् अपि च पृथिवी अपि च समुद्रः विश्वे देवाः सर्व एते एवमादयो देवाः ऋतावृधः सत्यवृधो यज्ञवृधः उदकवृधो वा हुवाना आहूयमानाः मन्त्रैर्यजुर्भिः १५ स्तुताश्च स्तोत्रैः सामभिः कविशस्ताः कविभिश्च नैघण्टुकत्वेन मेधाविभिः शस्त्रैश्च शस्ताः स्तुतास्तेऽस्मानवन्त्वित्येतदाशास्महे ।

अज एकपात् पृथिवी समुद्रः अस्यामृचि नैघण्टुकाः

‘ दध्यङ् मनुः अथर्वा ’ इति त्रित्वपक्षे आदित्य एवैते तद्गुणयोगाद्भवन्ति द्युस्थाने समाम्नानात् । पृथक्त्वे पुनर्द्युस्थानास्तत्सहचारिण एते २० ऋषयः ।

‘दध्यङ् ( २१ ) प्रत्यक्तो ध्यानं’ प्रतिगतो ध्यानमिति। ध्यानारम्भणे ह्येष युक्तः स्वमधिकारमनुतिष्ठति । अथवा । ‘ प्रत्यक्तमस्मिन्ध्यानमिति वा ’ । अधिकरणं कारकम् । तथा हि तस्मिन्ध्यानकार्यं सफलं लक्ष्यत इति ।

दध्यङ् कस्मात्

---

१ ङ. °कपादित्रो धारयिता सिन्धुश्चापश्च समु°. २ छ. त. द. स्यान°. ३ क. ख. १४ ( ३३ ); तद. १४. ४ ग. °त्विति । ऋ°; ठ. ड. °बुध्न्य इति । ऋ°. ५ ग. ज. °वृधः उदकवृधो यज्ञवृधो वा हु°; च. °वृधः उदकवृधो यज्ञवृधो वाहु° सत्यवृधः. ६ ग. ज. समाभिः कत्वेन मेधा°; च. समाभिः कत्वेन मेधा° कवि २१ शस्ता एकविभिश्च नैघण्टु. ७ ग. ज. शस्त्रैः स्तुताः; च. शस्त्रैः स्तुताः श्च शस्ता.

'अथर्वा (२०) व्याख्यातो' निर्वचनतः (निरु० ११।१८)। न ह्ययं स्वस्मादधिकारात् थर्वति । न कदाचित्स्वमधिकारं मुञ्चति

मनुर्मननात् 'मनुः' (२२) 'अयं मननात्' । न हि तदस्ति यदयं न मनुते । 'तेषामेव निपातो भवत्यैन्द्रयामृचि' ॥ ३३ ॥[1]

---

यामथर्वा मनुष्पिता दध्यङ् धियमत्नत । तस्मिन्ब्रह्माणि पूर्वथेन्द्र उक्था समग्मतार्चन्ननु स्वराज्यम् (ऋ० सं० १।८०।१६)॥ यामथर्वा च[2] मनुश्च[3] पिता मानवानां दध्यङ् च धियमतनिषत तस्मिन्ब्रह्माणि कर्माणि[4] पूर्वेन्द्र उक्थानि च संगच्छन्तामर्चन्योऽनूपास्ते स्वाराज्यम् ॥ ३४ ॥[5]

द्वादशस्य तृतीयः पादः ।[6]

---

'यामथर्वेति'[7] । गोतमस्यार्षम् । पाष्ठिके पञ्चमेऽहनि विनियोगः (आ० श्रौ० ७।१२)। ऐन्द्रे सूक्ते याम् अथर्वा मनुश्च पिता मानवानां दध्यङ् च धियम् अतनत अतनिषत । एतद्गुणविशिष्टो य आदित्यः यैस्तत्कर्माहोनिर्वृत्त्यादिलक्षणं[8][9] तनोति तस्मिन्सति ब्रह्माणि अन्नानि[10] उक्थानि च शस्त्राणि पूर्वथा पूर्ववत् इन्द्रे समग्मत समागच्छन्ति[11] यज्ञेषु । किंलक्षणे इन्द्रे इति । यत आह । अर्चन् । यः इन्द्रमभिपूजयते[12] स्वराज्यम् अनु उपास्ते । यथाशास्त्रमनुतिष्ठतीत्यर्थः ।

अथर्वा दध्यङ् मनुः

---

१ क. ख. १४ (३३); ठ. ड. °मृचि । इति निरुक्तभाष्ये ६ध्याये ३३ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. २ छ. त. °र्वा मनु° च, द. र्वाश्च मनुः°. ३ छ. मनुष्पिता°; त. मनुश्च° ध्य; द. मनुष्पिता° च. ४ छ. त. कर्माणि ब्रह्माणीन्द्र उक्था°; द. कर्मणि ब्रह्माणीन्द्र उक्था°. ५ क. ख. १५ (३४); त. द. १५. ६ छ द तृती°, त. इति द्वादशोध्याये तृ°. ७ ग र्वेति । गो°. ८ क. ख. घ. ट. ठ. ड. यत्तत्क° च. यस्तै°त. ९ ग. ज. °त्कर्मादन्निर्वृ°; च. °त्कर्माहि-निर्वृ° होनि. १० ग. ज. अम्नानि; च. अश्नानि° आ. १२ क. ख. घ. ट. ठ. ड. °च्छन्तु १९ क. ख. घ. इन्द्रः अभि°; ट. इन्द्रः अभि °न्द्रं.

पृथक्पक्षे आदित्यसहचारिण एते ऋषयः । तदा योज्यम् । य एते ऋषयः कर्म अतनिपत याभ्यां तस्मिन्ब्रह्माणि अन्नानि ऐन्द्रे पूर्ववत्समगमत समागच्छन्तीति । शेषं समानमेवेति ॥ ३४ ॥

सप्तदशस्य तृतीयः पादः ।

५

---

चतुर्थः पादः ।

**अथातो द्युस्थाना देवगणास्तेषामादित्याः प्रथमागामिनो भवन्त्यादित्या व्याख्यातास्तेषामेषा भवति ॥ ३५ ॥**

---

१० 'अथातो द्युस्थाना देवगणाः' इत्येवमादि वक्तव्यम् । अतः परमेतदेवोत्तमं ज्योतिर्गणशब्दाभिधेयत्वेन निर्वाच्यम् । एतदेव हि गुणविकारोपजनापेक्षया भेदाभेदाभ्यां मन्त्रदृशः पश्यन्तोऽभिष्टुवते । तदर्थं विशेषतः पुनरधिकारवचनम् 'अथातो द्युस्थाना देवगणाः' इति । उत्तमे

(अथातो द्युस्थाना देवगणाः)

१५ द्युस्थाना इति । के पुनस्ते । देवगणा इति देवानां मित्रप्रभृतीनां गणाः । पृथक्त्वपक्षे गणा इति वचनमर्थवत् ।

'तेषामादित्याः (२४) प्रथमागामिनो भवन्ति' । ते कस्मात् । प्रत्यक्षत्वाच्छब्दस्य 'सप्तऋषयः' इत्येवमादीना च परोक्षत्वात् । ते पुनरभिधाननिर्वचनतो 'व्याख्याताः'

(तेषामादित्याः प्रथमागामिनः)

२० 'आदत्ते रसान्' (निरु० २ । १३)–इत्यत्र । केवलं त्वत्र बहुवचनमिति विशेषः । 'तेषाम्' आदित्यानाम् 'एषा' प्राधान्यस्तुतिः 'भवति' यां दृष्ट्वेह द्युस्थाने गणाभिधानेन समाम्नाताः ॥ ३५ ॥

---

२५ १ क. ख. घ. ठ. ठ. ड. ऋषय एते. २ ग. ज. ऐन्द्रे; च. एन्द्रे° इ. ३ क. ख. १५ (३४); ठ ड. °वेति । इति निरुक्तभाष्ये ६ ध्याये ३४ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ४ च. °शस्याध्यायस्य, ठ. ड. इति सप्तदशाध्यायस्य तृ°. ५ क ख. १ [ ३५ ], त. द्. १. ६ क. ख. घ. ट. ठ. ड. °श्यन्तः स्तुव°. ७ क. ख. घ. ट. ठ. ड. द्यौरेषां स्थानं त इमे द्यु°; च. उत्तमे °द्यौरेषां स्थानं त इ ८ क. ख. घ. ट. ठ. ड. इति बहुवच°; च. इति ~ व° बहु. ९ क. ख. १ [ ३५ ]. ठ. ड. °म्नाताः । इति निरुक्तभाष्ये ६ ध्याये ३५ खण्डः; २९ ग. च. वर्जमितरेष्वङ्को नास्ति.

इमा गिर॑ आदि॒त्येभ्यो॑ घृ॒तस्नूः॑ स॒नाद्राज॑भ्यो जु॒ह्वा॑ जुहोमि ।
शृ॒णोतु॑ मि॒त्रो अ॑र्य॒मा भगो॑ नस्तुविजा॒तो वरु॑णो॒ दक्षो॒ अंशः॑
( ऋ० सं० २ । २७ । १ ) ॥ घृतस्नूर्घृतप्रस्राविण्यो घृतप्रस्राविण्यो घृतसानिन्यो घृतसारिण्य इति वाहुतीरादित्येभ्यश्चिरं जुह्वा जुहोमि चिरं राजभ्य इति वा शृणोतु न इमा गिरो मित्रश्चार्यमा च भगश्च बहुजातश्च धाता दक्षो वरुणोऽशश्चांशोऽशुना व्याख्यातः सप्तऋषयो व्याख्यातास्तेषामेषा भवति ॥ ३६ ॥ ५

---

इमा गिर आदित्येभ्य इति । कूर्मस्य गार्त्समदस्य गृत्समदस्य वेदमार्षम् । इमा गिरो घृतस्नुः । घृतम् आहुतिलक्षणं याः प्रस्नुवन्ति प्रक्षरन्ति ता घृतस्नूः । अथवा । ‘घृतप्रस्राविण्यः’ । आविन्यत्वमर्थैकत्वम् । ‘घृतसानिन्यो वा’ । घृत देवान्प्रति सानयन्ति संभाजयन्तीति तथा । सनोतेः संभजनार्थस्य । ‘घृतसारिण्यो वा’ । ‘सृ गतौ’ (धा० १ । ९६० ) इत्यस्य । देवान्प्रति घृतं याः सारयन्ति गमयन्तीति । ताभिर्गीर्भिः तैर्मन्त्रैः सनाद्राजभ्यः चिरन्तनेभ्यः सर्वलोकराजभ्यः । अथवा । सनादिति यावदायुषम् अनुत्सर्गेण जुह्वा जुहूसंज्ञकेन पात्रेण जुहोमि । ताः पुनर्गिरोऽस्मदाशीर्युक्ताः । तत्समर्धनाय शृणोतु अस्माकं मित्रो अर्यमा भगश्च तुविजातः बहुजातश्च धाता दक्षो वरुणः अंशश्च । १० आदित्याः १५

तुवीति बहुनाम । सर्वविधातृत्वाद्बहुजन्मा धाता यावदधिकारं जन्मेति । ‘अंशः अंशुना व्याख्यातः’ ( निरु० २ । ५ ) । २०

प्रत्येकमप्येते मित्रादयो द्युस्थानत्वेनोपेक्ष्याः । शास्त्रातिगौरवभयात्तु न पृथक् द्युस्थानत्वेन समाम्नाताः । ते ह्यादित्यलिङ्गलिङ्गितेषु मन्त्रेषु पृथक् पृथगुपेक्ष्यास्तत्स्तुतीनां पृथगपि विद्यमानत्वात् ।

---

१ क. ध. ज त. द. °सारिण्यो घृतसानिन्य इति’. ४ क. ख. २ [ ३६ ], त. द. २. ३ ठ. ड. गिर इति कू°. ४ ग. इति । कू°. ५ ध. ड. ठ. ड °जभ्यः सर्वलोक°. ६ ध. ट °त्समवर्धनाय, ठ ड. तत्समवर्धनाय. ७ ग. ज. दक्षः अंशश्च; च. दक्षः ८ अं° वरुणः. ८ ट ‘अंशश्च’ इत्यस्यानन्तरं ‘इन्द्रश्चेति । अष्टौ पुत्रासो अदितेः । पृथक्त्वपक्षे’ मार्गे लिख्यते, तच्च ठ. ड. पुस्तकयोरन्तर्भाव्यते . ९ क. ख ग. ट पृथक् पृथक्, च पृ° क्. २५

'सप्तऋषयो' (२५) वक्तव्याः । ते पुनरमी 'व्याख्याता' निर्व-चनतः । इह त्वभिप्रेता रश्मय इन्द्रियाणि वा । 'सप्त सृप्ता सङ्ख्या' (निरु० ४ । २६) 'ऋषिर्दर्शनात्' (निरु० २ । ११) इति । सप्त च ते ऋषयश्च सप्तर्षयः । 'तेषामेषा' प्राधान्यस्तुतिः
५ 'भवति' ॥ ३६ ॥

---

सप्त ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ (वा० सं० ३४ । ५५) ॥ सप्त ऋषयः प्रतिहिताः शरीरे
१० रश्मय आदित्ये सप्त रक्षन्ति सदमप्रमादं संवत्सरमप्रमाद्यन्तः सप्तापनास्त एव स्वपतो लोकमस्तमितमादित्यं यन्ति तत्र जागृतोऽस्वप्नजौ सत्रसदौ च देवौ वाय्वादित्यावित्यधिदैवतमथाध्यात्मं सप्त ऋषयः प्रतिहिताः शरीरे षडिन्द्रियाणि विद्यासप्तम्यात्मनि सप्त रक्षन्ति सदमप्रमादं शरीरमप्रमाद्यन्ति सप्तापनानीमान्येव
१५ स्वपतो लोकमस्तमितमात्मानं यन्ति तत्र जागृतोऽस्वप्नजौ सत्रसदौ च देवौ प्राज्ञश्चात्मा तैजसश्चेत्यात्मगतिमाचष्टे तेषामेषापरा भवति ॥ ३७ ॥

---

सप्त ऋषयः प्रतिहिता इति । हिरण्यगर्भस्यार्षम् । आथर्वणे आत्म-स्तुतौ विनियोगः । उत्तरा च । शृणाति सर्व-
२० सप्त ऋषयः अधिदैवते
मिदमिति शरीरमादित्यः । आश्रयणाद्वा । सर्वमिद-मस्मिन्नाश्रितमिति । तस्मिन् सप्त ऋषयो रश्मयः प्रतिहिताः प्रत्येकं हिताः निहिताः । ते पुनः सप्तैव अन्यूनाधिकाः सन्तः सार्वदिक्कमुदकमुपनयन्तः तेनेद्धाः तमादित्यं सदं सदैव अप्रमाद्यन्तः

---

१ क. ख. २ (३६); ठ. ड. 'वति । इति निरुक्तभाष्ये ६ ध्याये ३६ खण्डः; ग. घ. षर्जमितरेष्वङ्को नास्ति. २ क. ख. छ. त. द. °यन्त्यत्र. ३ क. ख. छ. त. द. °तो अस्व°. ४ छ. त द. षलिन्द्रि°. ५ क. ख. ३ (३७); त. द ३. ६ ठ. ड. ऋषय इति । हि°. ७ ग. इति । हि°. ८ ग. ज. °नेद्धांस्तमा°.

अनुत्सर्गेण स्वस्य कर्मणः रक्षन्ति । निरिन्धनः पार्थिवोऽपि ह्यग्निरिन्धनक्षयान्निर्वाप्येत । त एव सप्त सुप्ताः आपनाः सर्वस्य लोकस्य व्यापनाः स्वपतः अस्तमुपगच्छतः अस्यादित्यस्यैव तं लोकम् आत्मानं गच्छन्ति । बाह्यं मण्डलं प्रविशन्ति । तेष्वनुप्रविष्टेषु तत्र सुप्तेषु उपरतप्रकाशवृत्तिषु तत्रान्तर्गतौ जागृतः तन्मण्डलान्तरपुरुषः तदधिष्ठाता योऽसौ 'हिरण्यश्मश्रुः हिरण्यकेशः' (छान्दो० उ० १ । ६ । ६) इति विज्ञायते वायुश्च 'इत्यधिदैवतम्'।

'अथाध्यात्मम्'। मण्डलवदस्मिञ्छरीरे रश्मिवदिन्द्रियाणि प्रतिहितानि निहितानि तच्छरीरं नित्यं रूपाद्यालोकनाद्युपकारेण रक्षन्ति अप्रमाद्यन्ति । सप्त आपनानि व्यापनानि विषयाणां शरीरस्य वा । तान्येव स्वपतोऽस्य जीवस्य सुखदुःखभोक्तुः लोकं शरीरमेव प्रत्यस्तमितभोयुः । बुद्धिद्वारेण भोक्तर्येव भावनारूपेण लीयन्ते यद्भावनोपपादकः स्वप्नभोक्तुः स्वप्नो भवति । तत्र जागृतः शरीरपरिपालनार्थं प्राज्ञश्चात्मा परमात्मा चिन्मात्रेण यः शरीरं व्याप्य वर्तते तैजसश्च प्राणोऽन्नं पानं पचनव्यूहस्वरसान्तर्भूतं तेजोवायुवृत्तिः ।

(margin: अध्यात्मे च)

'तेषामेषापरा भवति'। सा पुनः किमर्थम् । रश्मय एवेति स्फुटतायै ॥ ३७ ॥

---

तिर्यग्बिलश्चमस ऊर्ध्वबुध्नो यस्मिन्यशो निहितं विश्वरूपम् । अत्रासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः (अथ० सं० १० । ८ । ९) ॥ तिर्यग्बिलश्चमस ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा यस्मिन्यशो निहितं सर्वरूपमत्रासत ऋषयः सप्त सहादित्यरश्मयो ये अस्य गोपा महतो बभूवुरित्यधिदैवतमथाध्यात्मं तिर्यग्बिलश्चमस ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा यस्मिन्यशो निहितं

---

१ ठ. 'वायुश्च' इत्यारभ्य 'देवानां भद्रेति यावत्' पत्रद्वयं नोपलभ्यते. २ क. ख. घ. ट. ड. °वनानुरू°; च. °वना रू° नु. ३ क. ख. घ. ट. ड. °व्यूहश्च रसा°; ग. ज. °व्यूहं स्वरसा°. ४ ग. ज. °वृत्ति. ५ क. ख. ३ (१७); ङ. तायै । इति निरुक्तभाष्ये ६ध्याये १७ खण्डः, ग. ३८; च. वर्जमितरेष्वङ्को नास्ति. ६ छ. त. द. विश्वरू°.

सर्वरूपमत्रासत ऋषयः सप्त सहेन्द्रियाणि यान्यस्य गोप्तॄणि महतो बभूवुरित्यात्मगतिमाचष्टे देवा व्याख्यातास्तेषामेषा भवति ॥ ३८ ॥

---

‘तिर्यग्बिलश्चमस’[2] इति । तिर्यग्बिलः अस्य मण्डलस्य मधुपूर्णस्येव रश्मिच्छिद्राणि । चमनं चोदकमेव सनोतीति चमसः । ऊर्ध्वं चैतद्बुध्नमाभूतसम्प्लवान्न निपद्यत इति ऊर्ध्वबुध्नः । ऊर्ध्वं वावस्थितः प्रकाशेन बोधयतीति ऊर्ध्वबुध्नः । तस्मिंश्चमसे मण्डले यशः उदकं निहितं नियमेनाधिकं वा हितम् अवस्थापितं विश्वरूपम् अनेकप्रकारमनेकरूपम् । कैः पुनस्तन्निहितमिति । ये अस्य महतो जगतः आत्मनो वा गोपाः गोप्तारः एते रश्मयो बभूवुः भवन्ति । ये च अत्र एतस्मिन् मण्डले साकम् एकीभूतास्तदधिष्ठात्रा सह आसते । तैर्हि चतसृषु दिक्षूर्ध्वमधोमण्डले चेति[4] यानि सप्तानि ज्योतींषि अस्य । ते रश्मयः सप्त सर्पणा ऋषणाद्दर्शनादस्य धर्मस्य ऋषय उच्यन्ते[5] ‘इत्यधिदैवतम्’[6] ॥

त एव अधिदैवते

‘अथाध्यात्मम्’ इति । तिर्यग्बिलमिदमेव शिरः चमसः । चम्यन्ते ह्यनेन रसा इति । ऊर्ध्वबन्धनश्च । उपरि ह्यवस्थितमेतद्बन्धनमस्य शरीरस्य । एतद्वियोगे हि विस्रंस्यते शरीरम्[7] । यस्मिन् यशो निहितं विश्वरूपं नानाप्रकारमिन्द्रियानुभूतं[8] रसाख्यं ज्ञानाख्यं वा । तस्य चमसस्य ये विधातारः तद्द्वारेणास्य शरीरस्य महतो गोप्तारः तत्रैव चमसान्तरमनुप्रविष्टाः साकं सह तद्यश उपजीवन्त आसते ‘इत्यात्मगतिमाचष्टे’ ॥

अध्यात्मे च

---

१ क. ख ४ (१८); त. द. ४. २ ग. इति । ति॰. ३ क. ख. घ. च. ट. तिर्यञ्चोऽस्य. ४ क. ख. घ. ठ. ड. ॰ले चोत्सृतानि यानि ज्यो॰; च. चेति यानि सृतानि ज्यो॰ चोत्सृतानि यानि. ५ ट. ‘णात् ऋषणा॰ अर्षं, ड. ऋषणात् ऋषणा॰. ६ ग. इत्यधिरूपमथा॰; च. ज. इत्यधिदैवरूपमथा॰. ७ ग. ज. ॰ते । यस्मि॰. च. ते । यस्मि॰ शरीरम्. ८ क. ख. ग. घ. ज. ॰न्द्रियत्वेन भूतं; च. ॰न्द्रियानुभूतं' त्वेन भू; ट. ॰न्द्रियत्वेन भूत ॰यानुभू; ढ इन्द्रियानुभूतत्वेन भूतं.

'देवाः' ( २६ ) वक्तव्याः[1] । ते पुनः 'देवो दानाद्वा दीपनाद्वा[2] द्योतनाद्वा' ( निरु० ७ । १५ ) इत्यत्र निर्वचनतो 'व्याख्याताः' । इह तु रश्मयो बहुवचनेनोच्यन्त इति विशेषः[3] ।

'तेषामेषा' प्राधान्यस्तुतिः 'भवति' ॥ ३८[4] ॥

---

देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो निवर्तताम् । देवानां सख्यमुपसेदिमा वयं देवा न आयुः प्र तिरन्तु जीवसे ( ऋ० सं० १ । ८९ । २ ) ॥ देवानां वयं कल्याण्यां मतावृजुगामिनामृतुगामिनामिति वा देवानां दानमभि नो निवर्ततां देवानां सख्यमुपसीदेम वयं देवा न आयुः प्रवर्धयन्तु चिरं जीवनाय विश्वे देवाः सर्वे देवास्तेषामेषा भवति ॥ ३९[5] ॥

---

देवानां भद्रेति[6] । गोतमस्यार्षम् । 'देवेभ्यो वशामालभेत' ( मैत्रा० सं० २ । ५ । २ ) इति विनियोगः । अस्य पशोर्वपायाः पुरोनुवाक्या ( मैत्रा० ४ । १४ । २ ) य एते देवाः रश्मयो नित्यम् ऋज्वेव मण्डलादनावरणत्वादन्तरिक्षस्य सर्वतो यन्ति । अथवा । ऋजूयताम् ऋतुगामिनाम् ऋतौ[7] यथाकालम् अस्मान्मण्डलाद्गच्छता सुमतिः शोभना मतिः प्रसादाभिमुखी मतिः सा अस्मान् प्रति निवर्तता नियमेन वर्तताम् । तत्पूर्विका च रातिः धनलाभोऽस्मान् प्रति नियमेन वर्तताम् । ततश्च तेन धनलाभेन उपजनितसामर्थ्याः सन्तो वयं तेषामेव देवाना सख्यं समाख्यानतां[8] यौ[9]

---

१ ग. ज. °व्याः । देवा; घ. °व्याः । देवो° ते पुनः. २ ग. च. ज. °द्वा द्योत°. ३ ग. च. ज. °शेषास्तेषा°. ४ क. ख. ४ ( ३८ ); ङ. °वति । इति निरुक्तभाष्ये ६ध्याये ३८ खण्डः; ग. च. अङ्कमितरेऽङ्को नास्ति. ५ क. ख. ५ (३९); त. द. ५. ६ ग. °द्रेति । दीर्घतमस आ°, च. °द्रेति । दीर्घतमस आ° गोतमस्य; ज. °द्रेति । दीर्घतमस आ°. ७ क. ख. ङ. ट. ठ. ड. °मृतावृतौ य°; च. °मृ ° तो य° तावृ ८ क. ख. घ. ट. ड. समाख्यत°, च. समानख्यानतां. ९ ग. ज. यशे.

कर्मणि समानमङ्गभावम् उपसेदिम गच्छेम वयम् । ततश्च तथाभूताना-मस्माकं ते देवाः प्रतिरन्तु प्रवर्धयन्तु आयुः जीवसे चिरं जीवनायेत्ये-तदाशास्महे ।

विश्वे देवा (२७) इति वक्तव्यम् । तं एव स्वमय उपहितविश्वाविशे-

५ विश्वे देवाः के

षणाः सन्तो विश्वे देवा भवन्ति । 'तेषां' तद-भिधानविशिष्टानाम् 'एषा' प्राधान्यस्तुतिः 'भवति' ॥ ३९ ॥

---

ओमासश्चर्षणीधृतो विश्वे देवास आगत । दाश्वांसो दाशुषः

१० सुतम् ( ऋ० सं० १ । ३ । ७ ) ॥ अवितारो वावनीया वा मनुष्यधृतः सर्वे च देवा इहागच्छत दत्तवन्तो दत्तवतः सुतमिति तदेतदेकमेव वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते यत्तु किंचि-द्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते यदेव विश्वलिङ्गमिति शाकपूणिरनत्यन्तगतस्त्वेष उद्देशो भवति बभ्रुरेक इति दश

१५ द्विपदा अलिङ्गाः ( ऋ० सं० ८ । २९ ) । भूतांशः काश्यप आश्विनमेकलिङ्गमभितष्टीयं सूक्तमेकलिङ्गं साध्या देवाः साधनात्तेषामेषा भवति ॥ ४० ॥

---

ओमासश्चर्षणीधृत इति । मधुच्छन्दसा दृष्टा । प्रउगे ग्रहे विनियोगः ।

२० विश्वे देवाः

वैश्वदेवश्चानेन प्रातःसवने ग्रहो गृह्यते ( मैत्रा० सं० १ । ३ । १८ ) । हे विश्वे देवाः । ये यूयम् ओमासः अवितारः रक्षितारः चर्षणीनां मनुष्याणां स्वेनोपकारेण अवनीया वा तर्पणार्हाः धारयितारश्च स्थितिकर्तारः ते यूयं दाश्वांसो

---

१ क. ख. घ. ट. ठ. ड. उपगच्छेम, च. दिम गº उप. २ क. ख. घ. ट. ठ.

१५ ड. ºस्माकमायुः तेº. ३ क. ख. घ. ट. ठ. ड. 'आयुः' नास्ति. ४ क. ख. घ. ट. ठ ड. ºदेवा वक्तव्याः; च. ºदेवा इति वक्तव्यº व्याः. ५ म. ज. 'ते' नास्ति, च. एव त. ६ क. ख. ५ (३९); ट. ठ. ºवति । इति निरुक्तभाष्ये ९ध्याये ३९ खण्डः, ग.च.वर्जमितरेष्वङ्को नास्ति. ७ छ. त. द. ºषांमव. ८ छ. त. द. भवति भूताशःº. ९ छ. त. द. ºलिङ्गं बभ्रुरेक इति दश द्विपदा

२० अलिङ्गाः साध्याº. १० क. ख. ६ (४०), त द ६. ११ ग. इति । ºमº.

दत्तवन्तः । मनसा[1] कृतसंकल्पा भूत्वा इदं नामास्माभिरस्मै देयमिति । ततोऽस्य दाशुषो दत्तवतो हवींषि यजमानस्यैतं सुतम् अभिषुतं सोमं पातुम् आगतेत्येतदाशास्महे ।

अधुना विश्वे[2]देवानधिकृत्य तद्गतमेवाधियज्ञे किंचिद्[3]विचारयिष्यन्नुपोद्घ्नन्ति । 'तदेतदेकमेवं[4] वैश्वदेवं गायत्रं तृचम्' इत्येवमादि । 'तत्' इति समाम्नायस्यानुस्मृतये । 'एतत्' इति वक्ष्यमाणार्थसंनिधीकरणाय । 'एकं तृचं' सूक्ते वैश्वदेवं गायत्रं गायत्रेण छन्दसा युक्तं 'दाशतयीषु' सर्वास्वपि बह्वृचु शाखासु 'विद्यते' । नान्यत् । अस्त्येवास्मिश्छन्दसि प्रयोजनं च गायत्रच्छन्दोयुक्तैरन्यैरपि बहुभिर्वैश्वदेवैर्मन्त्रैरधियज्ञे । तत्र किं कर्तव्यमिति । यत् आह । 'यत्तु किंचिद्बहुदैवतं' मन्त्रजातं गायत्रेण छन्दसा युक्तं 'तद्वैश्वदेवानां स्थाने युज्यते' । न्याय्यमित्यतो 'यदेव' विश्वशब्दोपेतं मन्त्रजातं सूक्तं वा तदेव वैश्वदेवानां स्थाने विनियुज्यते[5] न बहुदेवतामात्रेण 'इति शाकपूणिः' मन्यते । तत्किमस्यापि यास्काचार्यस्यैतदेवाभिमतमुत नेति । यत आह । 'अनत्यन्तगतस्त्वेष उद्देशो भवति' । अनैकान्तिक एष उद्देशः । उद्देशनं प्रतिज्ञा । यदेव विश्वलिङ्गोपेतं तदेव वैश्वदेवानां स्थाने प्रयुज्यत इति । कथमनैकान्तिकमिति । वैश्वदेवं हि मन्त्रजातं समाम्नाये[6] क्रियार्थमुत्पद्यमानमाम्नायस्य क्रियार्थत्वाद्गायत्रे छन्दसि तावदेवोत्पत्तुमर्हति विश्वयुक्तमन्त्रजातवद्यावत्कर्मसु सर्वैर्वैश्वदेवेषु तच्छन्दस्केषु[7] अलमिति । न च तत्सर्वास्वपि दा[8]शतयीष्वस्ति छन्दस्यलंकर्मोत्पादे । प्रयोजनं च तच्छन्दोयुक्तैरपि विविधैर्मन्त्रैर्भवति । न च ते तथाविधाः सन्तीति बहुदेवत्ताश्च तस्मिश्छन्दसि सन्ति । तत्किमस्तु तस्य

वैश्वदेवं गायत्रं तृचम् एकमेव

एतादृशां तृचानां प्रयोजने बहुदेवतानि तृचानि प्रयुज्यन्ते

विश्वशब्दोपेतमेव मन्त्रजातं युज्यत इति शाकपूणिः

शाकपूणेरेतन्मतमनैकान्तिकम्

---

१ ग. ज. मनसा दत्तवन्तः कृतसंकल्पास्ततवा इदं°. २ क. ख. घ. ट. ठ. ड. विश्वान् दे°; च. विश्वे° श्वान्. ३ क. ख. घ. ट. ठ. ड. 'यज्ञे विचा'. ४ च. कमिव. ५ क. ख. घ. ट. ड. विनियु°; च. प्रयु° विनि. ६ ग. ज. °जातमाम्नाये. ७ ग. ज. तच्छन्दस्येषु अल°; घ. तच्छन्दस्समयेष्व°; च. ट. तच्छन्दस्साम्येष्व° स्के; ठ. ड. तच्छन्दस्केषु साम्येष्व° ८ घ. ट. ट. दाश°; च. दैश°दा.

बहुदेवतं गायत्रं मन्त्रजातं विनियोक्तव्यमिति यास्कः

कर्मणः प्रहाणमुत स्यात् तत्स्थाने बहुदेवतानि सूक्तान्योप्यन्तामिति । युक्तं यद्बहुदेवतानि ओप्यरन्निति यास्काचार्यः पश्यन्नाह ' यत्तु किंचिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते ' । सेयमनुपत्तिर्गायत्रे छन्दसि वैश्वदेवानां मन्त्राणां यावदलंकर्माणं गमयति बहुविश्वशब्दयोरितरेतरार्थाभिधेयप्रत्यासत्त्या बहुदेवतान्यपि वैश्वदेवानां स्थाने युज्यन्त एवेति । अपि चैवमनत्यन्तगत इत्युद्देशः । येन ' भूतांशः

अश्विशब्दयुक्तया एकयापि ऋचा सर्वं सूक्तमाश्विनम् इति भूतांशः

काश्यप आश्विनमेकलिङ्गम् ' । भूतांशो नाम ऋषिः काश्यपः । स एकेनाश्विलिङ्गेन युक्तमनेकर्चं सूक्तं ( ऋ० सं० १०। १०६ )ददर्श। तत्र यास्वप्याश्विलिङ्गमृक्षु नास्ति तासामप्याश्विनीत्वं तेनैवैकेनाश्विलिङ्गेन । यथैकेनापि छत्रिणा मध्यगतेन छत्रिणो भवन्त्येवमेकेन विश्वलिङ्गवचनेन यावन्ति सूक्तानि कर्मणि संयुज्यन्ते बहुदेवतान्यविश्वलिङ्गान्यपि तानि तदर्थसाधकानीति ।

' ऋध्याम ' ( ऋ० सं० १० । १०६ । ११ ) अश्विलिङ्गं येन पर्फरीसूक्तं सर्वमाश्विनम् । ' ऋध्याम स्तोमं सनुयाम वाजमा नो मन्त्रं सरथेहोप यातम् । यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः कामम्प्राः ' ( ऋ० सं० १० । १०६ । ११ )॥

पर्फरीसूक्ते ' ऋध्याम ' इत्येव ऋक् अश्विलिङ्गा

हे अश्विनौ सरथौ समानरंहणौ समानगती युवामायातम् ।

---

१ क. ख. घ. ट. ठ. ड. उच्यते । युक्तं ; च. ° युक्त° उच्यत. २ ख. येनै° ते. ३ ग. °यामेति । हे, घ. च. ज. ठ. °यामेति । हे. ४ क. ख. घ. ट. ठ. ड. सरथाविन्यस्य सर्वस्थमन्त्रविवरणस्थाने वयमित्यादि वर्तते । तत्सर्वं सायणभाष्यमेव; ट. पुस्तके ' सरथौ ' इत्यादि प्रान्ते लिख्यते. वयं स्तोमं त्रिवृत्पञ्चदशादिकम् ऋध्याम ऋध्यास्म वर्धयेम । किंच । वाजं हविर्लक्षणमन्नं युवाभ्यां सनुयाम प्रयच्छेम । तस्माद्युवां सरथा सरथौ समानरथौ एकमेव रथमारूढौ सन्तौ इह अस्मिन्कर्मणि नः अस्मदीयं मन्त्रं मननीयं स्तोत्रम् उपयातम् उपागच्छतम् । गोष्वन्तः गोरूपस्यवस्थितं पक्वं परिणतं तदेव मधुरं यशो न । यश इत्यन्ननाम । नश्चार्थे । क्षीराज्यादिलक्षणं महावीरादौ अवनीयमानम् अन्नं चापेक्ष्य आगच्छतमिति संबन्धः । एवमुक्तप्रकारेण भूतांश एतन्नामा ऋषिः अश्विनोः काममभिलाषमात्मीयाभिः स्तुतिभिः अप्राः आपूरयत् । संपूर्णमकार्षीदित्यर्थः । ' प्रा पूरणे आदादिकः ' । व्यत्ययेन मध्यमः ।

इम....वतः श्रुतवतोर्भवतोः स्तोममृध्याम ऋद्धिं प्राप्नुमो वयम् । कथमिति । सनुयाम वाजम् अन्नं भक्षेमहि । किंच । यशो न पक्वं मधु क्षीरं घृतं च यद्गोष्वन्तः मध्येऽस्ति येन भूनाशः अश्विनोर्भवतोः काममप्राः आपूरयते इत्यत आयातमिति ।

'अभितष्टीयं सूक्तं चैन्द्रम् । तदपि 'एकलिङ्गम्' इति । यथा ।　　५

अस्मिन्सूक्ते एकस्यामेव ऋचि इन्द्रलिङ्गम्

'शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ । शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम्' (ऋ० सं० ३ । ३८ । १० )॥ विजयाय समत्सु संग्रामेषु नित्यं घ्नन्तं वृत्राणि वारकाणि शत्रुजातानि संजितं समस्तानां वीराणां जेतारम् ऊतये रक्षणाय अस्मिन् भरे　　१०
संग्रामे वाजसातौ यस्मिञ्छत्रून् जित्वान्नानि संभजन्ते तस्मिन् हुवेम वयमाह्वयामहे तमिन्द्रमेवमादिगुणयुक्तमात्मनो विजयायेति ।

'साध्याः (२८) देवाः साधनात्'। ते हि सर्वमिदं साधयन्ति ।

साध्याः के कस्माच्च

यदन्येन सर्वकर्मभिरसाधितं तत्साधयन्तीति साध्या उच्यन्ते । ते च पुनः प्राणाः विश्वसृज　　१५
ऋषयो ये सहस्रसंवत्सरेण सत्रेणेदं विश्वमसृजन्त त एवैतेऽधिदैवं रश्मयः । विज्ञायते हि । 'प्राणा वै सप्त ऋषयः साध्या विश्वसृज' इति । 'तेषामेषा' प्राधान्यस्तुतिः 'भवति.' ॥ ४० ॥

---

१ ठ. इहास्मिन्कर्मणि उपागच्छतं [ इदं सायणभाष्यस्थम् ] किंच युवयोः　　२०
स्तोमं त्रिवृदादिकं ऋध्याम°. २ ट. भक्षीमहि. ३ ग. ज. यद्गोष्वन्तर्मध्येऽस्ति°.
४ ग ज. °वेमेति । वि°; घ. ट. °वेम°. ५ ग. ज. घ. ट. ठ. ड. °जात्यानि; च. °जात्यानि° ता. ६ क. ख. घ. ट. ठ ड. °णां धनानां च जे°; च. °णां ˇ जे° धनाना च. ७ क. ख. घ. ट. ठ. ड. °तारं शुनं शूनं उत्साहेन प्रवृद्धं नृतमं जगतः अतिशयेन नेतारं ऊत°; च. °तारं ˇ ऊत° शुनं शूनमित्यादि. ८ ठ ड. यूयं कुशिका आहुः [ 'कुशिकाः' ठ. पुस्तके प्रान्ते ] ९ ग. सहस्रं च. सहस्र° स. १० क. ख. घ. ट. ठ. ड. °त्सरसत्रेण; च. °त्सरे स° र. ११ क. ख. ६ ( ४० ); ठ. ड. °वति । इति निरुक्तभाष्ये ६ ध्याये ४० खण्डः; ग. च ग्रंथेमिन्नरेखाङ्को नास्ति.　　२१

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ( ऋ० सं० १।१६४।५०॥१०।९०।१६ )॥ यज्ञेन यज्ञमयजन्त देवा अग्निनाग्निमयजन्त देवा अग्निः पशुरासीत्तमालभन्त तेनायजन्तेति

५ च ब्राह्मणं तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः समसेवन्त यत्र पूर्वे साध्याः सन्ति देवाः साधनाद् द्युस्थानो देवगण इति नैरुक्ताः पूर्वं देवयुगमित्याख्यानं वसवो यद्विवसते सर्वमग्निर्वसुभिर्वासव इति समाख्या तस्मात्पृथिवीस्थाना इन्द्रो वसुभिर्वासव इति समाख्या तस्मान्मध्यस्थाना वसव आदित्यर-

१० श्मयो विवासनात्तस्माद् द्युस्थानास्तेषामेषा भवति ॥ ४१ ॥

---

यज्ञेन यज्ञमयजन्तेति। दीर्घतमस आर्षम्। अग्निनाग्निमयजन्त देवाः। उक्तं च 'समुन्नित्यथुः सर्वगणं सर्वनामानम्' (निरु० ६।३६) इति। तम् अग्निं स्थावरज-

साध्या

१५ ङ्गमभावेनेति। 'तं वत्सरथा वयं वसत्या' इत्येतत (निरु० १०।२१)। तस्माद्दर्शनवतः प्रयोक्तुः सर्वमिदमग्निरित्यभिप्रेत्य ब्रवीति। अग्निना स्थावरजंगमभावमापन्नेन हविर्भूतेन अग्निम् एव सर्वदेवतात्मानमादित्यादिप्रनाडिकया महान्तमात्मानम् अयजन्त देवाः देवभाविनः पूर्वे ज्ञानकर्मसमुच्चयकारिणो यजमानभावमापन्नाः साध्याः विश्वसृजः ऋषयः प्राणाः।

२० तानि धर्माणि तानि कर्माणि तथाविधज्ञानयुक्तानि प्रथमानि मुख्यानि महदात्मभावापत्तये आसन्। तैरर्च्यैक्रियन्तेत्यर्थः। ते च तानि कृत्वा नियमेनैवानन्यभाविस्वात्तत्फलस्य महिमानः तदानुपूर्व्येण जातमहदात्मभावाः सन्तः तमेव नाकं महान्तमात्मानमेकान्तसुखम् असचन्त। तद्भावमेव ते

---

१ छ त. द. संसेव्यन्त. २ क. ख. ७ (ध्रु॰); त. द. ७. ३ ठ. ड. दक्षमिति। दीर्घ॰. ४ ग. 'नोति। दी॰. ५ ग. 'नेति। आहुतिश्चरवोऽस्थावरगत्वेनेतित्यत्र। तस्माद्दर्शनम्। त॰; घ. ॰नीति। औहानश्चरवो (वा) स्थानरावेनेत... त्यत्र तस्माद्दर्शन। त॰. ६ क. ख. ग. ट. ठ. ड. देव॰। ७ क. ख. ग. घ. ठ. ड. ॰रापि क्रि, च. ॰रप्यैकि॰ वि. ८ क. ख. घ. ठ. ड. ड. ॰यन्ते इत्य॰; ग. ॰यन्तेत्य॰; च ॰यन्ते॰त्य॰ इ.

२५

आपेदिरे । किं स एवेति । नेत्युच्यते । यत्र पूर्वे साध्याः सन्ति देवाः । शब्दार्थोपदेशनित्यत्वाद्यत्र पूर्वे च पूर्वतरे च ज्ञानकर्मसमुच्चयकारिण आसते । संविजेज्ञुरित्यर्थः । विज्ञायते हि 'विश्वसृजः प्रथमे सत्रमासत' इति (तै० ब्रा० ३ । १२ । ९) इति ।

शिरो ह्यध्यात्मं द्युस्थानभक्तिः । अतः सप्त ऋषयो देवाः विश्वेदेवाः साध्या इति सर्व एते प्राणा रश्मयो वेत्युपपद्यते । ब्राह्मणमपि चैतमर्थमेवानुविदधाति 'अग्निः पशुरासीत्' इत्येवमादि ।

'वसवः' (२९) इति वक्तव्यम् । ते पुनरमी त्रिस्थानाः । ते यस्मात्सर्वमिदं विभागेनावस्थितमाच्छादयन्ति । कथमिति । वासवोऽग्निरिति समाख्या । तस्मात्पृथिवीस्थानाः । इन्द्रो वसुभिर्वासव इति समाख्या । तस्मान्मध्यस्थानाः । वसव आदित्यरश्मयो विवासनात् । तस्मात् द्युस्थानाः । 'तेषामेषा' प्राधान्यस्तुतिः 'भवति' ॥ ४१[2] ॥

वसवः के कस्माच्च

---

सुगा वो देवाः सुपथा अकर्म य आजग्मुः सवनमिदं जुषाणाः । जक्षिवांसः पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि ॥ स्वागमनानि वो देवाः सुपथान्यकर्म य आगच्छत सवनानीमानि जुषाणाः खादितवन्तः पीतवन्तश्च सर्वेऽस्मासु धत्त वसवो वसूनि तेषामेषापरा भवति ॥ ४२[4] ॥

---

सुगा वो देवा इति । परमेष्ठिन आर्षम् । समिष्टयजुःषु विनियोगः (मैत्रा० सं० ४ । ८ । ४ । मान० श्रौ० २ । ५ । ४ । १६) । हे देवाः यूयं ये आजग्मुः नित्यमागच्छत इदं सवनम् इमं यज्ञम् अस्माभिः सह जुषाणाः प्रीयमाणाः । तेषां वः अनुगच्छतां स्वागमनानि शोभनानि आगमनानि पुनःपुनरस्मद्यज्ञेषु एवमेव सुपथानि सुमार्गाणि सन्तु । किञ्च । एतस्मिन्यज्ञे जक्षि-

वसवः

---

१ क. ख. सन्ति जज्ञु°; ग. सन्ति जग्मुरि°. २ क. ख. ७ (४१), ठ. ड. °वति । इति निरुक्तभाष्ये ६ ध्याये ४१ खण्डः; ग. च. वर्गमितरेष्वङ्को नास्ति. ३ ङ. थ. ध. ट. ड. 'देवा सद्नमकर्म°. ४ क. ख. ८ (४२), त. द. ८. ५ ग हाति । प°. ६ क. ख. घ. ट. ठ. ड. ये यूयं, च यूयं ये.

ग्रंश: स्वादितवन्तो हर्षाणि पीतवन्तश्च सोमतृप्ता: सन्त: अस्मासु धत्त निधत्त हे वसवो वसूनीत्येतद्वाशास्महे ।

समिष्टयजु:षु तृतीयसवने विनियोगादत्र द्युस्थाना: वसव: ।

त्रिस्थाना इत्युक्तम् । यत इतरयोरपि स्थानयो: प्रदर्शयति । 'तेषा-

५ मेषा' अपरा 'भवति' ॥ ४२ ॥

---

ज्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्त शुभ्रा: । अर्वाक्पथ उरुज्रय: कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य (ऋ० सं० ७ । ३९ । ३) ॥ ज्मया अत्र वसवोऽरमन्त देवा

१० ज्मा पृथिवी तस्यां भवा उरौ चान्तरिक्षे मर्जयन्त गमयन्त रमयन्त शुभ्रा: शोभमाना अर्वाच एनान्पथो बहुजवा: कुरुध्वं शृणुत दूतस्य जग्मुषो नोऽस्याग्नेर्वाजिनो व्याख्यातास्तेषामेषा भवति ॥ ४३ ॥

---

११ ज्मया अत्र वसव: इति । वसिष्ठस्यार्षम् । ज्मा पृथिवी । तस्यां नित्यं भवन्ति ते ज्मया: । रन्त रमन्त । अत्र एतस्मिन् कर्मणि अस्मिन्वा लोके देवा: वसव: ।

*ते एव त्रिस्थाना:*

ये च उरौ विस्तृते अन्तरिक्षे विस्तीर्णे मर्जयन्त । मार्ष्टिर्गत्यर्थ: । गमयन्त यद्यत्तेषां गमयितव्यम् । अथवा । वर्तमाना: । शुभ्रा: शोभमाना: । एव-

२० मनयो: स्थानयोर्वसून् विभज्याधुना द्युस्थानास्तान् कृत्वा ब्रवीति । ये यूयमेवं त्रिस्थानास्तान्वो ब्रवीमि । नित्यम् अस्य अग्ने: न: अस्मद्दूतस्य जग्मुष: गतवत: शृणुत वदयं ब्रवीति । श्रुत्वा चास्मान् अर्वाञ्चः आभि·

---

१ क. ख. ठ. ङ. पर्यिंसिभ्र पील°; ट. ॰ पीत° पविवासं. २ क. ख. ८ (४५); ठ. ङ. वति । इति निरुक्तभाष्ये ६ ध्याये ४२ खण्ड:; ग. घ. वर्जितेष्वादर्शे नास्ति. ३ ङ. °मन्त ७ शु° मयन्त. ४ क. ख. छ. ङ. द. नो अस्या°. ५ क. ख. १ (४३); त. द. १. ६ ग. इति । व. ७ क. ख. घ. ठ. ठ. ङ. तस्यां ये नि°; च. तस्यां ॰ नि° ये. ८ क. ख. च मो अस्म°; ग. ज. नोऽग्ने: अस्म°. ९ क. ख. घ. ट. ठ. ङ. °यो युष्मान्प्रति म°; च. यो ४ ग° युष्मान्प्रति. १० ग. ज. °र्वाकाभि°; घ. °र्वाञ्चाभि° गा.

मुखेन उरुक्रमः बहुजनाः बहुप्रकारगतयो विरक्तमपेरहतान् पथः कुरु- ध्वमित्येतदाशास्महे ।

'वाजिनो (३०) व्याख्याताः' 'अपि स वाजी वेजनवान्' (निरु० २ । २८) इत्यत्र । केवलमत्र बहुवचनकृतो विशेषः । रश्मयश्चाभिधेयाः । पृथक्त्वे देवाश्वाः । 'तेषामेषा भवति' प्राधान्यस्तुतिः[3] ॥ ४३ ॥    ५

---

**शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः । जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद्युयवन्नमीवाः ( ऋ० सं० ७ । ३८ । ७ ) ॥ सुखा नो भवन्तु वाजिनो ह्वानेषु देवतातौ यज्ञे मितद्रवः सुमितद्रवः स्वर्काः स्वञ्चना इति वा स्वर्चना इति वा स्वर्चिष इति वा जम्भयन्तोऽहिं च वृकं च रक्षांसि च क्षिप्रमस्मद्यावयन्त्वमीवा देवाश्वा इति वा देवपत्न्यो देवानां पत्न्यस्तासामेषा भवति ॥ ४४ ॥**    १०

---

    १५

शं नो भवन्तु वाजिन इति[6] । वसिष्ठस्येयमार्षम् । वाजिनयागे विनियोगः ( आश्व० श्रौ० २ । १६ ) । एतस्मिन् देवतातौ यज्ञे हवेषु आह्वानेषु शम् अस्माकं सुखाः सन्तु वाजिनः । किंलक्षणाः । मितद्रवः सुश्लिष्टं शोभनं ये द्रवन्ति । स्वर्काः ये स्वञ्चनाः । शोभनम् अञ्चन्ति गच्छन्ति । शोभनं वा अर्चनं येषां स्तुतिः । स्वर्चिषो वा । येषां शोभना अर्चिषः सुदीप्तयः । ते आगच्छन्तु आह्वानेष्वस्माकम् । जम्भयन्तः । किमिति ।    २०

वाजिनः

---

१ क. ख. घ. ट ड. °कारं शतसहस्रमागमनेनैव मार्गान् प्रहतान् कुरु°; च. °कारंगतयो नित्यमेरहतान्कुरु° हे वसवः शतसहस्रमागमनेनैव मार्गान् प्र°. २ ग. ज. 'पथः' नास्ति; च. पथैः. ३ क. ख. १ (४३); ठ. ड. °स्तुतिः। इति निरुक्तभाष्ये ६ ध्याये ४३ खण्डः; ग. च. वर्जयितरेष्वङ्को नास्ति. ४ छ. त. द. °युयवन्नमी°. ५ क. ख. १० (४४); त. द. १०. ६ ग. इति । क°. ७ क. ख. घ. ट. ठ. ड. °ह्वयामस्. ८ क. ख. घ. ट. ठ. ड. °सुदीप्तयः दी°; च. °र्चिषः सुदी°.    २५

अहिं च वृकं च । यश्चास्मानाहन्ति यश्च वृकस्तस्करो मुष्णाति । रक्षांसि च । येऽस्मान् रहसि क्षिण्वन्ति । तांश्च अस्मत्तो जम्भयन्तः हिंसन्तः सनेमि क्षिप्रम् । सामर्थ्यादिह सनेमीति क्षिप्रनाम । युयवन् । सामर्थ्यात् ' अप ' इत्यध्याहृत्य अपयावयन्तु । अपमिश्रयन्त्वित्यर्थः । इष्टं हि रक्षसां नाशनं न मिश्रणमिति ।

' देवपत्न्यः ' ( ३१ ) वक्तव्याः । ताः पुनः ' देवानां पत्न्यः ' पालयित्र्यः पालनीया वा । पत्नीसंयाजेष्वेतौ इज्यन्त इत्यतस्तृतीयसवन-भक्तित्वादादित्यं भजन्ते । तदुक्तम् । ' अथैतान्यादित्यभक्तीन्यसौ लोक-स्तृतीयसवनम् ' [ निरु० ७ । ११ ] इति ॥ ४४ ॥

---

देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये । याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत ( ऋ० सं० ५ । ४३ । ७ ) ॥ देवानां पत्न्य उशत्योऽवन्तु नः प्रावन्तु नस्तुजयेऽपत्यजननाय चान्नसंसननाय च याः पार्थिवासो या अपामपि व्रते कर्मणि ता नो देव्यः सुहवाः शर्म यच्छन्तु शरणं तासामेषापरा भवति ॥ ४५ ॥

---

देवानां पत्नीरिति । प्रतिक्षत्रस्येयमार्षम् । आग्निमारुते ( आश्व० श्रौ० ५ । २० ) पत्नीसंयाजेषु ( आश्व० श्रौ० १ । १० ) च विनियोग । या एता देवपत्न्यः

देवपत्न्यो नित्यमस्मत्तो हविरुशन्ति कामयन्ते ता अस्मत्तो हविरुपभुज्य ततोऽस्मान् अवन्तु प्रतितर्पयन्तु धनेन । किंच । प्रावन्तु नस्तुजये । प्रक-

---

१ च. °र्थादेवयन्त्य° पे २ ग. ज. °हत्यायावियं मिश्र°; च. हत्य यो वियं (अपयावयन्तु) अपहन्यन्ते इति मिश्र°. ३ क. ख. घ. ट. ठ ड. °ह च र°. ४ ग. ज. °ष्वेता तृती°; च. °ष्वेतावृती° इज्यन्त इत्यतः. ५ क. ख. १ · ( ४४ ); ठ. ड. इति । इति निरुक्तभाष्ये ६ ध्याये ४४ खण्डः; ग. च. वर्जमिदं खण्डो नास्ति. ६ क. ख. छ. त. द. °न्तु नोऽपत्य°. ७ क. ख. छ. त. द. कर्मणि व्रते ८ क. ख. ११ ( ४५ ); त. द. ११. ९ ग. °रिति । प्र°.

येषां भवन्तु रक्षन्तु अपत्यजननाय वाजसातये च अन्नसंभजनाय च ।
च तमारता: । य : पार्थिवास: पृथिव्या भवा: या अपामपि व्रते कर्मणि वर्षे-
र गें व्यापृता: सर्वा: सुहवा: स्वाह्वाना: अस्माकं यच्छन्तु ददतु शरणं
गृहं सुखं त्राणं वेत्येतदाशास्महे ।

' तासामेषापरा भवति ' । सा पुनः किमर्थम् । सामान्यतः पूर्व-
स्यामुक्ता: । विशेषतः परस्यामुच्यन्ते । पूर्वयैव समानार्थविनियोगा ॥ ४५ ॥

---

उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्य१ ग्नाय्यश्विनी राट् । आ
रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम् ( ऋ०
सं० ५ । ४ । ८ ) ॥ अपि च ग्ना व्यन्तु देवपत्न्य इन्द्राणी-
न्द्रस्य पत्न्यग्नाय्यग्नेः पत्न्यश्विन्यश्विनोः पत्नी राड्राजते रोदसी
रुद्रस्य पत्नी वरुणानी च वरुणस्य पत्नी व्यन्तु देव्यः कामयन्तां
य ऋतुः कालो जायानां य ऋतुः कालो जायानाम् ॥ ४६ ॥

---

उत ग्ना व्यन्तु देवपत्नीरिति । पुरुषैः पीतमग्न्यादिभिः अपि ग्नाः स्त्रियो
ता एव व्यन्तु पिबन्तु एतदाज्यम् । कतमाः । इन्द्राण्य-
ग्नाय्यश्विनी राट् । आशृणोतु च रोदसी ।
आभिमुख्येन च स्थित्वा शृणोतु रोदसी रुद्रस्य पत्नी । अथर्वणे रोदसी-
त्यप्रगृह्यं पदम् । तदपेक्ष्यैकवचनेन भाष्यकारो निराह ' रोदसी रुद्रस्य
पत्नी वरुणानी च वरुणस्य पत्नी ' । सर्वा अप्येता व्यन्तु पिबन्तु

---

१ क. ख. घ. ट. ड. वाजसंजननायाजसंभ°; च. वाज ~ संभ° संजननायाज.
२ क ख. ११ ( ४५ ); ठ. ङ. °योगा । इति निरुक्तभाष्ये ६ ध्याये ४५
खण्ड; ग. च. वर्जमितरेष्वङ्को नास्ति. ३ क. ख. १२ ( ४६ ); ग. ठ. १२;
ठ. ४६ । देवपत्न्यो देवपत्न्य इत्येकत्रिंशत्पदव्याख्या समाप्ता; ड. ४६ । इति
नैरुक्तोत्तरषट्के षष्ठोध्यायः । देवपत्न्यो देवपत्न्य इत्येकत्रिंशत्पदव्याख्या समाप्ता.
४ ग. °रिति । पु°. ५ क. ख. घ. ट. ठ. ड. °सी वरुणानी च आ°; च. °सी
आ° वरुणानी च. ६ क. ख. घ. ट. ड. आथ°; च. अथ° आ ७ क. ख. घ.
ट. पत्नीति; च पत्नी° त्नीति; ट. °पत्नी ; सर्वा अप्येता°.

एतदाउग्रज्यम् । य ऋतुर्जनीना ये भोजनकालो जायाना तस्मिन् काले दधिमानम् । कश्चासौ । भुक्तवत्सु पुरुषेष्विति ॥ ४६ ॥

---

सप्तदशाध्यायस्य[3] चतुर्थः[4] पादः[2] ।

जम्बूमार्गाश्रमनिवासिनो भगवद्दुर्गाचार्यस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ[6]

सप्तदशोऽध्यायः समाप्तः[7] ।

(*अथातोद्युस्थानावसोति+घुस्मेहेहजातामानंद्युजाभातर्थजध्वसुषस्तविभ्रमेताउत्थाःसुर्किंशुकंत्वपोकपादयपांगूहंस्त्वष्टादुहित्रेविताविश्वारूपाणिप्रतिाजितमुदुत्यंचित्रंशक्रंतेपर्थस्पथइदंविष्णुर्विश्वानरोव्याख्यातोविश्वानरस्ययेनापावकेतिचतुष्कंकेश्य१मित्रंयःकाशिनःपुनरहियस्मिन्नृक्षेपावीरवीयदिन्द्राग्नीपवित्रवन्तउतनाहियाअथर्वाथातोद्युस्थानादेवगणाइमागिरःसप्तऋषयस्तिर्यग्बिलोदेवानामद्रौमांसोयज्ञन×सुगीवोदेवाजमयाअत्रशंनोभवन्तुदेवानांपत्नीरुतग्नायन्तु षट्चत्वारिंशत् ॥ )

इति निरुक्ते उत्तरषट्के षष्ठोऽध्यायः[8] समाप्तः[10] ॥

---

* छ. त. द. इयं खण्डशृङ्खला नास्ति. + 'तिषुस्मचरथो स्मेहे'. × ठ. ड. यज्ञेन यज्ञं सुगा°.

---

१ क. ख. १२ (४६); ग. च. वर्जमितरेष्वङ्को नास्ति. २ ग. ठ. ड. इति सप्त°, ज. सप्तदशस्याध्या°. ३ क. ख. घ. ठ. तुरीयः. ४ च. पादः समाप्तः; ठ. ड. पादः समाप्तः । इति ४६ खण्डः. ५ क. ख. घ. ट. °श्रमवासि°. ६ ड. °वृत्तौ निघण्टपञ्चाध्यायेन सह सप्त°. ७ ड. °मासः । समाप्ता नैघण्टुकपदव्याख्या. ८ छ. ध. नैरुक्ते. ९ छ. द्वादशोऽध्यायः, त. द. द्वादशमोऽध्यायः. १० थ. ध. 'समाप्तः' नास्ति.

# अथ परिशिष्टम् ।

## अथ त्रयोदशाध्यायस्य प्रथमः पादः ।

ॐ अथेमा अतिस्तुतय इत्याचक्षतेऽपि वा संप्रत्यय एव स्यान्माहाभाग्याद्देवताया: सोऽग्निमेव प्रथममाह त्वमग्ने द्युभिस्त्वमाशुशुक्षणिरिति यथैतस्मिन्त्सूक्ते न हि त्वदारे निमिषश्चनेश इति वरुणस्याथैषेन्द्रस्य ॥ १ ॥

---

इमा वक्ष्यमाणा अतिस्तुतयः

'अथेमा अतिस्तुतय इत्याचक्षते' इत्येवमादि वक्तुं प्रकृतशेषमनुवर्ण्यते । किं चात्र प्रकृतम् । स्तुतिलक्षया देवतेति । 'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन्स्तुतिं प्रयुङ्क्ते' ( निरु० ७ । १ ) इत्यत्र ताः स्तुतयः कर्माधिकारनिरताः । स्वकर्माधिकारातिक्रमेण स्वगुणातिशयेन च यास्ता उपप्रदर्श्याः । तत्र विशेषतः पुनरधिकारवचनम् 'अथ' इति । 'इमाः' या वक्ष्यमाणास्ताः । 'अतिस्तुतय इत्याचक्षते' । अन्येऽप्याचार्या एवमेवैता आचक्षते कथयन्ति शिष्येभ्योऽतिस्तुतय एता इति । प्रसिद्धा ह्ययमेतासु संज्ञेत्यभिप्रायः । अथवा । नैवैतद-

अथवा नैतदतिस्तवनम् । किंतु देवतानां माहाभाग्यमेव

तिस्तवनम् । किं तर्हि । 'संप्रत्यय एव स्यात्' । देवतासमानमेव । किं कारणम् । न ह्यतिशयो नाम देवतायाः स्तुतेरस्ति । कस्मात् । 'माहाभाग्याद्देवतायाः' । न विभूतेरियत्तास्ति यामतिरिच्य स्तूयेत । तदुक्तम् 'नद्योपमः' इति ( निरु० ६ । २३ ) । तथा च 'नार्वाग्निन्द्रं प्रतिमानानि देभुः' ( निरु० ५ । १२ ) इति ।

---

१ ङ. ढ. हरि. ओम्; ध. हरिः ओम्; छ. हरिः उँ; ढ. उँ; ठ. 'ॐ' नास्ति. २ घ. ट. श्री । अथे; च. उँ अथे. ३ घ. °नुवर्ण्यते; च. वर्ण्यते° र्त; ट. °नुवर्ण्यते° र्त; ठ. ढ. °वर्तते. ४ ठ. ढ. °मिच्छंस्तु°. ५ घ. ठ. ढ. °नियताः; ट. नियताः° र, ६ क. ख. च. स्तुतिर°. ७ ठ. ट. सर्वा-
क्रीयते दुर्गवृत्तिसायणभाष्ययोश्च मिश्रणं क्रियते.

नैरुक्तसमयानुवृत्तयेऽतिस्तुतयः प्रदर्श्यन्ते । 'सः' इति स्तोता असावाचार्यः 'अग्निमेव' अधिकृत्य 'प्रथममाह'। किं कारणम् । यथैव हि क्रमेण स्तुतय उपप्रदर्शितास्तथैवात्र क्रमेणातिस्तुतयोऽप्यस्याः प्रदर्शयितुम् । न ह्यत्र कारणे मुख्यातिक्रमो भवत्विति । कः । यथा

अग्नेः अतिस्तुतिः 'त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः' इति । (ऋ० सं० २ । १ । १ ॥ निरु० ६ । १) ।

यथैतस्मिन् सूक्ते स्वकर्माधिकारव्यतिरेकेणातिशयेन वा स्तुतिः ।

मध्यस्थाने 'नहि त्वदारे निमिषश्च नेश इति वरुणस्य'। 'अपो

वरुणस्य सु म्यक्ष वरुण भियसं मत्सम्राळृतावोऽनु मा गृभाय । दामेव वत्साद्वि मुमुग्ध्यंहो । नहि त्वदारे निमिषश्चनेशे' ( ऋ० सं० २ । २८ । ६ )॥ हे भगवन् वरुण सम्राट् ऋतवन् यदेतत् अपः कर्म किंचित् भियसं भयंकरम् अस्मासु अंहः पापं यदात्मनः कायकृतं तदस्मत्तो दाम्नेव वत्सात् विमुमुग्धि त्वं प्रमुञ्च । ततश्च तत्प्रमुच्य सु म्यक्ष सुष्ठु गमय । नाशयेत्यर्थः । कस्मात् पुनरेवं ब्रूमहे । इतो यस्मात् न हि त्वदारे निमिषश्चनेशे । त्वदन्तिकेऽपि वर्तमानस्य दूरेऽपि च यः कश्चित्तस्यापि त्वदन्यो नेशे । त्वमेव दूरे चान्तिके चेशिषे इत्यभिप्रायः ।

'अथैपेन्द्रस्य'[2] ॥ १ ॥

---

यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः । न त्वा वज्रि[3]न्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी (ऋ० सं० ८।७०।५)॥ यदि त इन्द्र शतं दिवः शतं भूमयः प्रतिमानानि स्युर्न त्वा [3]वज्रिन्त्सहस्रमपि सूर्या न द्यावापृथिव्यावप्यभ्यश्नुवीतामित्यर्थैषादित्यस्य ॥ २ ॥

---

१ थ. च. ट. वरुणेति । हे भ°. २ ठ. °द्रस्य । इति निरुक्तभा० उ० ष० निघण्टपञ्चाध्या० सह अष्टाद० ध्या० प्र० पा०; ड. °द्रस्य । इति निरुक्तटीकायामुत्तरषट्के निघण्टपञ्चाध्यायेन सह अष्टादशाध्याये प्रथमः खण्डः, क. ख. ग. घर्जमितरेष्वङ्को नास्ति. ३ छ. त. वज्रिन्त°.

यद् द्याव इन्द्र ते शतमिति । पुरुहन्मन आर्षम् । बृहती । वैरूपे स्तोत्रियानुरूपे ( आश्व० श्रौ० ७ । १० ) ।

इन्द्रस्य

हे भगवन् इन्द्र यदि तव शतं दिवः शतं च भूमयः सहस्रं च सूर्याः रोदसी अपि च समस्ते प्रतिमानानि उपमानानि भवेयुः कथंचित् तथापि त्वां जातमात्रमपि सर्वाण्यपि तानि नाष्ट नैवाभ्यश्नुवीरन् । किं तर्हि । त्वमेवैतानि सर्वाणि अभ्यश्नुवीथाः । अतिरिच्य वर्तेथा इत्यर्थः ।

'अथैषादित्यस्य' ॥ २ ॥

---

यदुदञ्चो वृषाकपे गृहमिन्द्राजगन्तन । क स्य पुल्वघो मृगः कमगञ्जनयोपनो विश्वस्मादिन्द्र उत्तरः ( ऋ० सं० १० । ८६ । २२ ) ॥ यदुदञ्चो वृषाकपे गृहमिन्द्राजगमत क स्य पुल्वघो मृगः क स बह्वादी मृगो मृगो मार्ष्टेर्गतिकर्मणः कमगमद्देशं जनयोपनः सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यमथैषादित्यरश्मीनाम् ॥ ३ ॥

---

यदुदञ्चो वृषाकप इति । पङ्क्तिः । इन्द्राण्या आर्षम् । पृष्ठ्यस्य षष्ठेऽहनि विनियोगः ( आश्व० श्रौ० ८ । ३ ) ।

आदित्यस्य

हे भगवन् वृषाकपे इन्द्र यदा त्वम् उदञ्चः उदङ् एव वर्तमानः प्रदक्षिणं भुवनानि परिगच्छन् गृहम् अजगन्तन । गृहानुप्रवेशे हि व्यवधीयते । व्यवधीयते च भगवानस्तं गच्छन्नादित्य इत्येतस्मात्सामान्यादुच्यते गृहमिन्द्राजगन्तन इति । तदा त्वयि गृहमुपगते अदृश्ये निरालोको लोकः सहसैव विस्मितो ब्रवीति । क स्य पुल्वघो मृगः । स्यः सः । पुरुशब्दात्पूर्वपदं घसेरुत्तरपदम् । क स बह्वादी मृगः । बहुसा-घत्ति सर्वप्राणिष्ववस्थितः । तदुक्तम् । 'सूर्य आत्मा जगतस्तस्थुषश्च' ( ऋ० सं० १ । ११५ । १ ) इति । 'मृगो मार्ष्टेः गत्यर्थस्य । न ह्यसाववतिष्ठते । मार्ष्टयेव हि मृगः । कं देशमगमत् गतवान् । येनास्मा-

---

१ ठ. ड. पह्या इति । पुरु°. २ घ. ट. ठ. ड. 'उपमानानि' नास्ति. ३ ठ. ड °त्यस्य । इति नैरुक्तभाष्ये उत्तरषट्के ७ ध्याये २ खण्डः; क. ख. ग. घ. पर्जमितोऽरूक्ष्ञो नास्ति. ४ ठ. ड. 'दञ्च इति । पङ्क्तिः.

कस्मादिय: स देवो जनयोपनः जनमोहनो बभूव । उदयास्तमयपर्यागमना-दादित्यस्य जना मुह्यन्ते तत्त्वापरिज्ञानात् । विश्वस्मात्सर्वस्मात् जगतः यस्त्वम् इन्द्र उत्तरः तमेतं त्वाम् आदित्यम् एवं ब्रूमो यदुदक्ष्णो वृषाकप इति ।

५ 'अथैषादित्यरश्मीनाम्' अतिस्तुतिः ॥ ३ ॥

---

वि हि सोतोरसृक्षत नेन्द्रं देवममंसत । यत्रामदद्वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः ( ऋ० सं० १० । ८६ । १ ) ॥ व्यसृक्षत हि प्रसवाय न चेन्द्रं देवममदवृसत यत्रामाद्यद्वृ-

१० षाकपिरर्य ईश्वरः पुष्टेषु पोषेषु मत्सखा मम सखा मदनसखा ये नः सखायस्तैः सहेति वा सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदि-त्यमथैषाश्विनोः ॥ ४ ॥

---

वि हि सोतोरसृक्षतेति । पूर्वयैव समानार्थविनियोगच्छन्दस्का ।

१५ आदित्यरश्मीनाम् । व्यसृक्षत व्यसृजत यदादित्यो रश्मीनहन्यहनि सोतोः सर्वभूतप्रसवाय अभ्यनुज्ञानाय तत्प्रका-शितलोकस्य सर्वकर्मोपपत्तेः । तदा किमिति । तदा ते रश्मयः सर्व-कर्मण्यनुगमनात् नेन्द्रं देवममंसत । तमेवेन्द्रमादित्यं येन विसृष्टास्तमे-तमात्मनो दीपयितारं न मन्यन्ते । स्वमहिम्नैव वयं दीप्यामह इति मन्यन्ते ।

२० कदा । यदा रश्मिपोषं पुष्यति पुष्टेषु एकीभूतेषु मध्यंदिने मत्सखा मम सखा इति मन्त्रदृगाह । अथवा । सर्व एव मन्यन्ते ममायं सखा ममायं सखेति । अथवा । मदनसखा । हर्षसखेत्यर्थः । अथवा । ये नः सखायो रश्मयस्तैः सहेति । विश्वस्मादित्युक्तार्थः । 'अथैषा वाचः प्रव-ल्हितेव' ॥ ४ ॥

---

१ ठ. ड. °स्तुतिः । इति निरुक्तभाष्ये ७. ध्याये ३ खण्डः; क. ख. म. च. ञ्रर्ज्ञमिनेत्यङ्के नास्ति. २ घ. ट. ठ. ड. यदा अमदद् वृषाकपिः अर्यः स्वामी

२८ रश्मिः°. ३ भ. ट. ठ. ड. मन्यते, च. मन्यन्ते° ते.

सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका । उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु ( ऋ० सं० १० । १०६ । ६ ) ॥ सृण्येवेति द्विविधा सृणिर्भवति भर्ता च हन्ता च तथाश्विनौ चापि भर्तारौ जर्भरी भर्तारावित्यर्थस्तुर्फरीतू हन्तारौ । नैतोशेव तुर्फरी पर्फरीका । नितोशस्यापत्यं नैतोशं नैतोशेव तुर्फरी क्षिप्रहन्तारौ । उदन्यजेव जेमना मदेरू । उदन्यजेवेत्युदकजे इव रत्ने सामुद्रे चान्द्रमसे वा जेमने जयमने जेमना मदेरू । ता मे जराय्वजरं मरायु । एतज्जरायुजं शरीरं शरदमजीर्णमथैषा सोमस्य ॥ ५ ॥

---

तरत्स मन्दी धावति धारा सुतस्यान्धसः । तरत्स मन्दी धावति ( ऋ० सं० ९ । ५८ । १ ) ॥ तरति स पापं सर्वं मन्दी यः स्तौति धावति गच्छत्यूर्ध्वां गतिम् । धारा सुतस्यान्धसः । धारयाभिषुतस्यान्धसः । धारयाभिषुतस्य सोमस्य मन्त्रपूतस्य वाचा स्तुतस्याथैषा यज्ञस्य ॥ ६ ॥

---

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश ( ऋ० सं० ४ । ५८ । ३ ) ॥ चत्वारि शृङ्गेति वेदा वा एत उक्तास्त्रयोऽस्य पादा इति सवनानि त्रीणि द्वे शीर्षे प्रायणीयोदयनीये सप्त हस्तासः सप्त छन्दांसि त्रिधा बद्धस्त्रेधा बद्धो मन्त्रब्राह्मणकल्पैर्वृषभो रोरवीति रोरवणमस्य सवनक्रमेण ऋग्भिर्यजुर्भिः सामभिर्यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्ति महो देव इत्येष हि महान्देवो यद्यज्ञो मर्त्याँ आ विवेशेत्येष हि मनुष्यानाविशति यजनाय तस्योत्तरा भूयसे निर्वचनाय ॥ ७ ॥

---

स्वर्यन्तो नापेक्षन्त आ द्यां रोहन्ति रोदसी । यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिरे ॥ स्वर्गच्छन्त ईजाना वा नेक्षन्ते तेऽमु-

---

१ ठ. ढ. पञ्चमषष्ठसप्तमाष्टमखण्डा न वर्तन्ते. २ क. ख. छ. त. °मसीति वा. ३ क. ख. छ त. द. त्रयो अस्य.

मेव लोकं गतवन्तं ईक्षन्त इति । आ द्यां रोहन्ति रोदसी । यज्ञं ये विश्वतोधारं सर्वतोधारं सुविद्वांसो वितेनिर इत्यर्थैषा वाचः प्रवह्लितेव[2] ॥ ८ ॥

---

५ चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ( ऋ० सं० १ । १६४ । ४५ ) ॥ चत्वारि वाचः परिमितानि पदानि तानि विदुर्ब्राह्मणा ये मेधाविनो गुहायां त्रीणि निहितानि नार्थं वेदयन्ते गुहा गूहतेस्तुरीयं त्वरतेः कतमानि

१० तानि चत्वारि पादान्योंकारो महाव्याहृतयश्चेत्यार्षं नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणा मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति याज्ञिका ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः सर्पाणां वाग्वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकीत्येके पशुषु तूणवेषु[3] मृगेष्वा-

१५ त्मनि चेत्यात्मप्रवादा अथापि ब्राह्मणं भवति ' सा वै वाक्सृष्टा चतुर्धा व्यभवदेष्वेव लोकेषु त्रीणि पशुषु तुरीयं या पृथिव्यां साग्नौ सा रथन्तरे यान्तरिक्षे सा वायौ सा वामदेव्ये या दिवि सादित्ये सा बृहति सा स्तनयित्नावथ पशुषु ततो या वागत्य-रिच्यत तां ब्राह्मणे न्यदधुस्तस्माद्ब्राह्मणा उभयीं वाचं वदन्ति

२० या च देवानां या च मनुष्याणाम् ' ( मैत्रा० सं० १ । ११ । ५ ) इत्यर्थैषाक्षरस्य ॥ ९ ॥

---

चत्वारि वाक्परिमिता पदानीति । दीर्घतमस आर्षम् । वाग्देवते पशौ विनियोगः ( आश्व० श्रौ० ३।८ ) । प्रवह्लि-तेत्यनभिव्यक्तिविशिष्टो वाक्यार्थः । चत्वारि वाचः वाचः परिमितानि पदानि । न पञ्चमं पदमस्ति । तानि पुनः ब्राह्मणा विदुः ।

---

१ क. ख. ङ. थ. ध. °वन्तमीक्षन्तमिति; छ. त. °वन्त इच्छन्त इति.
२ क. ख. छ. त. द. ङ. थ. °वह्लिते°. ३ छ. त. तूणवे मृ°. ४ क. ख. ङ.
 थ. ध. ठ. ङ. °ब्राह्मणेष्वव°.

किं सर्वे । न । ये मनीषिणः ये मेधाविनः । तेषां च पुनः पदानां गुहायां त्रीणि निहितानि नेङ्गयन्ति नार्थं वेदयन्ते न प्रख्यापयन्ति । तुरीयं चतुर्थं भागम् एकं पदं मनुष्याः परिज्ञानार्थं वदन्ति । तुरीयं त्वरतेः । तद्धि त्वरितमिव निर्गतं भवति त्रिभ्यः ।

'कतमानि तानि चत्वारि पदानि' इति विचारार्थः प्रश्नः । तत्र तावत् 'नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः' मन्यन्ते । तत्राप्रसिद्धार्थत्वादाख्यातोपसर्गनिपातपदान्यर्थं न वेदयन्ते । नामानि तु प्रसिद्धतरार्थत्वाद्गवाश्वादीन्वेदयन्त्यर्थान् । एवम् । 'मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति याज्ञिकाः' । अत्रापि व्यावहारिक्येव तु वेदयत्यर्थम् । 'ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः' । अत्रापि व्यावहारिक्येव वेदयते । 'सर्पाणां वाग्वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकीत्येके' । सर्पादीनामित्यभिभूतविदः । अत्रापि व्यावहारिक्येव वेदयते नेतराः । 'पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादाः' । आत्मानं ये प्रवदन्त्याचार्यास्ते आत्मप्रवादाः । 'ब्राह्मणम् अपि च भवति' एतस्मिन्नर्थे 'सा वै वाक्सृष्टा चतुर्धा व्यभवत्' इत्येवमादि । तदेतदभिव्यक्तार्थमेव । 'ततो या वागत्यरिच्यत तां ब्राह्मणे न्यदधुः' निहितवन्तः । 'तस्माद्ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणाम्' । लौकिकी वैदिकी चेत्यर्थः ।

(कतमानि चत्वारि पदानि) (नामादीनीति वैयाकरणाः) (मन्त्रादीनीति याज्ञिकाः) (ऋगादीनीति नैरुक्ताः) (सर्पादीनां वाक् इत्येके) (पश्वादीनामित्यात्मप्रवादाः) (ब्राह्मणमते चत्वारि पदानि)

'अथ' पुनः 'एषाक्षरस्य' अतिस्तुतिः प्रवह्लितेव ॥ ९[3] ॥

---

**ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः ।**

---

१ च. °श्वान्वे°. २ क. ख. तूणवे, ठ. ड. °पशुषु । गवादयः । तूणवेषु । वीणाजातिषु वाद्येष्वित्यर्थः । आत्मान° ( ट. पुस्तकप्रान्ते लिखितं विवरणमेतत् ).
३ ठ. ड. ५ । इति नैरुक्तभाष्ये ७ ध्याये ५ खण्डः; क. ख. वर्जमितरेष्वङ्को नास्ति.

यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ( ऋ० सं० १ । १६४ । ३९ ) ॥ ऋचो अक्षरे परमे व्यवने यस्मिन्देवा अधिनिषणाः सर्वे यस्तन्न वेद किं स ऋचा करिष्यति य इत्तद्विदुस्त इमे समासत इति विदुष उपदिशति कतमत्तदेतदक्षरमो३मित्येषा वागिति शाकपूणिर्ऋचश्च ह्यक्षरे परमे व्यवने धीयन्ते नानादेवतेषु च मन्त्रेष्वेतद्ध वा एतदक्षरं यत्सर्वां त्रयीं विद्यां प्रति प्रतीति च ब्राह्मणम् ( कौषी० ब्रा० ६ । १२ ) ॥ १० ॥

---

ऋचो अक्षरे परम इति । दीर्घतमस आर्षम् । अस्या निर्वचनत्रयमधियज्ञाधिदैवाध्यात्मविकल्पेन ओंकार आदित्य आत्मा चेति । तत्र तावच्छाकपूणिपक्षमाश्रित्याधियज्ञगतमुच्यते ।

अक्षरस्य

'कतमत्तदेतदक्षरमो३मित्येषा वागिति' शाकपूणेरभिप्रायः । ओंकारमृते न ह्यर्चयन्ति । तस्या अक्षरं परमं व्योम । विविधमस्मिन् शब्दजातमोतमिति व्योम । तस्मिन् तिसृषु मात्रासु अकारोकारमकारलक्षणासूपशान्तासु यदवशिष्यते तदक्षरं परमं व्योम । अपरमाकाशमपेक्ष्य तत्पर व्योम । शब्दसामान्यमभिव्यक्तमित्यभिप्रायः । यस्मिन् देवा अधिनिषणाः सर्वे । ऋगादिषु ये देवास्ते मन्त्रद्वारेणाक्षरे निषण्णास्तस्य शब्दकारणत्वात् । तद्यथा । प्रथमायां मात्रायां पृथिवी अग्निः ऋग्वेदः पृथिवीलोकनिवासिन इत्येव । द्वितीयस्यां मात्रायामन्तरिक्षं वायुर्यजूंषि तल्लोकनिवासिनो जना इति । तृतीयायां मात्रायां द्यौरादित्यः सामानि तल्लोकनिवासिनो जना इति । विज्ञायते हि 'ओंकार एवेदं सर्वम्' इति । यस्तन्न वेद अनया विभूत्याक्षरं किमसौ ऋगादिभिर्मन्त्रैः करिष्यति यस्तान्यक्षरात्मना न पश्यति । य इत्तद्विदुस्त इमे समासत इति विदुष उपदिशति । ते हि तत्परिज्ञानात्तद्ब्रह्मसमुपगताः

अक्षरम् । ओं इति शाकपूणिः

---

१ ठ ह. अक्षर इति । दीर्घ०. २ च. तस्मि० ब, ट. यस्मि० त.

प्रणवविग्रहमात्मानमनुप्रविश्य सभीकृता निर्वान्ति शान्तार्चिष इवा-नलाः[1] इति ॥ १० ॥

---

**आदित्य इति पुत्रः शाकपूणेरेषर्ग्भवति यदेनमर्चन्ति प्रत्यृचः सर्वाणि भूतानि तस्य यदन्यन्मात्रेभ्यस्तदक्षरं भवति रश्मयोऽत्र देवा उच्यन्ते य एतस्मिन्नधिनिषण्णा इत्यधिदैवतमथाध्यात्मं शरीरमत्र ऋगुच्यते यदेनेनार्चन्ति प्रत्यृचः सर्वाणीन्द्रियाणि तस्य यदविनाशिधर्म तदक्षरं भवतीन्द्रियाण्यत्र देवा उच्यन्ते यान्यस्मिन्नात्मन्येकं भवन्तीत्यात्मप्रवादाः ॥ ११ ॥**

---

आदित्यः अक्षरमिति शाकपूणेः पुत्रः

‘ आदित्य इति पुत्रः शाकपूणेरेषर्ग्भवति ’ इति मण्डलमभिप्रेतम् । ‘ यदेनमर्चन्ति ’ इति । यस्मादेनमर्चन्ति तस्मात् ऋक् । तस्य यदन्यत् मण्डलगतेभ्योऽवयवेभ्यः तत्परमम् अक्षरं व्यवनं तत्र सर्वमोतमिति । रश्मयोऽत्र देवा उच्यन्ते य एतस्मिन्नधिनिषण्णा भवन्ति । यस्तन्मण्डलम् अक्षरात्मना न वेद किं स ऋचा आदित्येन मण्डलात्मना करिष्यति । नासौ यथावदादित्यं वेदेत्यर्थः । य इत्तद्विदुस्त इमे समासत इति व्याख्यातम् ।

आत्मेत्यात्मप्रवादाः

आत्मेत्यात्मप्रवादाः । अयमृग्भवति शरीरमिति । इन्द्रियाण्यत्र देवा उच्यन्ते । तानि हि विषयेषु द्योतन्त इति देवाः । तस्य यदविनाशिधर्मि चेतनासतत्त्वमात्रविज्ञानं तत्परममक्षरं व्यवनम् । यत्तदक्षरं न वेद किमसौ

---

१ ठ. ड. °नळाः. २ ठ ड इति । इति निरुक्तभाष्ये ७ ध्याये ६ खण्डः; क. ख. वर्जमितरेष्वङ्को नास्ति. ३ क. ख. ङ. थ. ध. ठ. ड. °न्यन्मन्त्रेभ्य°. ४ त. प्रत्यृचं. ५ क. ख. छ. त. °स्मिन्नधिनिषण्णानीत्यात्म°. ६ क. ख. घ. ट. ठ. ड.° ‘इति’ नास्ति. ७ क ख. ठ. ड. °मिति । य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत इति श्रुतिः । रश्म° (ट. पुस्तके ‘यः- श्रुतिः’ इदं प्रान्ते विवरणमिति लिखितम्). ८ ठ. ड. °त्यर्थः । भूम्यां रोगरहिताः सुखेन जीवन्ति । य° (ट. पुस्तके ‘भूम्यां॰ जीवन्ति’ इति । प्रान्ते विवरणमिति लिखितम्).

ऋचा शरीरेण करिष्यति। न तस्य जीवितेनार्थः। य इत्तद्विदुरिति व्याख्यातम् ॥ ११ ॥

---

अक्षरं न क्षरति न क्षीयते वाक्षयं भवति वाचोऽक्ष इति वाऽक्षो यानस्याञ्जनात्तत्प्रकृतीतरद्वर्तनसामान्यादित्ययं मन्त्रार्थचिन्ताभ्यूहोऽभ्यूढोऽपि श्रुतितोऽपि तर्कतो न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः प्रकरणश एव तु निर्वक्तव्या न ह्येषु प्रत्यक्षमस्त्यनृषेरतपसो वा पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवतीत्युक्तं पुरस्तान्मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन्को न ऋषिर्भविष्यतीति तेभ्य एतं तर्कमृषिं प्रायच्छन्मन्त्रार्थचिन्ताभ्यूहमभ्यूढं तस्माद्यदेव किंचानूचानोऽभ्यूहत्यार्षं तद्भवति ॥ १२ ॥

---

अक्षरं कस्मात्। तद्धि 'न क्षरति'। नान्यथाभावमापद्यते। अथवा।

**अक्षरं कस्मात्** 'न क्षीयते'। न कदाचिदप्यामूलतो विनश्यति। अथवा। 'वाक्क्षयो भवति'। नादो हि वर्णलक्षणाया वाचो निवासः। 'वाचोऽक्ष इति वा'। अक्षरो ह्यक्ष इवानुप्रविश्य व्यञ्जनानि धारयति। अथ 'अक्षः' कस्मात्। उच्यते।

**अक्षः कस्मात्** यानाक्षस्तावत् 'समञ्जनात्'। नित्यमसौ म्रक्ष्यते तैलादिना। 'तत्प्रकृतीतरत्' स्वराख्यमक्षरं 'वर्तनसामान्यात्'। स्वरमविरुद्धानि व्यञ्जनानि वर्तन्ते।

'इति'। परिसमाप्त्यर्थ इतिकरणः। उपप्रदर्शनार्थो वान्तस्य।

---

१ ठ. ह. °ख्यातम् । इति निरुक्तभाष्ये ७ ध्याये ७ पादः, क ख. वर्जमितरेष्वङ्को नास्ति. २ ह. थ. ध. ठ. ह. वाक्क्षयोऽभव°. ३ छ. त. वक्षोपादानस्या°. ४ क. ख. छ. त. °भ्यूह्होऽपि ५ क. ख. छ. त. °भ्यूह्ह ६ क. ख. °देव. ७ ठ. ड. अक्षर न क्षरतीति। अक्षर°. ८ च. °ह्यति वाक्° अथवा नास्ति. ९ ख. मा वाचो°. १० ध. ट. ठ ड ह्यक्ष. ११ ध. ट. ठ. ह. वर्तमान°; च. वर्तन्ते मा.

एवमत्रे ' मन्त्रार्थचिन्ताभ्यूहोऽभ्यूढः ' । मन्त्रार्थचिन्तानामभ्यूहो मन्त्रार्थचिन्ताभ्यूहः वितर्कितः शक्यत एतावता मन्त्रार्थोऽभ्यूहितुमिति ।

श्रुतिसाहाय्येन तर्कसाहाय्येन च निरुक्तशास्त्रमिदं समाप्तम्

पुनरयम् ' अपि श्रुतितोऽपि तर्कतः ' । श्रुतिभ्यो ब्राह्मणेभ्यो निगमशेषेभ्यश्चोन्नीतार्थाभिधानसामर्थ्येभ्यो वाक्यार्थसामर्थ्यात् । तस्योपरि पर्यायास्तर्कोऽभ्यूहो लक्षणन्याय इति । ' यद्यप्ययमभ्यूहस्तथापि न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः ' । कुतः पृथक्त्वेन । प्रकरणात् । किं तर्हि । ' प्रकरणश एव तु निर्वक्तव्याः ' । तान्येतानि प्रकरणानि मन्त्राणां याज्ञं दैवतमध्यात्ममितिहासानुप्रवेश इति । किं

मन्त्राः प्रकरणशो निर्वक्तव्याः

कारणम् । ' न ह्येषु ' मन्त्रेषु ' प्रत्यक्षम् ' अर्थदर्शनम् ' अस्ति ' । किं नास्त्येव । न नास्ति । किं तर्हि । ' अनृषेरतपसो वा ' इति । तस्येदानीमपि स्याद्य ऋषिस्तपस्वी च । निर्दग्धकल्मषयोस्तयोः प्रतिबन्धकाभावाद्यथावदर्थं मन्त्राणां पश्यतः । येऽन्ये पुनरौपदेशिकास्तानाधिकृत्योच्यते । ' पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवतीत्युक्तं पुरस्तात् ' इति ( निरु० १ । १६ ) । य एतेषु उपदेशतः पारोवर्येण परोवरभावेन मन्त्रार्थान् प्रतिपद्यन्ते ते पारोवर्यविदः । तेषु यः कश्चिद्भूयोविद्यो बहुश्रुतो भवति स एव मन्त्रार्थपरिज्ञाने प्रशस्यो भवति । मन्त्रार्थ एव ह्ययं सर्वविद्यावस्थानभावेन विष्वग्भूतो लोकव्यवहारभावेन च विप्रकीर्णो विजृम्भत इति तमबहुश्रुतो नालमुत्प्रेक्षितुमिति युक्तं यत्तत्परिज्ञानयोगे भूयोविद्यः प्रशस्यत इति । पुरस्तादपि चैतदुक्तम् । इह तु प्रसङ्गादुच्यते । अतः परमागमविशुद्धये प्रस्तौति । ' मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् ' इति । पूर्वमपि हि ' साक्षात्कृतधर्माण ऋषयो बभूवुः ' ( निरु० १ । २० ) । इत्युक्तम् । इह तु मन्त्रार्थाभ्युपपदर्श

यस्मान्मन्त्रेषु प्रत्यक्षं ज्ञानमाधुनिकाना नास्ति

श्रुतिनिर्वचनाय श्रुतिज्ञानरूप बहुविद्यत्वमावश्यकम्

---

१ क. ख. एवमर्थं; घ. 'मर्थम° ञ. २ घ. ठ. ड तर्कितः; च. तर्कतः° किं; ट. तर्कितः° कं.३ घ. ठ ड. तस्यापरपर्या°; च. तस्योपरिप° स्यापर°; ट. तस्यापरपर्यो° स्योपरि. ४ च. °क्षमत्रैव° र्थं. ५ घ. °भ्ये पर्यपादेयिका' पुनरौपदेशि. ६ घ. 'भूयो बहु'. ७ च. एवमिह° इ°

नार्थमिति विशिष्यते । ' मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्यतीति ' । एवमादिपुराकल्परूपोऽर्थवादः शास्त्रावतारस्तुतये । तेभ्यः ' एतं मन्त्रार्थचिन्ताभ्यूहमभ्यूळ्हं प्रायच्छन् ' ते देवा एतं समस्तार्थमूहमपि भवन्तोऽनेन मन्त्रार्थान् शक्यन्तेऽभ्यूहितुमिति । यस्मादेतदेवं तस्मात् अस्मिन् सूक्ते निरुक्तशास्त्रे यः ' अनूचानः ' विद्वान् यदेव किंचिन्मन्त्रार्थेषु ' अभ्यूहत्यार्षं तद्भवति ' । तथैव तदृषयोऽभ्यूहितवन्त इत्यभिप्रायः । न तत्स्वमनीषिकयोच्यते । मन्त्रार्थोऽप्येतस्मिन् विषये बृहस्पतिना दृष्टो ब्रह्म वा स्वयं प्राह । तद्यथा ॥ १२ ॥

अभ्यूहश्चावश्यकः

---

हृदा तष्टेषु मनसो जवेषु यद्ब्राह्मणाः संयजन्ते सखायः । अत्राह त्वं विजहुर्वेद्याभिरोहब्रह्माणो वि चरन्त्यु त्वे ( ऋ० सं० १० । ७१ । ८ )॥ हृदा तष्टेषु मनसां प्रजवेषु यद्ब्राह्मणाः संयजन्ते समानख्याना ऋत्विजोऽत्राह त्वं विजहुर्वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिरोहब्रह्माण ऊहब्रह्माण ऊह एषां ब्रह्मेति वा सेयं विद्या श्रुतिमतिबुद्धिस्तस्यास्तपसा पारमीप्सितव्यं तदिदमायुरिच्छता न निर्वक्तव्यं तस्माच्छन्दःसु शेषा उपेक्षितव्या अथागमो यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति॥१३॥

---

हृदा तष्टेषु हृदयेन बुद्ध्या तष्टेषु सूक्ष्मतामापादितेषु अचिन्त्याध्यात्मादिषु विद्वद्भिः मनसो जवेषु मनसां येषु प्रजवाः प्रगमाः । न साक्षात्ते । दृश्यन्ते तेष्वर्थेषु स्वर्गापूर्वदेवतादिषु ब्राह्मणाः अधिगतमन्त्रार्थतत्त्वा विचारयन्तः किमत्र तत्त्वं किं वा अतत्त्वमिति प्रवचनेन ततः संयजन्ते परस्परेण

अस्यामृचि अभ्यूहः प्रशस्यते

---

१ क. ख. घ. ट. ड. °भ्यूहमभ्यूहं प्रा°; च. °भ्यूळ्हमभ्यूहं प्रा°; ठ. °भ्यूहं प्रा°. २ ट. 'मूह' गू; ठ. ड. °स्तार्थगूह. ३ च. °र्थानिक्ष्यथो भ्यू° न् शक्ष्यंथा ( क्यन्ते ). ४ ठ. ड. 'प्राह । इति निरुक्तभाष्ये ७ ध्याये खण्डः । तद्यथा°; क. ख. वर्जमितरेष्वङ्को नास्ति. ५ छ. त. समानाख्याना. ६ ठ. ड. 'वति । इत्युत्तरषट्के निरुक्ते खण्डः । समाप्तातिस्तुतिरध्यायः. ७ घ. ट. सर्वा ऋक् पठ्यते; ठ. ड. तष्टेष्विति । हृद°. ८ क. ख. घ. ट. ठ. ड. ये प्र°; च. येषु. ९ घ. ट. संध्यज°.

संपूजयन्ति । कतमे ते इति । सखायः समानख्याना ऋत्विजः । ते हि प्रयोगेऽभियुक्तत्वादतितरां विद्वांसः । तेषु किमिति । अत्राह । तत्र तेषु अर्थेषु सूक्ष्मेषु विजहुः तत्यजुः त्वम् एकम् त्यक्तवन्तो मन्त्रार्थव्याख्याने । कम् । अविद्वांसम् । केन तत्यजुः । वेद्याभिः वेदितव्याभिः[1] प्रवृत्तिभिः । न हि तासां मनोवृत्तीनामन्तोऽस्ति यासु प्रतिभानवतामपि मनोवृत्तयो न प्रवर्तन्ते । अतस्ता वेदितव्या एव भवन्त्यविद्वद्भिः । ये पुनः ओहब्रह्माणः । इदं निरुक्तशास्त्रम् ऊहब्रह्म[2] येषामस्ति ते शब्दार्थन्यायसंकटेष्वप्रतिबध्य[3]माना अतिक्रम्य अविद्वांसं विशेषतः सर्वत्र[4] प्रतिपूज्यमानाः चरन्ति त्वे एक इत्यर्थः ।

एवमेतस्मिन्मन्त्रे अस्या उद्गाहितो[5]नेश्वानेदाद्वेद[6] इति मन्त्रार्थचिन्ताभ्यूहस्य ब्रह्मत्वं श्रूयते । तस्मादिदमपि निरुक्तशास्त्रं ब्रह्मैव । वेद इत्यर्थः ।

इदानीमुपसंहरति ' सेयं विद्या ' इति । श्रुतिमतीति[7] । आद्या इयमेवैका विद्या । बुद्धिं वर्धयति । ज्यायसी सर्वाभ्यो विद्याभ्यः । महानेष तर्कः । ' तस्यास्तपसा पारमीप्सितव्यम् ' । गन्तुमिति वाक्यशेषः । पदवाक्यप्रमाणविदा ब्राह्मणेन । यस्माद्वेदो विधिप्रतिषेधप्रसवनियमपरिसंख्यापुनर्वचनपरार्थवादगहनोऽर्थवादाश्च यथाश्रुतप्रमाणग्राहिणो विदुषोऽपि परमभ्रान्तिहेतवस्तस्मात्परमदुर्विज्ञानवेदनीयत्वाद्वेदवाक्यानामिमां विद्यामन्तरेण सम्यगर्थावगमो न भवति । अतोऽस्या अखिलपुरुषार्थोपकारप्रवृत्ताया अन्तरेण तपःपारगमनं नास्तीत्यत इदमुक्तमाचार्येण ' तस्या-

श्रुतिमति या बुद्धिः सोऽयम् अभ्यूहः

अयमभ्यूहः परां कोटिं नेतव्यः

१ घ. °द्याभिः प्रवृ°. २ च. ऊह; घ. ट. ठ. ड. ओह; ठ. ड. ओहनिश्चयो ओहमानं ब्रह्म विद्याश्रुतिमतिबुद्धिलक्षणं येषु ते तथोक्ता ऊह° (ओह० तथोक्ताः' इति च. ट. पुस्तकयोर्विवरणमिति प्रान्ते लिखितम्, ओहेति विनिश्चये इत्यादि ट. पुस्तके ). ३ क. ख. घ. ट. ठ. ड. °र्थसंक°. ४ क. ख. घ. ठ. सर्वत्रैव प्र°. ५ क. ख. °हितार्थाने°. ६ क. ख. °नेवोद्दिश्य मन्त्रा; च. ट. °दाद्वेद° दोद्देश; ठ. ड. °श्वानदोद्देशे इति°. ७ क. ख. श्रुतिमतीत्याद्यर्थमेवै°; घ. ट. ठ. ड. श्रुतिमतीत्याद्येय° च. श्रुतिमतीत्येयमेवै° त्याद्ये.

स्तपसा पारमीप्सितव्यम्' इति । अयमभ्युपायस्तस्याः पारगमने ।

किंतु आयुरिच्छता परा कोटिं नेतुं न शक्यते

'तदिदम्' अतपस्विना सर्वथाऽपि 'आयुरिच्छता' निरुक्तशास्त्रं 'न निर्वक्तव्यम्' । अतपस्वी ह्यागमवानपि मलिनान्तःकरणत्वान्न शक्नुयात् । ततोऽस्यायुश्छिद्येत । तपस्विनापि च निर्ब्रुवता 'तस्माच्छन्दःसु' शाखान्तरेषु निगमोदाहरणानामाकाङ्क्षितत्वनिराकाङ्क्षायै वाक्यशेषाः पादार्धर्चादिलक्षणा 'उपेक्षितव्याः'॥ १३ ॥

अनिरुक्ताःशेषाः छन्दसि वर्तेरन्नेव

---

इति श्रीमज्जम्बूमार्गाश्रमवासिनो[2] भगवद्दुर्गाचार्यस्य कृतावृज्वर्थायां निरुक्तवृत्तौ[3] त्रयोदशोऽध्यायः ॥

---

निरुक्तवृत्तिः समाप्ता ॥[4]

*( अथेमायदृष्टावोयदुंदश्चोविहिंसोतोःसूर्येवतरंत्सचत्वारिशृङ्गास्त्वयन्तश्चत्वारिवागृचोअक्षरआदित्र्यइत्यक्षरंनक्षरतिहृदातष्टेषु त्रयोदश ) ॥[5]

इति निरुक्ते उत्तरषट्के सप्तमोऽध्यायः ॥

---

* छ. न. ध. ठ. ड. इयं खण्डशृङ्खला नास्ति.

---

१ ठ. ड. °तव्याः । उपेत्योक्षितव्याः । इति श्री° ('उपेत्योक्षितव्याः' इति ट. पुस्तके प्रान्ते लिखितम्). २ ठ. ड. °श्रमनिवासि°. ३ ठ. ड. निरुक्तटीकाया नियण्टाध्यायपञ्चकेन सह नैरुक्तसप्तदशोऽध्यायः समाप्त; क. ख. वर्जमितरेष्वयं नास्ति. ४ समाप्ता निरुक्तवृत्तिः. ५ छ. प्रथमः पादः । व्याख्या°; त. त्रयोदशोऽध्याये प्रथमःपादः । व्याख्या°, थ. अथ परिशिष्टा । हरिः; ध. इति निरुक्ते त्रयोदशोऽध्यायः.

## अथ चतुर्दशोऽध्यायः ।

ॐ व्याख्यातं दैवतं यज्ञाङ्गं चाथात ऊर्ध्वमार्गगतिं व्याख्यास्यामः सूर्य आत्मेत्युदितस्य हि कर्मद्रष्टायैतदनुप्रवद-न्त्यथैतं महान्तमात्मानमेषर्गणः प्रवदतीन्द्रं मित्रं वरुणमग्निमाहु-रित्यथैष महानात्मात्मजिज्ञासयात्मानं प्रोवाचाग्निरस्मि जन्मना जातवेदा अहमस्मि प्रथमजा इत्येताभ्याम् ॥ १ ॥

---

अ॒ग्निर॑स्मि॒ जन्म॑ना जा॒तवे॑दा घृ॒तं मे॒ चक्षु॑र॒मृतं॑ म आ॒सन् । अ॒र्कस्त्रि॒धातू॒ रज॑सो वि॒मानोऽज॑स्रो घ॒र्मो ह॒विर॑स्मि॒ नाम॑ (ऋ० सं० ३ । २६ । ७) ॥ अ॒हम॑स्मि प्रथम॒जा ऋ॒तस्य॒ पूर्वं॑ दे॒वेभ्यो॑ अ॒मृत॑स्य॒ नाम॑ । यो मा॒ ददा॑ति॒ स इदे॒व मा॑वद॒हमन्न॒मन्न॒मद॑न्त-मद्मि ॥ इति स ह ज्ञात्वा प्रादुर्बभूवैवं तं व्याजहारायं तमात्मान-मध्यात्मजमन्तिकमन्यस्या आ चचक्ष्वेति ॥ २ ॥

---

अप॑श्यं गो॒पामनि॑पद्यमान॒मा च॒ परा॑ च प॒थिभि॒श्चर॑न्तम् । स स॒ध्रीचीः॒ स विषू॑ची॒र्वसा॑न॒ आव॑रीवर्ति॒ भुव॑नेष्व॒न्तः (ऋ० सं० १ । १६४ । ३१ ) ॥ आवरीवर्ति भुवनेष्वन्तरित्यथैष महानात्मा सत्त्वलक्षणस्तत्परं तद्ब्रह्म तत्सत्यं तत्सलिलं तदव्यक्तं तदस्पर्शं तदरूपं तदरसं तदगन्धं तदमृतं तच्छुक्लं तन्निष्ठो भूतात्मा सैषा भूतप्रकृतिरित्येके तत्क्षेत्रं तज्ज्ञानात्क्षेत्रज्ञमनुप्राप्य निरात्मकमथैष महानात्मा त्रिविधो भवति सत्त्वं रजस्तम इति सत्त्वं तु मध्ये विशुद्धं तिष्ठत्यभितो रजस्तमसी रजे इति कामद्वेषस्तम इत्यवि-ज्ञातस्य विशुद्ध्यतो विभूतिं कुर्वतः क्षेत्रज्ञपृथक्त्वाय कल्पते प्रति-

---

१ छ. त. 'ॐ' नास्ति; ङ. थ. हरिः ओम्; थ. ओ ३ म्. २ क. ख. ङ. थ. ध. °वन्त्यथै°. ३ क. ख. ङ थ. °दन्तीन्द्रं. ४ क. ख. १ (१४); छ. त. १४; द. १. ५ ङ. थ. ध. नाभिः. ६ ङ. थ ध. मावा अह° ७ ङ. थ. ध. °हारायत°. ८ ङ. थ. ध. °मध्यात्म°. ९ क. ख. २ (१५), छ. त. १५; द. २. १० ङ. थ. ध. तदज्ञा°. ११ ङ. थ. ध. °त्मजम°. १२ ङ. थ. ध. °मसी इति°. १३ क. ख. परिभा°.

भातिलिङ्गो महानात्मा तमोलिङ्गो विद्या प्रकाशलिङ्गस्तमोऽपि निश्चयलिङ्ग आकाशः[१] ॥ ३ ॥

---

आकाशगुणः शब्द आकाशाद्वायुर्द्विगुणः स्पर्शेन वायोर्ज्योतिस्त्रिगुणं रूपेण ज्योतिष आपश्चतुर्गुणा रसेनाद्भ्यः पृथिवी पञ्चगुणा गन्धेन पृथिव्या भूतग्रामस्थावरजङ्गमास्तदेतदहर्युगसहस्रं जागर्ति तस्यान्ते सुषुप्स्यन्नङ्गानि प्रत्याहरति भूतग्रामाः पृथिवीमपियन्ति पृथिव्यप आपो ज्योतिषं ज्योतिर्वायुं वायुराकाशमाकाशो मनो मनो विद्यां विद्या महान्तमात्मानं महानात्मा प्रतिभां प्रतिभा प्रकृतिं सा स्वपिति युगसहस्रं रात्रिस्तावेतावहोरात्रावजस्रं परिवर्तेते स कालस्तदेतदहर्भवति युगसहस्रपर्यन्तमहर्यद्ब्रह्मणो विदू रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जना इति[२] ॥ ४ ॥

---

तं परिवर्तमानमन्योऽनुप्रवर्तते स्रष्टा द्रष्टा विभक्तातिमात्रोऽहमिति गम्यते स मिथ्यादर्शनेदं पावकं महाभूतेषु चिरोण्वाकाशाद्वायोः प्राणश्चक्षुश्च[३] वक्तारं च तेजसोऽद्भ्यः स्नेहं पृथिव्या मूर्तिः पार्थिवांस्त्वष्टौ गुणान् विद्यात्त्रीन्मातृतस्त्रीन्पितृतोऽस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसशोणितानि मातृतोऽन्नं पानमित्यष्टौ सोऽयं पुरुषः सर्वमयः सर्वज्ञानोऽपि क्लृप्तः[४] ॥ ५ ॥

---

स यद्यनुरुध्यते तद्भवति यदि धर्मोऽनुरुध्यते तद्देवो भवति यदि ज्ञानमनुरुध्यते तदमृतो भवति यदि काममनुरुध्यते संच्यवत इमां योनिं संदध्यात्तदिदमत्र मतं श्लेष्मा रेतसः संभवति श्लेष्मणो रसो रसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसः स्नावा स्नाव्नोऽस्थीन्यस्थिभ्यो मज्जा मज्जातो रेतस्तदिदं योनौ रेतः सिक्तं पुरुषः संभवति शुक्रातिरेके पुमान् भवति शोणिता-

---

१ क. ख. ३ (१६), छ. त. १६, द. ३ २ क. ख. ४ (१७), छ. त. १७; द. ४. ३ छ त. न. प्राणं. ४ क. ख. ५ (१६), छ. तै. १८; द. ५.

तिरेके स्त्री भवति द्वाभ्यां समेन नपुंसको भवति शुक्रेण भिन्नेन यमो भवति शुक्रशोणितसंयोगान्मातृपितृसंयोगाच्च तत्कथमिदं शरीरं परं संयुज्यते सौम्यो भवत्येकरात्रोषितं कललं भवति पञ्चरात्राद्बुद्बुदाः सप्तरात्रात्पेशी द्विसप्तरात्रादर्बुदः पञ्चविंशतिरात्रः स्वस्थितो घनो भवति मासमात्रात्कठिनो भवति द्विमासाभ्यन्तरे शिरः संपद्यते मासत्रयेण ग्रीवाव्यादेशो मासचतुष्केण त्वग्व्यादेशः पञ्चमे मासे नखरोमव्यादेशः षष्ठे मुखनासिकाक्षिश्रोत्रं च संभवति सप्तमे चलनसमर्थो भवत्यष्टमे बुद्ध्याध्यवस्यति नवमे सर्वाङ्गसंपूर्णो भवति । मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः । नानायोनिसहस्राणि मयोषितानि यानि वै । आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः । मातरो विविधा दृष्टाः पितरः सुहृदस्तथा । अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः । सांख्यं योगं समभ्यस्येत्पुरुषं वा पञ्चविंशकमिति ततश्च दशमे मासे प्रजायते जातश्च वायुना स्पृष्टो न स्मरति जन्ममरणेऽन्ते च शुभाशुभं कर्मैतच्छरीरस्य प्रामाण्यम् ॥ ६ ॥

---

अष्टोत्तरं संधिशतमष्टाकपालं शिरः संपद्यते षोडश वपापलानि नव स्नायुशतानि सप्तशतं पुरुषस्य मर्मणामर्धचतस्रो रोमाणि कोटयो हृदयं ह्यष्टकपालानि द्वादशकपालानि जिह्वा वृषणौ ह्यष्टसुपर्णौ तथोपस्थगुदपाय्वेतन्मूत्रपुरीषं कस्मादाहारपानसिक्तत्वादनुपचितकर्मणावन्योन्यं जायेते इति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च महत्यज्ञानतमसि मग्नो जरामरणक्षुत्पिपासाशोकक्रोधलोभमोहमदभयमत्सरहर्षविषादेर्ष्यासूयात्मकैर्द्वन्द्वैरभिभूयमानः सोऽस्मा-

---

१ ङ. घ. भ. शुक्रभि°. २ ङ. थ. भ. छ. त. द्विःस°. ३ ङ. ध. भ. स्पृष्टस्तत्र स्म°. ४ ङ ध. भ. °रणमन्ते. ५ क. ख. ६ (१९), छ. त. १९; क. ६. ६ छ. °सुवर्णौ. ७ छ. त. द. °हारपान°. ८ ङ. थ. छ. त, द. °कर्मणा°. ९ क. ख. ङ. थ. भ. द. मग्नो.

दर्जैवं अधोभावानां तमिपुरुयते सोऽस्मात्पानगद्दाभूमिकावच्छरीराग्निमेषमानैः प्रक्रम्य प्रकृतिरधिपरीत्य तैजसं शरीरं कृत्वा कर्मणाऽनुरूपं फलमनुभूय तस्य संक्षये पुनरिमं लोकं प्रतिपद्यते ॥ ७ ॥

५

अथ ये हिंसामाश्रित्य विद्यामुत्सृज्य महत्तपस्तेपिरे चिरेण वेदोक्तानि वा कर्माणि कुर्वन्ति ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्दक्षिणायनं दक्षिणायनात्पितृलोकं पितृलोकाच्चन्द्रमसं चन्द्रमसो वायुं वायोर्वृष्टिं वृष्टेरोषधयश्चैतद्भूत्वा तस्यैव संक्षये पुनरेवेमं लोकं प्रतिपद्यते ॥ ८ ॥

१०

अथ ये हिंसामुत्सृज्य विद्यामाश्रित्य महत्तपस्तेपिरे ज्ञानोक्तानि वा कर्माणि कुर्वन्ति तेऽर्चिरभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षादुदगयनमुदगयनाद्देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं वैद्युतान्मानसं मानसः पुरुषो भूत्वा ब्रह्मलोकमभिसंभवन्ति ते न पुनरावर्तन्ते । शिष्टा दन्दशूका यत इदं न जानन्ति तस्मादिदं वेदितव्यमथाप्याह ॥ ९ ॥

१५

न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ( ऋ० सं० १० । ८२ । ७ ) ॥ न तं विद्यया विदुषो यमेवं विद्वांसो वदन्त्यक्षरं ब्रह्मणस्पतिमन्यद्युष्माकमन्तरमन्यदेषामन्तरं बभूवेति नीहारेण प्रावृतास्तमसा जल्प्या चासुतृप उक्थशासः प्राणं सूर्यं यत्पथगामिनश्चरन्त्यविद्वांसः क्षेत्रज्ञमनुप्रवदन्त्यथाहो विद्वांसः क्षेत्रज्ञोऽनुक-

२०

१ क. ख. ङ थ. ध त. द. °स्मात्पात्रमश . २ त. °कृतीर°. ३ छ त. द. °र्मणानु°. ४ क. ख. ७ (२०), छ त. २०; द. ७ ॥ द्वितीयः पादः ॥ अथ°. ५ छ. त. द. 'तस्य संक्षये' नास्ति. ६ क. ख. ८ (२१). छ त. २१; द. १. ७ छ °न्ति न तेन पु°; त. °न्ति तेन° न. ८ क. ख. ९ [२२], छ. त २२; द. २. ९ छ. त. प्राणात्तथिन्त्यथगा°; द प्राणं सूर्यं यत्पथ°. १० छ. त. द. °गामिन्यश्च°. ११ छ. त द. °ज्ञोनक°.

२५

३०

ल्पते तस्य तपसा सहाप्रमादमेत्यथाप्नोयो भवति तेनासंततमि-
च्छेत्तेन सख्यमिच्छेदेष हि सखा श्रेष्ठः संजानाति भूतं भवद्भ-
विष्यदिति ज्ञाता कस्माज्जायतेः सखा कस्मात्सख्यतेः सह भूते-
न्द्रियैः शेते[3] महाभूतानि सेन्द्रियाणि प्रज्ञया कर्म कारयतीति वा[4]
तस्य तदापः प्रतिष्ठा शीलमुपशम आत्मा ब्रह्मेति स ब्रह्मभूतो ५
भवति साक्षिमात्रो व्यवतिष्ठतेऽबन्धो ज्ञानकृतोऽथात्मनो महतः
प्रथमं भूतनामधेयान्यनुक्रमिष्यामः ॥ १० ॥

---

हंसः । घर्मः । यज्ञः । वेनः । मेधः । कृमिः । भूमिः । विभुः ।
प्रभुः । शम्भुः । शम्भुः । वधकर्मा । सोमः । भूतम् । १०
भुवनम् । भविष्यत् । आपः । महत् । व्योम । यशः । महः ।
स्वर्णीकम् । स्मृतीकम् । स्वृतीकम् । सतीकम् । सतीनम् । गह-
नम् । गभीरम् । गह्वरम् । कम् । अन्नम् । हविः । सद्म । सद-
नम् । ऋतम् । योनिः । ऋतस्य योनिः । सत्यम् । नीरम् ।
हविः । रयिः । सत् । पूर्णम् । सर्वम् । अक्षितम् । बर्हिः । नाम । १५
सर्पिः । अपः । पवित्रम् । अमृतम् । इन्दुः । हेम । स्वः । सर्गाः ।
शम्बरम् । अम्बरम् । वियत् । व्योम । बर्हिः । धन्व । अन्तरि-
क्षम् । आकाशम् आपः । पृथिवी । भूः । स्वयंभूः । अध्वा ।
पुष्करम् । सगरः । समुद्रः । तपः । तेजः । सिन्धुः । अर्णवः ।
नाभिः । ऊधः । वृक्षः । तत् । यत् । किम् । ब्रह्म । वरेण्यम् । २०
हंसः । आत्मा । भवति । यद्धर्मरत्येभ्यानम् । यद्धाहिष्यौ ।
शरीराणि । अव्ययं[12] च संस्कुरुते । यज्ञः । आत्मा । भवति ।

---

१ छ. त. °ज्जानतेः°. २ छ. त °न्द्रियैः से शेते म ; द्. °न्द्रियैः शेषेते म°. ३ क. ख. ङ. थ. ध. शेरते. ४ ङ. थ. ध. 'वा' नास्ति.° ५ क. ख. ङ. थ. ध. यदापः. ६ क. ख. १० (२१), छ. त. ११; द्. १. ७ छ. त. द्. 'हविः' नास्ति. ८ क. ख छ. त. द् नाभिः । ऊधः । वृक्षः । तत्°. ९ क. ख. छ. त द्. भवन्ति. १० क. ख. छ. त. भवन्ति । अध्वा°. ११ क. ख. छ. त. द्. यद्धाहिष्या. १२ छ. त. द् अव्ययसंस्कु°.

यदेनं तन्वतेऽथैतं महान्तमात्मानमेतानि सूक्तान्येता ऋचोऽनुप्रवदन्ति ॥ ११ ॥

---

सो॒मः॑ पवते जनि॒ता म॑ती॒नां ज॑नि॒ता दि॒वो ज॑नि॒ता पृ॑थि॒व्याः ।
जनि॒ताग्नेर्ज॑नि॒ता सूर्य॑स्य जनि॒तेन्द्र॑स्य जनि॒तोत विष्णोः॑ ( ऋ० सं० ९ । ९६ । ५ ) ॥ सोमः पवते सोमः सूर्यः प्रसवनाज्जनिता मतीनां प्रकाशकर्मणामादित्यरश्मीनां दिवो द्योतनकर्मणामादित्यरश्मीनां पृथिव्याः प्रथनकर्मणामादित्यरश्मीनामग्नेर्गतिकर्मणामादित्यरश्मीनां सूर्यस्य स्वीकरणकर्मणामादित्यरश्मीनामिन्द्रस्यैश्वर्यकर्मणामादित्यरश्मीनां विष्णोर्व्याप्तिकर्मणामादित्यरश्मीनामित्यधिदैवतमथाध्यात्मं सोम आत्माप्येतस्मादेवेन्द्रियाणां जनितेत्यर्थः । अपि वा सर्वाभिर्विभूतिभिर्विभूततम आत्मेत्यात्मगतिमाचष्टे ॥ १२ ॥

---

ब्र॒ह्मा दे॒वानां॑ पद॒वीः क॑वी॒नामृषि॒र्विप्रा॑णां महि॒षो मृ॒गाणा॑म् ।
श्ये॒नो गृध्रा॑णां॒ स्वधि॑ति॒र्वना॑नां॒ सोमः॑ प॒वित्र॒मत्ये॑ति॒ रेभ॑न् ( ऋ० सं० ९ । ९६ । ६ ) ॥ ब्रह्मा देवानामित्येष हि ब्रह्मा भवति देवानां देवनकर्मणामादित्यरश्मीनां पदवीः कवीनामित्येष हि पदं वेत्ति कवीनां कवीयमानानामादित्यरश्मीनामृषिर्विप्राणामित्येष हि ऋषिणो भवति विप्राणां व्यापनकर्मणामादित्यरश्मीनां महिषो मृगाणामित्येष हि महान् भवति मृगाणां मार्गणकर्मणामादित्यरश्मीनां श्येनो गृध्राणामिति श्येन

---

१ छ. त. वृ. यद्देन. २ क. ख. ११ ( २४ ), छ. त. २४ वृ. ४. ३ छ. वृ. सोमः पवते जनयिता मतीना जनयिता दिवो जनयिता पृथिव्या जनयिताग्नेर्जनयिता सूर्यस्य जनयितेन्द्रस्य जनयितोत विष्णोः । २५ ब्रह्म॰ ।; क. ख. पुस्तकयोः इदं विवरणं महाराष्ट्रीयं च वर्तते. ४ छ. पुस्तकस्य प्रान्ते महाराष्ट्रीयविवरणं लिख्यते तत्र ' विभूततम आत्मगतिमाचष्टे ' इति वर्तते. ५ क. ख. १२ २८ ( २५ ), छ. त. २५ वृ. ५.

आदित्यो भवति श्यायतेर्गतिकर्मणो गृध्र आदित्यो भवति गृध्यतेः स्थानकर्मणो यत एतस्मिंस्तिष्ठति स्वधितिर्वनानामित्येष हि स्वयंकर्माण्यादित्यो धत्ते वनानां वननकर्मणामादित्यरश्मीनां सोमः पवित्रमत्येति रेभन्नित्येष हि पवित्रं रश्मीनामत्येति स्तूयमान एष एवैतत्सर्वमक्षरमित्यधिदैवतमथाध्यात्मं ब्रह्मा देवानामित्ययमपि ब्रह्मा भवति देवानां देवनकर्मणामिन्द्रियाणां पदवीः कवीनामित्ययमपि पदं वेत्ति कवीनां कवीयमानानामिन्द्रियाणामृषिर्विप्राणामित्ययमप्यृषिणो भवति विप्राणां व्यापनकर्मणामिन्द्रियाणां महिषो मृगाणामित्ययमपि महान् भवति मृगाणां मार्गणकर्मणामिन्द्रियाणां श्येनो गृध्राणामिति श्येन आत्मा भवति श्यायतेर्ज्ञानकर्मणो गृध्राणीन्द्रियाणि गृध्यतेर्ज्ञानकर्मणो यत एतस्मिंस्तिष्ठति स्वधितिर्वनानामित्ययमपि स्वयंकर्माण्यात्मनि धत्ते वनानां वननकर्मणामिन्द्रियाणां सोमः पवित्रमत्येति रेभन्नित्ययमपि पवित्रमिन्द्रियाण्यत्येति स्तूयमानोऽयमेवैतत्सर्वमनुभवत्यात्मगतिमाचष्टे॥ १३ ॥[1]

---

तिस्रो वाच ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम् । गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ( ऋ० सं० ९ । ९७ । ३४ )॥ वह्निरादित्यो भवति स तिस्रो वाचः प्रेरयत्यृचो यजूंषि सामान्यृतस्यादित्यस्य कर्माणि ब्रह्मणो मतान्येष एवैतत्सर्वमक्षरमित्यधिदैवतमथाध्यात्मं वह्निरात्मा भवति स तिस्रो वाच ईरयति प्रेरयति विद्यामतिबुद्धिमतामृतस्यात्मनः कर्माणि ब्रह्मणो मतान्ययमेवैतत्सर्वमनुभवत्यात्मगतिमाचष्टे ॥ १४ ॥[2]

---

सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृच्छमानाः । सोमः सुतः पूयते अज्यमानः सोमे अर्कास्त्रिष्टुभः

---

१ क. ख. १३ (२१), छ. त. ब. २६; बृ. १. २ क. ख. १४ [ २७ ], छ. त. २७ बृ. ७.

सं नवन्ते ( ऋ० सं० ९ । ९७ । ३५ ) ॥ एत एव सोमं गावो धेनवो रश्मयो वावशयमानाः कामयमाना आदित्यं यन्त्येवमेव सोमं विप्रा रश्मयो मतिभिः पृच्छमानाः कामयमाना आदित्यं यन्त्येवमेव सोमः सुतः पूयते अज्यमान एतमेवार्काश्च त्रिष्टुभश्च
५ संनवन्ते तेत एतस्मिन्नादित्य एकं भवन्तीत्यधिदैवतमथाध्यात्म-मेत एव सोमं गावो धेनव इन्द्रियाणि वावशयमानानि कामय-मानान्यात्मानं यन्त्येवमेव सोमं विप्रा इन्द्रियाणि मतिभिः पृच्छमानानि कामयमानान्यात्मानं यन्त्येवमेव सोमः सुतः पूयते अज्यमान इममेवात्मा च सप्त ऋषयश्च संनवन्ते तानीमान्येतस्मि-
१० न्नात्मन्येकं भवन्तीत्यात्मगतिमाचष्टे ॥ १५ ॥

---

अक्रान्त्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य राजा । वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुः ( ऋ० सं० ९ । ९७ । ४० ) ॥ अत्यक्रमीत्समुद्र आदित्यः
१५ परमे व्यवने वर्षकर्मणा जनयन्प्रजा भुवनस्य राजा सर्वस्य राजा वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुरित्यधिदैवतमथाध्यात्ममत्यक्रमीत्समुद्र आत्मा परमे व्यवने ज्ञानकर्मणा जनयन्प्रजा भुवनस्य राजा सर्वस्य राजा वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुरित्यात्म-
२० गतिमाचष्टे ॥ १६ ॥

---

महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान् । अदधा-दिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः ( ऋ० सं० ९ । ९७ । ४१ ) ॥ महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवा-

---

१ छ. त. ष.वाश्य°. २ छ. त. त ए°. ३ क. थ. घ. तान्येतस्मि°. ४ क. ल. १५ ( २८ ); छ. त. २८; द. ८. ५ क. ख. छ. द मह°; त. बृह° म.
२७ ६ क. ख. १६ [ २९ ], छ. त. २९; द. ९.

नामाधिपत्यमद्धादिन्द्रे परमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुरादित्य इन्दुरात्मा ॥ १७[1] ॥

---

विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान (ऋ० सं० १०।५५।५)॥ विधुं विधमनशीलं दद्राणं दमनशीलं युवानं चन्द्रमसं पलित आदित्यो गिरति सद्यो म्रियते स दिवा समुदितेत्यधिदैवतमथाध्यात्मं विधुं विधमनशीलं दद्राणं दमनशीलं युवानं महान्तं पलित आत्मा गिरति रात्रौ म्रियते रात्रिः समुदितेत्यात्मगतिमाचष्टे ॥ १८[2] ॥

---

साकंजानां सप्तथमाहुरेकजं षळिद्यमा ऋषयो देवजा इति[3] ।
तेषामिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः (ऋ० सं० १।१६४।१५)॥ सहजातानां षण्णामृषीणामादित्यः सप्तमस्तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वाद्भिः सह संमोदन्ते यत्रैतानि सप्तऋषीणानि ज्योतींषि तेभ्यः पर आदित्यस्तान्येतस्मिन्नेकं भवन्तीत्यधिदैवतमथाध्यात्मं सहजातानां षण्णामिन्द्रियाणामात्मा सप्तमस्तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वान्नेन सह संमोदन्ते यत्रेमानि सप्तऋषीणानीन्द्रियाण्येभ्यः पर आत्मा तान्यस्मिन्नेकं भवन्तीत्यात्मगतिमाचष्टे ॥१९[6]॥

---

१ क. ख. १७ (३०); छ. त. ३० द. ११ २ क. ख. १८ (३१) छ. त. ३१ द. ११. ३ क. ख. छ. त. पळिद्य° ४ ङ थ ध. °विन्यत्इमयस्तेषा°. ५ ङ. थ. यान्य°; ध. तान्येतस्मि°. ६ क. ख. १९ (३२)। इति नैरुक्ते त्रयोदशस्यैव द्वितीयः पादः समाप्तः । अथ तृतीयपादः । स्त्रियः°; छ. ३२ ॥ द्वितीयः पादः ॥ स्त्रियः; त. ३२ त्रयोदशोध्याये द्वितीयः पादः । स्त्रिय°; द. °चष्टे । इति त्रयोदशाध्यायस्य तृतीयः पादः स्त्रिय°.

स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेतदन्धः ।
कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात्स पितुष्पितासत्
(ऋ० सं० १।१६४।१६ ) ॥ स्त्रिय एवैताः[1] शब्दस्पर्शरूपरसगन्धहारिण्यस्ता अमुं पुंशब्देन[2] निराहारः प्राण इति पश्यन्[3] कश्चन्न विजानात्यन्धः कविर्यः पुत्रः स इमा जानाति यः स इमा जानाति स पितुष्पितासदित्यात्मगतिमाचष्टे[4] ॥ २०[5] ॥

---

सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ।
ते धीतिभिर्मनसा ते विपश्चितः परिभुवः परि भवन्ति विश्वतः (ऋ० सं० १।१६४।२६)॥ सप्तैतानादित्यरश्मीनयमादित्यो गिरति मध्यस्थानोर्ध्वशब्दो यान्यस्मिंस्तिष्ठन्ति[6] तानि धीतिभिश्च मनसा च विपर्ययन्ति परिभुवः परिभवन्ति सर्वाणि कर्माणि वर्षकर्मणेत्यधिदैवतमथाध्यात्मं सप्तेमानीन्द्रियाण्ययमात्मा गिरति मध्यस्थानोर्ध्वशब्दो यान्यस्मिंस्तिष्ठन्ति[7] तानि धीतिभिश्च मनसा च विपर्ययन्ति परिभुवः[8] परिभवन्ति सर्वाणीन्द्रियाणि[9] ज्ञानकर्मणेत्यात्मगतिमाचष्टे ॥ २१[10] ॥

---

न वि जानामि यदिव इदमस्मि निण्यः संनद्धो मनसा चरामि ।
यदा मागन्प्रथमजा ऋतस्यादिद्वाचो अश्नुवे भागमस्याः (ऋ० सं० १।१६४।३७)॥ न विजानामि यदि वेदमस्मि निण्यः

---

१ ङ. थ. ध. एवैति ताः २ ङ. थ. ध. °शब्दे नि°. ३ छ. त. पश्यदक्षाण्वान्न विजा°. ४ छ. त. °ष्पिता भवत्यात्म°. ५ क. ख. २० (३३) ॥ १ ॥, छ. त. ३३; दृ. १. ६ ङ. थ. ध. यत एतस्मिंस्तिष्ठति तानि°; ङ. यत्र एतस्मिंस्ति. ७ ङ. थ. ध. °ष्ठति ता°. ८ छ. त. परिभूणि परि°. ९ छ. त. °र्वाणि कर्माणि ज्ञा°. १० क. ख. २१ (३४) ॥ २ ॥; छ त. ३४, दृ. २. ११ ङ. थ. ध. 'यदामागन०२८ चरामि' नास्ति .

संनद्धो मनसा चरामि न हि जानन्[1] पुष्टिः पुत्रः परिवेदयन्तेऽय-
मादित्योऽयमात्मा ॥ २२ ॥[2]

---

अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः ।
ता शश्वन्ता विषूचीना वियन्ता न्यश्न्यं चिक्युर्न नि चिक्युर-
न्यम् ( ऋ० सं० १ । १६४ । ३८ ) ॥ अपाञ्चयति प्राञ्चयति[3] ।
स्वधया गृभीतो मर्त्य आदित्यो मर्त्येन चन्द्रमसा सह तौ शश्व-
द्गामिनौ विश्वगामिनौ बहुगामिनौ वा पश्यत्यादित्यं न[4] चन्द्रमस-
मित्यधिदैवतमथाध्यात्ममपाञ्चयति प्राञ्चयति स्वधया गृभीतोऽ-
मर्त्य आत्मा मर्त्येन मनसा सह तौ शश्वद्गामिनौ विश्वगामिनौ
बहुगामिनौ वा पश्यत्यात्मानं न मन इत्यात्मगतिमाचष्टे ॥२३॥[5]

---

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः । सद्यो
जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ( ऋ० सं० १० ।
१२० । १ ) ॥ तद्भवति भूतेषु भुवनेषु ज्येष्ठमादित्यं यतो जज्ञ
उग्रस्त्वेषनृम्णो दीप्तिनृम्णः सद्यो जज्ञानो निरिणाति शत्रूनिति
निरिणातिः[6] प्रीतिकर्मा दीप्तिकर्मा वानुमदन्ति यं विश्व ऊमा
इत्यधिदैवतमथाध्यात्मं तद्भवति भूतेषु भुवनेषु ज्येष्ठमव्यक्तं यतो[7]
जायत उग्रस्त्वेषनृम्णो ज्ञाननृम्णः सद्यो जज्ञानो निरिणाति
शत्रूनिति निरिणातिः प्रीतिकर्मा दीप्तिकर्मा वानुमदन्ति यं सर्व
ऊमा इत्यात्मगतिमाचष्टे ॥ २४ ॥[8]

---

१ ङ. थ. ध. द. °हि विजानान्बुद्धिमतः पुत्रः° ( द. °विजानान्' इत्यत्र 'जजानान्' ). २ क. ख. २२ ( ३५ ) ॥ ३ ॥, छ. त. ३६; द. ३. ३ छ. अपाङ् चैति प्राङ् चैति स्व°, द. अपाङ् चयति प्राङ् चयति स्व°. ४ ङ. थ. ध. 'न' नास्ति. ५ क. ख. २३ [ ३६ ] ॥ ४ ॥; छ. त. ३६; द. ४. ६ ङ. थ. ध. °निति रिणा°. ७ ङ. थ. व. तपो. ८ क. ख. २४ [ ३७ ] ॥ ५ ॥; छ. त. ३७; द. ५.

को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् । आसन्निषून्हृत्स्वसो मयोभून्य एषां भृत्यामृणधत्स जीवात् ( ऋ० सं० १ । ८४ । १६ ) ॥ क आदित्यो धुरि गा युङ्क्ते रश्मीन् कर्मवतो भानुमतो दुराधर्षानसूनसुनवन्तीषूनिषुणवन्ति मयोभूनि सुखभूनि य इमं संभृतं वेद कथं स जीवतीत्यधिदैवतमथाध्यात्मं क आत्मा धुरि गा युङ्क्ते इन्द्रियाणि कर्मवन्ति भानुमन्ति दुराधर्षानसूनसुमवन्तीषूनिषुणवन्ति मयोभूनि य इमानि संभृतानि वेद चिरं स जीवतीत्यात्मगतिमाचष्टे॥२५॥

---

क ईषते तुज्यते को बिभाय को मंसते सन्तमिन्द्रं को अन्ति । कस्तोकाय क इभायोत रायेऽधि ब्रवत्तन्वे३ को जनाय ( ऋ० सं० १ । ८४ । १७ ) ॥ क एव गच्छति को ददाति को बिभेति को मंसते सन्तमिन्द्रं कस्तोकायापत्याय महते च नो रणाय रमणीयाय दर्शनीयाय ॥ २६ ॥

---

को अग्निमीट्टे हविषा घृतेन स्रुचा यजाता ऋतुभिर्ध्रुवेभिः । कस्मै देवा आ वहानाशु होम को मंसन्ते वीतिहोत्रः सुदेवः ( ऋ० सं० १ । ८४ । १८ ) ॥ क आदित्यं पूजयति हविषा च घृतेन च स्रुचा यजाता ऋतुभिर्ध्रुवेभिरिति कस्मै देवा आवहानाशु होमार्थान् को मंसते वीतिहोत्रः सुदेवः कल्याणदेव इत्यधिदैवतमथाध्यात्मं क आत्मानं पूजयति हविषा च घृतेन च स्रुचा यजाता ऋतुभिर्ध्रुवेभिरिति कस्मै देवा आवहानाशु होमा-

---

१ ह. °धर्षान्यसू°. २ क. ख. ङ. थ. ध. द. °सून्त्सु°. ३ ङ. थ. ध. कर्मवन्तो भानुमतो. ४ ङ. थ. ध. द. इमं संभृतं वेद चिरंजी°. ५ क. ख. २५ ( ३८ ) ॥ ६ ॥; छ. त. ३८; ह. ६. ६ छ. इव. ७ छ. त. °को ददाति को दधाति को बि° ८ क. ख. २६ ( ३९ ) ॥ ७ ॥, छ. त. ३९; ह. ७. ९ ङ. थ. ध. पूज°.

यान् को मंसते वीतिहोत्रः सुभद्रः कल्याणभद्रः इत्यात्मगतिमा-
चष्टे ॥ २७ ॥

---

त्वमङ्ग प्र शंसिषो देवः शविष्ठ मर्त्यम् । न त्वदन्यो मघ-
वन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ( ऋ० सं १ । ८४ । १९ ) ॥ ५
त्वमङ्ग प्रशंसीदेवः शविष्ठ मर्त्यं न त्वदन्योऽस्ति मघवन् पाता
वा पालयिता वा जेता वा सुखयिता वेन्द्र ब्रवीमि ते वचः
स्तुतियुक्तम् ॥ २८ ॥

---

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृष- १०
द्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ( ऋ० सं०
४ । ४० । ५ ) ॥ हंसः इति हंसाः सूर्यरश्मयः परमात्मा परं ज्योतिः पृ-
थिवी व्याप्तेति व्याप्तं सर्वं व्याप्तं वननकर्मणा नभ्यासेनादित्यमण्डले-
नेति त्यजतीति लोको त्यजतीति हंसयन्त्यजतीति हंसाः परमहंसाः
परमात्मा सूर्यरश्मिभिः प्रभूत गभीरं वसतीति त्रिभिर्वसतीति १५
वा रश्मिर्वसतीति वा वह्निर्वसतीति वा सुवर्णरेताः पूषा गर्भा
रिभेति रिभन्ता वनकुटिलानि कुटन्ता रिभेन्तान्तरिक्षा चरत्पथा-
न्तरिक्षा चरदिति दिवि भुवि गमनं वा सुभानुः सुप्रभूतो होता-
दित्यस्य गता भवन्त्यतिथिर्दुरोणसत्सर्वे दुरोणसद्रवं सर्वे रसा

---

१ क. ख. २७ ( ४० ) ॥ ८ ॥; छ. त. ४८; द् ८. २ क. ख. छ. त. २०
वच इति स्तुतिसयु°. ३ क. ख. ८ ( ४१ ) ॥९॥ इति निरुक्ते त्रयोदशाध्या-
यस्यैव तृतीयः पादः ॥ अथ चतुर्थः पादः ॥ हंसः°; छ. ४१ । तृतीयः पादः ।
द्वा सुपर्णा°; त. ४१ । त्रयोदशोऽध्याये तृतीयः पादः । द्वा सुपर्णा°; द्. ९॥ छ. ॥
द्वा सुपर्णा° ध. ४१. ४ छ. त. द्. हसेतिहं°. ५ छ. त. °थिव्याप्ते°. ६ छ. त.
°कर्माभ्या°; द्. कर्मानभ्या°. ७ छ. त. त्यजतीति लोकस्त्यजन्ती हंसस्त्यजतीति २५
हंसाः परमा°. ८ छ. त. °भीत वस°. ९ छ. त. वा वह्निर्वसतीति वा रश्मिर्वसतीति
वा सु°. १० छ. त. द्. पुरुषा गर्भाभिरिति रिफि ( छ. त. °रिफ; द्. रिफिता )
वनकुटिलानि°. ११ छ त. द्. रेफन्तान्तरिक्षे चरद्वर्त्यन्तरिक्षं चरतीति दिवि
भूमिग (दिविर्भूमिग) मनं वा स्वर्भानुः सुप्रसूतो (द्. सुता) होता होतादि°. १२ छ.
त. द्. °रोणसद् भवन्ति सर्वे रसा (द्. रसा भिर्कीर्यन्त रश्मिभि) भिर्कीर्यन्तीति
वा वनं ( द्. नमतं ) भवतीत्यम्ब°. २६

विकर्षयति रश्मिर्विकर्षयति बाहुर्विकर्षयति धनं भवत्यश्व-गोजा अद्रिगोजा धरित्रिगोजाः सर्वे गोजा ऋतजा बहुशब्दा[1] भवन्ति निगमो निगमव्यंयति[2] भवत्येष निर्वचनाय ॥ २९ ॥[3]

---

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ( ऋ० सं० १ । १६४ । २० ) ॥ द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्तारौ दुष्कृतं पापं परिसारक[4]मित्याचक्षते सुपर्णा सयुजा सखायेत्यात्मानं[5] परमात्मानं प्रत्युत्तिष्ठति शरीर एव तज्जायते वृक्षं वृक्षं[6] शरीरं वृक्षं[7] पक्षौ प्रतिष्ठापयति तयोरन्यद्भुक्त्वान्यमनश्नन्न[8]न्यौ[9] सरूपतां सलोकतामश्नुते य एवं वेदा[10]नश्नन्नन्यो अभिचाकशीतीत्यात्म[11]-गतिमाचष्टे[12] ॥ ३० ॥

---

आ[13] याहीन्द्र पथिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व । तृप्तां जहुर्मातुलस्ये[14]व योषा भागस्ते पैतृष्वसेयी[15] वपामिव ( खैलिकसूक्तं १४ । ६ ) ॥ आगमिष्यन्ति शक्रो देवतास्ता स्त्रिभिस्तीर्थैभिः शक्रप्रतरैरीळितेभिस्त्रिभिस्तीर्थैर्यज्ञमिमं नो यज्ञभागमग्रीषोमभागाविन्द्रो जुषस्व तृप्तामेवं मातुलयोगकन्याभागं सतेव सा या देवतास्तास्तत्स्थाने शक्रं निदर्शनम् ॥ ३१ ॥[16]

---

१ छ. त. धनगोजा: सर्वगोजातिर्ऋच इतिजो घहुजो शब्दो ( त. °गोजा ऋतजा इति योजाजो बहुशब्दो, द. °इति जोबहुशब्दो;) भवति नि°. २ छ. त. द. निगमव्योभवत्यृषिनिर्व°. ३ क. ख. २९ ( ४२ ) ॥ १ ॥; छ. ४४; त. ३ । ४४; द. ३. ४ छ त. °रिचार°. ५ क. ख. ङ. थ. ध. °त्मानं दुरात्मानं पर°. ६ क. ख. ङ. थ. ध रक्ष. ७ क. ख. ङ. थ. घ. वृक्षे. ८ छ. त. °रन्यद्भुक्त्वान्यमनश्न°; द. °रन्यदुक्मत्यनश्न°. ९ ङ. थ. ध. °कन्यं स°. १० छ. त. द ‘ अंभ ’ नास्ति. ११ छ. त. द. ‘ इति ’ नास्ति. १२ क. ख. ३० (४३ ) ॥ २ ॥ ; छ. ४२; त, ४३. द. १. १३ छ. त. द. अयं खण्डो नास्ति. १४ क. ख घ. °तुलस्ये°. १५ ङ. °तुळयो°, १६ क. ख. ३१ (४४) ॥३॥

विप्रं॑ विप्रा॑सोऽव॑से दे॒वं मर्ता॑स ऊ॒तये॑ । अ॒ग्निं गी॒र्भिर्ह॑वामहे (ऋ० सं० ८।११।६)॥ विप्रं विप्रासोऽवसे त्रिदुर्वेदं[1] विन्दतेर्वेदितव्यं विमल[2]शरीरेण वायुना विप्रस्तु हृत्[3]पद्मनिलयस्थितमकारसंहितमुकारं पूरयेन्[4]मकारनिलयं गतं[5] विप्रं प्राणेषु बिन्दु[6]सिक्तं विकसितं[7] वह्नितेजः प्रभं[8] कनक[9]पद्मेऽमृतशरीरममृतजातस्थितममृतवाचामृतमुखे[10] वदन्ति । अग्निं गीर्भिर्हवामहे । अग्निं संबोधयेदग्निः सर्वा देवता इति तस्योत्तरा भूयसे निर्वचनाय॥३२[11]॥

---

जा॒तवे॑दसे सुनवाम॒ सोम॑मरातीय॒तो नि द॑हाति॒ वेदः॑ । स नः॑ पर्ष॒दति॑ दु॒र्गाणि॒ विश्वा॑ ना॒वेव॒ सिन्धुं॑ दुरि॒तात्य॒ग्निः (ऋ० सं० १।९९।१)॥ जातवेदस[12] इति जातमिदं सर्वं सचराचरं स्थित्युत्पत्तिप्रलयन्यायेनार्च्छीय सुनवाम[13] सोममिति प्रसवेनाभिषवाय सोमं राजानममृतमरातीयतो यज्ञार्थ[14]मिति स्मो निश्चये निदहाति दहति भस्मीकरोति सोमो ददादित्यर्थः । स नः पर्षदति दुर्गाणि[15] दुर्गमनानि स्थानानि नावेव सिन्धुं[16] यथा कश्चित्कर्णधारो नावेव[17] सिन्धोः स्यन्दनान्नदीं[18] जलदुर्गां महाकूलां तारयति दुरितात्यग्निरिति दुरितानि तारयति तस्यैषापरा भवति ॥ ३३[19] ॥

---

१ छ. त. द. 'वेद' नास्ति. २ छ. त. द. विमल शरीरं वा°. ३ छ. त. द. °स्तु पद्मनिलयं हृदिस्थितमकारसंहारितमुकारं°. ४ छ. त. पूरयन्म°; द. पूजयन्म°. ५ छ. त. द. गमयति. ६ छ. त. द. बिन्दुः सिक्तं. ७ छ. त. विकचितं. ८ छ. त. द. प्रभु. ९ छ. द. कनकं परमेश्वरममृत°; त. कनकपद्मेऽमृत° कं परमेश्वरम. १० छ.त. °वाचा अमृत [द. दमृत] मुखा व°. ११ क. ख. ३२ [४५] ॥४॥; छ. ४३; त. ४४; द. २. १२ छ. त. द. 'येन जातवेदस्या [छ. स्वा° स्या; द. स्या] इदं [द. वेदं] जातवेसेर्चाय सुन°. १३ छ. त. द. प्रसवायाभिष°. १४ छ. त. द. °र्थमानि स्मो निदहाति निश्चयेन दहति°. १५ छ. त. द. °र्गाणि विश्वानि दुर्गमानि स्थानानि°. १६ छ. त. द. °न्धुं नावा सिन्धु यथा यः कश्चि°. १७ छ. त. द. नावा सिन्धुः [द. सिन्धोः] स्यन्दमामाना नदी°. १८ छ. ध. °न्दनां नदीं. १९ क. ख. ३३(४६)॥ ५ ॥, छ. ध. ४६; त. ५।४६ द. ५.

इदं तेऽन्याभिरसमनमभिर्याः काश्च सिन्धुं प्रवहन्ति नद्यः ।
सर्पो जीर्णामिव त्वचं जहाति पापं सशिरस्कोऽभ्युपेत्य ॥ इदं-
तेऽन्याभिरसमानाभिर्याः काश्च सिन्धुं पतिं कृत्वा नद्यो वहन्ति
सर्पो जीर्णामिव सर्पस्त्वचं त्यजति पापं त्यजन्त्याप[2] आप्नोतेस्ता
५ साभेषा भवति ॥ ३४ ॥

---

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्ध-
नान्मृत्योर्मुक्षीय मामृतात् ( ऋ० सं० ७ । ५९ । १२ )॥ त्र्य-
म्बको रुद्रस्तं त्र्यम्बकं यजामहे सुगन्धिं[3] सुगन्धिं[4] सुष्ठुगन्धिं पुष्टि-
१० वर्धनं पुष्टिकारकमिवोर्वारुकमिव फलं[5] बन्धनादारोधनान्मृत्योः[6]
सकाशान्मुञ्चस्व मां कस्मादित्येषामितरेषापरा भवति ॥ ३५ ॥

---

शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान् ।
शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ( ऋ०
१५ सं० १० । १६१ । ४ )॥ शतं जीव शरदो वर्धमान इत्यपि निगमो
भवति शतमिति शतं दीर्घमायुः[7] रुत एना[8] वर्धयन्ति शतमेनमेव
शतात्मानं[9] भवति शतमनन्तं[10] भवति शतमैश्वर्यं भवति शतमिति
शतं दीर्घमायुः ॥ ३६[11] ॥

---

२० मा ते राधांसि मा त ऊतयो वसोऽस्मान्कदा चना दभन् । विश्वा
च न उपमिमीहि मानुष वसूनि चर्षणिभ्य आ ( ऋ० सं० १ ।
८४ । २० )॥ मा च ते धनानि[12] मा च ते कदा च नः[13] सरिषुः

---

१ छ. त. द. अयं खण्डो नास्ति. २ क. ख. ३४ [४७] ॥ ६ ॥. ३ छ. त. द. सुगन्धि पुष्टि°. ४ छ. त. द. 'सुगन्धि' सकृदेव°. ५ छ. त. द. 'फलं' नास्ति. ६ क. ख. ३५ [४५] ॥ ७ ॥; छ. ४५; त. ४ । ४५; द. ४. ७ छ. त. °रुतो मां व°. ८ छ. त. द. 'एनं' नास्ति. ९ छ. त. द शतमात्मानं. १० छ. त. द. 'शत०० भवति' नास्ति. ११ क. ख. ३६ [४६] ॥ ८ ॥; छ. ४७; त. ६ । ४७; द. ६. १२ क. ख. ङ. थ. ध. धामानि. १३ छ. °चन न°.
२८

सर्वाणि प्रज्ञानान्युपनोमय मनुष्यहितोऽयमादित्योऽयमात्माथैतद्-नुप्रवदन्त्यथैतं महान्तमात्मानमेषगणः प्रवदति वैश्वकर्मणे देवानां नु वयं जाना नासदासीन्नो सदासीत्तदानीमिति च सैषात्मजिज्ञासा सैषा सर्वभूतजिज्ञासा ब्रह्मणः सार्ष्टिं सरूपतां सलोकतां गमयति य एवं वेद नमो ब्रह्मणे नमो महते भूताय नमः पारस्कराय ५
नमो यास्काय ब्रह्मशुक्लमसीय ब्रह्म शुक्लमसीय ॥ ३७ ॥

---

* व्याख्या॑तमग्निरश्मिजन्मनापश्यंगोपामाकाशगुणस्तं-परिवर्तमानंसयद्यनुरुध्यतेऽष्टौत्तरमथयेहिंसामाश्रित्याथयेहिंसामुत्सृज्यनतंहंसोधर्मःसोमःपवतेब्रह्मादेवानांतिस्रोवाचईरयतिसोमंगोवोऽक्रान्महत्तत्सोमोविधुंदद्राणंसाकंजानांस्त्रियःसतीःसप्तार्धगर्भानविजानाम्यपाङ्प्राङेतितादिदासकोअग्नेयुक्त्केकईषतेकोअग्निमीट्टेत्वमङ्गहंसःशुचिषद्द्वासुपर्णायाहीन्द्रविभ्रंविभ्रासोजातवेदसइदंतेन्याभिस्त्र्यम्बकंशतंजीवमोतराधांसीति सप्तत्रिंशत् । १०

इति निरुक्ते चतुर्दशोऽध्यायः ॥ १४ ॥

इति निरुक्ते उत्तरषट्कः समाप्तः । १५

इति निरुक्तं समाप्तम् ।

---

* क. ख. थ. ध. अस्याः शृङ्खलाया आदौ त्रयोदशाध्यायस्य शृङ्खला लिख्यते; छ त. ट. शृङ्खलानास्ति. ✝ क. ख. ध. व्याख्यातं देवतमाग्नि°.

---

१ क. ख. ड. थ. ध. °न्युपमानाय. २ क. ख. ड. थ. ध. °प्रवदन्त्यथै°. १०
३ छ. सार्ष्टि. ४ छ. °हते देवाय नमो यास्काय°. ५ क. ख. ३७ (५८) ॥ ५ ॥ छ. ४८; त. ७।४८; द. ७. ६ क. ख. थ. ध. पञ्चाशत्. ७ छ. इति नैरुक्त उत्तरषट्कः°; ध. इति निरुक्ते उत्तरषट्कः समाप्तः । इति निरुक्ते चतुर्दशोऽध्यायः ।; थ. इति नैरुक्ते उत्तरषट्के सप्तमोऽध्यायः । इत्युत्तरषट्कः समाप्तः । ; छ. इति नैरुक्ते त्रयोदशोध्यायः ।; द. इति नैरुक्ते त्रयोदशाध्यायस्य पञ्चमः पादः । त्रयोदशाध्यायः समाप्तः ।

२७

पत्रं पङ्क्तिः

६०९ १४ अस्य ऐकपदिकप्रकरणस्य अनु अनन्तरम् ।

१६ गुणपदानि = येषु क्रिया गुणभूता लक्ष्यते तानि ।

१६ लक्षणोद्देशतः = लक्षणेन लक्षणशास्त्रेण उद्देशेन यत्प्रयोजनं मनसि वर्तते तेन । लक्षणशास्त्रं व्याकरणशास्त्रम् ।

१६ तानि लक्षणोद्देशतो व्याख्यातानि इत्यन्वयः ।

१७ संविज्ञातपदानि = रूढपदानि । येषु क्रिया न लक्ष्यते तानि संविज्ञातपदस्य व्याख्यानं दुर्गेण ६९–७१ पत्रेषु क्रियते ।

२२–२३ अत्र क्रमः । २३–२४ अत्र हेतुः ।

६१० १ सतत्त्वम् = तत्त्वं लक्षणम् । किं सतत्त्वं यस्य । अस्य दैवतप्रकरणस्य किं लक्षणम् ।

२–३ प्राधान्येन न तु गौणत्वेन स्तुतिर्यासाम् । तासां देवतानां यानि नामानि तद्दैवतम् । नेदं समीचीनं वाक्यम् । यानि नामानि तानि दैवतम् । एवं वाक्यं स्यात् । किंतु केवलानि नामानि न दैवतं प्रकरणम् । यत्र प्राधान्यस्तुतीनां देवतानां नामानि व्युत्पाद्यन्ते व्याख्यायन्ते वा तद्दैवतं प्रकरणम् । अयं वाक्यस्यार्थः ।

१० निर्णिक्ते = शोधिते निश्चिते । समाप्ते इति यावत् । यथाप्रकरणोपन्यासेन = यथाप्रकरणोपन्यासम् । प्रकरणानाम् उपन्यासः क्रमः । तम् अनतिक्रम्य ।

११ सामान्येन विशेषेण स्वालक्षण्येन सतत्त्वेन च उपपत्तयः । सामान्येन उपपत्तिः = देवतायाः वर्गीकरणम् । तथा विशेषेण । स्वलक्षणमेव स्वालक्षण्यम् । स्वस्मिन्नाम्नि एव वर्तमानं लक्षणं व्युत्पत्तिः ।

१४–१९ देवतोपपरीक्षा = तदभिधानव्युत्पत्तितत्स्तुत्युदाहरणतन्निर्वचनानि । तस्या देवताया अभिधानस्य व्युत्पत्तिः । तस्याः स्तुतेः उदाहरणम् । तस्य उदाहरणस्य निर्वचनम् ।

पत्रं पङ्क्तिः

६१० १६ मन्त्रे अधिकृतं दैवतं तस्य लक्षणम् । मन्त्रे अधिकृतं दैवतं केन लक्षणेन ज्ञातव्यम् ।

१७ अवदिधारयिषा = अवधारयितुं निश्चेतुम् इच्छा ।

१८–१९ नेदं समीचीनं वाक्यम् । सकामः अथवा विशिष्टकामप्रयुक्तः ऋषिः आर्थपत्यमिच्छन् यस्यां देवतायां स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति । यत्कामः इत्यत्र ‘यत्’ अस्य न कोऽपि आकाङ्क्षापूरकः शब्दो वर्तते ।

१९ अर्थः एव वस्तु । यत् अर्थवस्तु = यम् अर्थम् यत् वस्तु वा ।

६११ १ ‘ मन्त्रे देवतालक्षणम् ’ सर्वेषु पुस्तकेष्वयमेव पाठः । ‘ मन्त्रदेवतालक्षणम् ’ इत्यवश्यम् ।

३ ‘ आर्थपत्यमिच्छम् ’ इत्यस्य द्वितीयं विवरणं न साधु ।

४ ‘ येन मन्त्रेण ’ इत्यत्र येन नावश्यम् ।

५–६ ‘ नाम्ना बन्धुभिः कर्मणा रूपेण ’ इति ह्युक्तम् ( निरुक्तं ३९६।१ ) । कुत्रोक्तम् । वाजसनेयसंहितामहीधरभाष्ये ( ९।३४ ) ‘ स्तुतिः स्वनाम्ना कर्मणा वाऽथ रूपैः ’ ( कात्या० ९।८।२२ ) इत्युक्तम् । किंतु कात्यायनश्रौतसूत्रेषु नेदमुपलभ्यते ।

७ अपिहितः = गूढः ।

आदिष्टदेवतेषु मन्त्रेषु किमर्था देवतोपपरीक्षा । कामेन प्रयुक्तः आर्थपत्यमिच्छन् ऋषिः तं कामं दातुं या समर्था देवता तद्देवताकमेव मन्त्रं प्रयुञ्जीत । सकामः ऋषिः आर्थपत्यमिच्छन् यां देवताम् आदिष्टदेवतेन मन्त्रेण स्तौति तद्देवतः स मन्त्रो भवति । अत्र देवता नान्वेष्या । सा मन्त्रे वर्तत एव । केवलम् इष्टदेवतामन्त्रः अन्वेष्यः प्रयोज्यश्च ।

६१२ ५ ‘ तद्यथा ’ इदम् ‘ एतानि ’ इत्यादितः भिन्नम् । तद्यथा । एतान्यु० एवं मुद्रितव्यमासीत् ।

११ सूर्यस्तुता यशस्कामो यजेत ( आश्व० श्रौ० ९ । ८ ) ।

१३ पर्वतानां = गिरीणाम् ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६१२ | १४ | मेधिराणां = मेधावतां बुद्धिमताम्। |
| | १७ | ' ईशे ' इदम् उत्तमपुरुषस्य एकवचनम्। किंत्वत्र तत् ' ईष्टे ' इत्यर्थे। |
| | २० | अनूषत = अभिष्टुत। ' अनूषत ' नेदं लोटि किंतु लेटि लङि च रूपम्। |
| ६१३ | २० | पारिसर्गासः = पारिसृताः। पारिसृष्टाः। आशवः = व्याप्नुवन्तः। |
| | २२–२३ | सोमः इन्द्रात् ऋते सवनस्थानानां किंचिदपि धाम स्थानं प्रति न पवते। इन्द्रमेव पवते गच्छति। व्याप्नोतीत्यर्थः। |
| ६१४ | १० | अस्या ऋचो मूलं नोपलब्धम्। |
| ६१५ | ४ | देवानां जामयः स्वसृभूताः इन्द्रमातरः नाम ऋषिकाः। |
| ६१६ | १–२ | अन्या देवता देवतान्तरम्। ' अन्यत् ' पदं व्यर्थम्। |
| | १० | कण्वाः = मेधाविन ऋत्विजः। इदं विवरणं सायणभाष्या-द्गृहीतं स्यात्। |
| | १६ | ' हतसर्वामित्रः ' इति समीचीनम्। |
| | २० | युष्मदः गुणरूपेण गौणत्वेन प्रयोगः येषु। क्रिया वाक्ये मुख्या। कर्ता गौणः। |
| | २०–२१ | ' देवन्तान्तराणि ' अत्र ' अन्तर ' शब्दो व्यर्थः। दैवतानि इत्यर्थः। |
| | २१ | परोक्षकृतः अभिसंबन्धो येषाम्। |
| ६१७ | ८ | ' मादि ' इत्यस्यानन्तरं विरामो वर्तते। |
| | १० | ' एवम् आदिब्रह्म ' एवं पठितव्यम्। |
| | १० | आत्मस्तुतिप्रयुक्तम् = ' अहं भुवम् ' इत्यादिना तया आत्मा स्तूयते। आत्मनः स्तुतिः तया प्रयुक्तं प्रेरितम् आदिब्रह्म। |
| ६१८ | १ | प्रत्युपकारः = उपकारनिर्यातनम्। किमर्थमीदृशम् उपकार-निर्यातनम्। यस्मात् यजमानैः इन्द्राय सोमः अतितरां दत्तः। प्रत्युपकारोऽपि अतितरां भवितुमर्हति। ' अथैवमतितरां प्रत्यु-पकाराभिप्रायः किमर्थः। ब्रूते ' एवं शुद्धं वाक्यम्। |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६१८ | ९ | ऋम्भणस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मविदुषी सूक्तेनानेनाऽऽत्मानमस्तौत् । तस्मात् एतत्सूक्तं वागाम्भृणीयम् । वागाम्भृणीये वागाम्भृणिये । इति द्वे अपि रूपे । |
| | ८ | स्तुतिरूपेण = अहं वाक् स्तुतिरूपं गृह्णामि । तेनाहं सर्वैर्देवैः सहभूता सर्वं भवामि । अहमेव सर्वा देवताः । ' स्तुतिरूपेण ' इत्यस्य ' चरामि ' इत्यनेनान्वयः साधीयान् । ग. च. ज. पुस्तकेषु तस्य ' बिभर्मि ' इत्यनेनान्वयः कृतः । |
| ६१८ | | स्तुतिरूपेण हविषा = ८ स्तुतिरेव हविः तेन । स्तुत्या इत्यर्थः । मत्पूर्वकं = अहं पूर्वा यस्मिन् । स्तुतिः पूर्वा । हविः पश्चात् । ' स्तुतिरूपेण हविषा बिभर्मि ' अत्र ' स्तुतिरूपेण ' इदं ' स्तुतिपूर्वकेण ' इत्यस्यापभ्रंशः स्यात् । |
| ६१९ | १ | ' शाखान्तरेषु ' इदं प्रक्षिप्तं भवेत् । नास्यात्र किमपि प्रयोजनम् । भूयिष्ठाः = बहवः । |
| | २ | अल्पशः = क्वचित् क्वचित् । ' ऋक्शाखायाम् आध्यात्मिकस्य ऋचः अल्पाः । शाखान्तरेषु बहवः ' एवं मूलवृत्तिः स्यात् । |
| | ५–६ | ' आशीर्योज्या ' इति याज्ञिकमतम् । |
| | १० | कुत्रेदं प्रतिपादितम् । |
| | ११ | मधुपर्कग्रहणानन्तरं जामाता ' सुचक्षा अहं० ' इति मन्त्रेण यथालिङ्गमङ्गानि स्पृशति = ( मान० गृ० १ । ९ । २९ ) । क्षुत्त्वा जृम्भित्वाऽमनोज्ञं दृष्ट्वा पापकं गन्धमाघ्रायाक्षिस्पन्दने कर्णध्वनने च सुचक्षा इति कर्णाभ्यां मयि दक्षक्रतू इति जपेत् ( आश्व० गृ० ३ । ६ ) । |
| | १४ | कर्मकरणेषु = मन्त्राः कर्मणां करणानि साधनानि । न हि मन्त्रादृते कर्म । |
| | १४ | इतरयोः वेदयोः = ऋक्सामवेदयोः । ' इष्टाशीरेव ' अत्र ' एव ' = अपि । |
| | १५–१६ | देवतेष्टे = देवता = ईष्टे । ' इष्टा ' इति पाठान्तरं ( २९ ) न साधु । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६१९ | १८ | अभियुक्तः = दूषितः। ( अभियोगः = दोषारोपः )। |
| | २३ | यातुधानः = राक्षसः । पारसीकभाषायां जादु = यातुः । नार्सभाषायां जोटुन् = राक्षसः । |
| ६२० | १ | आचिख्यासा = आख्यातुमिच्छा। |
| | ७ | व्यपदेशः = अभिधानं यदितरवस्तुभ्यो विशिष्टवस्तुनो भिन्नतां दर्शयेत्। |
| | १२ | अवातं = वातस्य अभावः। अव्ययीभावः। तत् ब्रह्म। तदा ब्रह्म कस्यापि कारणं न भवति। कार्याणां कारणानां चाभावात्। तदा वातनामकं कार्यं नाऽऽसीत्। ब्रह्म वातं नोदपादयत् तदा। तेन अननाय श्वासोच्छ्वासक्रियायै वातो नाऽऽवश्यकः। वातं विनैव ब्रह्म आनीत्। |
| | १५-१६ | स्वधया = अन्नेन अन्नशक्त्या। |
| | १७-१८ | तस्माद्धान्यन्न = तस्मात् + हं + अन्यत् + न। |
| | १९ | व्यपदेष्टुम् = इदं ब्रह्म विशिष्टं वस्तु इति अभिधातुं नाम्ना दर्शयितुम्। |
| | २३-२४ | सर्वत्र तम एव आसीत्। तमसो भिन्नं किंचिदपि नाऽऽसीत्। |
| | २४ | अप्रकेतम् = अप्रज्ञातम्। प्रकेतं = प्रज्ञातं = विशिष्टं ज्ञानम्। |
| ६२१ | २ | प्रधानं = जगतः उपादानम् उपादानकारणम्। |
| | ३ | पारमर्षं = परमः ऋषिः कपिलः तेन कृतं रचितम्। 'पारमार्थं' (२१)इदं पाठान्तरम्। परमः अर्थः प्रधानम्। तत्संबन्धि सूत्रम्। |
| | ४ | सलिले = स = लिलम्। स = सत्। लिलं = लीनम्। अस्य शब्दस्य पञ्चैव प्रयोगा ऋग्वेदे। एकस्मिन् स्थले सलिलनामा कश्चिद्देवः। अन्येषु स्थलेषु सर्गात् प्राक् अविशिष्टं जगद्बीजम्। अत्रापि स एवार्थ इति भाति। विशिष्टोऽर्थो ज्ञातुमशक्यः। |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६२१ | ५ | तुच्छ्येन = सूक्ष्मीभूतेन कर्मणा । तत् कर्म पटमण्डपसदृशम् । पटानां ( कृतः ) मण्डपः । तुच्छ्येन = त्याज्येन अनिष्टेन ( तमसा) । |
| | ५ | आः (६२० । २१) = आसीत् ( सायणः ) । |
| | ६ | आभु(६२० । २१) = आभवतीति (सायणः) । आसमन्तात् भूतं प्रसृतम् । यत् आभु तुच्छ्येन अपिहितम् आसीत् । |
| | ७ | तपसः = तपोनामा देवः । तस्य महत्त्वेन । अथवा तपोरूपकर्मणो महत्त्वेन । |
| | १६ | सुदेवः = सुभगो राजा । सौभाग्यम् उर्वश्या लाभेन । प्रपतेत् = ऊर्ध्वं गच्छेत् । अनावृत् = अनावर्तमानः पृथिवीलोकं प्रति । परावतो नाम त्रयः स्वर्गलोकाः । तासु परमा उच्चतमा गन्तवै = गन्तुम् । परावतं परमां गन्तवै = पतितश्च दूराद्दूरतरं गच्छेत् (दुर्गः) । अयमर्थः परावच्छब्दस्याज्ञानात्प्रामादिकः । |
| | १८ | अधा = अध अथ अथवा । |
| | १९ | निर्ऋतिनामा नरकसदृशो लोकः । उर्वश्या अलाभे मरणं नरकप्राप्तिश्च । |
| ६२२ | ५ | 'आर्षम् । संशयोत्थापनम्' इति पाठान्तरम् ( २८ )। यदि वा इदमस्मि इति संशय उत्थाप्यते । |
| | ७ | यत् ऽइव इति पदपाठः। 'यदि वा' इति दुर्गः । यत् वस्तु इव इदम् अहम् अस्मि। केन वस्तुना सदृशोऽहमिति न जानामि । |
| | ९ | निण्यः = गूढः प्रश्नः । अयं गूढप्रश्नः । तं प्रश्नं मनसा संनद्धः बुद्धिसाहाय्येन चरामि विवेक्तुं यते । |
| | १४ | आत् इत् = अनन्तरम् । ततः । |
| ६२३ | ९ | अददत् न प्रत्यवेयात् = यस्यान्नं नास्ति स यदि अन्नं न ददाति परेभ्यः तथापि तस्य न प्रत्यवायः दोषः । |
| | ११–१९ | अयमाध्यात्मिकोऽर्थो न स्वाभाविकः । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६२३ | १६ | अत्र 'देवताः' शब्दो द्विवारं प्रयुज्यते। सकृदेव तस्य प्रयोजनम्। देवताः अन्नभोक्त्रीः यदि स पश्येत्। ' यदि०-स्यादिति ' अस्मिन् वाक्ये प्रथमो 'हि' निपातो व्यर्थः। तत्र भुक्तेन = देवताभिर्भुक्तादवशिष्टेन अन्नेन भुक्तेन। अवशिष्टान्न-भक्षणेन केवलाघो न स्यात्। |
| | २१ | अनुक्रमण्यां चतुर्थी ऋगेव जगती। शिष्टास्त्रिष्टुभः। छन्दोनु-क्रमण्यां तु चतुर्थी त्रिष्टुप्। शिष्टा जगत्यः। अस्य सूक्तस्य दिव्य आङ्गिरसो वा ऋषिः। |
| ६२४ | १ | उद्वहनं = विवाहः। |
| | ३ | पुष्करिणी इव = पुष्करिणीसदृशम्। पुष्करिणी = पुष्करयुक्ता लता पुष्करैः संचिता सरसी वा। भोजस्य इदं वेश्म पुष्करि-णीव पुष्करैः परिष्कृतं संस्कृतम् (दुर्गः)। |
| | ३ | देवमानं = दैवतं विमानम्। ( दुर्गः )। किंतु ( ऋ० सं० १०। १३२। ७ ) इत्यत्र यमस्य रथः देवमानमित्युच्यते। देवमानं रथो वा प्रासादो वा। देवमानेव = देवमानमिव = देवसभ-मिव। |
| | १३ | इत् = एव। |
| ६२५ | २–३ | बृहद्देवतायां निदानं दीयते। आर्षानुक्रमण्यामार्षमेव। दुर्गकाले कदाचित् आर्षानुक्रमणी इति द्वयोरपि ग्रन्थयोर्नाम स्यात्। |
| | ९ | परोक्षकृतादीनां मन्त्राणां लक्षणानि उदाहरणानां च निदानानि दत्तानि। लक्षणोद्देशतः = लक्षणैः उद्देशैश्च। उद्देशः = निदानम्। |
| ६२६ | १७ | उत्सन्नयज्ञः = अग्नौ अनुष्ठेयानामङ्गानां बहुलत्वात् प्रमादात अज्ञानाद्वा क्वचित् किंचिदङ्गमुत्सन्नं भवति। अङ्गस्योत्सन्नत्वे यज्ञः पूयते। एतद्दोषपरिहाराय अग्निचित्ये अश्विना इष्टका उपधीयन्ते। |
| | १७ | 'उत्सन्नयज्ञो वा एष को ह तद्वेद यदेतस्य क्रियते यन्न' [मैत्रा० सं० १। ११। ६ ]। इदमुत्सन्नत्वं पुनः पुनराहुतिदानेन |

पत्रं पङ्क्तिः

६२६ १७ निराक्रियते । 'उत्सन्नयज्ञो वा एष संवत्सराद्वा अभ्युत्सन्नयज्ञोऽवरुध्यते संवत्सरादेवैनमध्याप्त्वावरुन्द्धे' ( मैत्रा० सं० ४ । ३ । ३ ) । चातुर्मास्यैः इष्टिभिः इदमुत्सन्नत्वमवरुध्यते । उत्सन्नः = नष्टो बहिष्कृतो वा । सर्वो यज्ञ उत्सन्नः यस्मात् अज्ञानात् प्रमादः अपरिहार्यः । ब्राह्मणे उत्सन्नत्वम् = अङ्गवैकल्यम् । दुर्गमते उत्सन्नत्वम् = मन्त्राणां यज्ञेषु प्रयोगाभावः ।

६,२६ २० उत्सन्नं प्रकरणं प्रयोगश्च येषाम् । कस्यां संहितायामेते मन्त्रा विद्यन्ते कस्मिन् कर्माणि च ते विनियुज्यन्ते इति न ज्ञायते ।

२१ 'वाचस्तोमयोगविनियोगकल्पेषु' इदं दुर्बोधम् । वाचस्तोमयागस्य प्रयोगः मन्त्रविनियोगश्च द्वावपि नष्टौ । अयमर्थः स्यात् । अथवा वाचस्तोमप्रयोगे यथा मन्त्राणां विनियोगो नष्टस्तथा केषुचिद्यागेषु । किंतु वाचस्तोमप्रयोगो नष्टः तत्रत्या मन्त्रा अपि नष्टा इति न श्रुतम् । 'वाचस्तोमप्रयोगविनियोगकल्पेषु' इदं प्रक्षिप्तं भाति ।

२१–२२ इन्द्रो ब्राह्मणो भूत्वा त्वां याजयानीति मनुमुवाच । कतमस्त्वमसि ब्राह्मण इति पृष्टः प्रत्युवाच । किं ब्राह्मणस्य पितरं किमु पृच्छसि मातरम् । श्रुतं चेदस्मिन् वेद्यं स पिता स पितामहः ( मैत्रा० सं० ४ । ८ । १ ) इति ॥ वृत्तौ दत्तमवतरणमशुद्धम् । अस्य श्लोकस्य प्रकरणं ज्ञायते । सोमयागे पात्नीवतो नाम ग्रहः । तस्येदं ब्राह्मणम् । विनियोगश्च तस्मिन्नेव ग्रहे भवितुमर्हति । इन्द्रश्च देवता स्यात् । दुर्गेण किमित्ययं श्लोकोऽवतारित इति न ज्ञायते ।

६२७ १ यज्ञो वै प्रजापतिः । अनिरुक्तया जुहोति । अनिरुक्तो हि प्रजापतिः ( मैत्रा० सं० ३ । ६ । ५ ) । यदनिरुक्तं प्राजापत्यं शंसति । अनिरुक्तो हि प्रजापतिः ( ऐ० ब्रा० २९ । ४ ) । यस्मिन् मन्त्रे देवता न स्पष्टा सोऽनिरुक्तः । प्रजापतिश्च सृष्टेः पूर्वं मूर्तिराहित्यादनिरुक्तः ।

३ सामान्यात् = समानधर्मात् ।

४ अग्निश्चेन्द्रश्च भूयिष्ठभाजौ देवतानाम् । तस्मात् ब्राह्मणश्च

पत्रं पङ्क्तिः

६.२.७ " राजा च भूयिष्ठभाजौ मनुष्याणाम् ( मैत्रा० सं० ४ । ७ । ८ ) ।

१० अग्निर्वै सर्वा देवताः ( मैत्रा० सं० २ । १ । ४ ) । काठ० सं० १० । १ ) । अग्निर्वै सर्वा देवताः । अत्र वैश्यस्यापि देवता ( मैत्रा० सं० २ । ३ । १ ) । ' अत्र वै सर्वा वसति देवता ' इदं कस्यां संहितायां वर्तते इति न ज्ञायते ।

११ ' नाराशंसः ' इति पाठान्तरम् ( २८ ) । निरुक्तपाठस्तु ' नराशंसः ' ( ६२९ । १० ) । नराशंसः अग्निः । नाराशंसो मन्त्रः । ' यज्ञप्रभवत्वात् ' अत्र च. ट. पुस्तकयोः ' विष्णु ' इति प्रान्ते विवरणं लिख्यते ।

११–१२ यज्ञस्य श्रैष्ठ्यं भगवद्गीतायां तृतीयचतुर्थाध्याययोर्निरूप्यते ।

१७ यस्मात् मन्त्रा अनाविष्कृतलिङ्गा अत एव दुर्बोधाश्च यस्माच्च मनुष्या अल्पबुद्धित्वात्तेषां मन्त्राणामर्थं कर्तुं न शक्नुवन्ति तस्मादेते मन्त्रा नाराशंसा इति न शक्यं वक्तुम् । एतेषु नराः स्तूयन्ते इति कथं ज्ञेयम् । इदं दुर्गमतं न ग्रहीतुं शक्यं यस्मात् ' नराशंसः ' इति शब्द एव नरा यस्मिन् आशस्यन्ते स मन्त्रः इति दर्शयति । नाराशंसा मन्त्रा हीना इत्यपि मतं क्वचिद्वर्तते ' नाराशंसैः न शंसेत् ' एवम् ।

२१–२२ गुणपदमयः = विशेषणपदयुक्तः । तत्र स्पष्टं प्रधानपदं न दृश्यते ।

२२ देवतायाः संविज्ञानपदं रूढपदम् । यथा अग्निः इन्द्रः वरुणः इत्येवमादीनि रूढपदानि । संविज्ञानपदस्य व्याख्या ( निरु० ७० । २० ) इत्यत्र । ' अन्यत्समत्र ' ( ३० ) । इदं प्रामादिकम् ( पा० ७ । १ । २९ ) ।

२३ यतः विशेषात् = यस्मात् देवताविशेषप्रख्यापकात् ( २२ ) । अवतिष्ठेत इत्यस्य कर्ता देवतासंविज्ञानपदम् । अन्याभ्यः देवताभ्यः ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६२७ | २४ | गुणपदानि केवलानि विशेषणानि सर्वाः देवताः आश्रयन्ते । तानि सर्वासां साधारणानि । यस्मात् ताः ईश्वराः सर्वं कर्म कर्तुं समर्थाः । |
| ६२८ | १–२ | प्रायःशब्दस्य अधिकारः इत्यर्थोऽन्यत्र न दृश्यते । अन्यच्च 'यद्देवतः स यज्ञो यज्ञाङ्गं वा ' इत्यत्र अधिकार एव । प्रायः-पदेन तस्य पुनरुक्तिः किमर्था । |
| | २ | ' अध्ययनपाठानुक्रमे ' इदं ' यद्देवताधिकारे ' इत्यस्य विवरणं स्यात् । |
| | ९ | बहुलं=बाहुल्येन क्वचित् नतु विस्तृतत्वेन । अयम् आचारो बहुलं विस्तृतः । बहुलशब्दो यास्ककाले प्रधानशब्दवत् नपुंसक आसीत् । अत्र बाहुल्यम् आचारस्य न । 'बाहुल्यस्य भूयस्त्वेन प्रसिद्धिः' अयं दुर्गकृतोऽर्थोऽत्र नावश्यः । बहुलं = भूयः इति बहुलशब्दप्रयोगो लोके प्रसिद्धः । यथा सर्वे अतिथयः सर्वे पितरः तथा सर्वे देवाः न विशिष्टाः अतिथयः पितरो देवा वा। दुर्गकृतोऽर्थो न समीचीनः । 'बहुलाऽस्य' इति च पाठः (२३) अस्य आचारस्य बहुला भूयस्त्वेन प्रसिद्धिः । अयमाचारः प्रायः सर्वत्र प्रचलितः । अयं पाठः साधुः । |
| | ११–१२ | 'देवतान्तात्तादर्थ्ये यत्' ( पा० ५ । ४ । २४ )। देवदेवतायै इदम् इति देवदेवत्यम् । देवाः देवताः अतिथयो देवताः पितरो देवताः । |
| | १५ | निर्वपणं=बलिदानम् । इदं शिष्टं नः अस्माकं देवपितृमनुष्याणां सह साधारणम् । |
| | १७ | बहुदेवतः = वैश्वदेवः ( २९ ) । |
| | २० | मन्त्रा याज्ञा वा दैवता वा । यदा न याज्ञास्तदा दैवताः । तत्र प्रजापतिदेवताकाः नराशंसदेवताकाः कामदेवताकाः प्रायोदेवताकाः इति चत्वारः पक्षाः । |
| ६२९ | २ | प्रवह्लितशब्दस्यार्थो न ज्ञायते । |
| | ११ | तौ=कात्थक्यशाकपूणी । |

पत्रं पङ्क्तिः

१२९ १४–१९ यागा द्विविधाः प्रकृतियागा विकृतियागाश्च । दर्शः प्रकृतियागः । काम्येष्टयो विकृतियागाः । दर्शे सांनाय्य ऐन्द्रो माहेन्द्रो वा । सानाय्ये 'इषे त्वा' इत्यादयो दर्भच्छेदनपरा मन्त्रा आवश्यकाः (१६) । सांनाय्येनेन्द्र इज्यते महेन्द्रो वा । तेन एते मन्त्रा ऐन्द्रा माहेन्द्रा वा (१७) । ते सांनाय्यं संस्कुर्वन्ति ( १६ ) । विकृतियागे नैतदावश्यकम् । एतेषु मन्त्रेषु इन्द्रलिङ्गं महेन्द्रलिङ्गं वा नास्ति ( १७ ) । सांनाय्यः = शृतं क्षीरं दधि च । आदौ क्षीरं हूयते पश्चात् दधि । अयं सांनाय्ययागोऽमावास्यायां कर्तव्यः । ( तै० सं० २ । ५ । ३ ) । अगतश्रीः संवत्सरमिन्द्रं यजेत । ततोऽग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत् । ततो महेन्द्रं यष्टुं योग्यो भवति ( तै० सं० २ । ५ । ४ ) । अयं सांनाय्ययागो येन सोमयागः कृतस्तेनैव कर्तव्यः ( तै० सं० २ । ५ । ५ ) ।

१८ चोदकेन = कल्पसूत्रेण ब्राह्मणेन वा । प्रदिश्यन्ते = विनियोक्तव्या इति निर्दिश्यन्ते । 'प्रजापतये त्वा जुष्टं गृह्णामि । एष ते योनिः । प्रजापतये त्वा' ( मैत्रा० सं० १ । ११ । ४ ) । इदं वाक्यं चोदकम् । कुविदङ्ग इति मन्त्रः (१९) अनेन प्राजापत्यग्रहणे विनियुक्तः । अस्मिन्मन्त्रे प्रजापतिलिङ्गं नास्ति ।

२१ 'ऋषभोऽसि शाक्वरो वषट्कारस्य त्वा मात्रायां सादयामि' ( मैत्रा० सं० १ । १ । १२ ) ।

२२ ऋषभोऽसि शाक्वर इति दक्षिणतो जुह्वाः पूर्णस्रुवं सादयति (मान० श्रौ० १ । २ । ६ । २७ ) । अयं स्रुवासादनमन्त्रः । तस्य स्रौवे आघारे विनियोगः (२३) । प्रजापतये स्वाहेति पूर्णस्रुवं ध्रुवायामवनीय ततो ज्वलत्यग्नौ जुहोति । ( मान० श्रौ० १ । ३ । १।५) ) स्रुवेण प्राजापत्यमाघारमाघारयति ( तै० सं० ३ । ३ । ७ ) । तेनायं मन्त्रः 'ऋषभोऽसि शाक्वरः' प्राजापत्यः ।

१३० १ संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः (अमरः २ । ७ । ४० ) । उपाकर्मविधिः वसिष्ठस्मृतौ ( १३।१–३ ) ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १३० | २ | ब्रह्मयज्ञः = स्वाध्यायः । स्ववेदपठनम् । जपः साविन्न्याः । एतानि सर्वाणि गृह्यकर्माणि । तेषु श्रौतमन्त्रा विनियुज्यन्ते । |
| | २ | नैष्ठिको ब्रह्मचारी आचार्यं परिचरेत् (वासिष्ठस्मृतिः ७ । ३।)। आ शरीरविमोक्षात् (७ । ४) । वेदस्वीकरणे दृष्टो गुर्वधीनो गुरोर्हितः । निष्ठां तत्रैव यो गच्छेन्नैष्ठिकः स उदाहृतः (लघुविष्णुस्मृतिः १ । २४) । नैष्ठिकब्रह्मचारिणो यज्ञादि श्रौतं कर्म विवाहादि गृह्यं च नास्ति । तथापि उपाकरणादयस्तस्यापि क्रियन्ते । |
| | ३ | इदममतरणं दुर्गेण वृत्त्युपोद्धाते दत्तम् ( निरु० २ । ३–९ )। अन्नत्येऽवतरणे केचित्पाठा भिन्नाः । |
| | ६ | प्रत्यवायः=अनिष्टम् । |
| | ११ | नराशंसो यज्ञोऽग्निर्वेति पूर्वमुक्त्वा ( १२७।४ ) अत्र 'सौर्या वा' इति किमित्युच्यते । |
| | १५ | ' अथवा ' इत्यादिरर्थः ( १२७ । २०–२४ ) इत्यत्र न दत्तः । |
| | १६ | तस्मिन्मन्त्रे । अभिसंदधीत = मनसि कुर्यात् । स मन्त्रस्तया देवतया संबद्ध इति मनसि कुर्वीत । ' यद्देवतः स मन्त्रः ' इत्यादेरिदमपरं व्याख्यानं न सरलम् । |
| | १९–२० | देवतानामार्थपत्यसंबन्धात् = देवता यजमानमर्थपतिं कर्तुं समर्थाः इत्यस्मात्कारणात् । |
| | २० | संविज्ञातं = रूढम् । |
| | २१ | ' अधिपतिरपि ' अत्र ' अपि ' शब्दस्य न किमपि प्रयोजनम् । ' अपि ' अपपाठः स्यात् । मूलपाठः ' इति ' स्यात् । अथवा ' कामस्याधिपतिरपि देवता कल्प्यते ' इत्यन्वयः अर्थश्च स्यात् । अत्रापि देवता कल्प्यते नादेवता । |
| | २२ | व्याहन्यते = नोपपद्यते न संगच्छते विरुद्धत्वात् । |
| | २५ | तानि अश्वादीनि सत्त्वानि न अश्वादीनि द्रव्याणि । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १३० | २६ | स्तोतुः ० ० कारिष्यन्ति = स्तोतारम् अभिमतस्य इष्टस्य अर्थस्य पतिं कारिष्यन्ति। इष्टमर्थं दास्यन्तीत्यर्थः। |
| १३१ | १ | विशेषतः = इयं स्तुतिः इयं निन्दा इति। |
| | २ | चित्तिः=ज्ञानशक्तिः। 'वित्तिः' (२६) इति पाठान्तरम्। |
| | २ | अश्वादयः = अश्वः शकुनिः मण्डूकाः (निघ० ९।३)। अक्षादयः = अक्षाः ग्रावाणः रथः (निघ० ९।३)। अथाप्यष्टौ द्वंद्वानि (६२९।१३)। इदं दुर्गेण न व्याख्यातम्। निरुक्तमूले इदं प्रक्षिप्तमिव भाति एतेषु द्वंद्वेषु उलूखलमुसले (२९) हविर्धाने (३०) विपाट्छुतुद्री (३२) आर्त्नी (३१) एतानि अदेवताः। इतराणि चत्वारि देवता एव। अदेवता देवतावत्स्तूयन्ते इत्यस्यानन्तरम् अदेवता एव निर्देष्टव्या आसन्। |
| | ३ | यस्मात् अदेवता देवतावत् स्तूयन्ते तस्मात्। |
| | ३–४ | लक्ष्येण (देवता) लक्षणम् अविरुद्धं संगतम् इति स न मन्येत। |
| | ४–५ | आमन्त्रून् = कविकल्पितान्। ऋषिभिः स्तुत्यर्थमारोपितान्। न स्वाभाविकान्। इवशब्देन काचित् शङ्का प्रदर्श्यते न तु निश्चितं मतम्। |
| | ६–७ | आगन्तवः = अपायिनः अनित्याः। ६–८ इदं विवरणं न क्लिष्टम्। |
| | ९ | 'प्रत्यक्षदृश्यमेतद्भवति' अस्यापि दुर्गकृतोऽर्थः क्लिष्टः। एते अर्था नागन्तुका इतीदं प्रत्यक्षं दृश्यते यस्माद्देवता ऐश्वर्ययुक्ताः। |
| | ११ | हरी इन्द्रस्य रोहितः अग्नेः हरितः सूर्यस्य (निघ० १।१५)। |
| | १३ | 'शिष्यो न मन्यते' अत्र न शब्दो व्यर्थः। 'मन्येत' इति पाठ इष्टः। न एतत् सम्यक् अभिधीयते इति स शिष्यो मन्येत। |
| | १४ | 'प्रत्यक्षदृश्यमेतद्भवति' इत्यादि सर्वमुत्तरम्। देवता महाभागा अष्टसिद्धियुक्ताः। तस्मात्तासामेतेऽर्था नागन्तुकाः। |

| पत्रं | पङ्क्तिः |
|---|---|
| ६३१ | " सिद्धियुक्ता मनुष्या अपि अशक्यानर्थान् संपादयन्ति । किं पुनर्देवाः । एतत्सर्वं प्रत्यक्षं दृश्यते पृथिव्याम् । |
| | १६–१७ ऐश्वर्यं महत् = महदैश्वर्यम् । महान्भागः यस्याः सा महाभागा । तस्या भावः माहाभाग्यम् । एतन्माहाभाग्यम् अणिमादिसिद्धयः ( १७–१९ ) । |
| | २१ देवता एव आत्मा । देवतायाः माहाभाग्यात् प्रत्यक्षदृश्यमेतद्भवति इत्यन्वयः दुर्गमते ' माहाभाग्यात् देवतायाः एकः आत्मा ' इत्यन्वयः । ' एकोऽपि सन् देवतात्मा ' इति दुर्गो ब्रवीति । (६३२।११) इत्यत्रापि तथैव । |
| | २१ प्रकृतिभेदेन = चेतनभेदेन (६३२।११–१३) । अप्रकृतिभेदेन = अचेतनभेदेन ( तथैव ) । वर्धमानः = नानारूपाणि गृह्णानः । |
| | २२–२३ बोभवीति = भृशं पुनः पुनर्वा भवति । |
| | २४ यथा ( प्रथमं ) = इति यथा । |
| | २५ 'छन्दसि दृष्टानुविधिः' इति पातञ्जलमहाभाष्ये वचनम् । वेदे बहूनि शब्दरूपाणि न पाणिनीयव्याकरणानुसारीणि । वेदे यानि रूपाणि एवंविधानि दृश्यन्ते तेषामनुरोधेन विधयः सूत्राणि कर्तव्यानि । अस्य वचनस्य दुर्गेण भिन्नोऽर्थः कृतः । छन्दः लक्ष्यम् । तत्र यावन्ति नामानि तावत्यो देवताः । अन्यथा नामबाहुल्यस्य न कोऽप्यर्थः । |
| ६३२ | १ यावदभिधानम् = अभिधानानि अवधार्य । अव्ययीभावः । यावदवधारणे ( अमर ३ । ३ । २४७ ) । अभिधानसंख्यया देवतानानात्वविधिः । देवता नाना इति कथं विहितं व्यवस्थापितं वा । अभिधाननानात्वेन देवतानानात्वं विहितम् । विधिः = व्यवस्था । देवतानानात्वविधिः = देवतानानात्वव्यवस्था । |
| | २–३ येषु सूक्तेषु संवादो वर्तते तानि संवादसूक्तानि । |
| | ३ 'कया शुभा' इदं पञ्चदशर्चं सूक्तम् (ऋ० सं० १।१६५) । अस्मिन्मरुतामिन्द्रेण संवादः । अगस्त्यलोपामुद्रासंवादो नदीनां |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६३२ | " | विश्वामित्रेण संवाद इत्यादयः संवादा ऋक्शाखायां वर्तन्ते । व्यपदेशः = भेदः । देवताभेदे एव संवादः शक्यः । अयमेव हेतुः देवतानानात्वे । एतद्देवतानानात्वं कथं निराक्रियेत । अपासितुं = त्यक्तुं निराकर्तुम् । गमयन्ति नानात्वम् । |
| | ४ | असंकरवर्तीनि = अमिश्राणि असाधारणानि विशिष्टानि । |
| | ९ | कर्माण्येव लिङ्गानि । अर्थः = प्रयोजनम् उपयोगः । भिन्न-कर्मणां प्रयोजनं दृश्यते । अर्थदर्शनमेव हेतुः । तेन उपबृंहि-तानि = समर्थानि बलवन्ति । एतानि उपयुक्तानि कर्माण्येव हेतुः त्रित्वे । |
| | १० | अपरिहीणं = ऐश्वर्यं न केनापि अंशेन ऊनीभवति । |
| | १२–१३ | यद्यपि आत्मा एकः तथाऽपि स चेतनभेदैः अचेतनभेदैश्च आत्मानं विकर्तुं समर्थः । चेतनरूपेषु अचेतनरूपेषु च विकरणं धर्मः विद्यते अस्य । |
| | १३ | विकुर्वतः अस्य एकस्य देवतात्मनः (११) । |
| | १४ | प्रत्यङ्गानि = अङ्गानि । |
| | १९ | महता देवतात्मना । |
| | १६ | व्यतिरिच्यन्ते = भिन्नानि भवन्ति मूलद्रव्यात् । 'अतिरिच्य-न्ते' (२७) इति पाठभेदः । |
| | १७ | वा = च । अधिष्ठानम् = अत्र आत्मा । |
| | १८ | प्रत्यधिष्ठानं = वर्तमानमधिष्ठानमभिलक्ष्य तत्पुरतः कृतम् अन्यत् अधिष्ठानम् । |
| | २० | अयमङ्गप्रत्यङ्गभेदः क्लिष्टः अनवद्यश्च । |
| | २१ | व्यूहं = विस्तरं प्रपञ्चं विकरणम् । |
| ६३३ | ३ | वक्ष्यति (१००७ । १७–२० ) इत्यत्र । १००७ अत्र 'स एष' (४) तत्र 'अथैष' (१७) । अत्र 'सत्तालक्षणः' (९) । तत्र 'सत्त्वलक्षणः'(१८) तत्र 'तद्ब्रह्म' इत्यस्यानन्तरं 'तत्सत्यं० |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १३२ | ” | तच्छुक्लं' इत्यधिकम् । अत्र 'स भूतात्मा' (९) । तत्र 'तामिश्रो भूतात्मा' (१९) । |
| | ८ | प्रकृतेः यानि भूमानि बहुत्वानि तैः सत्त्वानाम् अनन्यविषयत्वम् । प्रकृतिभूमानि एव सत्त्वानि । प्रकृतिभूमभ्यो न भिन्नानि । 'सत्त्वानां प्रकृतिभूमभिः ऋषयः स्तुवन्ति' इदं दुर्बोधम् । किं स्तुवन्ति । सत्त्वानां स्तुवन्ति इत्यशुद्धं वाक्यं स्यात् । सत्त्वानि स्तुवन्ति इति शुद्धम् । सत्त्वानि प्रकृतिभूमभिः ऋषयः स्तुवन्ति इति वाक्यं चेत् अर्थः सुलभः । बहोर्लोपो भू च बहोः (पा० ६ । ४ । १५८) इति सूत्रेण भूमन् । भूमा = बहुत्वम् । भूमभिः = महिमभिः । प्रकृतेः भूमानः महिमानः सत्त्वेषु आरोप्यन्ते । यदा ऋषयः सत्त्वानि स्तुवन्ति तदा तेषु ते प्रकृतिगुणान् आरोपयन्ति । भूमन् महिमन् गरिमन् इत्यादय इमनन्ताः शब्दाः पुंलिगाः न नपुंसकाः । |
| | ९ | द्यौः अन्तरिक्षं पृथिवी इत्यादयः कारणस्य महिमानः महान्ति रूपाणि । |
| | १० | द्यौस्ते पृष्ठमिति मन्त्रं पिण्डोपरि पदं दधतमश्वम् अस्पृशंस्तिष्ठन्नध्वर्युः दक्षिणकरम् अश्वस्य पृष्ठे धारयन् पठति (कात्या० श्रौ० १६ । २ । १९) । अग्निचित्तौ गर्तखननेऽयं विधिः । तत्राश्व उच्यते ' द्यौस्ते पृष्ठम् ' इति । |
| | १० | ' सधस्थम् ' इत्यस्य स्थाने 'शरीरम्' (२७) इति पाठान्तरम् । तत् मैत्रायणीतैत्तिरीयवाजसनेयकठशाखासु नोपलभ्यते । सधस्थं = सहस्थानम् । अग्निना सह निवासस्थानम् । |
| | १३ | प्रकृतिः आत्मा स्वयमेव । सर्वाणि स्थावरजंगमानि विशिष्टवस्तूनि प्रकृतेः आत्मनः अभिन्नानि । आत्मैव तेन तेन रूपेण अवस्थितः । |
| | १५ | अदेवता इति अभिमतम् । यत् अदेवतकमिति लोका मन्यन्ते तत् । |
| | १५ | 'वैश्वदेवस्य सिद्धस्य सायं प्रातर्बलिं हरेत् (मान० गृ० २ । १२) तत्र पृथक् पृथक् बलिदानमुपदिश्यते ऋक्षेभ्यः पिपीलिकाभ्यः |

पत्रं पङ्क्तिः

१३३ १६ पिशाचेभ्यः शैलेभ्यः पन्नगेभ्यश्च बल्यर्पणम् (मान० गृ० २। १२। १७)।

१७ नलोपः प्रातिपदिकान्तस्य (पा० ८।२।७) इत्यनेन यथा राज्ञो भावः राज्यं तथा सर्वनाम्न्याः भावः सार्वनाम्यं न तु सार्वनाम्न्यम्। प्रकृतिः सर्वनाम्नी। 'भस्याढे तद्धिते' इत्यनेन वार्तिकेन सर्वनाम्नी इत्यस्य पुंवद्भावः। छ. त. द. ग. च. ज. पाठः 'सार्वनाम्यम्' एव।

यस्मात् प्रकृतेः सर्वनामता यस्मात् सर्वाणि नामानि प्रकृतेरेव तस्मात् सर्वाणि सत्त्वानि प्रकृतिरूपाणि। 'प्रकृतिः' सर्वेषु 'नता' (२०) इति दुर्गकृतोऽर्थः। यदि अयमर्थः तर्हि स माहाभाग्ये अन्तर्भूतः। प्रकृतिः महाभागा समर्था। अत एव सर्वेषु वस्तुषु नता। सर्वाणि सत्त्वानि प्रकृतिरूपाणि। किंतु 'प्रकृतिसार्वनाम्याच्च' अयं पूर्वस्मात् अपरो हेतुः। सर्वेषां सत्त्वानां नामानि प्रकृतेरेव। अश्वः अक्षः इत्यादयः प्रकृतिनामान्येव।

१९ नतिमात्रं = नतिरेव। नाम नतिः एव नान्यत् किंचित्। नतिः नाम नमनं संज्ञा एते समानार्थाः शब्दाः। 'न संज्ञा' (३०) इति च. पाठः। न संज्ञा = नाम न कस्यचित् विशिष्टपदार्थस्य संज्ञा। मनुष्याश्वादीनि नामानि सर्वेषां मनुष्याश्वादीनां साधारणानि।

२० सर्वत्वेन नता = सर्वैः पदार्थैः प्रकृतिः नमति परिणमते। सर्वे पदार्थाः प्रकृतेरेव परिणामाः। प्रकृतेः सर्वनाम प्रकृतिसर्वनाम। तद्भावः प्रकृतिसार्वनाम्यम्। अत्रोत्तरपदवृद्धिः केन सूत्रेण।

२२ देवता एव प्रकृतिः इति समासे 'यस्मात् देवताप्रकृतिः माहाभाग्ययुक्ता' इत्यन्वयः। यदा देवता प्रकृतिः इति पृथक् असमासघटितौ शब्दौ तदा 'यस्मात् माहाभाग्ययुक्ता देवता प्रकृतिः' इत्यन्वयः।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६३३ | २३ | ' प्रकृतिसार्वनाम्यात् ' इत्यस्यायमर्थः स्यात् । सार्वनाम्यं = सर्वनामावस्था । यथा अहं त्वं सः इत्यादीनि सर्वेषां वस्तूनां नामानि न मनुष्याश्वादिवत् विशिष्टजातीनां तथा प्रकृतिः सर्वेषु पदार्थेषु वर्तते । प्रकृतिं विना परिणामाः कथं स्युः । ' प्रकृतिसार्वनाम्याच्च ' इत्यस्य संबन्धः ' इतरेतरजन्मानो भवन्ति ' इत्यनेन स्यात् । देवा इतरेतरजन्मानः कथं भवन्ति । यस्मात् प्रकृतिः सर्वेषु पदार्थेषु वर्तते तस्मात् इन्द्राग्न्यादयः कदाचित् प्रकृतिः भवन्ति कदाचित् विकृतिः । |
| | २४ | अभिहितम् ( ६३१ । १०–१३ ) । ' इन्द्रादीनां हारिरोहितादीनि आगन्तूनिव अर्थान् मन्यमानः मनुष्याश्ववत् ( तेषाम् ) अनित्यत्वं ( च ) अवेत्य ( इदं ) सम्यक् नाभिधीयते इति स न मन्येत ' इत्यन्वयः । नेदं वाक्यं सुरचितम् । |
| ६३४ | २ | इति यदभिहितम् अत्र अस्मिन् विषये । अत्र = तदन्तरेण । |
| | ६ | ' इतरेतरजन्मानः ' इत्यस्य ' इतरेतरप्रकृतयः ' इति विवरणं प्रान्ते लिखितं वृत्तौ अन्तर्भूतं स्यात् । |
| | ७ | मनुष्याणां = मनुष्येषु । देवतानां ( ९ ) = देवतासु । ' देवानां ' ( २७ ) इति पाठान्तरम् । देवताशब्दो देवशब्दात् पूज्यतरः । |
| | १० | सायमुपस्थानस्य किं कारणम् इति प्रश्नः । तस्योत्तरम् ' असौ वा आदित्यः सायमासुवति ( मैत्रा० सं० १ । ९ । ७ ) । आसुवति = प्रसूते ( अग्निम् ) । अन्धकारापनोदायाग्निः प्रज्वाल्यः उपस्थेयश्च । एषः अग्निः प्रातः प्रसुवति आदित्यम् । तस्मात् असौ अग्निः सूर्यप्रकाशकारणमिति नोपस्थेयः । प्रसवति ( २९ ) इति प्रामादिकः पाठः । प्रसुवति = प्रसूते । |
| | १२ | अदितेर्दक्षो अजायत दक्षाद्वदितिः परि । |

| पत्रं | पङ्क्तिः |
|---|---|
| १३४ | १३ अध्यात्मे = शारीरकविषये । कोष्ठे भवः कोष्ठ्यः । कोष्ठे अन्नपाकायाग्निर्विद्यते । नादः = नादरूपः । कोष्ठ्यादग्नेर्नाद इन्द्रः कथं जायते इति न ज्ञायते । सर्वा बलकृतिः इन्द्रस्यैव । मन्थनं बलकृतिः । इदं वचनं कस्यामुपानिषदि कस्मिन् ग्रन्थे वेति न ज्ञायते । 'अग्नेर्वा आदित्यो जायते' ( ऐ० ब्रा० ४० । २८ ) । तत्रैव 'वायोरग्निर्जायते । प्राणाद्धि बलान्मथ्यमानोऽधिजायते' । 'अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषो येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यदेतत्कर्णावपिधाय शृणोति' ( मैत्रायण्युपनिषद् २ । ८ ) । सर्वो नाद इन्द्र एव । कोष्ठाग्निरन्नं पचति । तदा नाद उत्पद्यते । अयं नाद इन्द्रः । तस्मादग्नेरिन्द्रो जायते । |
| | १६ आगन्तवः = अनित्याः । यद्येतेऽर्था देवानामपि आगन्तवः तर्हि किं स्यात् । माहाभाग्यहानिः कथं भवेत् । मनुष्यवत् देवा अपि अन्यानर्थान् संपादयेयुः । दुर्गकृतम् 'आगन्तूनिवार्थान्' इत्यस्य विवरणं क्लिष्टम् । |
| | २१–२२ देवाः ईश्वराः । अर्थाः ईशितव्याः ईश्वरैः । देवाः ईश्वरा इति कथं ज्ञेयम् । येषामर्थानां ते ईशते तैर्विना ऐश्वर्यज्ञानमशक्यम् । ऐश्वर्यं प्रख्यार्तिं न इयात् = ऐश्वर्यं जनैर्न ज्ञायेत । |
| | २६ उक्तः अस्मिन्नेव खण्डे । सर्गस्थितिलयाः एताः तिस्रोऽवस्थाः । स्थितौ उपात्तसर्वमूर्तिः प्रलये उपरतसर्वमूर्तिः । सर्गकाले षोढा०० बिभर्ति इत्यन्वयः । उपात्ताः स्वीकृताः सर्वाः मूर्तयो येन । |
| | २७ षोढा = जायते इत्यादयः षड्भावविकाराः ( निरु० पत्रं १९ । १९–२० ) । सर्गकालात् प्राक् आत्मा भावाख्यः सन्मात्रः एव । किमर्थं जायन्ते । कर्मार्थम् । तैरपि कर्माणि कर्तव्यानि इति ते जायन्ते । 'उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्' ( भ० गी० ३।२४ ) । किं स्वत एव जायन्ते । न । आत्मनः जायन्ते । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६३९ | २ | कामकारः = इच्छा स्वेच्छा। |
| | ३ | योगेन। समाधिना आत्मानं पश्यन्तः ततः तस्मादात्मनः कामकारतः स्वेच्छया एव। |
| | ४ | तेषां मनसि वर्तमानः संकल्पः विचारो निश्चयो वा। संकल्पम् अनुविधत्ते अनुकरोति। कर्म संकल्पानुविधायि। यादृशः संकल्पः तादृशं कर्म। कर्मणः अनुरूपं कर्मसंपादनाय यदवश्यं ( साधनं ) तत्। कार्यकारणं = कार्यसाधनम्। कार्यकरणम् इति इष्टः पाठः। एतत् साधनं शरीरादि तत् कस्मात् उत्पद्यते। आत्मनः। कर्मकरणार्थं यदवश्यं शरीरादि तत् आत्मनः परमात्मनः उत्पद्यते। परमात्मा तेभ्यः कर्मानुकूलानि साधनानि ददाति। मनुष्यादीनां जन्म प्राक्तनकर्मायत्तम्। देवानां स्वेच्छायत्तम्। |
| | ७ | आत्मा तेषां संकल्पान् अनुविधत्ते। 'आत्मैवैषां रथः' इत्यादि कस्यामुपानिषदि। |
| | ८ | देवस्य देवस्य = सर्वेषां देवानाम्। देवानां सर्वं सर्वाणि रथादीनि वस्तूनि आत्मैव। |
| | १० | इति यत् उक्तं ( ८ ) एतत्। इमाः = अश्वादीनि सत्त्वानि अक्षरथप्रभृतीनि च द्रव्याणि। |
| | ११-१२ | रथादिरूपेण प्रकृतिभेदेन = रथादयः प्रकृतेरेव भेदाः। देवताया इमे रथादयो विकारा एव साध्यः अर्थः। देवतैव प्रकृतिः। |
| | १३ | सा देवता स्तोतुः आशासितम् अर्थं तेन रथादिरूपेण साधयितुम् अलं समर्था। सः अर्थः तस्याः देवतायाः स्तुत्या समवेतः युक्तः। मन्त्रे स्तुतिः आशासितोऽर्थश्च द्वे अपि वर्तेते। |
| | १९ | तिस्रो देवताः तेनैव रूपेण आत्मानं धारयन्ति = तत्तद्रूपं गृह्णन्ति। अस्मिन् खण्डे अयं विचारक्रमः। यदा मन्त्रेषु देवता न निर्दिश्यते तदा का देवता। यज्ञे यज्ञाङ्गे वा या देवता सा इत्युत्तरम्। यज्ञे अप्रयुज्यमाना अपि मन्त्राः सन्ति। तेषु |

पत्रं पङ्क्तिः

१३९ १ देवताया अनिर्देशे का देवता। प्रजापतिः याज्ञिकमते। नराशंसः नैरुक्तमते। अथवा प्रयोक्तुः तत्क्षणे या इष्टा देवता सा। अथवा। प्रायोदेवता ५। काऽपि देवता सर्वा देवताः। यथा देवदेवत्यमित्यादिषु सर्वे देवाः सर्वे अतिथयः सर्वे पितरः। किं कारणं प्रायोदेवतेति। यस्मात् मन्त्रो याज्ञो वा दैवतो वा भवितुमर्हति। याज्ञदैवतो मन्त्र इति प्रायोदेवता इत्यादिकस्य कारणम् इति शब्दप्रयोगात्। न तु निरुक्तकारस्य निश्चितं मतं यथा दुर्गो मन्यते। अदेवताः यत्र स्तूयन्ते तत्र का देवता। एते अश्वादय अर्थाः न देवताः किंतु देवतानाम् उपयुक्ताः बाह्याः अर्थाः। यथा रथादयः मनुष्याणाम्। आगन्तवः बाह्या अर्था इति प्रत्यक्षमेतत् दृश्यते। एते न मनुष्याः किंतु मनुष्योपयुक्ताः पदार्थाः तथा देवतानाम्। तस्मात्ते स्तुतिं नार्हन्ति इति स आक्षेपको न मन्येत एतादृशम् आक्षेपं न अरोपयेत्। देवता महाभागा यावत्किंचिद्रूपं ग्रहीतुं समर्थाः। आत्मा एक एव। सर्वे देवाः तस्य भेदाः। अपि च यदा सत्त्वानि द्रव्याणि च स्तूयन्ते तदा तेषु सत्त्वेषु द्रव्येषु च प्रकृतेः भूमानः महान्तो गुणा आरोप्यन्ते। तस्मात् एतासु स्तुतिषु आत्मैव स्तूयते। प्रकृतिः (आत्मा)सर्वनामसदृशी सर्वेषु वस्तुषु वर्तते। अस्मादेव कारणात् देवा इतरेतरजन्मानः। किमर्थं देवा अजाः सन्तः जायन्ते। कर्मकरणार्थम्। किं स्वतः जायन्ते। न। आत्मनः एव जायन्ते। एवम् आत्मैव सर्वं वस्तुजातं यद्देवैरुपयुज्यते। एतस्यां विचारसरण्यां अस्माभिः कृताः केचिदर्थाः पूर्वत्र दत्तेभ्यो भिन्नाः।

१३१ १३ 'मा नो॑ मि॒त्रो वरु॑णो अर्य॒मायुरिन्द्र॑ ऋभु॒क्षा म॒रुतः॒ परि॑ ख्यन्। यद्वा॒जिनो॑ दे॒वजा॑तस्य॒ सप्तेः॑ प्रव॒क्ष्यामो॑ वि॒दथे॑ वी॒र्या॑णि' ॥ एते अश्वं स्तुवन्तीति इन्द्रादयो देवा अस्मान्मा निन्दन्तु। अत्राश्वः स्तूयते। किंतु स्तुतोऽपि स कमर्थं दद्यात्।

१४ व्याहन्यमानम् = अयुक्तम्।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १३६ | १९ | आक्षिप्ते = आक्षेपे कृते । |
| | १६–२१ | एतत्सर्वं पूर्वखण्डवृत्तौ नोक्तम् । ऋक् ब्राह्मणवाक्य च अत्रावतारितानि । |
| | २० | एतानि वाक्यानि आत्मा एक एव इति प्रतिपादयितुं समर्थानि। दुर्गेणेदं पूर्वस्मिन् खण्डे नोक्तम् । उन्नीय = साधयित्वा । |
| | २२ | आत्मनः शरीरे तिष्ठतां जीवन्मुक्तानामित्यर्थः । |
| | २४ | अन्यत् = व्यतिरिक्तम् । |
| १३७ | १ | अभिधेयं = वस्तु । सत्त्वाविशेषात् = यस्मात् सर्वाणि सत्त्वानि आत्मैव । |
| | २ | यत् अभिधेयं वस्तु अभिधानं नाम अभिदध्यात् निर्दिशेत् । आत्मनो भिन्नं वस्तु निर्देष्टुमशक्यम् ।<br><br>पुरुषार्थः चतुर्विधः । स एव निश्रेणी सोपानपरम्परा । प्रथमं निश्रेणिफलकम् = यज्ञः । |
| | ३ | अधियज्ञेन उपक्रमः ( १ ) । तत्र अधियज्ञे यदा अवधानं दीयते तदा अधिदेवताविचारः प्रसज्यते । अस्य यज्ञस्य काऽधिदेवता इति प्रश्न उत्पद्यते । |
| | ३–४ | किंचित् अध्यात्मं विदुषः = अल्पम् आत्मज्ञानं यस्य । किंचित् इत्यनेन ज्ञानम् अत्यल्पं शून्यमिति व्यज्यते । 'अविदुषः' ( २४ ) इति ग. ज. पाठः । |
| | ५ | अधियज्ञं = यज्ञम् । |
| | ६–७ | अभिधानभेदः स्तुतिभेदश्च । |
| | ७ | यथाग्रहं = ग्रहः संस्कारः । कर्मविद्यया संस्कारः तदनुरूपम्। ' पृथगिव ' इवशब्देन पृथक्त्वं न सत्यम् । 'पृथगिव' इदं ' पृथगात्मनो देवताः पश्यतः ' ( ४ ) इत्यनेन किंचिद्विरुद्धम् । ' इव ' शब्दोऽनवश्यः । ' पृथगात्मनो देवताः पश्यतः ' इदं ' पृथक् देवताः प्रकाशन्ते ' इत्यास्मिन् अन्तर्भूतम् । अत एव तत्र नावश्यम् । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६३७ | ९–१० | आत्मानं यजते इति आत्मयाजी। देवान् यजते इति देवयाजी। 'श्रेया३न्' अत्र प्लुतिः विचारणायाम् (पा० ८।२।९७)। प्रमाणैस्तत्त्वपरीक्षणं विचारणा। नैकस्मिन्नपि पुस्तके प्लुतिचिह्नं वर्तते। |
| | ११ | ब्रह्म = ऐकात्म्यम्। देवता एव वृक्षः। तस्य मूलं ब्रह्म ऐकात्म्यं वा। |
| | १२ | विधिरेव प्रधानं येषाम्। 'प्रधानात्' (२८) इत्यपपाठः। प्रति अवभासते ब्रह्म। ब्रह्मणो नानाभेदा याज्ञिकान् प्रति अवभासन्ते। यावन्ति अभिधानानि तावत्यो देवताः। |
| | १३ | मध्यमोऽवशिष्यते स नैरुक्तान् प्रति अवभासते। (६३१—६३२) इत्यत्र त्रयः पक्षाः उक्ताः। तत्र नैरुक्तपक्षो मध्यमः। |
| | १७–१८ | 'स्थानभेदात् ० ० दर्शनाच्च' इदं सूत्रवद्भाति। |
| | १८ | लिङ्गं त्रिधा हि भवति (२८) = स्थानत्रयदर्शकं लिङ्गं विद्यते। विश्वकर्मा (१) गन्धर्वः (२) ओषधीनां जनिता (३)। अत्र त्रित्वेऽपि अग्नीन्द्रवायुसूर्याणां नामानि न विद्यन्ते। एते त्रयः केऽपि अन्ये देवाः स्युः। 'विश्वकर्मा = आदित्यान्तर्गतो ब्रह्मा। गन्धर्वः = आग्निः। तृतीयः पर्जन्यः' इति महीधरः। तृतीयः सोम इति सायणः। 'विश्वकर्मा वेदमानिष्ट' इति मैत्रायणीकाठककापिष्ठलसंहितापाठः। इतरो वाजसनेयतैत्तिरीयपाठः। दुर्गः प्रायो मैत्रायणीपाठान् पठति। अस्यामृचि त्रयो देवा इति प्रत्यक्षलिङ्गम्। प्रत्यक्षं = स्पष्टम्। |
| ६३८ | १ | 'अजस्य नाभा०' इदं किमर्थं पठितम्। एतत् ऐकात्म्यमेव दर्शयति। वैश्वकर्मणसूक्तस्येयमृक्। |
| | | अन्यार्थदर्शनात् = 'त्रीन् महिम्नोऽसृजत' इति त्रित्वं विविधनामोत्पत्तिदर्शनार्थमुक्तम्। तथा छान्दोग्योपनिषद्वाक्यं(४–९) यज्ञेऽनुष्ठीयमाने ब्रह्मनामा ऋत्विक् मौनमाचरेत्। मौनभङ्गे च प्रायश्चित्तं कुर्यात् इति प्रायश्चित्तविधानार्थम्। एतयोर्वाक्ययोः त्रित्वप्रस्थापनं नोद्देशः। |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६३८ | ५ | प्रावृहत् = उद्धृतवान् । |
| | ७ | प्रकृतेः स्वरूपग्रहणात् = यदा प्रकृतेः आत्मनः स्वरूपं गृह्यते । प्रकृतिः स्वरूपेण एकैव । तस्याः त्रित्वे स्थानभेदो हेतुः । 'प्रकृत' (२८) इति च. पाठः । प्रकृतः = आत्मा । तस्य स्वरूपम् एकत्वम् । यदि आत्मा एकः तर्हि तस्य त्रित्वे को हेतुः । स्थानभेदः । |
| | | वशा स्त्री करिणी च ( अमर ३ । ३ । १६ ) वशा । वन्ध्या-सुतायोषास्त्रीगवीकरिणीषु च ( मेदिनी ) । वशा = गौः । |
| | ९–११ | पृथिवी अन्तरिक्षं द्यौः वशाः गावः । |
| | १९ | 'अर्थभेदेऽपि' अत्र व्यर्थम् । 'अर्थाभेदेऽपि' इति मूलपाठः स्यात् । यद्यपि अभिधानानाम् एकः अर्थः तथाऽपि यावन्ति इत्यादि । |
| | २१ | प्रतिज्ञा 'तिस्र एव देवताः' इति । |
| | २२–२३ | अभिधाने भिन्ने तथाऽपि अभिधेयम् अभिन्नम् । अभिधान-भेदेऽपि अभिधेयस्य अभेदात् इति सुवचम् । अथवा । 'अभिधानमात्रभेदे अभिधेयस्य चाभेदे' एवम् । अभिधाने एव भिन्ने । न अभिधेये । 'अपि' शब्दो व्यर्थः । |
| | २३ | 'अस्य' इति उपात्ते षष्ठ्याः एकवचने । उपात्त०० वचनः ( ३१ ) इति पाठान्तरम् अशुद्धम् । यस्मात् विशेष्यः वायुर्वा इन्द्रो वा न षष्ठ्येकवचनः । उपपत्तेः ( ३० ) = विग्रहेण । अत्रापि विशेष्ये न षष्ठ्येकवचनम् । 'षष्ठ्येकवचनः' अयं कथं बहुव्रीहिः स्यात् । 'षष्ठ्याः एकवचनं यस्य' इति नैव विग्रहः । |
| ६३९ | २ | निरुच्य = निर्वचनं कृत्वा । |
| | ३ | आ प्यायस्व = वर्धस्व । |
| | ५–६ | सोमपानम् इन्द्रशब्दात् अन्यत्र न संभवति । मुख्याभिसंब-न्धिनो मध्यमात् = इदं दुर्बोधम् । 'मध्यमः मुख्याभिसं- |

पत्रं पङ्क्तिः

१३९ ५–६ 'मध्यमी' अस्य कोऽर्थः । मुख्येन (इन्द्रेण) अभिसंबन्धो विद्यते अस्य । को मध्यमः । न इन्द्रशब्दः किंतु इन्द्रः । 'मुख्याभिसंबन्धिनो मध्यमात् = इन्द्रात्' इति सुबोधम् (१३–१४)।

७ अमृष्यमाणः वृत्तिम् । मध्यमात् = इन्द्रात् । इन्द्रः वायुः एतौ न पर्यायौ इति यो वदेत् तम् आक्षिपन् = आक्षेपं दोषम् उद्भाव्य ।

१० इन्द्रस्यायम् ऐन्द्रः । वायुः इन्द्रस्यानुचरो न स्वतन्त्रः ।

१०–११ 'अस्यैन्द्रस्य वायो००० वहेयुः' एतत् (निरु० ८२३ । १३) इत्यत्र वर्तते ।

११–१२ वायोर्विशेषणम् इन्द्रः । इन्द्रस्य वायुः नान्यस्य । एवं स्वस्वामिभावः । वायुः स्वः इन्द्रः स्वामी ।

१५ या प्रथमा संस्कृतिर्यज्ञे अस्मिन् यः परमो बृहस्पतिश्चिकित्वान् । यो मध्यमो वरुणो मित्रो अग्निस्तस्मा इन्द्राय सुतमाजुहोत तस्मै सूर्याय सुतमाजुहोत (मैत्रा० सं० १ । ३ । १२) ॥ क. ख. आदिपुस्तकेषु पठिता ऋक् (२९) वाजसनेयसंहितातः (वा० सं० ७ । १४–१५) । तस्यां 'मध्यम' शब्दो नास्ति ।

१६–१७ शुक्रामन्थिनौ असुराणां पुरोहितौ आस्ताम् । तौ अनेन हवनमन्त्रेण निरस्येते ।

२० 'कर्मणा यमभिप्रैति स संप्रदानम्' (पा० १ । ४ । ३२) । दानस्य कर्मणा यमभिप्रैति स संप्रदानसंज्ञः स्यात् । अत्र इन्द्रशब्दः संप्रदानं यस्मात् तस्मै सुतं हूयते । 'चतुर्थी संप्रदाने' (पा० २ । ३ । १३) । तस्मात् इन्द्रशब्दः चतुर्थ्यन्तः ।

मध्यमाय इन्द्राय = यो मध्यमः०० तस्मै इन्द्राय (१७–१८) ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६३९ | २१ | मन्त्रान्ते संप्रदानेन सामानाधिकरण्यात् = यो मध्यमः ' अस्य चतुर्थपादे संप्रदानेन इन्द्रशब्देन सामानाधिकरण्यं ' तस्मै इन्द्राय ' इति । तस्मात् मध्यमः इन्द्रः । |
| | २३–२४ | प्रसिद्धतरत्वात्संबन्धस्य = पार्थिवं ज्योतिः अग्निः उत्तमं सूर्यः । एवं पार्थिवोत्तमयोः मुख्यतरः संबन्धः अग्निसूर्यशब्दाभ्यां न जातवेदःप्रभृतिभिः । |
| | २४ | पार्थिवस्य ज्योतिषः जातवेदःप्रभृतिभिः शब्दैः संबन्धो गौणः अग्निना मुख्यः । |
| ६४० | ३ | 'इति'शब्दो व्यर्थः । |
| | ९ | अवैषम्येण = वैषम्यं भेदं न दर्शयित्वा । समतया । एकेनैव प्रकारेण । |
| | १२ | वायुः सदा वहति । एवं मध्यमस्य क्रिया व्यापारो वा अनुपरतः । |
| | १३ | इतरे ज्योतिषी अग्निसूर्यौ । तद्वत् । अग्नेः दहनक्रिया तथा सूर्यस्य प्रकाशनक्रिया अनुपरता । |
| | १४ | 'अपरिहापितः' इदं 'परिहीणः' इत्यस्य णिच् । मध्यमः मुख्येन इन्द्रशब्देन मुख्यसंबन्धं परिजहाति । कश्चिदन्यः मध्यमम् एतं संबन्धं परिहापयति । मध्यमः संबन्धं परिहाप्यते परिहापितो भवति वा । मध्यमस्य इन्द्रशब्देन संबन्धः अपरिहापितः । अत्र णिच् किमर्थः । 'अपरिहीणः' इत्येव शुद्धम् । |
| | २१ | माहाभाग्यत्वेन ( ३१ ) अयं ग. च. ज. पाठः अशुद्धः । 'य त्व' द्वावपि भाववाचकौ प्रत्ययौ । |
| ६४१ | १ | प्रतिस्थानं स्थाने स्थाने भिन्नानि नामानि भवन्ति । किंतु तस्याः तस्या. देवतायाः स्वा प्रकृतिः न भिद्यते । यथा ऐकात्म्यम् एकत्वं न जहाति । |
| | ६ | 'पञ्चर्त्विजस्त्रीणि त्रीणि कर्माणि कुर्युः (कात्यायनश्रौतसूत्रं २४। ४ । ४१ ) होता आध्वर्यवपोत्रीये च ( ४२ ) उद्गाता नेष्टृच्छावाकीये ( ४३ ) मैत्रावरुणो ब्रह्मत्वप्रातिहर्त्रे ( ४४ ) |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १४१ | ६ | प्रस्तोता ब्राह्मणाच्छंसिग्रावस्तोत्रीये ( ४९ ) प्रतिप्रस्थाता आग्नीध्रोन्नेत्रे ( ४६ ) कुण्डपायिनामयनं पौर्णमासीदीक्षम् (२१) अत्सरुकाः = कुण्डप्रतिरूपकाश्चमसाः ( ४० )'। एतादृशैः कुण्डसदृशैश्चमसैः सोमं पिबन्ति। तस्मात्ते कुण्डपायिनः। तेषाम् अयनं ( = सत्रं ) संवत्सरं यावत्। अत्र ऋत्विजः पञ्चैव। न चत्वारो नापि सप्त। सप्त दीक्षन्ते इति दुर्गोक्तिः किमाधारा। |
| | ७ | यस्मात् पञ्च त्रीणि कर्माणि कुर्वन्ति तस्मात् ते पञ्चदश न षोडश। एते ( षोडशर्त्विजः ) एवाऽऽहिताग्नय इष्टप्रथमयज्ञा गृहपतिसप्तदशा दीक्षित्वा समोप्य अग्नीन् तन्मुखाः सत्राण्यासते ( आश्व० श्रौ० ४। १ )। यास्कमते एक एव चतुर्णां कर्म करोति। अयं को यागः स्यात्। अप्येकस्य सतः ( ६ ) = एकस्यापि सतः। |
| | १० | यः क्षेत्रे धान्यं लुनाति स एव तत्पुनीते। तस्माद्यो लावकः स एव पावकः। स एव पाचकः परिवेष्टा भोक्ता वा भवेत्। कारक ( २९ ) इत्यादि पाठान्तरम्। कारकः ( कर्ता ) लावकः पाचकः इत्यादिर्भवति। |
| | ११–१२ | संविज्ञातपदत्वे = संविज्ञानपदविषये। 'संविज्ञात० ०तेषां कारकादिशब्दैः०' ( २७–२८ ) इति पाठान्तरम्। 'अग्न्यादीनां संज्ञाशब्दानां संविज्ञातपदत्वे तु तेषाम्' इत्यन्वयः। अग्न्यादयः संज्ञाशब्दाः संविज्ञाता ( रूढा ) एव। अरूढार्थे ते न कदापि प्रयुज्यन्ते। एवमयं पाठो न साधुः। अग्निः इन्द्रः वरुणः एवमादयः संज्ञाशब्दाः विशिष्टेषु अर्थेषु रूढाः। एषु शब्देषु धात्वर्थो वर्तमानोऽपि व्यवहारे नाद्रियते। स नष्ट एव। न तथा लावकपावकादिषु। |
| | १२ | कारकादिशब्दैः = कारकादिशब्देभ्यः। |
| | १३ | अग्रं नयति इत्यादयः अग्निशब्दस्य व्युत्पत्तयः (६८०।९–१२)। अग्रनयनाद्यर्थाः यज्ञे दृश्यन्ते न तु अन्यत्र यज्ञात्। पाकशालायां ते न विद्यन्ते। तथाऽपि तत्राग्निशब्दः प्रयुज्यते। एवम् अग्रनयनादिर्गौणोऽर्थः। |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६४१ | १४ | ते अग्न्यादयः शब्दा अग्न्यादीन् अर्थान् न जहति। करणादिवियोग० = किंतु यत्र कृतिः लवनं पावनं नास्ति तत्र कारकादिशब्दा न प्रयुज्यन्ते। 'जहाति' (२८) ग. च. ज. पाठः प्रामादिकः। 'करणादियोग०' 'करणादिविनियोग०' इति पाठौ प्रामादिकौ। यत्र करणादियोगः करणादिविनियोगो वा तत्र कारकादिशब्दा अवश्यं प्रयुज्येरन्। कदाचित् करणादियोगात् करणादिविनियोगात् वा समनन्तरम् इति विग्रहे यत्क्षणे योगो विनियोगो वा समाप्यते तदैव इति अर्थः स्यात्। किंतु अयमर्थः क्लिष्टः। |
| | १९ | अगौणत्वम् = प्राधान्यम्। सर्वाणि अभिधानानि प्रधानानि। न तेषु कानिचित् गौणानि कानिचित् प्रधानानि। |
| | १६ | ऐश्वर्यात् = माहाभाग्यात्। उभयथा = माहाभाग्ये कर्मपृथक्त्वे वा। देवतायाः शक्तेः अप्रतीघातः। उभयत्र सैव शक्तिः। सा केनचिदपि न प्रतिहन्यते प्रतिबध्यते वा। |
| | २० | पृथक् पृथक् = अत्यन्तभिन्नाः। औत्पत्तिकेन भेदेन = उत्पत्त्या एव देवता भिन्नाः। |
| | २३ | अभिधाननियमः (६४२।८–१६)। |
| | २३–२४ | अधियज्ञमिति किमर्थं व्याख्येयम्। नायं निरुक्तमूले शब्दः। 'अधियज्ञे' (२२) इत्यत्र 'अधियज्ञम्' इति पाठः स्यात्। अधियज्ञम् = यज्ञे। अस्या देवताया इयं विशिष्टा स्तुतिः इदं विशिष्टम् अभिधानम् (२३)। अस्मात्कारणात् देवता उत्पत्त्या एव भिन्नाः। |
| | २४ | 'हीति हेतौ' (३१) इति पाठान्तरम्। 'पृथग्घि' इत्यत्र 'हि' निपातो हेतुं सूचयति। |
| ६४२ | २ | यस्मात् जातवेदसः सूक्ते अग्निलिङ्गं नास्ति तस्मात् जातवेदा अग्नेर्भिन्नः। |
| | ९ | 'इत्यजामिः' अत्र 'इति' शब्दोऽनवश्यः। यदि प्रमादात् अग्निः वैश्वानरस्तुत्या स्तूयेत तर्हि स व्यभिचारः प्रायश्चित्तम- |

पत्रं पङ्क्तिः

[illegible] ५ इति । यदि अग्निवैश्वानरयोर्न कोऽपि भेदः तर्हि प्रायश्चित्तं किमर्थम् । किमर्थं च विशिष्टानि वाहनानि यदि सर्वा देवता एका एव । प्रायश्चित्तं कस्मिन् ग्रन्थे विधीयते ।

६ 'अनुपपन्नं च' अत्र 'च' शब्दो व्यर्थः । पर्यायवचनत्वे = यदि देवतानामानि केवलानां पर्यायाणां वाचकानि ।

१० न तथा प्रसिद्धा ।

११ स्थितिः = स्थापितः सिद्धान्तः ।

११–१२ भिन्नानि अभिधानानि स्तुतिषु एव विद्यन्ते नान्यत्र । तस्मात् अभिधाननियमः स्तुतिनियमेऽन्तर्भूतः । अत एक एव हेतुः न द्वौ । अस्योत्तरम् । यथा स्तुतिषु तथा विधिषु अपि भिन्नान्यभिधानानि ।

१६ 'आग्नेयम्' इति अभिधानेन चोदना विधिः । निर्वपणम् = अष्टाकपालपुरोडाशार्थं शकटात् धान्यम् अग्न्यर्थमेव निरुप्यते (गृह्यते) । पुरोडाशार्पणमपि अग्नये एव न जातवेदसे ।

१७ इति यदुक्तम् एषः अनेकान्तः अनियमः 'अनैकान्तिकः' (२७) इति पाठान्तरम् । अनैकान्तिकः व्यभिचारी । अनैकान्तिको दृष्टान्तः ( २७ ) = को दृष्टान्तः । अत्र न कोऽपि दृष्टान्तो दीयते ।

१८ प्रतिकर्म = कर्माणि कर्माणि भिन्नानि अभिधानानि यस्मात् प्रकृतिरेव भिन्नानि रूपाणि गृह्णाति ।

१९ देवताः पृथक् पृथक् इति व्यवस्था स्थितिः । तस्याः कारणं माहाभाग्यम् ।

२० पृथक्त्वहेतुः अभिधानभेदः । प्रत्युक्तः = निराकृतः । प्रत्युक्तः = दूषितः ( च. ट. ) ।

२१ अभिधाने अभिधाने अर्थभेदात् देवताभेदः ।

१७–२१ 'बहवोऽपि विभज्य कर्माणि कुर्युः' ( ६३६ । ५–६ ) इदं दुर्गेण न पठितं नापि व्याख्यातम् । यथा एको बहूनां कर्माणि कुर्यात् तथा बहवोऽपि पृथक् पृथक् कर्म कुर्युः । तस्मात् भिन्ना एव देवताः ।

पत्रं पङ्क्तिः

६४६

१ तत्रास्ति ( २२ ) अयं संधिः लेखकप्रमादादेव । तत् = एकत्वं नास्त्येव इति । गुणतः = न प्राधान्येन । याज्ञिकपक्षे एकत्वं न स्वातन्त्र्येण किंतु कारणतः । सहस्थानम् एकं कारणं संभोगश्च अन्यत् ।

२ तत्र ( १ ) = तस्मिन् पृथक्त्वे सति ' बहवोऽपि विभज्य कर्माणि कुर्युः ' ( ६३६ । ९-६ ) । तत्र = एवं सति । तेषां बहूनाम् एकत्वं संस्थानेन सहस्थानेन संभोगेन च सहभोगेन च ।

४ उप = उपपत्तितः कारणैः ईक्षितव्यम् ।

४–९ मनुष्यपशुदेवाः एकस्मिन् स्थाने ( पृथिव्यां ) तिष्ठन्ति सह भुञ्जन्ति च । तेन तेषामेकत्वम् । यदि भिन्नाः तथाऽपि समानस्थाने वासात् सहभोगाच्च ते एके भवन्ति । ' स्थानैकत्वम्' इति पाठात् ' संस्थानैकत्वं ' इति पाठः साधीयान् । द्वावपि पाठौ यास्केन किमिति प्रयुज्येते ।

७ तस्याः पृथिव्याः ग्रहणेन । पृथिवी इत्युक्ते ।

९ संभोगः = सह एकत्र भोगः । यथा सह एकत्र वासः तथा । मनुष्यपशुदेवा एकत्र वसन्ति एकत्र च भुञ्जन्ति भुञ्जते वा । मनुष्याः पशून् भुञ्जते । देवाः द्वावपि भुञ्जते । पशवः मनुष्यान्सेवन्ते । पशवः मनुष्याश्च देवान्सेवन्ते ।

९–१० 'इतरेतरोपकारित्वम्' इत्यस्य ' समानकार्यत्वम्' इत्यर्थः कथं स्यात् । द्वौ परस्परमुपकुरुतः । एतत् कार्यं न समानम् । एकः अन्नदानेन अन्यमुपकरोति । सोऽन्य आशिषा तमुपकुर्यात् ।

११ 'पृथिव्याः पर्जन्येन ० ० लोकस्य' अस्य कोऽर्थः । पर्जन्यवाय्वादित्याः पृथिवीं भुञ्जन्ति । अग्निश्च इतरं लोकं स्वर्गलोकम् । संभोगशब्दस्य कोऽर्थः । इतरेतरोपकारित्वं सहकार्यता विषयोपभोगो वा । मनुष्यपशुदेवा इतरेतरम् उपकुर्युः । पृथिवी पर्जन्यं कथमुपकुर्यात् । इतरः लोकः अग्निं च कथमुपकुर्यात् । किमेतेषां सहकार्यम् । पृथिवी स्त्री इति कृत्वा पर्जन्यवाय्वा-

पत्रं | पङ्क्तिः

६४३ ११ दित्याः तां किं भुञ्जते । द्यौश्च स्त्री । तां किमग्निर्भुङ्क्ते । सर्वे देवाः संभोगेन एके। स्त्रीपुरुषयोः सहभोगः। तथा पृथिवी-पर्जन्यवाय्वादित्यानाम् । संभोगशब्दस्यार्थो न स्पष्टः ।

१४ त्रयः = पर्जन्यवाय्वादित्याः ( निरु० १८७ । १६-१७ ) ।

१७ 'समीरयति' इत्यस्य स्थाने (तै० सं० २ । ४ । १० ॥ काठकसं० ११ । १०) इत्यत्र ' उदीरयति । '( मैत्रा० सं० २ । १ । ८ ॥ २ । ४ । ८ ) इत्यत्र 'ईट्टे' । ' समीरयति ' अयं पाठो दुर्गेण कुत्रोपलब्धः ।

१७ दिवं जिन्वन्त्यग्नयः ( निरु० १९९ । ९-१० ) ।

१९ मनुष्यपशुदेवानां तथा पृथिवीपर्जन्यवाय्वादित्यानां तथा दिवः अग्नेश्च कीदृशम् एककार्यत्वम् । दिवः अग्नेश्च वृष्टिः एककार्यं स्यात् । मनुष्यपश्वादीनां किं तदेकं कार्यम् । भाक्तं ( भक्त्या लक्षणया प्राप्तं ) गौणम् ।

६४४ ३ नराः परस्परतो भिद्यन्ते । किंतु तेषां राष्ट्रमिति एकत्वम् ।

४ पृथिव्यां भवः अग्निः एक एव । तस्य जातवेदा इत्यादयो भेदाः । एते परस्परतो भिन्नाः । किंतु सर्वे अग्नौ अन्तर्भूताः ।

७ किं गौणं किं प्रधानम् इति अपेक्षा भावना पुरुषस्य पुरुषस्य बुद्धौ अवलम्बते । सा बुद्धिश्च तस्य तस्य अनुरागविशेषेण रज्यते । कस्मैचित् भेदो रोचते कस्मैचित् अभेदः । विशिष्टानुरागेण बुद्धिः प्रवर्तते इदं गौणम् इदं प्रधानम् इति च निश्चिनोति । पुरुषानुरागविशेषात् पुरुषबुद्ध्यपेक्षा । तस्यां च गुणप्रधानापेक्षा । इदं वाक्यं क्लिष्टम् ।

८ गुणीकृत्य = तदङ्गप्रत्यङ्गभावेन कल्पयित्वा (निरु० ६३९ १६-२० ) ।

१० ' इति 'शब्दो व्यर्थः । त्रित्वे नानात्वैकत्वे गुणीकृत्य त्रित्वे पश्यन्ति ।

११ नानात्वं पश्यन्ति इति शेषः ।

पत्रं पङ्क्तिः

६४४

१२ प्रतिपत्तृ = ज्ञातृ श्रोतृ । 'प्रतिवक्तृ' (२७) इति पाठान्तरम् ।

१३ अयं शब्दस्यायमर्थः इति अन्वयः । नायम् इति व्यतिरेकः । इदमर्थज्ञानं तत्तद्बुद्ध्यपेक्षम् । वक्ता विशिष्टेषु अर्थेषु शब्दान् प्रयुनक्ति । श्रोता तान् शब्दान् तेषु अर्थेषु गृह्णीयात् न वा ।

१५ अकृतकं = स्वाभाविकम् (१४) ।
प्रत्याय्यमानौ तस्मात् संबन्धात् । यदा शब्दः अस्वाभाविके अर्थे प्रयुज्यते तदा स स्वाभाविकात् अर्थात् प्रच्याव्यते । अभिधाशक्तिः स्वाभाविकमर्थं सूचयति । लक्षणा अस्वाभाविकम् । लक्षणायां शब्दः स्वाभाविकात् अर्थात् प्रच्यवते वक्त्रा च प्रच्याव्यते ।

१६–१७ यथा अग्नेः अवभासनशक्तिः तथा शब्दस्य अभिधायकशक्तिः । यथा वस्तुनः अवभास्यताशक्तिः तथा अभिधेयस्य अभिधेयताशक्तिः ।

१७ व्यवधानं = द्वयोर्वस्तुनोर्मध्ये निहितं प्रकाशतिरोधानं यथा दारुफलकम् ।

१७–१८ प्रत्यायकप्रमाणानां वैदिकानां कः इमं शब्दार्थयोः अकृतकं स्वयमपि अधीतं संबन्धं विकल्पते ( संबन्धमन्तरेण स विकल्पं प्रकल्पयति । अयमर्थः स्यादयं चेति वदति ) । न कोऽपि । सर्वः स्वाभाविकमेव संबन्धम् अनुसरति । अत्र 'न' 'हि' शब्दौ प्रकल्प्यौ । अन्यथा न कोऽपि अर्थो लभ्यते । अथवा । 'कः' इत्यत्र 'कश्चिदपि' शब्दो युक्तः । स्वयमप्यधीतं = वैदिकः कोशेभ्यः ग्रन्थेभ्यः व्यवहाराच्च शब्दानाम् अर्थान् अधीते निश्चिनोति च । 'अधीतकः' ( २९ ) अयं शब्दो नैकस्मिन्नपि कोशे विद्यते । ग. ज. पुस्तकयोरेव 'प्रमाणानाम्' ( १८ ) इत्यस्यानन्तरं विरामः । च. व्यतिरिक्तेषु इतरेषु 'विकल्पते' इत्यस्यानन्तरम् । च. पुस्तके 'आत्मभावानुशयवशेन' इत्यस्यानन्तरम् । इदं

पत्रं पङ्क्तिः

१४४ १७–१८ पुस्तकं ट. पुस्तकानुसारेण शुद्धीकृतं तेन स्थाने स्थाने मूलपाठा नष्टाः ।

१८ आत्मनो भावः ( भावना श्रद्धा ) स तस्य अनुशयः अनपायी संस्कारः। तद्वशेन। यादृशी आत्मभावना तादृशं वेदार्थविवरणम्।

१९ आत्मवित् अध्यात्मदृष्ट्या विवृणोति । नैरुक्तः अधिदैवदृष्ट्या । याज्ञिकः अधियज्ञदृष्ट्या । अविपर्यासिनीम् वेदस्याभिधानशक्तिम् = वेदस्य अर्थाभिधानशक्तिम् । एकैव ( निश्चिता ) । न तस्यां कश्चिदपि विपर्यासो भिन्नाभिन्नार्थकरणसंभवः । तथाऽपि विपर्यासः भिन्नार्थता शक्या इति एते त्रयो मन्यन्ते । अतः तैः कृतानि विवरणानि परस्परतो विपर्यस्यन्ते भिद्यन्ते ।

२१ सर्वथाऽपि = सर्वमपि । देवतायाः सतत्त्वं तत्त्वं निश्चितः सिद्धान्तः स्वरूपमन्तरेण । भेदे सतत्त्वं सिद्धान्तः अभेदे च । किंरूपौ भेदाभेदौ । भेदः कदा अभेदः कदा ।

२२ यथाग्रहं = वक्तुः प्रतिपत्तुश्च ग्रहणशक्त्यनुरूपम् ।
प्रख्यातिम् उपयत् = जगति प्रसरत् ।

२२–२३ स्तुतिरूपेण मन्त्रैराविष्क्रियते । देवाः स्तूयन्ते । तासु स्तुतिषु इन्द्रो युध्यते इत्येकदा उच्यते । अत्र भेदः । ‘ न त्वं युयुत्से ’ इत्यभेदः । इन्द्रः तस्य च शात्रवः इति भेदो नास्ति । युद्धवर्णनं केवलं रूपकम् । तस्य हेतुः स्तुतिः ।

२३ आत्मनः अर्थसतत्त्वं तत्त्वम् । तथाभूतं = सत्यम् । आत्मनः सत्यं रूपं कीदृशम् । एतदपि मन्त्रैराविष्क्रियते । स्तुतौ भेदः । अन्यत्र अभेदः । ‘ आत्मनः ० भूतम् ’ इदम् ‘ आविष्क्रियते ’ इत्यस्यानन्तरं वर्तितुमर्हति । अथवा इदमनवश्यं-यस्मात् ‘ भेदाभेदवर्ति देवतासतत्त्वम् ’ इत्यस्मिन् अन्तर्भूतम् ।

१४५ १ तस्मादेतदृषिणाऽभ्युक्तम्। ‘न त्वं युयुत्से कतमच्च नाह न तेऽमित्रो मघवन् कश्चनास्ति । मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं न नु पुरा विवित्से ( शत० ब्रा० ११ । १ । ६ । १० ) ॥

पत्रं पङ्क्तिः

६४५ १ अध्यात्मादौ = अध्यात्माधिदैवाधियज्ञेषु । अध्यात्मे आत्मनः ऐकात्म्यम् । अधिदैवे त्रित्वम् । अधियज्ञे नानात्वम् । एवं स्वे स्वे विषये तस्मिन् तस्मिन् विषये आत्मनो रूपं निष्ठितं निश्चयेन स्थितम् । किंतु परमार्थतया सर्वेषां निष्ठा ऐकात्म्ये एव । तत्र वाचः परिसमाप्तिः । ऐकात्म्यात्परतो न किंचिदप्यस्ति । ऐकात्म्यादेव वाचो निवर्तन्ते । ऐकात्म्यं को निरूपयेत् ।

अस्मिन्खण्डे 'यथा पृथिव्यां मनुष्याः ० ० लोकस्य' इत्यत्र कश्चित् शब्दव्यत्यासो जातः स्यात् । देवाः दिवि अन्तरिक्षे वा । तेषां पृथिवी न वासस्थानम् । कदाचित् ईदृशो मूलपाठः स्यात् । 'यथा पृथिव्यां मनुष्याः अन्तरिक्षे पक्षिणः दिवि देवाः इति स्थानैकत्वं । संभोगैकत्वं च दृश्यते । यथा पृथिव्याः पर्जन्येन वाय्वादित्याभ्यां च संभोगः । अग्निना चेतरस्य लोकस्य'। मनुष्याः परस्परतो भिन्नाः । तथा पक्षिणो देवाश्च । तथाऽपि तेषां पृथिव्यामन्तरिक्षे दिवि च सहवासादेकत्वम् । अत्र संभोगो नास्ति। पर्जन्यवाय्वादित्याः पृथिवीं स्त्री इति कृत्वा भुञ्जते । अग्निश्च दिवम् । द्यौरपि स्त्री । यथा संभोगः स्त्रीपुरुषयोः । स्त्रियः पुरुषेभ्यो भिन्नाः । तथाऽपि तेषां संभोगेन एकत्वम् । एतादृशे एकत्वे नरराष्ट्रम् उदाहरणम् । नरा भिन्नाः । तथाऽपि ते एकस्मिन् राष्ट्रे वसन्ति । तेन तेषामेकत्वम् । अस्मिन् उदाहरणे सह स्थानेन एकत्वं न संभोगेन ।

१८ इत्येतत् वचनं विरुध्यते । विकरणं विविधाकारग्रहणं तेषां धर्मः । तेन आकारनियमो नास्ति ( १६–१७ ) ।

२० प्रकृतिः मूलस्वभावः मूलस्वरूपम् । सत्ता = अस्तित्वम् । मूलप्रकृतौ विकरणमवलम्ब्यते । अन्यथा कस्य विकरणम् ।

२२ उभयं साकारत्वं निराकारत्वं च । उभयः भागो विद्यते एषाम् । 'भावित्वात्' ( २९ ) इति पाठे उभयः भावो विद्यते एषाम् ।

६४६ ३ उदस्त = त्यक्त ।

९ अविषयं = विषयस्याभावः । नञ्समासः । तस्य सिद्धिः 'रक्षोहागमलघ्वसंदेहाः' इति भाष्यवचनेन 'अद्भुताश्रमसंहितम्' इति वार्तिकेन च । अव्ययीभावसादृश्येन नपुंसकम् ।

पत्रं पङ्क्तिः

६४६ ९–१० पुरुषस्य विधा इव विधा यस्य स पुरुषविधः । तस्य भावः पौरुषविध्यम् । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (पा० ५ । १ । १२४) इत्यनेन ष्यञ् । विधा = प्रकारः ।

११ यावदभिधानं देवतापक्षवादिनां याज्ञिकानाम् = यावन्ति अभिधानानि तावत्यो देवताः इति पक्षः । तदन्तरेण ये वदन्ति तेषाम् । अयं शब्दसमुदायो न सुरचितः । 'यावदभिधानं देवता इति वादिनाम्' इति सुवचम् ।

१२ यथा अग्निः प्रत्यक्षः तथा जातवेदाः पर्जन्यश्च । रुद्रेन्द्राश्विनः अप्रत्यक्षाः । न पर्जन्यजातवेदसौ ।

१३–१४ रुद्रः इन्द्रः इत्यादयः शब्दाः श्रूयन्ते । तेन शब्दाः प्रत्यक्षाः । न तु देवताः ।

१४–१५ कानिचित् अभिधानानि आकृतिमतः पदार्थान् अभिदधते, कानिचित् अनाकारार्थान् अभिदधते ।

१७ तत्रैतद्भवति = अयं प्रश्नः उत्पद्यते ।

१८ अर्थस्य अप्रत्यक्षत्वात् = रुद्रादयो देवा न दृश्यन्ते ।

१९ वायुः प्रत्यक्ष इत्युच्यते ( १२ ) । अत्र कथम् अप्रत्यक्षः ।

६४७ १ तत्रैतद्भवति ( ६४६ । १७ ) ।

१–२ देवाः प्रत्यक्षं द्रव्यमेव ।

२ संशयम् उपोद्धृत्य तस्य संशयस्य व्युदासाय निराकरणाय ।

३ पक्षः = चोदनपक्षः ।

४ मन्त्रेषु प्रत्ययो ज्ञानं यस्य । आस्तित्वस्य देवाः सन्ति इत्यस्य ज्ञानस्य किं प्रमाणम् । मन्त्राः ।

६ प्रथमं देवतास्तित्वम् । ततः मन्त्राणां तद्देवतात्वम् । मन्त्रे का देवता अयं प्रश्नः देवतास्तित्वे अवलम्बते ।

७ तत्प्रत्ययः = मन्त्रप्रत्ययः । यदि च एवम् = यदि देवतास्तित्वं मन्त्रप्रत्ययम् ।

८ देवतायाः संविज्ञानं पदं रूढं नाम । अग्न्यादीनां रूपाणि तत्तन्नामभिः संबद्धानि ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६४७ | ९ | एकं मतम्। न तु मन्त्रेषु दर्शनम्। दर्शनं = मन्त्रेषु केषुचित् देवतानां पौरुषविध्यं दृश्यते। |
| | ११ | चेतनावत् + वत् = चेतनावताम् + इव। |
| | १४ | पुरुषाकारविग्रहाः = पुरुषविग्रहाः (१०) विग्रहः किमाकारः। पुरुषाकारः। |
| | १५ | 'नास्ती'ति अत्र उच्यते। किंतु (१८) 'सत्यपि चैतन्ये' इत्यनेन तत् स्वीक्रियते। |
| | १६ | चैतन्यं विवेकात् भिन्नम्। आसन्ना समीपवस्तुषु वर्तमाना चेतना येषाम्। इदमसत्यं यस्मात् गवादयः अप्रत्यक्षान् अनासन्नानपि पदार्थान् चेतयन्ते। ग. च. ज. पुस्तकेषु 'क्षमाः' इत्यस्यानन्तरं विरामो न वर्तते। 'आसन्नचेतनाः ते तु न विवेकक्षमाः' इत्यन्वयः। किंतु विरामोऽवश्यो यस्मात् 'आसन्नचेतनाः' इति हेतुः अविवेकस्य। द्वयोर्बहुषु वा वस्तुषु किं स्वीकार्यं किं न इति विचारणा विवेकः। विवेकाय स्मृतिरवश्या। सा पशुषु नास्ति। इदमपि असत्यम्। गवादयः स्वं स्थानं बहोः कालादनन्तरमपि प्रतिनिवर्तन्ते। इदं मे गृहमिदं न इति विवेक्तुं तेऽपि समर्थाः। |
| | १९ | श्वस्तनम् आगामि वृत्तं वस्तु ते न जानते। अस्य किं प्रमाणम्। तेऽपि श्वस्तनं जानीयुः। अश्वादय आगामि युद्धं ज्ञात्वा स्फूर्तिं दर्शयन्ति। लोकः = स्वर्गः। अलोकः = नरकः। |
| | २१ | मर्त्येन = ज्ञानकर्मरूपसाधनेन। |
| | २२ | हिताहितपूर्णज्ञानाय विशिष्टचैतन्यमवश्यम्। न सामान्यं यस्मात् गवादीनां सामान्यं चैतन्यं वर्तते। नियम्यते = गृह्यते। किमर्थमीदृशः पुरुष एव गृह्यते। यस्मात् देवतानां पौरुषविध्यमस्माभिः साधयितव्यम्। नियम्यते उपमानत्वेन। पुरुषा इव देवताः। |
| ६४८ | १ | 'श्रूयन्ते' (२३) इति पाठान्तरम्। यथा पुरुषा अर्थान् चेतयन्ते इति श्रूयते तथा। किंतु पौरुषविध्ये स्तुतिः कारणं न श्रवणं (जगति ख्यातिः)। |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १४८ | ३ | ' पौरुषविध्यमुपपद्यते चेतनावत्सदृशस्तुतिभिः । तत्प्रति ताः कारणं भवन्ति' ( २९–२९ ) इति पाठान्तरम् । तत्प्राति = पौरुषविध्यं प्रति । ताः = स्तुतयः । |
| | ४ | अभिधानानि = परस्परम् उक्तप्रत्युक्तानि । |
| | ५ | परस्परतः संबद्धार्थानि = ' कया शुभा ' इत्यस्मिन् सूक्ते मरुतः ' कस्त्वमिन्द्र ' इति पृच्छन्ति । इन्द्रः तान् प्रतिवदति । मरुदुक्तिः इन्द्रप्रत्युक्तिश्च परस्परसंबद्धे । यथा प्रश्नः तथोत्तरम् । संवादसूक्तानि कयाशुभादीनि ( निरु० ६ ३२ । १–३ ) । उक्तानि प्रत्युक्तानि च ( ४ ) पौरुषविध्ये कारणं भवन्ति ( ३ ) । अभिधानानि = नामानि यथा पुरुषाणां मनुष्याणां नामानि रामलक्ष्मणादीनि तथा देवतानाम् । तस्मात् देवताः पुरुषविधाः । अयमर्थः सरलः । रामलक्ष्मणादीनि न पशूनां नामानि । |
| | ८ | पौरुषविधिकैः = पुरुषस्य अयं पौरुषः । 'तस्येदम् ' ( पा० ४ । ३ । १२० ) । पौरुषः विधिः विधा प्रकारो येषाम् । ' शेषाद्विभाषा ' ( पा० ५ । ४ । १५४ ) इत्यनेन कप् । पौरुषी विधा यस्य स पौरुषविधः । तस्य भावः पौरुषविध्यम् । एवमपि विग्रहः पौरुषविध्यस्य स्यात् । 'पौरुषविधत्वे ' (२७) इति पाठान्तरम् । |
| | १५–१६ | अश्वमेधशेषभूता ऐकादशिनः पशवः । एकादशानां पशूनां समूहः एकादशिनी ( तै० सं० ५ । ५ । ११ ) । |
| | २० | ऋष्वौ = बलिष्ठौ । स्थविरस्य = स्थिरस्य । |
| १४९ | ४–५ | तेषां मन्त्राणाम् अर्थः लक्षणं यस्य । निरुक्तशास्त्रं मन्त्रार्थलक्षणभूतम् । |
| | ६–७ | अश्वगृहजायादिभिः संयोगः पुरुषविधत्वं दर्शयति । पौरुषविधये द्रव्याणि आवश्यकानि । वस्तुतः पौरुषविधैः पौरुषविधिकैः इत्येतयोरेक एवार्थः । |

पत्रं पङ्क्तिः

१९० १ कल्याणीः = प्रशस्तरूपाः ।
ते गृहं सुरणं ( १४९ । १९ ) = तव गृहे शोभनं रमणं भोग्यं वर्तते । 'सुष्ठु रमणीयं परिभोगयोग्यं पर्यङ्कास्तरणादि इति स्कन्दस्वामी ' ( ट. ) ।

२ 'दक्षिणावत्' 'विमोचनम्' इत्यस्य विशेषणम् । वाजिनः वाजयुक्तस्य धनपूर्णस्य रथस्य दक्षिणावत् धनवत् विमोचनम् अध्वनः अन्तः विश्रान्तिस्थानम् । यत्र रथः अश्वा वा विमुच्यन्ते यत्र नरा देवा वा अध्वनोऽन्ते विश्राम्यन्ति । यत्र अध्वगमनस्य अन्तः तद्विमोचनम् । अत्र वाजी रथः नाश्वः । 'विमोचनम् = यत्राश्वा विमुच्यन्ते तत् । दक्षिणावत् = खाद्यपानयुक्तम्' ( सायणः ) ।

१४ रातं = दत्तम् । अस्माभिः मनसा रातम् ।

१९ 'इन्द्राय जुष्टं निर्वपामि' इति धान्यग्रहणकाले तत्संस्कारकाले च इन्द्र उद्दिश्यते । पूर्वं निर्वपणम् । तस्याऽऽदौ संस्कारकालः । हविर्धानशकटे वर्तमानस्य व्रीह्यादिद्रव्यस्य अग्निहोत्रहवण्यां मुष्टिमात्रं निधीयते । ततश्च मन्त्रेण कांचिद्देवतामुद्दिश्य शूर्पे प्रक्षेपः = निर्वापः ।

१९१ १-२ 'आश्रुत्कर्ण' इत्येकं पदम् । न 'आ श्रुत्कर्ण' इति द्वे ।

३-४ नू चित् इति अवधारणार्थे । मे गिरः दधिष्व गृहाण एव ।

५-६ युजः = सख्युः । युजः = 'त्वद्युक्तस्य त्वां प्रति आहतस्य पुनः पुनरपि ब्रुवतः' अयमर्थो दुर्गेण स्वमनस उत्पाद्यते । अन्तरं कृष्व = मनसि धारय ।

८ अद्ध्याशृणुहि = अद्धि ( १९० । ११ ) + आशृणुहि । ऋचि तु 'श्रुधी' । ( १९० । १९ ) न आशृणुहि । 'अद्धि इत्यत्र अदनाय श्रुधी इत्यत्र श्रवणाय आमन्त्रणं 'हि' इति लोट् प्रत्ययेन । अनयोर्मन्त्रयोर्विनियोगः इत्यन्वयः । एको मन्त्रः अदनाय अपरः श्रवणाय विनियुज्यते । विनियोगात् अदनश्रवणे पूर्वं कथं स्याताम् । विनियोगः अदनश्रवणपरः ।

पत्रं पङ्क्तिः

६५१ ८ 'अद्रि श्रुधि इति आमन्त्रणेन अद्माय श्रवणाय च अन-योर्मन्त्रयोर्विनियोगः' इति सुबन्धुः ।

९–१० गवादयोऽपि एतादृशम् आमनन्ति आमनते ।

१०–११ कार्याणि अदनश्रवणादीनि तेषां कारणानि मुखश्रोत्रादीनि तेषां संनिवेशो यथा मनुष्येषु तथा देवेषु ।

११–१२ यदि कार्यकारणानि न स्युः शिरःश्रवणमपि न स्यात् । 'कार्य-कारण' (२९) इत्यपपाठः ।

१४ अपरं मतम् ।

२१ अपि तु यत् दृश्यते अपुरुषविधं तत् ( ६९२ । १३ ) इत्य-न्वयः । 'या या देवता दृश्यन्ते तासां पुरुषाकारो नास्ति' ।

६९२ १५ अतः = अपुरुषविधत्वात् । अन्यथा = पुरुषविधा इति अभ्यु-पगमे स्वीकारे ।

१८–१९ केचित् मनुष्याः आकारिणः केचित् इति नोपपद्यते ।

२१ चेतनावतां स्तुतिः विद्यते एषां ते चेतनावत्स्तुतिमन्तः ।

६९३ ६ हरितोभिरासभिः ( १ ) = हरिद्वर्णैः आस्यैः ।

८ विष्ट्वी = विष्ट्वा । अत्र क्त्वाप्रत्ययः नेदं नाम । विष्ट्वी = यशः संपाद्य । सुकृत्यया = अभिषवकर्मणा ।

१० 'आशत = आशितवन्त इति स्कन्दस्वामी' ( ट ) ।

१८ संकल्पतः = कविकल्पनया ।

२१ यथाभूता = यथार्था सत्या । रथस्य अश्वानां च उपपत्तिः प्राप्तिः संबन्धः संयोगः ।

६९४ ४ अनुक्रमण्यां प्रियमेधः । न प्रियमेधाः ।

६ अश्विनम् = आकुलम् । सिन्धुः नदः न नदी । अस्व नवस्य । न रथस्य । ( १० ) ।

८ आजवने = आ अभिव्याप्तौ । आ सर्वत्र जवनं वेगः यस्मिन् ।

| पत्रं | पङ्क्तिः |
|---|---|
| १९४ | ११ 'स्वयशसः स्वायत्तकीर्तेः' ( २९ ) इति पाठान्तरम्। इदं सायणभाष्यात् गृहीतम्। |
| | १२ 'रथमिव अश्विनं' कोऽर्थः। |
| | १३ रूपकं प्रवादः रूपं यासाम्। |
| | १६ अशनस्य शक्तिः क्रिया च। |
| | २० उभये हेतवः एव प्रामाण्यम्। वा + अपुरुषविधानाम्। |
| | २३ परे = देवाः। अथवा। क्षितिजलादिभ्यः परे भिन्नाः। |
| | २४ अनुग्रहः विरोधदूरीकरणेन। पृथिव्यादयः अपुरुषविग्रहा इति प्रत्यक्षम्। आगमे वेदे तु पौरुषविध्यम्। |
| १९५ | १ 'इदमेतेन' इत्यस्य स्थाने शतपथब्राह्मणे 'इदं मेऽनेन'। 'स ह वा आत्मयाजी यो वेदेदं मेऽनेनाङ्गं संस्क्रियत इदं मेऽनेनाङ्गमुपधीयत इति। स यथाऽहिस्त्वचो निर्मुच्यत एवमस्मान्मर्त्याच्छरीरात्पाप्मनो निर्मुच्यते। स ऋङ्मयो यजुर्मयः साममय आहुतिमयः स्वर्गं लोकमभिसंभवति' ( शत० ब्रा० ११। २ ६। १३ )। उपधीयते= स ऋङ्मयो यजुर्मय इत्यादिर्भवति। इदं जन्मप्राप्तमङ्गं संस्क्रियते। अन्यच्च वेदाहुतिमयं प्राप्यते। 'यद्वै यजमानोऽग्निं चिनुतेऽमुष्मै तल्लोकाय यज्ञेनाऽऽत्मानं संस्कुरुते, एतदु ह यज्ञियं कर्मासंस्थितमो श्मशानकरणात्' (शत० ब्रा० १३। ८। १। १७)। |
| | ३ 'यदष्टा ( कपालानि ) उपदधात्यात्मानं वा एतद्यजमानः संस्कुरुते। तं संस्कृतममुष्मिँल्लोकेऽनु परैति' ( मैत्रा० सं० ४। १। ८॥ काठक सं० ३१। ६ )। तं संस्कृतमात्मानं यजमान उपैति। एवं यज्ञो यजमानस्य कर्मात्मा ( १९४। २४)। कर्मणा संपादित आत्मा। एकं जन्मना प्राप्तं शरीरम्। अपरं कर्मणा प्राप्तम्। |
| | ५ समयः = सिद्धान्तः। |
| | ६–७ एवं वीर्यबलोत्सिक्तैर्भूरियत्नैर्महासुरैः। पीड्यमाना मही राजन् ब्रह्माणमुपचक्रमे। ( महाभा० आदि० ६४। ३७ )। |

पत्रं पङ्क्तिः

१११ ६–७ ततो मही महीपाल भारार्ता भयपीडिता ।
जगाम शरणं देवं सर्वभूतपितामहम् ( ३९ ) ॥

८ अभ्यागच्छत्तदा विप्रो वासुदेवधनंजयौ ।
बृहच्छालप्रतीकाशः प्रतप्तकनकप्रभः ॥
हरिपिङ्गोज्ज्वलश्मश्रुः प्रमाणायामतः समः ।
तरुणादित्यसंकाशश्चीरवासा जटाधरः ॥
पद्मपत्राननः पिङ्गस्तेजसा प्रज्वलन्निव ( २२४।३०–३२ ) ।
नाहमन्नं बुभुक्षे वै पावकं मा निबोधत ( २२५।१ ) ॥
स युवाभ्यां सहायाभ्यामस्त्रविद्भ्यां समागतः ।
दहेयं खाण्डवं दावमेतदन्नं वृतं मया ( १० ) ॥
(स भगवान् विप्रः) –
तैजसं रूपमास्थाय दावं दग्धुं प्रचक्रमे ( २२७।३३ ) ।
दहतस्तस्य च बभौ रूपं दावस्य भारत ।
मेरोरिव नगेन्द्रस्य कीर्णस्यांशुमतोंऽशुभिः ( ३६ ) ॥
स मांसरुधिरौघैश्च वसाभिश्चापि तर्पितः ।
उपर्याकाशगो भूत्वा विधूमः समपद्यत ॥

दीप्ताक्षो दीप्तजिह्वश्च संप्रदीप्तमहाननः ।
दीप्तोर्ध्वकेशः पिङ्गाक्षः पिबन् प्राणभृतां वसाः ( २३०।३५–३६ )॥

११ इत्येवमादिना आख्यानसमयः प्रदर्श्यते ।

१२ तदेतत् = अयं विषयः ।

१३ उभये विधे यस्य स ( विषयः ) उभयविधः । तस्य भावः औभयविध्यम् । ‘ गुणवचनब्राह्मणादिभ्यः कर्मणि च ’ ( पा० ५ । १ । १२४ ) कर्म अर्थः ( प्रयोजनं ) यस्य तत् कर्मार्थम् औभयविध्यम् । ‘कर्मार्थात्मोभयविध्यम् ’ (२६) अयं प्रामादिकः पाठः । ‘ कर्मात्मौभयविध्यम् ’ इति इष्टम् । कर्मात्मने औभयाविध्यम् ।

१४ ‘ माहाभाग्ये सति ’ इत्यनन्तरम् ‘ ऐश्वर्यात् ’ व्यर्थम् । कथमिव = ब्रूत केन कारणेन । इव प्रार्थनायां खल्वर्थे वा ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६९९ | १९–१७ | महाभारतादिकथानाम् आख्यातॄणाम् । ते नानावस्थासु नानारूपैर्वर्तमाना अपश्यन् अवर्णयंश्च । एवम् ऋषयः । उभयत्र दर्शनं वर्णनरूपेण ( इतिहासेषु ) स्तुतिरूपेण मन्त्रेषु सफलम् । 'दर्शनवत्' इत्यस्य स्थाने 'वर्णनवत्' इष्टम् । सर्वथैव = मूर्तेः अमूर्तेर्वा एकत्वेन बहुत्वेन वा स्तुतौ न कोऽपि दोषः । |
| | १८–१९ | तद्रूपम् तेन तेन रूपेण इच्छाशक्त्या वर्तमानानाम् । |
| | १९ | निन्दा हीना न = यदा देवा निन्द्यन्ते तदा ते हीना इति न ग्रहीतव्याः । |
| | २० | अग्र्या = श्रेष्ठा । |
| | २०–२१ | बुद्धिशक्त्याः क्षयेऽपि स्तोतुं स्तवने यो निश्चयः तं न त्यजन्ति । यस्मात् स्तवनादृते अन्यां गतिं न पश्यन्ति । |
| ६९६ | ४ | 'गायत्रो ह्यग्निर्गायत्रच्छन्दाः' ( मैत्रा० सं० १।५।५ ) ।' गायत्र्यामृचि अभ्यूढं साम रथंतरं यथा 'अभि त्वा शूर नोनुमः' ( ऋ० सं० ८ । ३२ । २२ ) । 'ऋचां स्तोमं समर्धय गायत्रेण रथंतरम्' ( मैत्रा० सं० २'७।१ )। त्रिवृत्स्तोमे तिस्र ऋचो गेयाः । तस्य गानस्य त्रिविधः प्रकारः ( ताण्ड्य० ब्रा० २ । १ ) प्रथमा मध्यमा उत्तमा । अयं प्रथमः प्रकारः उद्यतीसंज्ञकः । अत्र एकैका ऋक् त्रिवारं गेया। स एव ऋचां क्रमः । किंतु तासामनावृत्तिः । अयं द्वितियः प्रकारः पारिवर्तिनीसंज्ञकः । |

| | |
|---|---|
| प्रथमा मध्यमा उत्तमा<br>मध्यमा उत्तमा प्रथमा<br>उत्तमा प्रथमा मध्यमा | अयं तृतीयः प्रकारः कुलायिनीसंज्ञकः । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| | १० | देवतात्रयाधिकारः आकारचिन्तनेन व्यवहितः । तस्य अधिकारस्य कश्चित् विशेषः वक्तुम् इष्टः । तस्य अधिकारस्य अनुस्मृतये अनुसंधानाय । तत् ( ११ ) = देवतात्रयाधिकारम् । प्रकरोति = तत् स्मारयति । अनुस्मृतिः विशेषविवक्षार्था । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६९६ | १० | इदं वाक्यम् अतीव क्लिष्टं संदिग्धं च । 'तत्' शब्दः त्रिवारं संदिग्धत्वेन प्रयुक्तः । |
| | १३–१६ | भक्त्या गौण्यत्वेन आश्रितत्वेन साहचर्यम् । न समतया प्राधान्येन वा । एतानि सर्वाणि अग्न्याश्रितानि । अथवा । भक्तये साहचर्यम् । अग्निं भजेमहि इत्यनेन उद्देशेन तेन सह चरन्ति । लोकादीनाम् अग्न्यादिभिः भक्तिमूलं साहचर्यम् । |
| | १७ | संविज्ञातदेवतापदानि = रूढानि अग्न्यादिनामानि । येषु तानि रूढनामानि सन्ति न तेषु आश्रितवस्तुकथनेन देवता तर्क्येत । |
| ६९७ | २ | अग्नौ भक्तिः आश्रितत्वं येषां तानि । अथवा । भज्यते सेव्यते इति भक्तिः । अग्निः भक्तिः येषां तानि । 'भक्तिः' (पा० ४ । ३ । ९९ ) । |
| | ७–८ | इळा ( निघ० १ । १४ ) पृथिवी ( निघ० ५ । ३ । २६ ) अग्नायी ( निघ० ५ । ३ । २८ ) इति निघण्टुक्रमः । |
| | ९ | तेन अग्निना समम् आख्यानं नाम यस्याः । 'पृथिवीति' इत्यत्र 'इति'शब्दो व्यर्थः । |
| | १० | यद्यपि इळा इति पृथिव्या नामधेयं तथाऽपि तत् परोक्षं न स्पष्टम् । तस्मिन्नामधेये पृथिव्या न किंचिदपि चिह्नम् । |
| | १२–१३ | 'आ नो यज्ञं भारती तूयमेत्विळा मनुष्वदिह चेतयन्ती । तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसः सदन्तु' ॥ अस्य सूक्तस्य देवता आप्रियः । तस्मादिदमाप्रीसूक्तम् ( १० ) । 'भारती इळा सरस्वती' इमाः 'तिस्रो देवीः' आप्रियः । आप्रीमध्ये ( १० ) = आप्रीसूक्तमध्ये । अस्मिन् मन्त्रे इळा भारत्या अनन्तरं श्रूयते । तेन सा अन्तरिक्षस्थाना । तत्कथं पृथिवीस्थाना ( १४ ) । |
| | १४–१५ | अनुयाजाः = प्रधानयागानन्तरम् इज्यते यैरिति व्युत्पत्त्या होत्रा पठ्यमाना याज्यमन्त्राः । 'देवादयोऽनुयाजाः ( आश्व० श्रौ० १ । ९ ) वीतवत्पदान्ताः (तथैव) । त्रयः (तथैव) । एते अनुयाजाः ( मैत्रा० सं० ४ । १३ । ८ ) इत्यत्र वर्तन्ते । |

पत्रं पङ्क्तिः

६९७ १९–१६ सरस्वती इमम् अन्तरिक्षलोकं रुद्रैः अस्पृक्षत् ।

१६ अग्निः इहैव पृथिवीलोके एव वसुमत्या इळया यज्ञम् आवीत् अरक्षत् । अस्य मन्त्रस्य सायणेन (तै०ब्रा० ३ । ६ । १३ । ७ ) इत्यस्य भाष्ये अयमर्थः कृतः । ' भारती आदित्यैः सह द्यां स्पृशतु । हविषा देवान् तर्पयितुं तत्र गच्छतु । सरस्वती रुद्रैः सह इमं यज्ञम् अवतु रक्षतु । अत्रैव स्थित्वा यज्ञं निर्वर्तयतु । अथ वसुमत्या धनयुक्तया इडया सधमादं सहैव स्थाने हर्षो यथा भवति तथा मदेम तृप्ता भूयास्म ' । ' इहैवेळया वसुमत्या ' इत्यस्यानन्तरं ' सहमादं मदेम ' इति शब्दौ ।

७ अग्निर्वसुभिरिति वसुमाहचर्यम् । इळा च वसुमती । तेन तस्या अग्निना संबन्धः । इह इत्यनेन पृथिवी सूच्यते । इहैवेळया = इहास्थितया इळया । तेन द्वावपि पृथिवीस्थानौ । तस्मात् इळा अग्निभक्तिः । ' द्यां भारती ' इत्यनुयाजप्रैषमन्त्रः । तस्य प्राक् ' तिस्रो देवीरिडा सरस्वती भारती ' ( मैत्रा० सं० ४ । १३ । ८ ) इति । सामर्थ्यम् = इष्टार्थकरणाय प्रमाणम् । उन्नीय = तर्केण लब्ध्वा ।

१९ तथैव वसुमाहचर्यात् इळा पृथिवीस्थाना ।

२० अन्यां देवतां न गच्छति । इदं सर्वम् अग्नेरेव कर्म ।

२३ दृष्टिः ( दर्शनं वस्तूनाम् ) एव विषयः । ' तत्र भवः ' ( पा० ४ । ३ । ५३ ) इत्यनेन अथवा ' ठगायस्थानेभ्यः ' ( पा० ४।३।७५ ) इत्यनेन दृष्टिविषये भवं दृष्टिविषयात् आगतं वा दार्ष्टिविषयिकम् । वस्तुतः दृष्टिविषयस्येदं दार्ष्टिविषयिकम् । दार्ष्टिविषयिकं = दर्शनसंबद्धम् । नेदं सर्वदा सत्यं यस्मात् दिने वस्तुदर्शनं सूर्यप्रकाशायत्तम् । यत्र सूर्यप्रकाशः अल्पः अल्पकालीनो वा तत्र अग्निप्रकाशः अवश्यः । यथा ध्रुवप्रदेशयोः । धूमज्वालोत्थापनं दहनमित्यादि कदाचित् दार्ष्टिविषयिकं कर्म स्यात् ।

२५ पुनरुक्तिः अवधारणार्था नाऽऽदरार्था । अध्यात्मप्रकाशः कथम् अग्न्यायत्तः । स तु सूर्यायत्तः ।

पत्रं पङ्क्तिः

१९८ १ ' अत इनिठनौ ' ( पा० ५।२।११५ ) । संस्तव + इन् = संस्तवी । संस्तवी + इकः = संस्तविकः । संस्तवः विद्यते एषां ते संस्तविकाः । ' सांस्तविकाः ' (२१) इति पाठान्तरम् । ' तत्र भवः ' इत्यनेन संस्तवे भवाः सांस्तविकाः । सं + स्तवः । सं = सह ।

३–४ ' द्वंद्वे घि ' ' ( पा० २।२।३२ ) इत्यनेन अग्निशब्दस्य पूर्वनिपातः । देवताद्वंद्वे अग्नेर्मुख्यता यस्मात् तस्य पूर्वनिपातः ।

७ ' यदकृत्वाऽऽग्रायणं नवस्याश्नीयाद्देवानां भागं प्रतिक्लृप्तमश्नीयात् । आर्तिमृच्छेत् ' ( मैत्रा० सं० ४।३।२ ) । ' नानिष्ट्वाऽऽग्रयणेन नवस्याश्नीयात् ' ( मान० गृ० २।३।९ ) । ' पर्वण्याग्रयणं कुर्वीत वसन्ते यवानां शरदि व्रीहीणाम् ' ( मान० गृ० २।३।१० ) । ' ऐन्द्राग्नमेकादशकपालं निर्वपेदाग्नेंद्रं वा ' ( मैत्रा० सं० २।६।२ ) । ' देवा ओषधीषु पक्वासु आजिमयुः । स इन्द्रोऽवेत् अग्निर्वाव इमाः प्रथममुज्जेष्यतीति । सोऽब्रवीत् यतरो नौ पूर्व उज्जयेत् तन्नौ सहेति । ता अग्निरुदजयत् । तदिन्द्रोऽनूदजयत् । तस्मादैन्द्राग्नम् । अथो आहुः ऐन्द्राग्नं कार्यमिति । अग्निर्हि ता अग्रे उदजयत् । तदुज्जित्यै एवाऽऽग्रायणः ' ( मैत्रा० सं० ४।३।२ ) ।

१९ ' अग्नीषोमीयः स्थालीपाकः पौर्णमास्याम् ' ( मान० गृ० २।३।३ ) । ' अग्नीषोमीयम् ' ( मैत्रा० सं० २।१।४ ॥ ४।४।१८ ॥ १।५।१ ) । ' अग्नीषोमीयमेकादशकपालं पूर्णमासेऽनुनिर्वपेत् । आग्नेयो वै ब्राह्मणो देवतया । सोमराजा यज्ञमुखम् ' [ काठकसं० ८।१० ] ।

१९९ १४ अवतं = रक्षतम् । मे धियम् अवतं नः सुष्टुतिम् अवतम् इत्यन्वयः ।

१७ इळाम् अन्यः अन्यः पर्जन्यो जनयतु । गर्भम् अन्यः अग्निः जनयतु ।

पत्रं पङ्क्तिः

१८ इषः = धनानि ।

११० १ ऋतुयामशब्दव्युत्पात्तिः ( निरु० २२९ । २–६ ) इत्यत्र ।

५ योनिषु = स्थानेषु ।

६ पारि = पारित । भूष ( = भव ) । पारितो भूत्वा देवेभ्यो हवींषि देहि ।

८ ' अग्नाविष्णू महि तद्वाम् ' ( मैत्रा० सं० ४।११। २ ॥ तैत्ति० सं० १ । ८ । २२ ॥ काठकसं० ४ । १६ ) ' अग्नाविष्णू महि धाम ' ( मैत्रा० सं०४ । १० । १ ॥ तैत्ति० सं० १ । ८ । २२ ॥ काठकसं० ४ । १६ ) एते द्वे ऋचौ हविष्येव विनियुक्ते ।

' दर्शपूर्णमासौ आरप्स्यमानः अन्वारम्भणीयामिष्टिं कुरुते । पौर्णमास्यां पूर्वेद्युः नान्दीमुखम् । आन्वारम्भणीयायाः अग्नाविष्णू सरस्वती सरस्वान् अग्निर्भगी इति प्रधानदेवताः । आग्नावैष्णव एकादशकपालः । अग्नाविष्णू सजोषसा इत्यनुवाक्या ( श्रौतपदार्थनिर्वचनम् पत्रे ८७–८८ ) ।

' देवताद्वंद्वे च ' ( पा० ६ । ३ । २६ ) इत्यनेन ' अग्नाविष्णू ' । अग्नाविष्णू देवते अस्य ( पा० ४ । २ । २४ ' साऽस्य देवता ' ) तत् आग्नावैष्णवम् ' देवताद्वंद्वे च ' ( पा० ७ । ३ । २१ ) इत्यनेन आत्वम् । ' इद्वृद्धौ ' ( पा० ६ । ३ । २८ ) अस्य ' विष्णौ न ' इति वार्तिकं बाधकम् ।

१४ सजोषसा = सहयुक्तौ ।

१६ द्युम्नैः = धनैः । वर्धन्तु = स्तुवन्तु पुष्टौ कुर्वन्तु वा ।

१९ तु = किंतु । ' सांस्तविकी ' ( ३१ ) इति ग. च. ज. पाठ. । संस्तवे भवा सांस्तविकी । ' तत्र भवः ' ( पा० ४ । ३ । ५३ ) इत्यनेन सूत्रेण । निरुक्तमूले ' संस्तविकी ' ( ६५६ । ८ ) ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६६० | २० | 'संख्याया अवयवे तयप्' ( पा० ५ । २ । ४२ )। दश अवयवाः दशतय्यः । ऋक्संहितायाः दश अवयवाः । दशतयीषु = दशसु अवयवेषु । मण्डलानि एव अवयवाः । 'दश मण्डलानि अवयवाः यस्याः सा बह्वृचसंहिता इति केचिदाहुः । दश मण्डलाख्या अवयवा यासां ता दशतय्यः ऋग्वेदस्य शाखाः तासु इत्यन्ये ' ( ट. ) । ( निरुक्त० १६५ । २४ ) इत्यत्र ' आर्चाभ्याम्नाये ' न तु ' दशतयीषु ' । दश अवयवाः अस्य इति विग्रहे दशतयः दशतयी वा इति एकवचनान्तं रूपं स्यात् । दशतयः ऋग्वेदः । दशतयी ऋक्संहिता । दशतयीषु इति बहुवचनं किमर्थम् । अस्य प्रश्नस्य निराकरणार्थं दुर्गेण बहुवचनस्य कथमपि विवरणं क्रियते। |
| | २३ | शस्त्रम् = अप्रगीतमन्त्रसाध्या स्तुतिः । तत् होत्रा पठ्यते । स्तोत्रं = प्रगीतमन्त्रसाध्या स्तुतिः । सा उद्गात्रा गीयते शस्त्रे एका द्वे बह्व्योऽपि ऋचः सन्ति । शस्त्रमध्यपातिनी = अनेकाभिः ऋग्भिः युक्ते शस्त्रे वर्तमाना ऋक् । |
| ६६१ | १ | ' स्यादपि ' अत्र 'अपि' शब्दो व्यर्थः । |
| | २ | असंस्तवयुक्ताऽपि ऋक् ऋग्वेदे नास्ति इत्यधिकोऽर्थो दुर्गेण निष्पाद्यते । किंतु नायमावश्यकः स्वाभाविको वा । उत्सर्गः = व्यापकं वचनम् । |
| | ४ | ' देवताद्वंद्वे च ' ( पा० ६।३।२६ ) इत्यनेन अग्नापूषणौ । अग्नापूषणौ देवते अस्य (पा० ४।२।२४ ) 'साऽस्य देवता') तत् ' आग्नापौष्णम् ' । 'देवताद्वंद्वे च ' ( पा० ७।३।२१ ) इत्यनेन आत्वम् । ' इद्वृद्धौ ' ( पा० ६ । ३ । २८ ) इदं सूत्रं ' ईदग्नेः सोमवरुणयोः ' ( पा० ६ । ३ । २७ ) |

पत्रं पङ्क्तिः

६११ ४ इत्यस्यैव बाधकं न 'देवता द्वंद्वे च' (पा० ६।३।२६) इत्यस्य । 'आग्नापौष्णवम्' (२१।२२) अयमपपाठः ।

५ अत्र 'तु' शब्दो द्विः प्रयुज्यते । 'किं तु' शब्दो अनवश्यौ ।

७ विभक्ता स्तुतिः । 'विभक्तिस्तुतिः' (२३) इति पाठे विभक्त्या विभागेन स्तुतिः ।

१५–१६ 'अग्निर्देवेभ्यः सुविदत्रियेभ्यः' अयं पादः किमर्थं न स्वर्यते । नात्र अन्ते इति शब्दः ।

१९–२० अयं विनियोगः कस्मिन् ग्रन्थे दीयते । 'शवस्य कर्णे' इत्यत्र ग. ज. पाठः 'शुनस्कर्णे' (२६) । प्रमीतानुमन्त्रणं शुनः कर्णे कर्तव्यम् । कस्मिन् ग्रन्थे एतद्विद्यते । प्रमीतः = मृतः (अमर २।८।११७) ।

६१२ ४ अनष्टपशुः = अविनश्वरपशुयुक्तः । सुविदत्रियेभ्यः (८) = सुधनेभ्यः (च. ट.) । ट. पुस्तके प्रान्ते लिखितमिदं विवरणं ठ. ड. पुस्तकयोरन्तर्भाव्यते ।

७ 'अपरपक्षाद्यान् षड् दक्षिणैति मासान् मासेभ्यः पितृलोकम्' (छा० उप० ५।१०।३–४) । अपक्षीयमाणपक्षाद्यान् षण्मासान् दक्षिणाऽऽदित्य एति मासेभ्यः पितृलोकम्' (बृह० उप० ६।२।१६) ।

८–९ सुविदत्रियेभ्यः = ये विद्युतो मध्ये निवसन्ति तेभ्यः । विद्युति निवसन्ति ते विदत्रियाः । अयं दुर्गकृतोऽर्थः क्लिष्टः ।

९ 'चन्द्रमसो विद्युतम्' (छा० उप० ५।१०।२) । 'आदित्याद्विद्युतम्' (बृह० उप० ६।२।१५) । दुर्गेण कस्या उपनिषद एते वाक्ये उदाहृते इति न ज्ञायते ।

११–१२ अनृणा अस्मिन्ननृणाः परस्मिंस्तृतीये लोके अनृणाः स्याम । ये देवयानाः पितृयाणाश्च लोकाः सर्वाँल्लोकाननृणाः संचरेमहि ॥ इति जपति यजमानः (मान० श्रौत० २।३।५।२२) ।

पत्रं पङ्क्तिः

६६२ १३ सांशयिकः = संशयम् आपन्नः ( पा० ५ । १ । ७३ )

१७ पूर्वस्मिन् अर्थे कथितस्य पुनर्निर्देशः अन्वादेशः। सामर्थ्यात् = अन्वादेशकरणात्।

१८ दर्शनं = मतम्।

२० पितृभ्यः इति पञ्चमी।

२१ देवेभ्यः इति चतुर्थी।

२२ दिष्टं = प्रेषितम्। इतः = पृथिवीलोकात्।

२३ सः ( ६६१ । १० ) इति सर्वनाम्नः। व्यपेक्ष्य = विशेषतः अपेक्ष्य।

२४ प्रकर्षेण कीर्तना कथनम्। अपरं = दर्शनम्। अकल्पयत् = अर्थमकरोत्। अथवा। अपरं दर्शनम् अकल्पयत्।

'अथा पितॄन्त्सुविदत्राँ उपेहि' (ऋ० सं० १०। १४। १०)

'आहं पितॄन्त्सुविदत्राँ अवित्सि' ( ऋ० सं० १० । १५ । ३ )

'आग्ने याहि सुविदत्रेभिरर्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिः' ( ऋ० सं० १०। १५। ९ ) एतेषु सुविदत्रशब्दः पितॄणा विशेषणम्। ( ऋ० सं० २ । १ । ८ ॥ २ । ९ । ८ ) इत्यत्र अग्नेः। ( ऋ० सं० ७ । ९१ । ९ ) इत्यत्र नियुताम्। ( ऋ० सं० २ । २४ । १० ) इत्यत्र 'सुविदत्राणि सातानि'। सुविदत्रशब्दस्य ऋग्वेदे सप्तैव प्रयोगाः। स प्रख्यातार्थे प्रयुज्यते इति भाति। पदपाठः सुऽविदत्र इति। तेन विद्धातोः विदत्रशब्दः। सुविदत्रिय – सुविदत्र। सु शोभनं विदत्रं प्रख्यातिः येषां ते सुविदत्राः। पितरः प्रख्याताः यस्मात्ते देवलोकं गताः। देवलोके च ते देवभूताः। अनष्टपशुः भुवनस्य गोपाः विद्वान् पूषा त्वाम् इतः पृथिवीलोकात् प्रच्यावयतु त्वरयतु स्वर्गगमनाय। तत्र गतं त्वाम् सः अग्निः एतेभ्यः सुविदत्रियेभ्यः देवेभ्यः पितृभ्यः परिददत् ददातु। पथस्पतिः पूषा पशुपालः। तेन रक्षिताः पशवः न कदाऽपि नश्यन्ति यस्मात् स विद्वान् भुवनस्य च गोपाः।

**पत्रं**　　　　**पङ्क्तिः**

६६२　　　२४ मनुष्यपशून् अप्रमादेन स स्वर्गं नयति । अग्निस्तान् पितृभ्यः अपर्यति । अयमेव ऋचोऽर्थः । स्पष्टश्च । दत्र-शब्दो दानार्थे वर्तते । सु शोभनं वि विशिष्टं दत्रं दानं येषाम् । पितर इहस्थेभ्यो मनुष्येभ्यो दानानि ददति इति ऋग्वेदे कथ्यते । तेन सुविदत्राः = दानानां दातारः । किंतु 'सुविदत्राणि सातानि' इत्यत्र सातानि = दानानि । अत्र सुविदत्रशब्दः सातानि इत्यस्य कथं विशेषणं भवेत् ।

६६३　　　२ पञ्चदशस्तोमः । अस्य त्रयः प्रकाराः । तिस्र ऋचः । तासु

| | | |
|---|---|---|
| प्रथमा ( त्रिः ) + मध्यमा ( सकृत् ) + उत्तमा ( स० ) = ९ | | प्रथमः प्रकारः पञ्चपञ्चिका-नामा |
| प्रथमा ( स० ) + मध्यमा ( त्रिः ) + उत्तमा ( स० ) = ५ | | |
| प्रथमा ( स० ) + मध्यमा ( स० ) + उत्तमा ( त्रिः ) = ५ | | |
| १५ | | |
| प्रथमा ( त्रिः ) + मध्यमा ( स० ) + उत्तमा ( स० ) = ५ | | द्वितीयः |
| प्रथमा ( स० ) + मध्यमा ( स० ) + उत्तमा ( स० ) = ३ | | |
| प्रथमा ( स० ) + मध्यमा ( त्रिः ) + उत्तमा ( त्रिः ) = ७ | | |
| १५ | | |
| प्रथमा ( स० ) + मध्यमा ( स० ) + उत्तमा ( स० ) = ३ | | तृतीयः प्रकारः उद्यतीनामा |
| प्रथमा ( स० ) + मध्यमा ( त्रिः ) + उत्तमा ( स० ) = ५ | | |
| प्रथमा ( त्रिः ) + मध्यमा ( स० ) + उत्तमा ( त्रिः ) = ७ | | |
| १५ | | |

बृहत्साम = 'त्वामिद्धि हवामहे' ( ऋ० सं० ६ । ४६ । १ ) इत्यस्यामृच्युत्पन्नम् ।

१०—१७ 'ये च देवगणाः' = देवाः वरुणादयः । देवगणाः पुनर्मरुदादयश्च । याश्च स्त्रियः = अदित्यादयः ( ११ ) । रसानुप्रदानं = वृष्टिः ( १३ ) मेघवधः । या च का च बलकृतिः = यच्च किंचिद्बलेन क्रियते पतङ्गादिभिरपि कर्म इन्द्रकर्मैव तत् ( १६—१७ ) । कुतः । बलं हि प्राणः । प्राणश्च वायुः । वायुश्च इन्द्रः ' ( ट. ) ।

१३ रसाः = अवश्यायः वर्षः ।

| पत्रं | पङ्क्तिः |
|---|---|
| ६६३ | १४ अन्या वृत्रवधात्। |
| | १६ इन्द्रस्यैव तत् नान्यस्य । इन्द्रकर्म इति पुनरुक्तिः अवधारणार्था। |
| | २० हे इन्द्राग्नी दिवो रोचना त्रीन् स्वर्गान् वाजेषु संग्रामेषु परिभूषथः व्याप्नुथः। तत् युवयोः वीर्यं प्र चेति ज्ञायते। |
| ६६४ | ६ न शेषः किंतु सर्व एव मन्त्रः ( निरु० ३९३।१६–२२ ) इत्यत्र व्याख्यातः। 'शेषः'—शब्दो व्यर्थः। |
| | २० उक्थं होत्रा शस्यते । प्रतिगरश्चाध्वर्यवे दीयते। अध्वर्यवे होत्रा दत्तमुत्तरं प्रातिगरः। उक्थं शस्यते मदश्च शस्यते। मदः = प्रतिगरः ( दुर्गः )। मदः = मदजनकम् उक्थम् ( सायणः )। |
| ६६५ | १ 'चन' इति पदपाठे एकपदम्। तथापि च न इति द्वे पदे अर्थकरणाय आवश्यके। |
| | १६ रथः अत्र रथः एव। न रंहणम्। |
| | १८ वीराः = शूरपुत्राः। |
| ६६६ | ५ अपिकर्णे = ( स्तोतुः ) कर्णसमीपे। |
| | ६ षीं = सीम्। सी = सर्वतः ( दुर्गः ) । सीं = बुद्धिस्थं कंचित् अरिम्। निर्धमथः = निःसारयथः निरस्यथः। |
| | ७ निः = निर्धमथः। षधस्तात् = सधस्तात् सहस्थानात् सर्वस्मात्स्थानात्। |
| | ८ मघोनः = मघवतः यजमानस्य। हृदः = हृदयात्। |
| | ९ अनाकालः = दुर्भिक्षम्। |
| | १३ त्रैधातवी नाम इष्टिः। इन्द्रो वृत्रस्य वीर्यं विष्णुसाहाय्येन त्रिःकृत्वः त्रिभिर्भागैरपाहरत् । तस्मात् 'त्रैधातवी' इति नाम ( मैत्रा० सं० २।४।३ – ५ )। |
| | १८ अप्रति = प्रतीकाराय असमर्था यथा भवेयुः तथा। वीरान् = पुत्रान्। |

| पत्रं | पङ्क्तिः |
|---|---|
| ६६७ | १३ अथापि – तथा च । विशेषतः मित्रादीन् न तथाऽन्यान् देवान् । प्रकरोति = स्तोतुमारभते । |
| | १५ पराणि = अन्यानि । अन्या देवताः मित्रादयः । अपरेण मित्रवरुणादिनाम्ना । भेदपक्षे = देवतानानात्वपक्षे । |
| | १७ इन्द्रवायुसंस्तवे ( ४–६ ) । मित्रादयो मध्यमस्य कर्मात्मानः इति विरोध आभास एव । |
| | १८ मुख्या स्तुतिः यस्याः सा । सा + अमुख्या । |
| | १९ निर्दिष्टा तृतीयया विभक्त्या । |
| ६६८ | ९ ' अस्माकं गव्यूति रजासि च ' इति दूरान्वयः । |
| | १६ चन्द्रसूर्यौ कथं दिवं जनयतः । स्वेन उपकारेण कर्मणा प्रकाशदानेनामृतजलदानेन च । इदं जननं काल्पनिकम् । |
| | १८–१९ सार्वलौकिकस्य उदकस्य । देवाः युवां नाभिं कुर्वन्ति । |
| ६६९ | १० अग्निना पूषा संस्तूयते ! सोऽग्निर्मध्यमः स्यात् द्युस्थानो वा। यस्मात्पार्थिवेनाग्निना पूषसंस्तवस्य प्रतिषेध उक्तः ( ६६१। ४–५ ) । ' पूषा त्वेतश्च्यावयतु० ' इदमाग्नापौष्णहविष उदाहरणं न संस्तवस्य। मध्यमद्युस्थानाग्नेः पूष्णा संस्तवस्योदाहरणं नोपलभ्यते । |
| | "अग्निना च पूषेत्यपाठः ' न तु संस्तवः ' ( निरु० ७।८) इति प्रतिषेधविरोधात् । वायु च पूषेत्यपाठः । उदाहरणम् । ' प्रतव्यसो नमउक्तिं० उत त्मन् ' (ऋ० सं० ५।४३,९)। सायणभाष्यं च दीयते । अत्र पूषवायू संस्तूयेते " ( ट. ) । 'अथाप्याग्नापौष्णं हविर्न तु संस्तवः ' इति ( निरु० ७।८ ) संस्तवप्रतिषेधः । तस्मात् 'वायुना च पूषा ' इति पाठः स्यात् इति कस्यचिन्मतम् । किन्त्वयं प्रतिषेधः पार्थिवाग्निपूष्णोः संस्तवस्य न मध्यमाग्नेर्द्युस्थानाग्नेर्वा पूष्णा संस्तवस्य । तस्योदाहरणमद्यापि नोपलब्धम् । मृग्यं तत् । |
| | ११ नोदाहरन्ति = दुर्गसदृशाः केचिद्वृत्तिकाराः । ' उदाहरति ' ( २५ ) इत्यपपाठो यस्माद्यास्कः संस्तवोदाहरणानि न ददाति । |

पत्रं पङ्क्तिः

६६९ १२ 'वायुना च संस्तवः' इदमपूर्णम् । केनाप्यन्येन प्रान्तभागे लिखितं स्यात् । तत्केनापि लेखकेन दुर्गवृत्तावन्तर्भावितम् ।

१२-१३ ' वायुना संस्तवः ' पृष्णोऽस्ति (ऋ० सं० ९।४३।९) इत्यत्र ।

१७ दिवो धर्तार इत्यस्मात्कारणात्सुहस्ताः ।

१८ वाजिनः = ' अग्निर्वायुः सूर्यस्ते वै वाजिनः ' इति हि तैत्तिरीयब्राह्मणं १।६।३।९ ( च. ) ।

१९ द्योतनवन्तो ये वाजिनश्च उदकस्य धारयितार उक्ताः । 'अप्स्वन्तरमृतं' ( ऋ० सं० १।२३।१९ ) इत्यत्र । मित्रवरुणरुद्रसोमवातपर्जन्या मध्यस्थानीयाः । पूषा पृथिवीस्थानीयः ।

६७० ६ सप्तदशस्तोमः—

१ प्रथमा ( त्रिः ) + मध्यमा ( स० ) + उत्तमा ( स० ) = ९
२ ,, ( स० ) + ,, ( त्रिः ) + ,, ( स० ) = ९ } दशसप्त
३ ,, ( स० ) + ,, ( त्रिः ) + ,, ( त्रिः ) = ७
१७

अथवा १ प्रथमा ( सं० ) + मध्यमा ( त्रिः ) + उत्तमा ( स० ) = ९
२ ,, ( स० ) + ,, ( त्रिः ) + ,, ( त्रि० ) = ७
३ ,, ( त्रिः ) + ( स० ) + ,, ( स० ) = ९
१७

१ प्रथमा ( त्रिः ) + मध्यमा ( त्रिः ) + उत्तमा ( स० ) = ७
२ ,, ( स० ) + ,, ( स० ) + ,, ( स० ) = ३
३ ,, ( स० ) + ,, ( त्रिः ) + ,, ( त्रिः ) = ७
१७

अथवा १ प्रथमा ( त्रिः ) + मध्यमा ( स० ) + उत्तमा ( त्रिः ) = ७
२ ,, ( स० ) + ,, ( स० ) + ,, ( स० ) = ३
३ ,, ( त्रिः ) + ,, ( स० ) + ,, ( त्रिः ) = ७
१७

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६७० | १ | प्रथमा ( त्रिः ) + मध्यमा ( स० ) + उत्तमा ( स० ) = ५ |
| | २ | „ ( स० ) + „ ( स० ) + „ ( स० ) = ३ |
| | ३ | „ ( त्रि· ) + „ ( त्रिः ) + „ ( त्रिः ) = ९ |
| | | १७ |
| | १ | प्रथमा ( स० ) + मध्यमा ( स० ) + उत्तमा ( स० ) = ३ |
| | २ | „ ( स० ) + „ ( त्रिः ) + „ ( स० ) = ५ |
| | ३ | „ ( त्रिः ) + „ ( त्रिः ) + „ ( त्रिः ) = ९ |
| | | १७ |
| | १ | प्रथमा ( त्रिः ) + मध्यमा ( त्रिः ) + उत्तमा ( स० ) = ७ } मन्त्रा |
| | २ | „ ( स० ) + „ ( त्रिः ) + „ ( स० ) = ५ } मन्त्रा |
| | ३ | „ ( स० ) + „ ( स० ) + „ ( त्रिः ) = ५ } मन्त्रा |
| | | १७ |

१५ अग्निप्रकरणे ( निरु० ७ । ८ ) इन्द्रप्रकरणे ( निरु० ७ । १० ) च ‘ अथास्य मंस्तविका देवाः ’ इत्यब्रवीत् ।

१६ आदित्यः = सूर्यः ।

१७ स्वपक्षः ‘ तिस्र एव देवताः ’ इति । तस्य उद्योतनेन पुनरुक्त्या अनुस्मृतिः । पुनरुक्तिरनुस्मृतये । उद्योतनं = प्रकर्षेण कथनम् ।

२१ ‘ यच्च ’ इत्यस्य स्थाने छ. त. द. ग. च. ज. पुस्तकेषु ‘ यत्तु ’ ( ३२ ) ।

२१–२२ ‘ प्रवाल्हितम् = अन्तर्धानकर्म । रात्रिग्रहनक्षत्रादिप्रच्छादनमतश्चास्मै प्रकाशनेनान्तर्धत्ते इति प्रवल्हितं प्रकाशनम् । आदित्यकर्मेत्यर्थः । अविद्यापनयेनात्मादिप्रकाशनम् ’ (ट.) । धातुपाठे वल्हधातुर्नास्ति । यद्ययं धातुर्ह्वलधातुसदृशो भवेत्तर्हि ‘ह्वल ह्मल चलने ’ इत्यनेन प्रवह्लितामित्यस्य चलनमित्यर्थः स्यात् । यत्किंचिच्चलति तदादित्यप्रभावेणैव । सर्वं चलनमादित्यायत्तम् ।

प्रकाशनमग्नेः कर्म । बलकृतीरिन्द्रस्य । चलनं चाऽऽदित्यस्य ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६७० | २२ | अत्र किमर्थं चन्द्रमसा वायुनेति । त्रय एवेति कृत्वा प्रपञ्चो न कृतः । |
| ६७१ | १६ | उत्तरोऽर्धर्चो निराकाङ्क्ष आशिषा । |
| ६७२ | १ | ऋतवः छन्दांसि स्तोमाः पृष्ठानि एतानि कानिचित् पूर्वेषु अग्निभक्तिषु कथितानि । शेषाण्यत्र कथ्यन्ते । |

'स ( इन्द्रः ) एतं माहेन्द्रं ग्रहमब्रूत माध्यंदिनं सवनानां निष्केवल्यमुक्थानां त्रिष्टुभं छन्दसां पृष्ठं साम्नाम्' ( ऐ० ब्रा० १२ । १० ) ।

'अभि त्वा शूर नोनुम इति रथंतरस्य योनिम्' ( ऐ० ब्रा० २१ । २ ) ।

'त्वामिद्धि हवामह इति बृहतो योनिम्' ( ऐ० ब्रा० २१ । ४ ) ।

अयं लोकः प्रातःसवनं वसन्तः गायत्री त्रिवृत् रथंतरम् ।
अन्तरिक्षं माध्यदिनं ग्रीष्मः त्रिष्टुप् पञ्चदश बृहत् ।
असौ लोकः तृतीयसवनं वर्षा जगती सप्तदश वैरूपम् ।
एते स्थान( लोक )व्यूहाः । स्थानव्यवस्थेत्यर्थः ।

शरद् अनुष्टुप् एकविंशः वैराजम् ।
हेमन्तः पङ्क्तिः त्रिणवः शाक्करम् ।
शिशिरः अतिच्छन्दाः त्रयस्त्रिंशः रैवतम् ।

एतानि शिष्टान्यनुक्रमेण पूर्वेषु व्यूहेषु संस्थाप्यानि ।
पूर्वा मुख्या कल्पना ( व्यवस्था ) । इयमनुकल्पना तदवलम्बिनी व्यवस्था ।

'अनुकल्पयीत' = अनुकल्पयेत । आह्वयीत = आह्वयेत ( आश्व० श्रौ० ८ । १३ ) । वेदयीत ( आश्व० श्रौ० ८ । १४ ) । कामयीरन् ( आश्व० श्रौ० १२ । ८ ) । एतानि श्रौतसूत्रकालीनानि रूपाणि ।

पृष्ठं = सामसाध्यं पृष्ठस्तोत्रम् । यथाऽग्निष्टोमे रथंतरं साम अत एव रथंतरं पृष्ठम् । अतिरात्रे बृहत्साम बृहत्पृष्ठम् । एवं

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६७२ | १ | रथंतरं बृहत् वैरूपं वैराजं चेति चत्वारि सामानि तान्येव च पृष्ठानि । |

त्रयाणां सवानां छन्दांसि देवताश्च(ऐ० ब्रा० १३ । ३) इत्यत्र दीयन्ते ।

पूर्वेष्वग्न्यादिभक्तिष्वन्तर्भूताः । ऋतुच्छन्दःस्तोमपृष्ठानामग्न्यादिषु भक्तिः । कथितेभ्यस्तेभ्योऽकथितानि शिष्टानि । सोऽयं भक्तिशेषः । ऋत्वादीनि शिष्टानि अग्न्यादिभक्तीनि पूर्वेष्वन्तर्भूतानि ।

२ पृष्ठानि = पृष्ठस्तोत्रसाधकानि सामानि ।

४ ऋतवोऽग्न्यादीन् भजन्ते । ऋतुशेषं शिष्टानृतून् ।

५–६ गायत्रीतः अनुष्टुप् । त्रिष्टुभः पङ्क्तिः । जगत्या अतिच्छन्दाः ( ऐ० ब्रा० १९।६ ) ।

अग्निः त्रिवृत्स्तोमः रथंतरं साम गायत्री छन्दः (ऐ० ब्रा० २०।१)
इन्द्रः पञ्चदशस्तोमः बृहत्साम त्रिष्टुप् छन्दः (ऐ० ब्रा० २०।३) ।
विश्वे देवाः सप्तदशस्तोमः वैरूपं साम जगती छन्दः (ऐ० ब्रा० २१।१) ।

वाक् एकविंशः वैराजं अनुष्टुप् ( ऐ० ब्रा० २१।४)।
गौः त्रिणवः शाक्वरं पङ्क्तिः (ऐ० ब्रा० २२।१)।
वैरूपं ( ६ ) = ' यद्याव इन्द्र ते शतं ' ( ऋ० सं० ८ । ७० । ५ ) इत्यस्यामृच्युत्पन्नम् । ( ऐ० ब्रा० २१ । २ )।
' पिबा सोममिन्द्र मदन्तु त्वा ' ( ऋ० सं० ७ । २२।१ ) इत्यस्यामृच्युत्पन्नं साम वैराजम् ( ऐ० ब्रा० १७ । ७ )। ' प्रोष्वस्मै पुरोरथम् ' ( ऋ० सं० १० । १३३ । १ ) इत्यस्यां गीयमानं शाक्वरं साम ( ऐ० ब्रा० १७।७)।

| | | | | | | |
|---|---|---|---|---|---|---|
| १ प्रथमा (३) | मध्यमा (५) | उत्तमा (१) | = ९ | त्रिणवः |
| २ ,, (१) | ,, (३) | ,, (५) | = ९ | |
| ३ ,, (५) | ,, (१) | ,, (३) | = ९ | |
| | | | २७ | |

द्यौः त्रयस्त्रिंशः रैवतं अतिच्छन्दाः (ऐ० ब्रा० २२।७ )।

| पत्रं | पङ्क्तिः |
|---|---|
| ६७२ | ५-६ 'रेवतीर्नः सधमादे' (ऋ० सं० १।३०।१३) इत्यस्यामृच्युत्पन्नं साम रैवतम्। (ऐ० ब्रा० १७।७) |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | प्रथमा | ३ + | मध्यमा | ३ + | उत्तमा | १ | = | ७ | सप्तसप्तिनी एकविंशः |
| २ | ,, | १ + | ,, | ३ + | ,, | ३ | = | ७ | |
| ३ | ,, | ३ + | ,, | १ + | ,, | ३ | = | ७ | |
| | | | | | | | | २१ | |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | प्रथमा | ३ + | मध्यमा | १ + | उत्तमा | १ | = | ५ | उद्यती |
| २ | ,, | १ + | ,, | ३ + | ,, | ३ | = | ७ | |
| ३ | ,, | ३ + | ,, | ३ + | ,, | ३ | = | ९ | |
| | | | | | | | | २१ | |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | प्रथमा | ३ + | मध्यमा | ३ + | उत्तमा | ३ | = | ९ | प्रतिष्टुतिः |
| २ | ,, | १ + | ,, | ३ + | ,, | १ | = | ५ | |
| ३ | ,, | ३ + | ,, | १ + | ,, | ३ | = | ७ | |
| | | | | | | | | २१ | |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | प्रथमा | ३ + | मध्यमा | ३ + | उत्तमा | ३ | = | ९ | सूर्मी |
| ३ | ,, | १ + | ,, | १ + | ,, | १ | = | ३ | |
| ३ | ,, | ३ + | ,, | ३ + | ,, | ३ | = | ९ | |
| | | | | | | | | २१ | |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | प्रथमा | ३ + | मध्यमा | ५ + | उत्तमा | १ | = | ९ | त्रिणवः प्रतिष्ठिता |
| २ | ,, | १ + | ,, | ३ + | ,, | ५ | = | ९ | |
| ३ | ,, | ५ + | ,, | १ + | ,, | ३ | = | ९ | |
| | | | | | | | | २७ | |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | प्रथमा | ३ + | मध्यमा | ३ + | उत्तमा | १ | = | ७ | उद्यती |
| ३ | ,, | १ + | ,, | ३ + | ,, | ५ | = | ९ | |
| ३ | ,, | ५ + | ,, | ३ + | ,, | ३ | = | ११ | |
| | | | | | | | | २७ | |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | प्रथमा | ३ + | मध्यमा | ७ + | उत्तमा | १ | = | ११ | त्रयस्त्रिंशः |
| २ | ,, | १ + | ,, | ३ + | ,, | ७ | = | ११ | |
| ३ | ,, | ७ + | ,, | १ + | ,, | ३ | = | ११ | |
| | | | | | | | | ३३ | |

पत्रं पङ्क्तिः

६७२ "

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | प्रथमा | ३ + | मध्यमा | ७ + | उत्तमा | १ | =११ | | समत्रिंशा |
| २ | ,, | १ + | ,, | ३ + | ,, | ७ | =११ | | त्रयस्त्रिंशः |
| ३ | ,, | ७ + | ,, | १ + | ,, | ३ | =११ | | |
| | | | | | | | ३३ | | |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | प्रथमा | ३ + | मध्यमा | ५ + | उत्तमा | ३ | =११ | नेदीयः |
| २ | ,, | ३ + | ,, | ३ + | ,, | ५ | =११ | संक्रमा |
| ३ | ,, | ५ + | ,, | ३ + | ,, | ३ | =११ | |
| | | | | | | | ३३ | |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | प्रथमा | ३ + | मध्यमा | ५ + | उत्तमा | १ | = ९ | उद्यती |
| २ | ,, | १ + | ,, | ३ + | ,, | ७ | =११ | |
| २ | ,, | ७ + | ,, | ३ + | ,, | ३ | =१३ | |
| | | | | | | | ३३ | |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | प्रथमा | ३ + | मध्यमा | ५ + | उत्तमा | ५ | =१३ | प्रत्यवरोहिणी |
| २ | ,, | ५ + | ,, | ३ + | ,, | ३ | =११ | |
| २ | ,, | ३ + | ,, | ३ + | ,, | ३ | = ९ | |
| | | | | | | | ३३ | |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | प्रथमा | ३ + | मध्यमा | ७ + | उत्तमा | ५ | =१५ |
| २ | ,, | ५ + | ,, | ३ + | ,, | ३ | =११ |
| ३ | ,, | ३ + | ,, | १ + | ,, | ३ | = ७ |
| | | | | | | | ३३ |

६–७ अग्निः पृथिवीस्थानः । एतान्यपि पृथिवीस्थानानि । एतेषामेकस्यापि श्रवणे मन्त्र आग्नेयः ।

७ 'अन्यतमस्यात्' (२०) इदं पाठान्तरं प्रामादिकम् ।

११-१२ पृथिवीभक्तीन्यन्तरिक्षभक्तीनीत्यत्रापि अयं प्रणाडिकान्यायो योज्यः । अवयवस्य स्तुतिरवयविनि संक्रमयितव्येति न्यायः ।

१२ एते देवताव्यूहा न स्थानव्यूहाः । अयं भागः प्रक्षिप्त इव भाति यस्मादिदं न साक्षादग्न्यादिभक्तिभिः संबद्धम् । सामस्थाने पृष्ठशब्दः अग्निभक्तीनीन्द्रभक्तीनीति वक्तव्ये पृथिव्यायतनान्य

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १७२ | १२ | न्तरिक्षायतनानि आदित्यभक्तीनीति वक्तव्ये द्युभक्तीनि 'अनुकल्पयीत' इत्याख्यातरूपं मन्त्रयजुःशब्दयोर्व्युत्पत्ति-रित्येतेभ्यः कारणेभ्यो नेदं यास्करचितम् । |
| | १३ | 'सर्वमेतन्मन्त्राश्रयम्' इति कुत्रोक्तम्। 'यत्कामः०' (१०९। ८) इदं मन्त्रदेवतालक्षणम् । |
| १७३ | ८–९ | मन्तारो मननशीला एभ्यो मन्त्रेभ्योऽध्यात्मादार्थं, मन्यन्ते मन्तुमुपलभन्ते । |
| | ९ | दुर्गदत्तं ब्राह्मणवचनं कस्माद्ब्राह्मणादिति न ज्ञायते । |
| | १०–११ | 'देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशंस्ते छन्दोभिरच्छादयन्यदेभिरच्छादयंस्तच्छन्दसां छन्दस्त्वम्' ( छा० उ० १ । ४ । २ )<br>'देवा असुरान्हत्वा मृत्योरबिभयुस्ते छन्दांस्यपश्यंस्तानि प्राविशंस्तेभ्यो यद्यदच्छदयत्तेनात्मानमच्छादयन्त तच्छन्दसां छन्दस्त्वम्' ( मैत्रा० सं० ३ । ४ । ७ ) । |
| | १२ | 'यजुषा ह वै देवा अग्रे यज्ञं तेनिरेऽथर्चाऽथ साम्ना । यजो ह वै नामैतद्यद्यजुरिति' ( शत० ब्रा० ४।६।७।१३ ) । |
| | १३ | 'सोऽनुवाक्यामनूच्य याज्यामनुद्रुत्य पश्चाद्वषट्करोति । सह वै वषट्कारेण जुहुयाद्वषट्कृते वा' ( शत० ब्रा० १।७।२।२२)। 'देवपात्रं वा एष यद्वषट्कारः (तथैव १३) । स वै वौ-गिति करोति । वाग्वै वषट्कारो वाग्रेतो रेत एवैतत्सिञ्चति षडित्यृतवो वै षट् तदृतुष्वेवैतद्रेतः सिच्यते तदृतवो रेतः सिक्तमिमाः प्रजाः प्रजनयन्ति तस्मादेवं वषट्करोति' ( तथैव २१ ) । को वषट्करोति ।<br>'स्तवे वज्री ऋचीषमः' ( निरु० ६ । २३ ) अत्र ऋचीषमः = ऋचा समः । एवं प्रजापतिरात्मानमृचा समं मेने । किंतु साम ऋचा समं यस्मात्तत् ऋच्यध्यूढम् । साम ऋच एव विस्तरः । गेया ऋक् = साम । तस्मात् 'प्रजापतिः साम ऋचा समं मेने' इति साधुतरं निरूपणम् । |
| | १८ | संहिता तत्पदानि तेषां च स्तोभः विस्तरः सामनामा । |

पत्रं पङ्क्तिः

६७२ २० यस्मिन्ग्रन्थे ऋचामुत्पत्तिकारणानि दीयन्ते स ग्रन्थोः निदानः । तं ग्रन्थं ये अधीयते ते । अथवा ऋचां निदानानि ये विदुस्ते नैदानाः । 'तदधीते तद्वेद' ( पा० ४ । २ । ५९ ) ।

२२ 'त्रिवृत्स्तोमानां मुखं गायत्री छन्दसामग्निर्देवतानां ब्राह्मणो मनुष्याणां वसन्त ऋतूनाम् । ( ताण्ड्य० ६ । १ । ६ )

| | | | | |
|---|---|---|---|---|
| राजन्यस्य | पञ्चदशः स्तोमः | त्रिष्टुप् | इन्द्रो | ग्रीष्मः ( ताण्ड्य० ६ । १ । ८ ) |
| वैश्यस्य | सप्तदशः | जगती | विश्वेदेवाः | वर्षाः ( ताण्ड्य० ६ । १ । १० ) |
| शूद्रस्य | एकविंशः | अनुष्टुप् | | न काचन देवता ( ताण्ड्य० ६ । १ । ११ ) |

२३ त्रि + गमना(६७२ । १८) । एते विपरीते । गाय(गमना) + त्री ( त्रि ) = गायत्री । त्रिभिः पादैर्गच्छति तस्माद्गायत्री। इदं 'गायतो मुखात्०'( ६७२ । १८ ) इति ब्राह्मणवाक्यं च दुर्गेण न व्याख्याते ।

'सेयं सर्वा कृत्स्ना मन्यमाना गायद्यदगायत्तस्मादियं गायत्री । अग्निर्गायत्रः' ( शत० ब्रा० ६ । १ । १ । १५ ) ।

'सा हैषा यगांस्तत्रे । प्राणा वै गयाः । तस्माद्गायत्री' ( शत० ब्रा० १४ । ८ । १५ । ७ ) ।

( प्रजापतिः ) भूरितीमामसृजताग्निं रथंतरं त्रिवृतं गायत्री भुवरित्यन्तरिक्षं वातं वामदेव्यं त्रिष्टुभं पञ्चदश स्वरिति दिवं सूर्यं बृहदेकविंशं जगती ( काठ० सं० ६ । ७ ) ।

'या ते अग्ने पवमाना तनूः पृथिवीमन्वाविवेश
याऽग्नौ या रथंतरे या गायत्रे च्छन्दसि या त्रिवृति स्तोमे ।
या ते अग्ने पावका तनूः अन्तरिक्षमन्वाविवेश
या वाते या वामदेव्ये या त्रैष्टुभे च्छन्दसि या पञ्चदशे ।
या ते अग्ने शुचिः तनूः या दिवमन्वाविवेश
या सूर्ये या बृहति या जागते च्छन्दसि या सप्तदशे'
( काठ० सं० ७ । १४ )

| पत्रं | पङ्क्तिः | |
| --- | --- | --- |
| १७४ | १ | गायत्रीत उष्णिहि चत्वार्यधिकान्यक्षराणि । यथा— ' यस्य त्यच्छम्बरं मदे ( १ ) दिवोदासाय रन्धयः (२) अयं स सोम इन्द्र ते ( ३ ) सुतः पिब ' ( ऋ० सं० ६ । ४३ । १ ) ॥ 'सुतः पिब' एतानि चत्वार्यधिकान्यक्षराणि । एतदुष्णीषसदृशम् ( ४ ) । उत्स्नाता ( १७३ । २६ )= उद्वेष्टिता । उत्स्नाता = अधिकं स्नाता चतुर्भिरक्षरैः । |
| | १–२ | उष्णिक् त्रिपाद् । गायत्रौ द्वौ पादौ प्रत्येकमष्टाक्षरौ । जागतश्च द्वादशाक्षर एकः पादः । उत् + स्निह् । अथवा ' उ ' इत्युपजन उच्चारणार्थः । |
| | ९ | उष दाहे । शिरोदाहं सूर्यकृतशिरस्तापमिदं नयतीति उष्णीषम् । अथवा ' उ ' उच्चारणार्थे । ष्णीष् ष्णा शौचे ( धा० २ । ४२ ) इत्यस्मात् । |
| | ११ | अनुष्टोभति = स्थिरी करोति । |
| | १२ | ' अनुष्टुप् ( चतुष्पाद ) गायत्रैः ' ( पिङ्ग० ९ । ३ । ) । |
| | १३ | समुच्चिनोति = समर्थयति । |
| | १९ | ' अनुस्तोभति ' ( च. ज. २४ ) इत्यपपाठो यस्मात् ' उपसर्गात्सुनोति० स्तोभति० ' (पा० ८ । ३ । ६९ ) इत्यनेन सस्य षो भवत्येव । |
| | १६–१७ | बृहत्या एकः पादो जागतो द्वादशाक्षरः । इतरे त्रयः पादा गायत्राः । अनुष्टुभः सर्वे पादा गायत्राः । |
| | १८ | ' पङ्क्तिर्जागतौ गायत्रौ च ' ( पिङ्गलसूत्रं ९ । १७ ) । पङ्क्तेश्चत्वारः पादाः । तेन कथं पञ्चपदा पङ्क्तिः । 'पदपङ्क्तिः पञ्च' ( पिङ्ग० ६ । ६ ) । 'चतुष्कषट्कौ त्रयश्च ' ( पिङ्ग० ६ । ७ ) । एतेन पदपङ्क्तिः पञ्चपदा । 'पञ्चपदा पङ्क्तिः' ( ऐ० ब्रा० २३ । ४ ॥ २९ । ४) । या ह्यक्षरपङ्क्तिः सा पङ्क्तिश्चतुर्धा ह्येतस्याः पञ्च पञ्चाक्षराणि ( मैत्रा० सं० १ ११ । १० )। |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६७४ | १९ | त्रिष्टुब् अनुष्टुभं पादे पादे त्रिभिरक्षरैः स्तोभति वर्धयति प्र- स्मात् त्रि+ष्टुभ्। अनुष्टुप्पादस्याष्टाक्षराणि। त्रिष्टुप्पादस्यैकादश। 'ततो निराह' इत्यत्र 'ततः' इत्यस्य स्थाने अतोवाचि 'यतः' पदं स्यात्। |
| | २१ | गायत्र्यादिभ्यः तीर्णतमं गायत्री स्तोभति च। |
| | २२ | बहुत्वात् = बह्वक्षरत्वात्। |
| | २३ | स्तोभनी = अवष्टम्भः। त्रिवृत् वज्रं तस्य स्तोभनी स्तुतिः त्रिष्टुप्। |
| ६७८ | १ | 'वज्रमस्त्री' (अमर० १।१।५०)। चतुर्णां त्रयः संधयः। |
| | ३ | 'यत्त्रिरस्तोभत्' (२३) इदं मूले वर्तते। (६७२।५-६)। किंतु इदं ग. च. ज. पुस्तकेषु न दीयते। दुर्गेण च न व्याख्यातम्। |

| | | | | | |
|---|---|---|---|---|---|
| गायत्री | त्रिपदा | अष्टाक्षरा | = | २४ | अक्षराणि। |
| उष्णिक् | ,, | ८+८+१२ | = | २८ | ,, |
| ककुब् | ,, | ८+१२+८ | = | २८ | ,, |
| अनुष्टुप् | चतुष्पदा | ८×४ | = | ३२ | ,, |
| बृहती | ,, | ८+८+१२+८ | = | ३६ | ,, |
| पङ्क्तिः | पञ्चपदा | ८×५ | = | ४० | ,, |
| त्रिष्टुप् | चतुष्पदा | ११×४ | = | ४४ | ,, |
| जगती | ,, | १२×४ | = | ४८ | ,, |

| | | |
|---|---|---|
| | १८ | आप्तं = पूर्णम्। 'अन्त्यम्' इति पाठान्तरं (३१) सुबोधम्। जगती इत्यत्र चर्करीतवृत्तौ अभ्यासो भृशार्थे। ज + गती= परां काष्ठां गता। |
| | १९ | जलचराः = ऊर्मयः (दुर्गः)। जलनिवासिनः प्राणिनः। तेषां मन्दा गतिः। |
| | १९–२० | 'जलाल्यमानः'। 'गल्' इत्यस्य चर्करीतवृत्तम्। गल् अदने (धा० १।५४७)। पुनः पुनर्भृशं वा भक्षयन् सन्। मन्दं मन्दं भक्षयन् प्रजापतिर्जगतीमसृजत्। ब्राह्मणमपि जगत्या मन्दगतिं दर्शयति। |

पत्रं पङ्क्तिः

६७६ १ बाहुल्यात् प्रयोगस्य ।

२ ' विराजो दिशः ' (पिङ्ग० ४।५) । विराट्पादे दशाक्षराणि । त्रिष्टुप्पादे एकादश । तस्मात् त्रिष्टुभः प्राग् विराट् किमिति न निरूपिता ।

३ साकल्यात् = दशाक्षरैः ।

४ विराध्यति = समृद्धा संपूर्णा न भवति यदा कदाचिदस्याः पादोऽक्षरेण विकलो भवति । कदाचिदधिकाक्षरेणेयं विशेषं मानं प्राप्नोति ।

५ दशाक्षरस्वरूपाद्विप्लुता अतिरिक्ता ।

६ पिपीलिकामध्या गायत्री ( ८ + ७ + ८ ) यथा—( ऋ० सं० ४ । ३२ । ११ ) । ' त्रिपादनिष्टमध्या पिपीलकमध्या ' (पिङ्ग० ६ । १७ ) । पिपीलिकस्य मध्य इव मध्यो यस्याः । अनुक्रमणीकारदर्शितः छन्दसां क्रमः (ऐ० ब्रा० भाष्यं ७।८)। छन्दोविचारः ( ऐ० ब्रा० १३।३–४ ) ।

१७ भूयिष्ठा देवता एकैकामृचमेव भजन्ते न कदाऽपि सूक्तम् ।

१९ लक्षणभेदादिभिः = सा सा देवता भिन्नलक्षणैर्लक्षिता ।

२१ 'उद्वेतीत्यर्धपञ्चमाः' (ऋ० सं० ७ । ६३ । १–४½ ) सौर्यम् बृहद्दे० ६ । ५ ) ।

यत्रा चक्रुरमृता गातुमस्मै श्येनो न दीयन्नन्वेति पाथः ।
प्रति वां सूर उदिते विधेम नमोभिर्मित्रावरुणोत हव्यैः (ऋ० सं० ७ । ६३ । ५ ) ॥ अत्र प्रथमोऽर्धर्चः सौर्यः शौनकस्य मतेन । उत्तरो मैत्रावरुणः । अन्येषां भिन्नं मतमासीदिति भाति । ' उद्वेति सुभगो ' । ( ऋ० सं० ७ । ६३ । १ )

' यत्रा चक्रुः ' ( ऋ० सं० ७ । ६३ । ५ ) ।

१ नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ।
भागं देवेभ्यो वि दधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः (ऋ० सं० १०।८५।१९ ) ॥

पत्रं पङ्क्तिः

६७७ १ नवो नवो भवति जायमानः सूर्य एव इति केचित्। अह्नां केतुः स उषसामग्र एति। चन्द्रमा आयन् देवेभ्यो भागं विदधाति दीर्घमायुः प्रतिरते च। अन्ये तु प्रथमः पादश्चन्द्रमःपरः। द्वितीयः आदित्यपरः। सर्वस्याश्चन्द्रमा देवतेत्यनुक्रमणी।

'परस्याः (१०।८५।१९) प्रथमौ पादौ सौर्यौ चान्द्रमसौ परौ'। (बृहद्दे० ७।१२९)। 'और्णवाभो द्वृचे (१०। ८५। १८-१९) त्वस्मिन्नश्विनौ मन्यते स्तुतौ' (बृहद्दे० ७। १२९)।

४ 'ऋग्भाजश्च भूयिष्ठाः' (६७५।९) इत्यत्र भूयिष्ठग्रहणात्।

५ कल्प्याः= स्थापनीयाः व्यूह्याः।

६ परमेष्ठी अमुष्मिन् लोके। ग्रहनक्षत्राण्यन्तरिक्षे। इतराणि पृथिव्याम्। 'परमेष्ठी' एतन्नाम ऋक्शाखायां नोपलभ्यते। ऋक्शाखायां 'कुषुम्भकः' इति शब्दो न तु कुसुम्भः कुसुम्भको वा।

७ निपातः = गौणं स्थानम्।

८ उप साधारण्येन स्तुतिः उपस्तुतिः। सर्वेषां साधारणा स्तुतिर्न तु कस्यचिदेकस्य मुख्या। तत्र = तस्मिन्निपातद्वैविध्ये। साधारण्यं नाम = साधारण्यस्यार्थ उदाहरणं च।

९ 'तत्र साधारणं नाम' (२७) इति पाठान्तरम्। नायं पाठः साधुः। किं तत्साधारणम्।

'तत्र साधारनोपस्तुतौ ण्यं तद्य०' (२७) अयं ग. ज. पाठो मिश्रितः। यथा—'तत्र साधारण्येनोपस्तुतौ + तत्र साधारण्यम्'। 'तत्र साधारण्येनोपस्तुतौ' अयं पाठः साधीयान्।

१४ पुनः = तु।

१६ 'पृथिव्याम्' इति पृथिवी इन्द्राग्न्योर्निवासस्थानम्। नायं पृथिव्याः प्राधान्येन निर्देशः।

१८ लक्षणत्वेन = पृथिवीनिवासिनौ इन्द्राग्नी।

१९ काश्चिन्निपातभाज इत्यस्मिन्नधिकारे।

| पृ० | पङ्क्तिः | |
|---|---|---|
| १७७ | २१ | अत्यन्तनैघण्टुकं = सदैव नैघण्टुकम् । |
| | २३ | आदित्यस्य ' स्वः पृश्निः ' इत्यादीनि नामानि। किंतु तेषां न कदाचन प्राधान्येन स्तुतिः। |
| १७८ | १ | वाक्यार्थेन उपजनितं पारतन्त्र्यं यस्य। आक्षिप्तं गृहीतं जितं स्वाभिधेयसामर्थ्यं यस्य। इवशब्दोऽग्निशब्दस्य प्राधान्यमाक्षिपति तिरस्करोति। |
| | १–३ | पाठान्तरे यच्छब्दो द्विः प्रयुज्यते ( २४–२९ )। |
| | २ | उपमानशब्देन = ' अग्निरिव ' इत्यत्र इवशब्दोऽग्नेरुपमानत्वं दर्शयति। तेन इवशब्द उपमानशब्दः । ' उपमाशब्देन । इति पाठ इष्टः। |
| | ३ | वाक्यार्थस्य सामर्थ्यं तेनोपजनितं प्राधान्येन सामर्थ्यं यस्य। मन्युशब्दः प्रधानमिति वाक्यार्थेन ज्ञायते। |
| | ७ | अग्निशब्दो विशेषणसदृशो गौणो विशेष्यं प्रधानशब्दमाकाङ्क्षते। तादृशं संबोधनान्तं मन्युशब्दमाकाङ्क्षन्। |
| | ८ | अर्थिनि = प्रधानार्थवति। |
| | ११ | अथोत = अपि च। अभिधानैः = गुणवाचकैर्विशेषणैः। |
| | १४ | संविज्ञानात् = ऐकमत्येन। इन्द्रादौ देवतारूपेऽर्थे रूढम्। |
| | १५ | आम्नायविधौ = आम्नायेन कृते विधौ । आम्नायकृतचोदनायाम्। |
| | १६ | ' इन्द्राय वृत्रतुरे ' ( १७३। ११ )न व्याख्यातम्। 'वृत्रहांहोमुक्प्रभृतीनि ' ( १९ ) इत्यत्रापि न वृत्रतुरशब्दो विद्यते। ' इन्द्राय वृत्रघ्न एकादशकपालं निर्वपेदिन्द्राय वृत्रतूरा एकादकशपालम् ' ( मैत्रा० सं० २।२।११ )। वेदः चोदयति। |
| | १७ | ' इन्द्रायांहोमुच एकादशकपालं निर्वपेत् ' ( मैत्रा० सं० २।२। १० ) |
| | १८ | ' समामनन्ति '। अनेन समाम्नाया बहव आसन् यास्केनापि निघण्टुसमाम्नायो रचित इति भाति। |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६७८ | १९ | देवतानामसु समामनन्ति । |
| | २२ | 'तु' इत्यस्य स्थाने 'तेषु' इति पाठान्तरम् (२९)। तेषु = देवतापदेषु । |
| | २३ | एतादृक्समाम्नानेन देवतानामानि भूयांसि भवेयुः । |
| ६७९ | १–२ | 'भूयांसि तु समाम्नानात्' (६७८ । २२) = किंतु यानि समाम्नातानि तेभ्योऽन्यान्यपि बहुतराणि सन्ति । किंतु अस्मिन्नर्थे 'तु'शब्दो व्यर्थो भवेत् । 'भूयांसि तु समाम्नानात्' (६७९ । १२) इदं 'तान्यप्येके समामनन्ति' (६७९ । ११) इत्यस्यानन्तरं वर्तते । तस्मात्तस्यान्योऽप्यर्थः स्यात् । भूयसां समाम्नाने किं प्रयोजनम् । न किमपि । केवलं गणनम् । भूयांसि समाम्नातानि स्युरित्येव केवलम् । |
| | ६ | संविज्ञानभूतं = रूढम् । प्राधान्येन स्तुतिर्यस्य तत् । देवतानामसु तदेवाहं समामने गणये यद्रूढं प्राधान्यस्तुति च । |
| | ७–८ | निर्विशेषणं = यदभिधानैः गुणपदैर्न संयुक्तम् । |
| | ९ | 'व्रतभृत् व्रतपतिः' इत्यादीन्यग्नेर्नामानि । 'अग्ने व्रतपते व्रतमालप्स्ये' (मैत्रा० सं० १ । ४ । १ ॥ १ । ४ । ९)। 'अग्निर्वै देवानां व्रतपतिः' (शत० ब्रा० १ । १ । १।२॥ मैत्रा० सं० १ । ४ । ९)। 'त्वमग्ने व्रतभृच्छुचिः' ) मैत्रा० सं० ४ । ११ । ४ ॥ तै० ब्रा० २ । ४ । १ । ११ ) एवमग्निर्व्रतभृत् । |
| | १७ | पूर्वेभ्यः समाम्नातृभ्यः = ये हविःसंबद्धानि अभिधानानि समामनन्ति तेभ्यः । |

'इन्द्राय वृत्रघ्ने अष्टाकपालं निर्वपेत्' इत्यादिर्विधिः । एतादृशा विधयो वेदब्राह्मणयोर्दृश्यन्ते । पूर्वे समाम्नातारो विधिदर्शनादभिधानानि समामनन्ति । कथमिदं ज्ञायते यद्विधिदर्शनात्ते समामनन्ति । 'हविश्चोदयति' (६७९ । १०) इति यास्कवचनात् । 'इमे 'शब्दः(१८) संनिहिततरं वस्तु दर्शयति । ये वृत्रहाद्यभिधानानि समामनन्ति ते स्तुतिदर्शनात्समामनन्ति ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६७९ | १७ | इदं च 'कर्मभिर्ऋषिर्देवताः स्तौति' ( ६७९ । १२ ) इति यास्कवचनात्स्पष्टम् । |
| | १८ | स इन्द्रः । वज्रबाहुः ( १९ ) इदं कथं कर्मनाम भवेत् । |
| | २२ | पृथक् = विशेष्यं विना प्रयोगे । वृत्रहादिविशेषणस्य नेन्द्रादिविशेष्यं बिना स्वातन्त्र्येण स्तुतिः । |
| | २३ | केवलस्य = विशेष्यासंबद्धस्य । |
| ६८० | २ | 'विशेषतः' = 'विशेष्यतः' इति पाठः स्यात् । विशेष्यं विना । क्वचित् = क्वचिदपि । अनवस्थानात् = विशेष्यं विना विशेषणं स्वातन्त्र्येण न क्वापि अवतिष्ठते प्रयुज्यते । |
| | ६ | क. ख. ग. घ. ज. पुस्तकेषु 'निरुक्तभाष्यार्थनिबन्धपद्धतौ' इदमाकस्मिकं न क्वचिदन्यत्र वर्तते । |
| | २० | प्रकरणे प्रकरणे व्याख्या भिन्ना । नैघण्टुकप्रकरणे व्याख्या ( १४३ । २९–२८ ) । नैगमप्रकरणे(२९२।२१–२२) |
| ६८१ | ५ | तत्रैतद्भवति = अयं प्रश्नो विचारो वोद्भवति । |
| | ८ | निःशेषेण ( सर्वत्र सर्वैश्च ) ज्ञातमेतदेवाभिधानं यस्य । |
| | ९ | यज्ञादिकर्मणोऽङ्गम् । विवक्षिते विशिष्टे स्थानकर्मणी यस्य । विवक्षितं स्थानं विशिष्टं च स्थानं यस्य इति पाठान्तरे ( २८–२९ )अयं बिवक्षितशब्दो विशिष्टमित्यर्थे प्रयुज्यते । |
| | १६ | अस्माकमग्निः संनिकृष्टः । पृथिव्यन्तरिक्षं द्युलोक इत्यनुक्रमः । |
| | १८–१९ | देवताभ्यः प्रत्यक्षाभिधानं साक्षादभिधानं न रोचते । परोक्षाभिधानं तेषां प्रियम् । देवताभिधानं व्युत्पादयितव्यं लौकिकशब्दवत् । |
| | १९ | देवता न साक्षाद्द्रष्टुं शक्या । साऽऽदौ परोक्षीकर्तव्या । अग्निरिति न देवतायाः साक्षान्नाम । परोक्षं हि तत् । परोक्षीकृतं तत्त्वं = परोक्षीकरणमेव तत्त्वम् । तदेव आर्थितम् इष्टं तेषां परोक्षनाम्नां निर्वचनेन । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६८१ | १९–२० | 'परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः' (शत० ब्रा० १४।६।११।२)। |
| | २१ | आगमः प्रमाणं यस्य। यदा देवताभिधानं सम्यग्ज्ञायते तदा देवतातादात्म्यमनुभूयते। |
| | २१–२२ | 'अथाऽऽगमो यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवति' (निरु० १३।१३)। |
| | २४–२५ | 'अग्निः कस्मात्' इत्युपोद्घातः। 'अग्रणीर्भवति' इत्युपन्यासः। |
| | २५–२६ | 'अथाऽऽत्मनो महतः प्रथमं भूतनामधेयान्यनुक्रमिष्यामः' (निरु० १४।१०)। अनेन सर्वाणि नामान्यात्मन एव। |
| | २७ | 'अयमेवैतत्सर्वमनुभवति' (निरु० १४।१३–१४)। 'तानीमान्येतस्मिन्नात्मन्येकं भवन्ति' (निरु० १४।१५)। 'तस्मिन्नेकं भवन्ति' (निरु० १४।१९)। 'सैषाऽऽत्मजिज्ञासा सैषा सर्वभूतजिज्ञासा ब्रह्मणः सार्ष्टिं सरूपतां सलोकतां गमयति य एवं वेद' (निरु० १४।३७)। एवं विभूतिताद्भाव्यमनुभवति। |
| ६८२ | १ | 'अपि वा सर्वाभिर्विभूतिभिर्विभूतत आत्मा' (निरु० १४।१२)। एवं सर्वा विभूतय आत्मन एव। |
| | ३ | 'अग्रणीर्भवति' इति विग्रहेण वाक्यम्। कृतस्य वाक्यस्य पदाना वर्णाः। तेषां (पदेभ्यः) निष्कर्षणेन समुदायः। तेनोपजनितोऽग्निशब्दः। अग्रणीः = अग्र + नी = अग्रं + नयति। अस्य वाक्यस्य द्वे पदे। तेषां वर्णाः स्पष्टाः। ते पदेभ्यो निष्कृष्यन्ते। तेभ्यो वर्णेभ्योऽग्निशब्द उत्पन्नः। |
| | ५ | अग्निशब्दस्य 'अग्' इत्यवयवः अग्रशब्दादुत्पद्यते। न केवलो 'ग्' इति। तेन अग्रशब्दः कर्मस्थानीयः पूर्वपदं च। |
| | ६ | अपरं शब्दं 'नयतिम्' उत्तरपदमवस्थाप्य। अग्रशब्दो निःसंशयः। स कस्या अपि क्रियायाः कर्म। तेन स व्यवस्थाप्यते। |

पत्रं पङ्क्तिः

१८२ ६ न तथोत्तरपदम् । (नि) नयतिः उत्तरपदं न उत्तरपदस्थम् ( २७ ) ।

७ कर्तव्यात्मनि कर्तव्यरूपे किमपि कर्तव्यमपेक्ष्यते इति नयतिसदृशं पदमावश्यकम् । करणीयस्थाने नयतिपदमवस्थाप्य । 'कर्तव्यात्मना' ( २८ ) इति ग. ज. पाठोऽपि साधुः । 'कर्तव्यार्थात्मना' (२८) = कर्तव्यार्थेन + कर्तव्यात्मना एवमयं मिश्र पाठः । तेन चोत्तरपदेन कर्तव्यरूपेण भवितव्यम् । किमपि करणीयम् । तस्मात् 'नयतिः' उत्तरपदम् । 'अवस्थाप्य' इत्यनेन काचित्संदिग्धता प्रदर्श्यते । 'कर्तव्यात्मनि० र्या' इति केनापि च. पाठो रूपान्तरितः (२८) । किंतु सोऽशुद्धः । नयतिः कर्तरि अवस्थाप्येत । 'आत्मनि' पदं किमर्थम् ।

१० अग्रं प्रधानशब्दवन्न नित्यं नपुंसकम् । 'अधिके च प्रधाने च प्रथमे चाभिधेयवत्' ( मेदिनी ) । यजमानमितरांश्चाग्रं नयति ।

१२ अग्निग्रहणं प्रथमं कर्म । यः पूर्वेद्युरग्निं गृह्णाति स श्वोभूते देवता अभियजते । ततश्च 'अग्ने व्रतपते व्रतमालप्स्य' इति । 'अग्निर्वै देवानां व्रतपतिर्ब्राह्मणो व्रतभृद्व्रतपतय एव प्रोच्य व्रतमालभते' ( मैत्रा० सं० १ । ४ । ९ ) । प्रणीयते पूर्वदिग्वर्त्याहवनीयस्थानं प्रति गार्हपत्यात् । अग्रं + नी = अग्निः ।

१४ अथवा अङ्गं + नी = अग्निः । संनममानः = सम्यक् नममानः = कर्मार्थं प्रह्वीभूय । सं नम् धातुर्यास्ककाले आत्मनेपदी आसीत् । अथवा 'ताच्छील्यवयोवचनशक्तिषु चानश्' ( पा० ३ । २ । १२९ ) इत्यनेन 'संनममानः' संनमनशीलं दर्शयेत् ।

१९ स्थूलौ अष्ठीवन्तौ ( जानूरुसंधी ) यस्य स स्थूलाष्ठीवान् । तस्यापत्यं स्थौलाष्ठीविः 'बाह्वादिभ्यश्च' ( पा० ४ । १ । ९६ ) इति सूत्रेण । बाह्वादिराकृतिगणः ।

| पत्रं | पङ्क्तिः |
|---|---|
| ६८२ | २२ 'क्नूयी शब्दे उन्दे च' ( धा० १ । ४८६ ) । ' अर्तिह्री-व्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ' ( पा० ४ । ३ । ३६ ) इत्यनेन 'क्नोपयति' = आर्द्रीं करोति । ' अ + क्नो + प + न = ' इत्यस्मात् अ + क्नः = अक्नः अग्नः अग्निः । |
| ६८३ | ३ ता हेतुत्वेनोपादाय = शब्दसाधने ताः क्रिया हेतवः । |
| | ४ ' इतात् ' अत्र ' इतः ' इति निष्ठान्तं रूपम् । 'इण्-धातोः ' इत्यर्थः । |
| | ६ ' णीङ् ' इति ग. घ. न. पाठः प्रामादिकः । |
| | ८ एतेर्धातोः = इण्धातोः । खलुशब्दो धाष्टर्यं द्योतयति । |
| | ९ किमपि वर्णसामान्यं भवेन्न भवेद्वा । अत्र ' वर्णसामान्येन ' पदं नावश्यम् । वर्णसामान्येन इणि अकारो नास्ति । वर्णसामान्येन सत्यं नास्ति ' इत्यन्वयः । ठ. ड. वर्जं सर्वेषु पुस्तकेषु ' सत्यं नास्ति । वर्णसामान्येन' ' इति विरामव्यवस्था । ' अग्निः ' इत्यत्र अकारः कस्मिन्नपि इण्रूपे नास्ति । एवं वर्ण-सामान्याभावः । तस्य इणः विकारमादाय ततस्तं विकारं व्यापादयति विपरिणमयति येन अकार उपलभ्येत । |
| | अथवा । वर्णसामान्येन = केऽपि वर्णाः इण्रूपे स्युः । तादृशं किमपि रूपं गृहीत्वा । अत्र वर्णसामान्यं काल्पनिकम् । |
| | अग्नौ इणोऽर्थदर्शनात् । शब्दार्थसंबन्धनित्यत्वात् । अर्थे च गुणभूतत्वाच्छब्दस्य । एतेभ्यः कारणेभ्यः तद्विकारमित्यादि । |
| | १० अग्नौ इणः अर्थदर्शनात् तस्य धातोः कोऽपि विकारो ग्रही-तव्यः । स च अकारवत्त्वेन परिणमयितव्यः । |
| | ११ व्यापादयति = विपरिणमयति । |
| | ११–१२ यथावस्थितस्य = वर्णव्यापादनं विना । |
| | १९ ततः = 'आययति' इति रूपात् । 'अत्राऽऽकारः' इति पाठान्तरम् ( २९–२६ ) । अत्र 'आय-यति ' रूपे आकारः । ततः आकाराद्कारमादत्ते । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६८२ | १५ | कोऽयं महान् प्रयासः । एतीति अयनः । अयनशब्दादकारः प्रयासं विना लभ्येत । अनक्तीति अज् । 'चोः कु' ( पा० ८।२।३० ) इत्यनेन अग् । इदं कुत्वम् । अथवा । दहतीति धक् । 'झलां जश् झशि' ( पा० ८।४।५३ ) इत्यनेन 'धग्'। इदं जश्त्वम्। यदा कुत्वं तदा अनक्तिर्धातुः । यदा जश्त्वं तदा दहतिः । अ ( एतीति अयनः ) + ग् (व्यनक्तीति व्यग्) + नि (नयति हविः० ) = अग्निः । अथवा । अ (एतीति अयनः) + ग् (दहतीति) धग् + नि ( नयति हविः० ) = अग्निः । एवं 'त्रिभ्य आख्यातेभ्यः' ( १ ) इत्युच्यते । |
| | १७ | साधीयस्तराः = साधीयस्यः + साधुतराः । 'अग्रं नयति अङ्गं नयति अक्नोपनः' इत्येताभ्यः क्रियाभ्यस्तिस्रः क्रियाः साधीयस्यः । |
| | १८–१९ | अनुक्रमेण अग्निर्लक्ष्यो निरूपणीयः । तस्य लक्ष्यस्य प्रधानस्तुत्या संबन्धः लक्ष्यप्रधानस्तुतिसंबन्धः । स लक्षितो यस्मिन् तदभिधानम् । |
| | २० | अग्निकर्मणां लिङ्गैर्लिङ्गिताः । |
| ६८२–६८३ | | अग्निसदृशो लातिनभाषायाम् 'इग्निस्' शब्दः । इग्ने उस् ( अग्नेः ) इग्निक्युलस् ( अग्निकः ) इग्निफर् ( अग्निभृत् ) इग्निजेना ( अग्निजः ) इग्निपेस् ( अग्निपाद् ) इग्निपोटेन्स् ( अग्निपतिः ) इत्यादितद्धितसमासरूपाणि । 'इग्निस्' शब्दस्य (अग्निशब्दस्य) उत्पत्तिं को ज्ञातुं शक्नोति। 'अग्निवह्नि' इत्यादिशब्देषु 'निः' नामकारकप्रत्ययवद्भाति । अजतीति अग्निः । वहतीति वह्निः । लातिनभाषायाम् 'अगो' चोदयामि । अजति = चोदयति । 'अज गतिक्षेपणयोः' (धा० १।२३०)। अङ्गतीति अग्निः । 'अङ्गेर्नलोपश्च' ( उणा० सू० ४।५० ) इत्यनेन । |
| ६८४ | ३ | छ. त. द. पुस्तकेषु 'यज्ञश्च' इत्यस्य स्थाने 'यज्ञस्य' इति पाठः ( २९ ) । यज्ञस्य पुरोहितः इत्यन्वयः । अथवा यज्ञस्य देव इति । |

पत्रं पङ्क्तिः

१८४ ४–९ 'यो देवः सा देवता' इति न व्याख्यातम्। देवः = देवता। 'होनेरित्यौर्णवाभः' इति छ. त. द. पाठः (२९)। 'रि' अक्षरं लेखकप्रमादेनाधिकम्। ऊर्णवाभस्य अपत्यं पुमान् और्णवाभः।

७ 'अग्निमीळे' इत्यस्य आग्नेये क्रतौ विनियोगः (आश्व० श्रौ० ४। १३) न तु आश्विने। 'पुरोहितः पाकयज्ञे' इति पाठान्तरम् (२७–२८)। 'त्रयः पाकयज्ञाः' (आश्व० गृह्य० १।१।२)। हुता अग्नौ हूयमाना इत्यादि (आश्व० गृह्य० १।१।२)। अष्टकाः पार्वण. श्राद्ध श्रावणी आग्रहायणी चैत्री आश्वयुजी इति सप्त पाकयज्ञसंस्थाः (संस्काररत्नमाला—'अथ संस्काराः' इति प्रकरणे)।

११ 'ईड स्तुतौ' (धा० २।९)। 'ईळिः' इकारोपबन्धेन यास्ककाले धातवो लिखिता इति भाति, उपबन्धानां किं प्रयोजनमिति न ज्ञायते। नामकरणार्थ उपबन्धः स्यात्।

'सनिस्त्वध्येषणा याच्ञाऽभिशस्तिर्याचनाऽर्थना' (अमर० २। ७।३२)। अध्येषणा = गुर्वादेः कस्मिंश्चिदर्थे प्रार्थनया नियोजनम्। याचनाऽप्यर्थः स्यात्।

१२ ईडिः इहापि पूजाकर्मा स्यात्।

१४ दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु (धा० ४।१)। 'देव दिव् द्यु द्यौ' एते सर्वे दिवुधातोः। दीव्यन्ति (=द्योतन्ते) ते देवाः। अग्निः दीव्यति (= द्योतते) तस्माद्देवः। द्यौरपि दीव्यति (= द्योतते)। अवेस्ताभाषायां रक्षोवाचको देवशब्दः। ग्रीकभाषायां डिऑस् थिऑस्। लातिनभाषायां डेउम्। देवता = डेओतातेम्।

१७ यद्यपि अग्निः पृथिवीस्थान इन्द्रोऽन्तरिक्षस्थानस्तथाऽपि द्वावपि द्युस्थानौ यस्मात् द्यौर्देवतानां सामान्यं स्थानम्। देवशब्दो

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६८४ | १७ | द्युशब्दात् । इदं निर्वचनं पूर्वेभ्यः सार्थतरम् । पृथिवी लोकात् द्युलोकं गच्छति यजमानेन सह । 'पक्षेऽर्थवत्त्वं निर्वचनस्य' इदं दुर्बोधम् । कदाचिदयमर्थः स्यात् । दिवि भवतीति देवः । सूर्यरूपेण अग्निर्दिवि भवति इति पाक्षिकं द्युस्थानत्वम् । प्रातः अग्निः सूर्ये स्वतेजो निधत्ते इत्यर्थे वा द्युस्थानत्वम् । |
| | १९ | होता जुहोतेरेव न तु ह्वयतेरित्यस्मात् । |
| | १९–२० | 'हु दानादनयोः । आदाने इत्येके' ( धा० ३ । १ ) । जुहोति = हविर्ददाति पुरोडाशभागमात्ति च । अथवा ददाति आदत्ते च । |
| | २२ | परा क्रमेण । |
| | २३ | 'अग्निः पूर्वेभि०' ( ऋ० सं० १ । १ । २ ) । अपरा = अन्या । |
| ६८४<br>६८५ | २३<br>१ | अमुना प्रकारेण एतस्यामुदाहृतायां वहनकर्मयुक्ताः सर्वा ऋच उदाहरणम् उदाहरणत्वेन उपेक्ष्या इत्युपप्रदर्शनार्थम् । |
| | १० | तद्वृत्तं = 'सः' शब्दस्य प्रयोगः । वृत्तं = रूपम् । यच्छब्दस्य किमपि रूपं यद्वृत्तम् । तच्छब्दस्य तथा तद्वृत्तम् । |
| | ११ | 'यत्तदोर्नित्यसंबन्धः' इदं वार्तिकसदृशं वाक्यं व्याकरणमहाभाष्ये भृशं पठ्यते । |
| | १५ | लोटा = आशीर्वाचकक्रियारूपेण । निराकाङ्क्षं भवति । |
| | १६ | एकपदनिरुक्तम् ऋजु सरलम् । |
| | १८ | आक्षिप्य = आक्षेपं दूषणमुद्भाव्य । |
| | २०–२१ | स्वार्थं जहत् । उपसंक्रामत् अभिधानम् । 'उपसंक्रामन्' ( ३१ ) नेदं रूपमत्र युक्तम् । |
| ६८६ | १ | 'नैव०' इत्यादिना आक्षेपनिराकरणम् । |
| | २–३ | तस्या गौण्याः सर्वार्थैस्तथाविधश्चल एव संबन्धः । |
| | ३–४ | तथाविधः = नित्यं प्रकरणोपपदपरतन्त्रः । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६८६ | ४–५ | समर्थानि प्रकरणानि उपपदानि च तेषु परतन्त्रः । यादृशं प्रकरणमुपपदं वा तादृशः संबन्धः । गौणा अर्था अनेके प्रकरणोपपदपारतन्त्र्यात् । |
| | ५ | मुख्याया वृत्तेरर्थान्तरे विनियोग एव नास्ति । लोके प्रसिद्धिर्वेदे वोभयत्र वा । |
| | ९ | उपोद्घ्नन्ति = (उप + उत् + हन्ति) उपोद्घातं करोति । चोदकः आक्षेपकः । पृथिवीस्थान एवाग्निरिति स आक्षेपको न मन्येत । इदं मतं तस्य संमतं न स्यात् । |
| | १४ | 'अग्निमीळे' इत्येतस्यामृच्यावहनक्रिया न विद्यते । किंतु परस्या 'स देवाँ एह वक्षति' इत्यस्याम् । अस्मिन् सूक्ते पार्थिवं ज्योतिरग्निशब्देनोच्यते । 'आवहनहवनक्रियायोगात्' इति च. पाठः (२५) । 'आवहवनक्रिया०' ( ग. ज. पाठः ) = आवहन + हवनक्रिया० । होतारमिति हवनक्रिया । 'आवक्षतु' इत्यावहनक्रिया । 'हवनक्रियायोगात्' इति साधीयान् पाठः । |
| ६८७ | ११ | 'अभिनवन्त' 'अभिनमन्त' इति नैकोऽपि पाठो व्याख्यातः । |
| | १६–१७ | भर्तुः हर्षमुपजनयन्त्यः । |
| | २१ | पार्थिवे (अग्नौ) घृताहुतिहवनस्याविधानात्कल्पसूत्रे ब्राह्मणे वा । आज्यशास्त्रे विनियोगो नाऽऽहुतौ ( १० ) । |
| | २१–२२ | उपमानं योषाः उपमेयं घृतस्य धाराः । यथा योषा भर्तारमभिनमन्ति तथा घृतस्य धारा अग्निं कथमभिनमेयुः । किमत्र वैधर्म्यम् । अविधानं वैधर्म्यं चेति यौगपद्यम् । |
| | २२ | वैद्युते ( अग्नौ ) उदकस्य धाराणां संभवः । उपमानोपमेयसामञ्जस्यं चेति यौगपद्यम् । तत्र = वैद्युतेऽग्नौ । |
| | २३ | सामर्थ्यम् = अर्थसंगतिः । ऋचि 'घृतस्य धाराः' इति न घृतधाराः ( २९ ) । घृतस्य प्रसिद्धार्थं त्यक्त्वा । |
| | २४–२५ | एतदेव सामर्थ्यम् = अस्मिन् मन्त्रे विद्यमानम् । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६८८ | १ | एवंवेद्य. = एवं ज्ञातः निरूपितः । |
| | २ | तस्मात्सुष्ठु उक्तमाक्षेपकेण । |
| | ४--९ | 'अन्यन्निर्वचनमृजु' इति कृत्वा 'नमतिगम्नोतिकर्मा वा नमतिकर्मा वा' (६८७ । ३ ) इति न व्याख्यातम् । तथा ' हर्यतिः प्रेप्साकर्मा विहर्यतीति' ( ६८७ । ४ ) । विहर्यति = भृशं विहरति भुङ्क्ते । ' अभिहर्यति ' इति पाठान्तरम् ( ६८७ । २६ ) । |
| | १० | आदित्यमुक्तमस्यामेकस्यामृचि अथवा सकले सूक्ते भाष्यकारोऽमन्यत न वेति न स्पष्टम् । एका ऋक् अथवा सकलं सूक्तमपि स्यात् । |
| | १०--११ | ' समुद्रादूर्मिरेकादशाऽऽग्नेयं जगत्यन्तं सौर्यं वाऽऽपं वा गव्यं वा घृतस्तुतिर्वा' अनुक्रमण्याम् । 'नानादेवताभिवाद०' (इत्यादिपाठान्तरम् २३ ) = 'समुद्रादित्यग्नेर्मध्यमस्य' ( बृहद्दे० ९ । ९)॥ ' आदित्यं वा ब्राह्मणोक्तं प्रदिष्टं ह्याग्नेयं यद्वाऽऽज्यसूक्तं हि दृष्टम् । अपां स्तुतिं वा यदि वा घृतस्तुतिं गवां स्तुतिं वा सूक्तमेतद्वदन्ति ' ( बृहद्दे० ९ । १० ) ॥ |
| | १२ | प्रकाशेन सर्वस्य च्छादकः । |
| | १३ | ' उदतीतॄत् ' इति उत् + तृ इत्यस्य यङ्लुङि रूपम् । सूर्यः प्रथममद्भ्यो जज्ञे । |
| | १९ | स चन्द्रमा अस्य सूर्यस्य । ' अथैतद्वृषा सोमः । योषा अपो हविर्धानेऽभ्येति तस्मान्मिथुनाच्चन्द्रमा जातोऽन्नाद्रे तदन्नं जातं यदद्भ्यश्च सोमाच्च चन्द्रमाश्चन्द्रमा ह्येतस्यान्नं य एष तपति ' ( शत० ब्रा० ४ । ६ । ७ । १२ ) । |
| | १९ | ' एष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः '( शत० ब्रा० १ । ६ । ३ । ९ ) । |

पत्रं पङ्क्तिः

६८९ २ अस्य मन्त्रस्य आदित्यदेवत्वे सत्यपि। आदित्यस्य अग्नित्वम्।

३ 'समुद्रादूर्मि०' एता ऋचो घृतस्तोम्या उच्यन्ते (मैत्रा० सं० १।६।७)।

४ इदं मध्यमं ज्योतिरग्निरिति प्रतिपादयितुमिदमुदाहरणमसमर्थम्।

५ एकेषां शाखिनां = वाजसनेयिनाम्।

६ इमं स्तनमूर्जस्वन्तं धयापां प्रपीनमग्ने सरिरस्य मध्ये (यजु० सं० १७।८७)। इदं ८७-९९ ऋगात्मकं सूक्तम् (वा० सं० १७।८७-९९)। 'अपां प्रपीनमग्ने' इति अस्मिन् सूक्ते अग्निलिङ्गम्।

'इमं स्तनं०' यजुर्वेदे सप्तदशेऽन्त्यास्त्रयोदश यजमानानुवाचने घृतस्तुतौ वा विनियुक्ताः। तत्रेयं प्रथमा (च. ट.)।

७-८ निविद् = सूक्तस्याऽऽदौ मध्येऽन्ते द्वयोः सूक्तयोर्मध्ये पठनीयानि देवतास्तुतिपराणि कानिचित्पदानि। यथा 'अग्निर्देवेद्धः। अग्निर्मन्विद्धः' इत्यादिद्वादशपदा निविद् (ऐ० ब्रा० १०।२)। 'तूष्णींशंसनिवित्सूक्तैराज्यशस्त्रं त्रिपर्वकम्' (ऐ०ब्रा०सायणभाष्यं १०।१)। प्रथमं तूष्णींशंसः। ततः 'अग्निर्देवेद्धः' इति द्वादशपदा निविद्। ततः सूक्तम्। इदमाज्यशस्त्रम्। तूष्णींशंसः (ऐ० ब्रा० ९।७)। माध्यंदिने सूक्ते विपरिहृत्य तयोर्निविदं दध्यात् (आश्व० श्रौ० ८।९।२)। सूक्तयोर्व्यत्यासं कृत्वा तयोर्मध्ये निविद्धीयते। इयं निविदग्निस्तुतिपरा।

९ 'अह्नचो वा एष प्रातरुदेति' (ऐ० ब्रा० १८।६)। 'उदैति' इति कौषीतकिब्राह्मणपाठः (कौ० ब्रा० २५।१)।

१६ तस्य ब्राह्मणस्य = ब्राह्मणोक्तवचनस्य।

६९० ६ अस्यवामीये सूक्ते एषा।

८ गरुत्मान् = गर् (गुरु) + त्मान् (आत्मा)। 'गुर्वात्मा महात्मा' (३) न व्याख्यातम्।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६९० | ९ | गरणं = स्तुतिः । |
| | ११ | ' महान्तमात्मानमेकमात्मानम् ( १ ) । दुर्गपाठे ' आत्मानं ' पदं सकृदेवासीदिति भाति । |
| | १३ | 'तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः ' ( बृह० उ० १।४।६ ) । एतस्यैव प्रजापतेः सा भिन्नाभिन्नदेवतासृष्टिः । याज्ञिका भिन्ना देवता यजन्ते । किंतु प्रजापतिरेव सर्वे देवाः । |
| | १८ | पूर्वपक्षव्यावर्तकः = परमतं व्युदस्यति । |
| | २०–२१ | ' निर्वपेत् ' इति चोदना । |
| | २३ | अत्र = पार्थिवेऽग्नौ । लोकप्रसिद्धिर्वेदप्रसिद्धिश्चाग्निशब्देनास्मिन्नेव पार्थिवेऽग्नौ । |
| | २४ | ' अग्निमानय ' इति लोकोक्तिः । ' अग्निं प्रणय ' इति वेदोक्तिः । ' ॐ अग्निं प्रणय ' इति गार्हपत्यादाहवनीयं प्रति अग्निनयनाय प्रैषः । |
| | २६ | चोदिताः = आदिष्टाः । |
| ६९१ | २–३ | यथा अग्नेरग्निशब्देन मुख्यः संबन्धः न तथा विद्युत्सूर्यशब्दाभ्याम् । |
| | ५ | अस्य विचारस्य आक्षेपप्रतिसमाधानरूपस्य ' अयमेव पार्थिवोऽग्नि रुपास्यः' इति प्रयोजनम् । आग्नेयेषु सूक्तेषु स एव स्तूयते तस्मै च हवींषि संप्रदीयन्ते स एव च तानि भुङ्क्ते । |
| | ६ | ' एतमेवोपासीत ' ( २० ) इति पाठान्तरं स्पष्टम् । |
| ६९२ | १ | देवतायाः बहुनामधेयत्वस्य कारणं माहाभाग्यं कर्मपृथक्त्वं वा ( नैरु० ७ । ९ ) । अग्निरेव जातवेदाः । |
| | १–२ | ' पृथगेव स्युः पृथग्घि स्तुतयो भवन्ति ' ( निरु० ७ । ५ ) । पृथगभिधानानां स्तुत्यन्तरैः भिन्नस्तुतिभिः संबन्धः । |
| | ६ | जाते जाते = प्रत्येकस्मिन् प्राणिनि । |
| | ९–१० | विदेर्ज्ञानार्थस्य वेदस् । जातं जाते ( जन्मतः ) एव वेदो विद्या प्रज्ञानं यस्य । |

पत्रं पङ्क्तिः

६९२ ११ 'यत्तज्जातः' इति ब्राह्मणं जातवेदा जातधन इत्यर्थसमर्थनार्थम्। तेन 'जातविद्यो वा जातप्रज्ञानः' इदं जातधन इति व्युत्पत्तेः प्राक् स्यात्। अथवा मूलपाठे न स्यात्।

(मैत्रा० सं० १।८।२) 'यत्तज्जातः' इत्यत्र 'यज्जातः' अस्ति। अविन्दत' इत्यस्यानन्तरम् 'इति' नास्ति।

'आजातं जातवेदसि' (ऋ० सं० ६।१६।४२) इत्यत्र 'जात इतरो जातवेदा इतरः' (ऐ० ब्रा० ३।९)। जातं सद्योमथितमग्निं वेत्तीति आहवनीयाग्न्योऽग्निर्जातवेदा इत्युच्यते। 'प्राणो वै जातवेदाः स हि जातानां वेद' (ऐ० ब्रा० १०।८। ('यदब्रवीज्जाता वै प्रजा अनेनाविदमिति तज्जातवेदसो जातवेदस्त्वम्' (ऐ० ब्रा० १३।१२)।

१७ क. ख. छ. त. द. पुस्तकेषु 'जातवेदसे सुनवाम' इत्यधिकः खण्डो वर्तते (२३–२९)। स दुर्गेण न व्याख्यातः। इदं सर्वं (निरु० १४।३३) इत्यत्र वर्तते। किंतु तत्रापि दुर्गवृत्तिर्न वर्तते।

२३ अस्य सूक्तस्य (ऋ० सं० १।९९) एकैव ऋक्। एकर्गात्मकमिदं सूक्तम्।

२९ जातवेदा देवता यस्या ऋचः सा जातवेदस्या। अथवा जातवेदसी नाम कर्म तस्याम्। 'जातवेदसे सुनवाम सोममिति जातवेदस्यां पुरस्तात्सूक्तस्य शंसति स्वस्त्ययनं वै जातवेदस्याः स्वस्तितायै' (ऐ० ब्रा० २०।३)। जातवेदसे सुनवामेति खण्डः कश्चिद्दुर्बोधः। 'जातवेदस्यां' (२९) 'अर्चाय' (२९) 'अनिस्मः' (२६) 'महाकूलां' (२९) एते शब्दा दुर्बोधाः। 'ददादित्यर्थः' (२७) अयं कस्यार्थः। जातवेदस्या ऋक्। तस्याः किम्। वाशब्दः किमर्थः। वेदः = धनम्। अर्चाय = अर्चनीयाय।

२८ 'सिन्धुं नावा' इति पुनरुक्तिः किमर्था। भाष्यं यास्कभाष्यसदृशं न भाति।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६९२ | २९ | महती दूरे कूले यस्याः सा महाकूला। |
| | ३० | दुरिता दुरितानि अतिपर्षत् अग्निः। |
| ६९३ | १४ | अश्वं = समश्नुवानं व्याप्नुवानं जगत् कर्मभिः। दुर्गवृत्तौ 'अश्नुवानं' न समश्नुवानम्' (१)। |
| | १५ | 'आप्लृ व्याप्तौ' (धा०५।१४)। 'आप्लृ लम्भने' (धा०१०। ३०६)। 'व्याप्नुवानम्' इति रूपमिष्टम्। 'व्यापयन्तम्' इति प्रामादिकम्। |
| | १६ | अपि वा अश्वमिव जातवेदसामिति उपमार्थे स्यात् (१)। |
| | १६–१७ | अश्वशब्दः अश्वप्राणिनि रूढः। रूढिश्च शास्त्राद्बलीयसी। तेन 'अश्नुवानम्' इत्यर्थ इष्टोऽपि न गृह्यते। |
| | १८–१९ | बर्हिषा उपलक्षितं कर्म लक्षणया बर्हिः। |
| | १९ | 'कर्म सीदेत्' इत्यन्वयः। |
| | २१ | 'एकमिव' इति छ. त. द. पाठः (२९) अपूर्णमवधारणं दर्शयति। 'एकमेव' निःसंशयत्वं दर्शयति। ग. च. ज. पाठः 'एकमिव' (३०)। |
| | २२ | 'तदेतत्' इत्यत्र 'तत्' निपातसदृशः। केवलो वाक्प्रकारः। दशतयीस्थ तृचम्। तस्य अनुस्मृतये स्मृत्युद्बोधाय। |
| | २३–२४ | एतया ऋचा तृचं संनिधीकृत्य। संनिधीकृत्य = संनिहितीकृत्य इति शुद्धं रूपम्। संनिधीकृत्य = संनिधौ कृत्वा स्मारयित्वा। |
| ६९४ | १ | विवक्षिताय प्रयोजनाय। |
| | ९ | स्थितं = प्रतिपादितं सिद्धम्। |
| | ११ | अनर्थान्तरं = न अर्थान्तरं न भिन्नम्। गायत्रा जातवेदसा मन्त्राः कर्मसु विनियोक्तव्याः। किंतु जातवेदसं गायत्रं तृचमेकमेव। तस्मात् 'आग्नेयान्मन्त्रान् जातवेदसानां स्थाने युञ्जीत' इति विधिरनुमितः। |
| ६९५ | १ | जातवेदसं सूर्यमुद्वहन्तीति तु० = किंतु अस्यामृचि जातवेदाः सूर्य इति स्पष्टम्। |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १९५ | ७–८ | इतरयोः विशिष्यते प्रसिद्ध्या । |
| | १९ | ‘ असौ लोकः पर्जन्यः पृथिवी पुरुषः योषा एते पञ्चाग्नय. ’ ( छा० उ० ५ । ४–८ ) । ‘ स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति ’ ( छा० उ० ५ । ९ )। इयं पञ्चाग्निविद्या । |
| | २० | ‘ अपि वा० प्रवर्तयति० ’ इदं ‘ विश्वान्नरान्नयति ’ इत्यस्या-न्यद्विवरणम् । |
| | २३ | ‘ स्वतन्त्रः कर्ता’ ( पा० १ । ४ । ५४ ) । ‘ तत्प्रयोजको हेतुश्च’ ( पा० १ । ४ । ५५ )। अग्निर्हेतुरिति कर्ता । कर्तुः प्रयोजक इति हेतुसंज्ञः कर्तृसंज्ञश्च भवति । |
| १९५<br>१९६ | २३<br>१ | नरैः क्रियासु अङ्गभावं नीयमानः क्रियायाः कर्म भवति । |
| | २–३ | विश्वानरः = विश्वान् + अरः ( ऋ गतौ ) = सर्वाणि भूतानि प्रति ऋतः । |
| | १३–१४ | पृष्ठ्यस्यैव चतुर्थेऽहनि इयं प्रतिपद् (आश्व० श्रौ० ८ । ८)। अभिप्लवः षष्ठमहश्च न निर्दिश्येते । |
| | १८ | प्रकाशक इति दृष्टेरुपकारकः । |
| १९७ | १ | ‘ विचष्टे संयतने राजा अभिश्रीः ’ ( १९६।१६–२० ) इति स्तुतिः । ‘सुमनाः स्याम’ ( १९६।२१–२२ ) इति आशीः। स्तुतिः प्रथमा । तदर्थं पदानां भिन्नः क्रमः । |
| | २ | तिङ् = क्रियापदम् । |
| | ६ | यतः = यस्मात् । |
| | ७ | तं स्तुतिरभिसंतिष्ठते यस्मात्तस्मात् यत्तदोरध्याहरेण (३) या स्काचार्य एकवाक्यतया सामर्थ्यमुद्भावयांचकार (९) । |
| | ८ | मन्त्रेषु आवश्यकः । |
| | ९ | प्रत्याख्यातं = विवक्षितम् । |
| | १०–११ | ‘ ऋचां त्वः० ’ इत्यत्र ‘ प्रतिपदं ’ (२७) इति पाठान्तरम् । किंतु प्रतिपदं वाक्यसमाप्तिर्नास्ति । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ६९७ | १९ | वाक्यस्योपादानमारम्भः । |
| | १७–१९ | दिवम् ( छा० उ० ५।१२।२ ) आदित्यं (५।१३।२ )वायुम् (५।१४।२) आकाशम् ( ५।१५।२ ) अपः ( ५।१६।२ ) पृथिवी ( ५।१७।२ ) निरस्य उद्दालक उवाच ' एते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ । यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ' ( ५।१७।१ ) । एवमात्मा वैश्वानरः । छान्दोग्योपनिषदि ' दिवं ' न तु ' इन्द्रम् ' (१८) । |
| | २२–२३ | मन्त्रदृक् स्तौति इति हेतोः । |
| ६९९ | १८–१९ | तेषां मेघानामनुद्गमे । |
| | २० | मेघं ' मिह सेचने ' इत्यस्मात् । अत एव उदकपूर्णम् । |
| | २१ | यः असौ वैश्वानरः ( १८ ) इत्यन्वयः । |
| ७०० | २ | एकस्मिन्नेव वाक्ये वैश्वानरोऽग्निर्वर्षकर्मणा संबध्यते । |
| | ३ | स्थितम् ( ६९४ । ९ ) |
| | ४ | ' प्र नू महित्वं० ' इत्यत्र जातवेदसो मध्यमत्वे गौणः प्रत्ययः । स नेष्ट इति असावादित्य एव कर्मात्मा जातवेदःशब्देनापदिश्यते । एक एवाऽऽत्मा । किंतु अग्निवायुसूर्यास्तस्य कर्मात्मानः । एनमात्मानं कर्मात्मना आदित्यनाम्ना अपदिशन् गूहन् । असौ आत्मा । कर्मात्मा आदित्यः । अयं तस्याऽऽत्मनोऽपदेशो नोपदेशः । |
| | ५ | कस्मिंश्चित् = मध्यमे आदित्ये वा । पूर्वः ( पाठान्तरे २३ ) = विचारं संशयनिराकरणं विनैव । |
| | ८ | एनं जातवेदसम् । |
| | १० | पृथिवी अन्तारिक्षं द्यौः इति एषां लोकानां रोहः । तत्क्रमेण प्रातःसवनमाध्यंदिनतृतीयसवनानां रोहः । यथा उपरि उपरि आरोहः पृथिव्या अन्तारिक्षमन्तारिक्षाद्दिवम् एवं दिवः अन्तरिक्षमन्तरिक्षात्पृथिवी इति अवरोहः ( १४ ) । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७०० | १३–१४ | कस्मिंश्चित्कर्मणि = विषुवन्नामकेऽहनि । तद्दिनकर्तव्ये यागे ( ऐ० ब्रा० १८ । ४ ) । |
| | १४–१५ | रोहात्प्रत्यवरोहाश्चिकीर्षितः = प्रत्यवरोह आवश्यक इष्टश्च यस्मात् प्रत्यवरोहाभावे तस्यैहिकं जीवितमल्पावधि स्यात् । ' अथ य एककामाः स्युः स्वर्गकामाः पराञ्चमेव तेषां रोहेत्ते जयेयुर्हैव स्वर्ग लोकम् । नेत्त्वेवास्मिँल्लोके ज्योगिव वसेयुः ' ( ऐ० ब्रा० १८ । ७ ) |
| | १५ | उप (सम्यक्) व्याचक्ष्महे । |
| | १६ | भक्तिभाजनौ समानार्थौ । ' सा वा एषा तृतीयसवनभाजना ' (ऐ० ब्रा० १२ । ७) । 'मरुतां सा भक्तिः' (ऐ०ब्रा०१२ । ९) । पृथिवीलोकः अस्य भक्तिः (भज्यते सेव्यते इति भक्तिः) । प्रातःसवनं शंसित्वा = प्रातःसवनयोग्यं शस्त्रं पठित्वा । |
| | १६–१७ | प्रातःसवनं पृथिवीलोके भज्यते माध्यंदिनं चान्तरिक्षे इति शंसति ईदृगर्थं शस्त्रं पठति । |
| | १६–२० | प्रातःसवने होता शोंसावोमिति मन्त्रेणाध्वर्युमाह्वयते । शंसामो दैवोमित्यध्वर्युः प्रतिगृणाति । ततो होता शंसति शस्त्रं पठति । अध्वर्यो शोंसावोमिति माध्यंदिनसवने होता । शंसामो दैवोमित्यध्वर्युः । अध्वर्यो शोशोंसावोमिति तृतीयसवने होता । शंसामो दैवोमित्यध्वर्युः । ( ऐ० ब्रा० १२ । १ ) । 'तं (अग्निं) यज्ञायज्ञीयेऽसीदत्स वैश्वानरीयेणाऽऽग्निमारुतं प्रत्यपद्यत' ( ऐ० ब्रा० १२ । ३ ) । ' स पच्छः प्रथमं रोहतीमं तं लोकमाप्नोत्यथार्धर्चशोऽन्तरिक्षं तदाप्नोत्यथ त्रिपद्याऽमुं तं लोकमाप्नोत्यथ केवल्या तदेतस्मिन्प्रतितिष्ठति य एष तपति ' । ' त्रिपद्या प्रत्यवरोहति यथा शाखां धारयमाणस्तदमुष्मिँल्लोके प्रतितिष्ठत्यर्धर्चशोऽन्तरिक्षे पच्छोऽस्मिँल्लोक आप्त्वैव तत्स्वर्गं लोकं यजमाना अस्मिँल्लोके प्रतितिष्ठन्ति' (ऐ०ब्रा०१८।७) । ' भूरिति ब्रह्मा प्रातःसवने । भुव इति माध्यंदिने । स्वारिति तृतीयसवने । भूर्भुवः स्वारिन्द्रवन्तः सवितृप्रसूता इत्यूर्ध्वमाग्निमारुतात्' (आश्व०श्रौ०५ । ३) । ( ऐ० ब्रा० २५ । ९ )॥ |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७०० | १६-२० | 'प्रजापतिः गायत्रीमेवाग्नये वसुभ्यः प्रातःसवनेऽभजत् । त्रिष्टुभमिन्द्राय रुद्रेभ्यः मध्यंदिनेऽभजत् । जगतीं विश्वेभ्यो देवेभ्य आदित्येभ्यस्तृतीयसवनेऽभजत् । अस्माल्लोकादन्तरिक्षलोकम् । अन्तरिक्षलोकादमुं लोकम्' ( ऐ० ब्रा० २८ । २ ) । 'अथैतं तूष्णींशंसमुपांशु शंसति सर्वेषां कामानामाप्त्यै । अग्निर्ज्योतिर्ज्योतिरग्निरिति तदिमं लोकं लोकानामाप्नोति प्रातःसवनं यज्ञस्य । इन्द्रो ज्योतिर्ज्योतिरिन्द्र इति तदन्तरिक्षलोकं लोकानामाप्नोति माध्यंदिनं सवनं यज्ञस्य । सूर्यो ज्योतिर्ज्योतिः सूर्य इति तदमुं लोकं लोकानामाप्नोति तृतीयं सवनं यज्ञस्य' ( कौषी० ब्रा० १४ । १ ) । 'षड्विधमाज्यं तूष्णींजपस्तूष्णींशंसः पुरोरुक् सूक्तमुक्थवीर्यं याज्येति' ( कौषी० ब्रा० १४ । १ ) । 'भूरग्निर्ज्योतिर्ज्योतिरग्निरिति एकः तूष्णींशंसभागः । आज्यं प्रउगं चेति प्रातःसवनस्य शस्त्रे । इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्र इति द्वितीयस्तूष्णींशंसभागः । निष्केवल्यं मरुत्वतीयमिति मध्यंदिनस्य शस्त्रे । सूर्यो ज्योतिर्ज्योतिः स्वः सूर्य इति तृतीयस्तूष्णींशंसभागः । वैश्वदेवमाग्निमारुतमिति तृतीयसवनस्य शस्त्रे' ( ऐ० ब्रा० ९ । ७ ) । 'प्र वो देवायाग्नये' ( ऋ० सं० ३ । १३ ) इत्याज्यशस्त्रं ( ऐ० ब्रा० १० । ८ ) । प्रउगशस्त्रं ( ऐ० ब्रा० ११ । १ ) । भूरिति व्याहृत्या पृथिवीलोकः । भुवरित्यन्तरिक्षलोकः । स्वरिति द्युलोकः । 'प्रातःसवनं पृथिवीलोकभक्ति माध्यंदिनमन्तरिक्षभक्तिम्' इति पूर्ववाक्यपाठः । अत्र तु 'द्युलोकभक्ति तृतीयसवनम्' इति । पूर्वस्मिन्वाक्ये तस्मिंस्तास्मिँल्लोके स्थित एव शंसति । अत्र आरोहन्नेव शंसति ( २० ) । ततो द्युलोकमारूढो भवति । तस्मात् 'द्युलोकभक्ति' पदं तृतीयसवनस्य केवलं विशेषणम् । नास्य प्रामुख्येन निर्देशः । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७०० | १७ | संसृतत्वात् = यस्मादयं होताऽन्तारिक्षलोकं संसृतः गतः । भक्तौ भक्तौ प्रतिभक्ति = प्रतिलोकं तं तं लोकम् । संसृतवत् = संसृतः तस्मिंस्तस्मिँल्लोके गत इव । प्रतिभक्ति संसृतवच्च = अस्माल्लोकादन्तारिक्षलोकं तस्माच्च द्युलोकं गत इव । |
| | २१ | सवनानां लोकानां च प्रत्यवरोहः । यज्ञायज्ञीयमिति अग्निष्टोमस्य साम । ' यथा वाव स्तोत्रमेवं शस्त्रम् ' (ऐ० ब्रा० १०। ९ ) । तृतीयसवनस्याऽऽग्निमारुतं शस्त्रम् । |
| ७०० ७०१ | २ १ | सवनानां लोकानां च प्रत्यवरोहस्यानुकृतिं चिकीर्षन् । |
| | १ | येन तृचेन शस्त्रं प्रारभते स प्रतिपद् । तदनन्तरभावी तृचोऽनुचरः । (ऐ० ब्रा० भाष्यं १२।४) प्रतिपद्यते = तां कृतिं प्रत्यवरोहकृतिम् अनु अनुसृत्य प्रतिपद्यते प्रतिपदं प्रारभते । 'तृचाः प्रतिपदनुचरा द्व्यृचाः प्रगाथाः ' इत्याश्वलायनः ( ऐ० ब्रा० भा० १२ । ६ ) । 'वैश्वानरीयेणाऽऽग्निमारुतं प्रतिपद्यते' ( ऐ० ब्रा० १३ । ११ ) । यच्छस्त्रमाग्निमारुतं तच्छस्त्रं होता वैश्वानरीयेण सूक्तेन प्रारभते । |
| | २ | ' वैश्वानराय पृथुपाजसे विपः ' इति वैश्वानरीयं सूक्तम् ( ऐ० ब्रा० भा० १२ । ३ ) । अनेन मरुत्वतीयशस्त्रप्रारम्भः ( ७०० । २१ ) । ' स वैश्वानरीयेणाऽऽग्निमारुतं प्रत्यपद्यत' । ( ऐ० ब्रा० १२ । ३ )। |
| | ३ | यस्मिंस्तृचे सामगैः स्तोत्रं गीतं स तृचः स्तोत्रियः (ऐ०ब्रा०भा० १२।३।) ' यथा वाव स्तोत्रमेवं शस्त्रम्' (ऐ०ब्रा०१०।४) इति नियमेन ' यज्ञायज्ञा वो अग्नये ' इत्येवाऽऽग्निमारुतस्य शस्त्रस्य प्रतिपद्भवेत् । किंत्वत्र स नियमो नाऽऽदर्तव्यः । ' यज्ञायज्ञा वो अग्नये ' अयं स्तोत्रियः । नायं तृचः शस्त्रम् । |
| | ३-४ | ' यज्ञायज्ञा वो अग्नये ' इत्यस्यामृच्युत्पन्नं साम यज्ञायज्ञीयम् ( ७०० । २१ ॥ ऐ० ब्रा० भाष्यं १२ । ३ ) । 'तिसृभिर्हि साम संमितम्' ( ऐ० ब्रा० १२ । १२ ) । एकं |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७०१ | ३–४ | साम तृचे क्रियते स्तोत्रियम् ( ऐ० ब्रा० भा० १२ ।१२ )। यद्योन्यां तदुत्तरयोर्गायति ( ऐ० ब्रा० भा०१२ ।१२ )। |
| | ५ | ' यथा वाव स्तोत्रमेवं शस्त्रम् ' इति स्तोत्रशस्त्राणां धर्मः । |
| | ६ | यस्मात् स स्तोत्रिय आग्नेयो भवति । |
| | ८–९ | अन्यत्र स्तोत्रियेण प्रारम्भः क्रियते । अत्र तु वैश्वानरीयेण सूक्तेन । नियमभङ्गस्य कारणं प्रत्यवरोहे आदित्यदेवता स्तोतव्येति । |
| | १० | यः स्तोत्रियः स पुनराग्नेयः । प्रत्यवरोहे द्युस्थानदेवताशंसनमावश्यकम् । सा देवता आदित्यः । तच्छस्त्रं वैश्वानरीयेण सूक्तेन प्रारभ्यते । तेन वैश्वानर आदित्यः । |
| | १३–१४ | ततो होता रुद्रं मरुतश्च एता मध्यस्थाना अन्तारिक्षस्थाना देवता आगच्छति । |
| | १५–१६ | शस्तात् = पठितात्सूक्तात् । |
| | १७ | मरुतां पिता रुद्रः । |
| | १९ | ' अग्निमिहस्थानं ' ( ६९८।१२ ) न व्याख्यातम् । इह स्थानं यस्य तमग्निमागच्छति होता । |
| | २२ | विधेः = सवनलोकप्रत्यवरोहस्य । अनुकरणात् = स्तुतशस्त्राभ्यां प्रत्यवरोहोऽनुक्रियते । |
| ७०२ | १ | सामान्यम् = साधर्म्यम् । देवतागुणेषु द्वादशकपालेषु च साम्यम् । ' अग्नये वैश्वानराय द्वादशकपालं निर्वपत् ' ( मैत्रा० सं० २ । १ । २–३ ) द्वादशकपालं पुरोडाशम् । |
| | २ | गुणविषयः = द्रव्यादिसंबद्धा विषयः । |
| | ३ | एतस्य = आदित्यस्य । |
| | ५ | देवतागुणस्य कपालविधिनाऽनुकरणात् । |
| | ९ | 'तूष्णींशंसनिवित्सूक्तैराज्यशस्त्रं त्रिपर्वकम् ' ( ऐ० ब्रा० भाष्यं १० ।१ ) । ' अग्निर्देवेद्ध ' इत्यादिद्वादशपदात्मिका निविद् । निविदः ( ऐ० ब्रा० १० । १–२ ) । इत्यत्र पठ्यन्ते । |

पत्रं पङ्क्तिः

७०२ ९ ' गर्भा वा एतदुक्थानां यन्निविदः । ताः प्रातःसवन उक्थानां पुरस्तात् मध्यंदिने मध्यतस्तृतीयसवने अन्ततो धीयन्ते ' ( ऐ० ब्रा० ११ । १० ) । प्रथममाहावः । ततो निविद् । ततः सूक्तम् । एवं निविद् शस्त्रमध्ये पतति ( १० ) । निविदः = तत्तद्देवतास्तुतियुक्तपदानां समूहाः । तेषां संख्या एकादश । तेषां शृङ्खला---अग्निर्द्वादश । इन्द्रो मरुत्वान् इन्द्रो देवः सविता देवः पृथग्विंशतिः । द्यावापृथिवी पञ्चदश । ऋभवो देवाः सप्तदश । विश्वे देवास्त्रिंशत् । अग्निर्वैश्वानरः पञ्चदश । मरुतो देवाश्चतुर्दश । अग्निर्जातवेदाः अग्ने मदे पृथक् षोडश । इयं निविद ( ७११ । ४–१० ) इत्यत्र पठ्यते । अस्याः पञ्चदश पदानि । ' आ यो द्या भात्या पृथिवीम् ' ( १२–१३ ) इदं सप्तमं पदम् । इयं निवित्सौर्यवैश्वानरी ।

१०–११ स ( मन्त्रः ) तथा भवति = तस्या निविद एतादृशानि पदानि भवन्ति येनायं वैश्वानरः सूर्य एव । ' भात्याम् ' ( २७ ) इति ग. ज. पाठः । च. पाठोऽपि तथैवाऽऽसीदिति भाति ।

११ वैश्वानरः सूर्य एव ।

१६ द्वादशाहगते नवरात्रे त्रयस्त्र्यहाः । प्रथमद्वितीयत्र्यहाभ्यां पृष्ठ्यः षडहस्तृतीयत्र्यहस्य च्छन्दोम नाम (ऐ० ब्रा० भाष्यं २३।१)। द्वादशाहे प्रायणीयोदयनीयरूपे आद्यन्ते ये अहनी तयोर्मध्ये दशरात्रोऽस्ति । तस्य त्रयो भागाः । पृष्ठ्यषडहच्छन्दो-

७०२ १६ मात्रयोऽहर्विशेषाः । दशममहस्तृतीयो भागः ( ऐ० ब्रा० भाष्यं २४ । ३ ) । छन्दोमेषु विनियुक्तं सूक्तं छान्दोमिकम् । सूर्य एव वैश्वानरः सूर्यवैश्वानरः । ' तस्येदम् ' । ( पा० ४ । ३ । १२० ) इत्यनेन । सौर्यवैश्वानरम् ।

१७ 'दिवि पृष्टो अरोचतेति वैश्वानरीयम् । दिवीति तदमुष्य लोकस्य रूपम्' (कौषी० ब्रा० २६।१७)॥(आश्व० श्रौ०८ । ११)।

पत्रं पङ्क्तिः

२१ रोचने। मूले तु 'अरोचत' ( ६९८। १७ ) इति पाठः।
पृष्टः = स्पृष्टः। मूले ( ६९८। १७ ) 'स्पृष्टः' नास्ति।

७०२ १ 'हविष्पान्तमजरं स्वर्विदम्' ( ऋ० सं० १०।८८ ) इति हविष्पान्तीयं सूक्तम्।

२ समर्थः = संगतार्थः समानार्थः।

१०–११ 'विश्वानरावित्यप्येते' इति ङ. थ. ध. ठ. ड. पाठः ( ६९८। २९ )। अत्र 'अपि' शब्दस्य न किमपि स्वारस्यम्। 'अपि एते उत्तरे ज्योतिषी विश्वानरौ इति' इत्यन्वयः। अपि = अपि च।

११–१२ 'अपि वा विश्वानर एव कश्चित्स्यात्। तस्यापत्यं वैश्वानरः' इति दुर्गस्वीकृतमूलपाठः स्यात् ( ६९९। १४ )।

१४ यत् यस्मात्।

१५ तद्धितवृत्त्या उत्पत्तिर्वैश्वानरशब्दस्य। व्यपदेशः = वृत्तिः शब्दसिद्धिः।

१६ 'यत्र वैद्युतः शरणं०' (६९८।२०)इदं दुर्बोधम्। वैद्युतोऽग्निर्जलेन न शाम्यतीति सत्यम्। किंतु स दार्वादि दहत्येव। न तेन शाम्यति।

१७ शरणं = शरीरम्।

१७–१९ 'शरणमभिहन्ति तत्प्रदीप्यते याव०' इति दुर्गस्वीकृतपाठः स्यात्।

१८ अभिहन्ति = निहन्ति = अभिगच्छति। 'हन गतौ' इत्य-

७०३ १८ स्मात्। 'हन हिंसागत्योः' ( धा० २।२ )। अभिहन्ति = अभिगत्य हिनस्ति। शरणं = गृहम्। आत्मन आश्रयः। दारु वैद्युतस्याग्नेः कथमाश्रयो भवेत्।

२२ विद्युदुदकात्प्रभवति जडं प्राविश्य नश्यति। तेनायमग्निरुदकेन्धनः शरीरोपशमनः।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७०३ | २३ | रसः स्वभावो यस्य तेन उदकेन । 'इध्यते' इन्धिधातोः कर्मणि रूपम् |
| | २४ | प्रतिहता जडा घना मूर्तिः स्वभावो यस्य तेन काष्ठेन । |
| | २५ | पार्थिवो धातुर्बहुलो यस्मिन् । पार्थिवधातुप्रायम् । |
| | २६ | स्थानम् अन्तरिक्षम् । जातिः रसः । आदिना मनुष्यैरस्पृष्टत्वादि । प्रथमस्य ज्योतिषः = पार्थिवाग्नेः । अहेतुकं = तादृशस्वाभाव्ये कोऽपि हेतुः किमपि कारणं वा नास्ति । प्रथमे ज्योतिषि तादृशस्थानजात्यादेरभावः । |
| ७०४ | १ | वैद्युतोऽग्निः कथं स्पृष्टः परिगृहीतो वा भवेत् । |
| | ४ | मध्यमेन = मध्यमात् । विपर्यस्तधर्मा = विरुद्धधर्मा । |
| | ६ | ताद्धितार्थेन उपपत्तिः । |
| | ८ | अथ आदित्यादग्निर्जायते । उदीचि = 'उदङ्' इत्यस्य सप्तम्येकवचनम् । 'उदीचीप्रथमसमावृत्ते' (९–१०) दुर्गमते अयं समासः । तेन 'उदीची' पाठः साधुः । किंतु नैकस्मिन्नपि निरुक्तमूलपुस्तकेऽयमुपलभ्यते |
| | ११ | उदगयनस्य उत्तरायणस्य आदौ । |
| | १२ | आदित्यमणिः = सूर्यकान्तः । कंसः = काचपात्रम् । परिमृज्य = घर्षणमापाद्य । |
| | १३ | 'स्वृ शब्दोपतापयोः' ( धा० १।९५७ ) । प्रतिस्वरे = परावर्तिते तापे । यत्र = यदा । |
| | १४ | असंस्पर्शयन् = किंचिद्दूरे । सूर्यतापो घृष्टात्कंसान्मणेर्वा गोमयस्योपरि यदा पात्यते तदा तद्गोमयं ज्वलति पार्थिवोऽग्निश्चोत्पद्यते । 'तत्प्रदीप्यते' इत्यनेन 'यः०' इत्यादेरन्वयः । स तापः शुष्कगोमये अग्निरूपेण जायते । 'शुष्कगोमयं प्रतिस्वरे धारयति' इत्यन्वयः । परिमार्जनस्यानन्तरं प्रतिस्वरः । |
| | १५ | असौ आदित्योऽपि । |
| | १७ | ताद्धितेन विग्रहः । तेन व्यपदेशो रूपसिद्धिः । व्यपदेशः = निर्देशः कारणं वा । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७०५ | १ | ' आत्मनाऽऽत्मानं संयतते ' ( २७ ) इत्यत्र ' आत्मानं ' इत्यपपाठः । |
| | ३ | इममग्निमादधाति मनुष्यः । |
| | ७–८ | इतः = इह वर्तमानात्तेजःपिण्डादस्य अग्नेः इत्यादि । सूर्य-रश्मयः अग्नेरर्चिभिः संयतन्ते । |
| | ८ | ' अवक्ष्यत् ' वचेर्लृङि रूपम् । अस्य रूपस्यात्र न किमपि प्रयोजनम् । ' अवक्षत् ' ( २९ ) वचेः ' सिप् बहुलं लेटि ' ( पा० ३ । १ । ३४ ) । अवक्षत् = अवोचत् । ' अवक्षत्' इति पाठः साधुः । |
| | ११ | अन्यः अधिकारः = ( प्रकरणम् ) अधिकारान्तरम् । मध्यमे स्थाने भवाः मध्यमकाः । उत्तमे स्थाने भवाः उत्तमकाः । तेषामिमानि औत्तमकानि । अथवा मध्यममेव मध्यमकम् । उत्तममेव उत्तमकम् । तत्र भवाः माध्यमकाः औत्तमकाः । |
| | १२–१३ | उत्तमे स्थाने वर्तमाना देवताविशेषाः तेषां स्तुतिः अर्थः प्रयोजनं येषां तानि । |
| | १५ | वैश्वानरशब्दो गुणपदं ( विशेषणं ) न प्रधानं ( विशेष्यम् )। |
| | १६ | भगो वैश्वानरः सविता वैश्वानर इति शब्दाः प्रयुक्ता अभवि ष्यन् । |
| | १९ | वैश्वानरे आदित्यस्य उदयास्तंगमनादिक्रिया वर्णिता अभवि-ष्यन् । हे वैश्वानर त्वमुदेषि अस्तमेषि विपर्येषि इति । |
| | २१ | विपरि + एषि = पुनः उदेषि । |
| ७०६ | ९ | विग्रहेण व्यपदेशो निर्देशः । ' वैश्वानरः ' इदं विश्वानरश-ब्दात्तद्धितरूपम् । तेन वैश्वानरशब्दस्ताद्धितव्युत्पत्त्या कथितः ( ७०३ । १४—१९ ) । |
| | २० | दक्षिणायनादनन्तरमुत्तरायणम् । उत्तरायणाच्च दक्षिणायनम् । तत्र एवं व्यावृत्तयः । प्रतिसंवत्सरं द्वे अयने । दक्षिणायनो-त्तरायणयोः पर्यायेण व्यावृत्त्या । पर्यायः = परस्परानन्त-रमागमनम् । दक्षिणायनस्य व्यावृत्तिः उत्तरायणे । उत्तरा-यणस्य दक्षिणायने । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७०६ | २२ | दक्षिणायनाहःसु उदकम् उत् एति । उत्तरायणाहःसु वर्षभावेन अव एति । एवमेतौ द्वावहर्गणौ परस्परव्यावृत्तौ (२०) । उत्तरायणागमे तदुदेति दक्षिणायनागमे तदवैति । 'उत्तरायणदक्षिणायनयोः' (२९) इति पाठान्तरम् । जगत् = ब्रह्माण्डं सर्वे लोकाः । वर्षभावेन उदेति द्यां प्रति । अवैति च पृथिवीं प्रति वर्षभावेन । |
| | २३ | पर्जन्याः प्राजयितारो रसानाम् । |
| ७०७ | ५ | 'तेन अर्चिभिः दग्धाः कृत्वा परमं सूक्ष्मं देवोपभोगयोग्यम् उदकभावम् आपाद्य ' इत्यन्वयः । |
| | ६ | प्रति = प्रत्युपकारबुद्ध्या । कल्पयन्ति = ददति । |
| | ९ | अयं लोकोऽपि वर्षवान् । न केवला द्यौः । |
| | १२ | यल्लक्षणमभूत्तदवैशेषिकमिति कृत्वा मध्यमस्य वैश्वानरत्वे लक्षणं न । अवैशेषिकं = समानम् । |
| | १५ | वर्षकर्मणा अभिष्टवः स्तुतिः अनैकान्तः अवैशेषिकः समानः । |
| ७०८ | २० | करीरं = वंशाङ्कुरः । करीराणि हूयन्ते अस्यां सा कारीरी । |
| | २०–२१ | पर्जन्यावाप्तये कारीरीनाम्नी काम्येष्टिः ( मैत्रा०सं०२ । ४ । ७-८ ) । |
| | २१ | ' अग्नये धामच्छदेऽष्टाकपालं निर्वपेन्मारुतं सप्तकपालं सौर्यमेककपालम् ' ( मैत्र० सं०२।४ । ८ ) ॥ ( का० सं० ११ । १० )। सर्वे पुरोडाशा अग्नये धामच्छदे । तस्मात् अग्निरेव मरुतः सूर्यश्च । अष्टाकपालं निर्वपेदित्यर्थः । |
| | २३ | मैत्रायणीयके = मैत्रायणीसंहितायाम् । |
| ७०९ | १ | निर्गच्छतीति = निया । एतदिति = अनम् । निया + अनं = नियानम् । |
| | २–३ | दैवी रात्री मानुष्या रात्रेर्दीर्घतरा षाण्मासिकी । |
| | ७ | तदुदकं तस्मिन् गर्भत्वेन निक्षिप्तसमानाः । |

पत्रं पङ्क्तिः

७०९ ८ 'उत्तरायणं मासैः षड्भिः' इदम् 'उत्तरायणमासैः षड्भिः' इति स्यात्। अन्यथा 'उत्तरायणम्' इत्यस्य केनान्वयः। परितः सिक्तमुदकं यस्मिन्। एतादृशो गर्भो यस्य।

९ नभस्यः = भाद्रपदः।

१२ तेषां रश्मीनामावृत्तिरावर्तनम्। उद्यते = 'उन्दी क्लेदने' (धा०७।२०) इत्यस्मात्कर्मणि यक्।

१५ धामच्छदग्निरिति प्रकरणात्कथं ज्ञायते। मन्त्ररूपात्= मन्त्रशब्देभ्यः।

१७ 'अग्नये धामच्छदेऽष्टाकपालं निर्वपेन्मारुतं चरुं सौर्यमेककपालमग्निर्वा इतो वृष्टिमुदीरयति धामच्छदिव भूत्वा वर्षति मरुतः सृष्टां वृष्टिं नयन्ति। यदाऽसा आदित्योऽर्वाङ्रश्मिभिः पर्यावर्ततेऽथ वर्षत्येता वै देवता वर्षस्येशते' (काठ०सं०११।१०)। 'अग्निर्वा इतो वृष्टिमीट्टे मरुतोऽमुतश्च्यावयन्ति ताँ सूर्यो रश्मिभिर्वर्षत्येते वै वृष्ट्याः प्रदातारः' (मैत्रा०सं०२।४।८) अग्निमरुदादित्या वृष्टेः कर्तारः। तस्मात्सर्वे एकैव देवता। अत्रापि नाग्निरादित्यी क्रियते। अग्निः वृष्ट्या आदित्यस्य धाम च्छादयति दिवि वर्षति च। इमां वृष्टिं मरुतः अन्तरिक्षे प्रसारयन्ति। आदित्यः अग्निं स्वरश्मिभिः प्रज्वलयति भूमौ वर्षति च। इति ब्राह्मणवाक्यार्थः। 'अग्नये धामच्छदे पुरोडाशमष्टाकपालं निर्वपेन्मारुतं सप्तकपालं सौर्यमेककपालमग्निर्वा इतो वृष्टिमुदीरयति मरुतः सृष्टां वृष्टिं नयन्ति यदा खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्ततेऽथ वर्षति धामच्छदिव खलु वै भूत्वा वर्षति' (तै० सं० २। ४। १०)।

१८-१९ ओषधिवनस्पतिभ्य आपो धूम (=बाष्प) रूपेण दिवं प्रति निवर्त्यन्ते। आहुतिभूताश्चाऽऽपस्तथैव। दिवः पतितं तोयमोषध्यादिभिर्दिवं प्रति निवर्त्यते।

२२-२३ स्थानाभिसंपत्तिप्रनाडिकया = अग्निरेवान्तरिक्षे मरुद्रूपो वायुरूपो वा संपद्यते। दिवि चाऽऽदित्यरूपः। एवं स्थाने स्थानेऽग्निस्तत्तद्रूपो भवति। इयं प्रनाडिका प्रणाली क्रमः।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७०९ | २२–२४ | ता आपोऽग्निर्मध्यमस्थानमापादयति । |
| | २३ | मेघरूपै रश्मिभिः = मेघैः । आदित्यो मेघैः सर्वाणि तेजांसि च्छादयति । धामच्छद् = मेघरूपैः रश्मिभिः धाम्नां छादयिता । 'धामच्छाद्दिवि भूत्वा' ( ७०८ । ६ ) इति क. ख. छ. त. द. पाठः । 'धामच्छदिव खलु वै भूत्वा' इति ङ. थ. ध. ठ. ड. पाठः । तै० सं० पाठश्च । 'धामच्छदिव भूत्वा' इति काठकसंहितापाठः । 'धामच्छदादित्यो भूत्वा' इति दुर्गस्वीकृतपाठः । ('७०९।२३) । अग्निः दिवि वर्षति ( १७–१९ ) । आदित्यो भुवि ( २३ ) । मरुतोऽग्निना दिवि सृष्टां वृष्टिमन्तरिक्षं नयन्ति (२४)। आदित्यस्तदा मेघान् स्वरश्मिभिरधः पातयति (२३)। |
| ७१० | २ | निरुक्तमूले 'अथापि ब्राह्मणं भवत्यग्नि० वर्ततेऽथ वर्षतीति' । एवमेकमेव ब्राह्मणवचनम् । दुर्गमते द्वे । दुर्गकालीनः काठकसंहिता पाठो भिन्नः । निरुक्तमूले 'उदीरयति धामच्छदिव ' इत्यस्य स्थाने 'समीरयति धामच्छाद्दिवि' इति । 'अर्वाङ्' इत्यस्य स्थाने 'अग्निम्' । 'न्यङ्' इति ङ. थ. ध. ठ. ड. पाठः ( ७०८ । २६ ) । |
| | ३ | अग्निरादित्यो भवति । आदित्यश्चाग्निं रश्मिभिः पर्यावर्तते । ' यदासावादित्योऽग्निम् ' इति क. ख. छ. त. द. पाठो दुर्गेण स्वीकृतः । 'यदा खलु वा असावादित्यो न्यङ् ' इति ङ. थ. ध. ठ. ड. पाठः ( ७०८ । २६ ) । तै० सं० पाठश्च । 'यदासा आदित्योऽर्वाङ्' इति काठकसंहितापाठः । |
| | १० | 'आदित्यो वैश्वानरः' इति केवलमर्थवादः । न वास्तविकमेतत् । |
| | १४ | कारीरीष्ट्यामेककपालः सौर्यः पुरोडाशः । |
| | १५–१७ | द्वादशविधमस्य कर्म तस्माद्द्वादशकपाल इति एतद्यदि देवतागुणाभिप्रायमभविष्यत् तर्हि सौर्योऽपि इत्यन्वयः । |
| | १८ | तस्मात्सूर्यस्य वैश्वानरत्वे कपालानि अनिर्वचनं न निर्णायको हेतुः । |
| | १९ | सूर्य एव वैश्वानर इति प्रवादः यस्मिन् ब्राह्मणे तत्सौर्यवैश्वानरप्रवादम् । ' तस्येदम् ' ( पा० ४ । ३ । १२० ) । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७१० | २० | बह्वृचो भक्त्यः । ताभिः वदन्तीति । |
| | २३ | सर्वथा ब्रवीति = ब्रवीत्येव । तत्त्वं = कारणम् । |
| | २४ | 'इयं वा अग्निर्वैश्वानरः' ( मैत्रा० सं० १ । ४ । १३ ) । 'वैश्वानरः प्रविशातिरतिथिर्ब्राह्मणो गृहान्' (कठोप० १ । ७) । |
| | २४–२९ | किमपि बहु = कानिचिद् बहूनि वस्तूनि । |
| | २९ | भक्त्या = गुणवृत्त्या । |
| ७११ | २ | तस्यां निविदि । |
| | २–३ | 'यो विड्भ्यो मानुषीभ्यो अदीदेत्' ( ६ ) तस्या निविद इदं चतुर्थं पदं वाक्यम् । |
| | ७ | 'ओर्वन्तरिक्षम्' ( २४ ) इति निवित्कुन्तापे पाठः । आ ( भासयति ) + उरु + अन्तरिक्षम् । |
| | २० | यज्ञे साधुर्यज्ञियः पुरुषः । |
| ७१२ | ९ | वैश्वानरीयं सूक्तं तृचम् । तत्रैषा 'वृषा पावक दीदिह्यग्ने वैश्वानर द्युमत् । जमदग्निभिराहुतः' ( आश्व० श्रौ० ८ । ९ ) । |
| | १२ | आश्वलायनश्रौतसूत्र आदित्याहुतिर्न विधीयते । अग्निप्रकरणान्न तस्य संभवोऽपि । |
| | १६ | 'आहूतः' 'अभिहूतः' इति छ. त. द. पाठौ ( ७०८ । २८ ) न दुर्गसंमतौ । |
| | १७–१८ | 'जमु अदने' ( धा० १ । ४७२ ) । प्रजमिता भक्षिता अग्नयो यैः । |
| ७१३ | १२ | 'पानयोग्यं च' अत्र 'च' शब्दस्य प्रयोजनं नावगम्यते । |
| | १४ | प्रगतो विवेको यस्मात् । अन्येभ्यः पदार्थेभ्यो यद्विवेक्तुं न शक्यते दग्धत्वात् ( १३ ) । |
| | १६ | व्यपदेशेन = पर्यायशब्देन । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७१३ | २० | विभूतिः = देवतातृप्तिसामर्थ्यम् । |
| | २१–२२ | अविच्छेदनाय = देवताभ्यो न कदाऽपि विच्छिद्येतेति । |
| | २३ | ' साधयतेः स्वधा ' इति कदाचिदन्वयः स्यात् । ' साधयतेः ' ' साधयते ' वा पदं निष्प्रयोजनं भाति । |
| ७१४ | १ | 'प्रयाजान्मे अनुयाजाँश्च केवलानूर्जस्वन्तं हविषो दत्त भागम् घृतं चापां पुरुषं चौषधीनामग्नेश्च दीर्घमायुरस्तु देवाः ' । अपां घृतम् = अद्भ्य उत्पन्नं घृतम् । ओषधीभ्योऽन्नम् । अन्नाद्रेतः । रेतसः पुरुषः । पुरोडाशः पुरुषरूपः । घृतं पुरोडाशं च मे दत्त । |
| | ४ | अस्पृष्टं = यद्विषयो वादस्तस्य वैश्वानरशब्दस्य स्पर्शोऽपि नास्त्यस्मिन्मन्त्रे । |
| | ६ | तदग्निलिङ्गमेतद्धविष्पान्तीयं सूक्तमाग्नेयं करोति यस्मात्तत्प्रथमायामृचि वर्तते । ' मतौ छः सूक्तसाम्नोः ' ( पा० ५ । २ । ५९ ) इति हविष्पान्तीयम् । |
| | ७ | ' स प्रथमं स्वेनाव्यभिचारिणाऽभिधानेन स्तोतुमुपक्रम्यते ' इत्यन्वयः । |
| | ९ | तथा = एवं कृत्वा ( २४ ) । |
| | १० | उद्विभावयिषा = उद्भावयितुमिच्छा । |
| | ११ | व्यञ्जनमात्रं = केवलं विशेषणम् । न तु प्राधान्येन स्वार्थवाचि । अग्नेः ' अग्निः ' इत्येतदव्यभिचारि नाम ( ७ ) । |
| | १३ | भिन्ने ज्योतिषी लक्षणे यस्य । अस्मिन्मन्त्रे माध्यमिकं ज्योतिः मातरिश्वा वैश्वानरश्च पृथिवीस्थानो भिन्नत्वेन निर्दिश्येते । |
| | १४ | अन्यत्वेन व्यपदेशो विद्यते अस्य । व्यपदेशः = निर्देशः कथनम् । |
| ७१५ | ६ | नेयं प्रातरनुवाकाश्विनयोः शस्यते । |
| | ८ | महिषाः = महत्यन्तरिक्षलोके आसीनाः । महि = महति + षाः = सन्नाः ( दुर्गः ) । त एव देवगणा महिषा महान्तः । |

पत्रं पङ्क्तिः

७१५ ९ यथा वा = अथवा । माहिषाः = महान्तः ।

१३–१४ 'परावतः' एतत्स्वर्गादपि परतरस्य लोकस्य नाम । परावतः = प्रकर्षेण ईरितवतः । आदित्यो वस्तूनि प्रकर्षेण ईरयति । परावतः = परागतात् । परा = दूरम् + गतात् ।

१४ विवस्वान् = विवस् + वान् = विवसाक्रियया तद्वान् ( च. पाठः ) । विवासनाक्रियया तमसां तद्वतः ( पाठान्तरम् २८ ) = तमसां विवासनाक्रिया । तया तद्वतः ।

१६ ' श्वस प्राणने ' ( धा० २ । ५९ )

१७ ' अन च ' ( धा० २ । ६० ) ।

२१ संनिधाने एकस्मिन्वाक्ये व्यपदेशो निर्देशः ।

२२ व्यवतिष्ठते = सिद्धं भवति ।

७१६ १ ' सूर्यादिसंबन्धि विशेषलिङ्गमङ्गीकृत्य वैश्वानरत्वं यदुक्तम् ' इत्यन्वयः ।

४ प्रथमायामृचि = ' हविष्पान्तमजरम् ' इत्येतस्याम् ।

४–५ प्रकृत्यैव = अग्निरित्येव ।

५ प्रकृतिः = महान् आत्मा । तस्य भूम्ना महिम्ना ।

६ अपि तर्हि = यदा ।

१७ अभि + आ + पादम् । 'आभीक्ष्ण्ये णमुल्च' ( पा० ३ । ४ । २२ ) । ' अभ्यापाद्य ' इत्यस्य ' सर्वाणि स्थानानि ' कर्म । अग्निं स्थानं स्थानं अभ्यापाद्य स्थाने स्थाने स्थापयित्वा । भट्टोजीदीक्षितमते आभीक्ष्ण्ये द्वित्वमावश्यकम् । यथा पाठान्तरे ' अभ्यापाद्य अभ्यापाद्य ' ( २९ ) । ' अभ्यापद्य ' ( २६ ) इदं प्रामादिकम् । पदः णमुल् पादम् ।

७१७ ५ मूर्तं = सर्वं शरीरजातम् । मूर् = मूर्तं + धा = धीयते ।

७ 'प्रधानम्' ' अग्निः ' इत्यस्य विशेषणम् । मूर्धा = प्रधानम् ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७१७ | १४ | 'प्रज्ञाम्' ( ७१६ । २२ ) न व्याख्यातम् । 'प्रज्ञां त्वेताम्' इत्यत्र 'मायां त्वेताम्' इति दुर्गपाठः स्यात् । |
| | १५ | यत् = यस्मात् । अपः = कर्म । |
| | १९ | भूयस्तरं = भूयः + बहुतरम् । |
| ७१८ | १० | देवाः = यजमानाः । ( ११ ) । |
| | १२–१४ | 'अथ यत्प्रातरनुदिते जुहोति । प्रजनयत्येवैनमेतत्सोऽयं तेजो भूत्वा विभ्राजमान उदेति शश्वद्ध वै नोदियाद्यदस्मिन्नेतामाहुतिं न जुहुयात्तस्माद्वा एतामाहुतिं जुहोति' ( शत० ब्रा० २ । २ । ५ ) । |
| | १८ | अयमेवाग्निर्वैश्वानर इति शाकपूणिः । तन्मतं नाद्यापि पूर्णं प्रतिष्ठापितम् । शाकपूणिरेव प्रकृतः । तेन तन्नाम्नः पुनर्निर्देशः किंकारणः । स्वपक्षानुस्मृतिर्हेतुः । |
| ७१९ | २–३ | 'देवाश्च वा असुराश्च संयत्ता आसन्सोऽग्निर्विजयमुपयत्सु त्रेधा तन्वो विन्यधत्त पशुषु तृतीयमप्सु तृतीयममुष्मिन्नादित्ये तृतीयम्' ( काठकसं० ८।८ ) |
| | ४ | उभाभ्यां पक्षाभ्याम् = आत्मविद्याज्ञिकपक्षाभ्याम् ( अपादाने पञ्चमी ) । व्यावृत्य = ( उभौ पक्षौ ) विहाय । |
| | ७ | विभक्त्या = पृथिव्यामन्तरिक्षे दिवि च विभागेन । विभक्ताभिधानं ( पाठान्तरम् २७–२८ ) = विभक्तं भिन्नमभिधानम् । अग्निर्विद्युदादित्य इत्यभिधानं विभक्त्या संपद्यते युक्तं भवति । |
| | ८–९ | एकस्यैव ज्योतिष आदित्याख्यं तृतीयं रूपमग्रीकृत्य । |
| | २४ | अपूर्वं यज्ञफलं तेन कृतोऽयं जगद्विरचनाप्रपञ्चः । |
| ७२० | ३ | 'डुमिञ् प्रक्षेपणे' ( धा० ५।४ ) । 'मा गतौ' ( धा० १० । २९१ ) । 'मीङ् हिंसायाम्' ( धा० ४।३१ ) । 'मीञ् हिंसायाम्' ( धा० ८।४ ) । |
| | ४ | मि + नी + थुः = मिथुनौ । |
| | ५ | मि + वन + थ् = मि + थ् + उन = मिथुनौ |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७१।० | ११ | ' संप्रसारणपरपूर्वत्वम् ' इत्यस्य कोऽन्वयोऽर्थश्च । ' संप्रसारणपूर्वो अधःकान्तविपर्ययः ' इति सुबोधम् । |
| | १२ | अन्तःस्थः = अन्ते वर्तमानः । |
| | १३–१४ | अन्योन्यं प्रति समाश्रितौ आत्मानं नयतः कालं वा नयतः । |
| | १४ | अनुतः : = परस्परं संसक्तौ संभजमानौ । |
| | १५ | ' मिथृ संगमे ' ( धा० १ । ८९९ ) । ' क्षुधिपिशिमिथिभ्यः कित् ' ( ३ । ५५ ) । इत्यनेन उनन्प्रत्ययः । |
| | १६ | मेथन्तौ = संगच्छन्तौ । |
| ७२।१ | १५ | ' समाम्नाम्याः ' इति दाक्षिणात्यः पाठः ( २६ ) । |
| | १६–१७ | आशेकुः = आशक्नुवन्ति । आ ( ईषदर्थे ) = न । |
| | १९ | ' ( तथा ) विशेषलिङ्गेन सूर्यप्रधानं न ' इत्यन्वयः । अग्निः प्रधानं यस्मिन् तदग्निप्रधानम् । |
| ७१२ | १४ | ' इहैव ' इति छ. त. द. ( २२ ) ग. च. ज. पाठः (२७) प्रामादिकः । |
| | १७ | प्रतीकं = प्रतिगतम् । अथवा । प्रतीकं = प्रतिदर्शनम् (३) । |
| | १८ | ' प्रत्यक्तं ज्योतिः ' (५) इत्यन्वयः । |
| | २१ | वसतिर्नात्र दर्शनार्थः । ' ज्योतिर्वर्णस्य ' (५) न व्याख्यातम्, अथवा (प्रतिदर्शनं ज्योतिः' (३) इति । प्रतिदर्शनं = प्रतिदृश्यमानम् । वर्णस्य ( ५ ) = ज्ञानस्य इत्यर्थः स्यात् । यथा रात्रयो ज्योतिर्वसते ब्राह्मणो वर्णस्य (ज्ञानस्य) तावदुपदधाति (५–६) । |
| ७३।३ | १ | दैव्योऽग्निः परः । अयं ब्राह्मणहोता अवरः । परो भूयोविद् । अवरोऽल्पविद् ( २ ) । |
| | १–२ | अवरः होता परस्य अनुकरोति । किं कारणम् । अवरः अल्पमिदिति । |
| | २ | अल्पमिति = केनचिदंशेन । न तु सर्वथा । |
| | ४ | अग्निः प्रधानं येषु तानि । अग्निप्रधानानि कर्माणि यस्मिन् । आग्नि- |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७२३ | ४ | वैश्वानर इति कृत्वा वैश्वानरीयम् । अस्मिन् सूक्ते वैश्वानरशब्दो बहुकृत्वः प्रयुक्तः । ते सर्वे प्रयोगा अग्निपराः । |
| | ९ | होतृकर्मणोऽग्निना संबन्धस्तेन होतृजपोऽग्निवैश्वानरीयो भवितुमर्हति । किंच होतृवरणानन्तरं यो होत्रा तूष्णीं पठितव्यो जपस्तस्मिन्नग्निर्वैश्वानरो न । यस्माद्वैश्वानरोऽग्नेः पितेत्युच्यते । 'अनग्निः' ( २४ ) इत्यपपाठ इव भाति । 'अनग्निवैश्वानरीयः' इति शुद्धः पाठः ( च. ज. ) स्यात् । अग्निरेव वैश्वानरः अग्निवैश्वानरः । 'मतौ छः सूक्तसाम्नोः' ( पा० ५ । २।५९ ) इत्यनेन 'अग्निवैश्वानरीयम्' । जपो न सूक्तं नापि साम । तथाऽपि सूक्तसदृशो जप इति मन्तव्यम् । न अग्निवैश्वानरीयम् अनग्निवैश्वानरीयम् । 'त्वमग्निर्वैश्वानरीयः' ( २९ ) इति पाठान्तरमपि दुर्बोधमशुद्धं च । हे देव सवितः एतमग्निं त्वां होत्राय वृणते । अत्र अग्निरेव सविता । अथवा । सवितैवाग्निः । 'अनग्निः' इति पाठे जपोऽनग्निः कथम् । 'अग्निं त्वां होत्राय वृणते' इति हि तत्रोच्यते । अनग्निवैश्वामरीयः' इति च. ज. पाठ । |
| | १०–११ | मध्यमं वैश्वानरमुत्तमं वाऽस्य पितरमाह । |
| | १९ | क. ख. ठ. ड. ( २९ ) वर्जमितरेषु पुस्तकेषु 'अनग्निवैश्वानरीयस्त्वे' । |
| | १६ | आचार्यो यास्कः । मन्त्रः = होतृजपः । अवग्रियते 'यस्तु सूक्तं भजते' इत्यादिना । |
| | १७ | व्यपदेशः = भेदेन निर्देशः । |
| | १७–१८ | 'संप्रति मन्त्रेण' अयमपपाठः स्यात् । 'स प्रतिमन्त्रेण' इति पाठ इष्टः । स आचार्यपक्षोऽव्यभिचारिणा शाकपूणिपक्षेण समी भवति । यदि होतृजपेऽग्निवैश्वानरयोर्भेदेन निर्देशः ( व्यपदेशः ) 'आ दूतो०' इत्यस्मिन्प्रतिमन्त्रेऽग्निर्वैश्वानर इति निर्दिश्यते । |
| | १८ | होतृजपे योऽग्निः ( व्यपदेशवान् ) भेदेन निर्दिष्टः स एव वैश्वानर इत्यस्मिन्मन्त्रे उच्यते । |

पत्रं पङ्क्तिः

७२४ १ हेतवः = अतिरिच्यन्तेऽधिकाः ।

७–८ मन्त्राणामर्थानां घटनान्युद्घाटनानि । शब्दा अर्था न्यायाश्च एषू-द्घाटनेषु प्राचुर्येण सहायाः । न्याया उपपत्तयः । तथाऽपि मन्त्रार्थो दुरवबोधः ।

९ ईदृशमर्थकरणमल्पज्ञैर्नावबुध्यते । वयमल्पमतयः ।

इति सप्तमोऽध्यायः ।

---

अथाष्टमोऽध्यायः ।

७२५ ८ देवतापदं = देवतावाची शब्दो नाम वा ।

१२ तदर्थिनः = धनार्थिनः ।

१६ यामृचम् ।

७२६ १८ स्तोतृत्वे चासंभवमपेक्ष्य ।

१८–१९ द्रविणोदाः स्तोता न भवति यस्मात् 'द्रविणोदाः' देवता भवति ।

२० यद्वृत्तम् = यत्सर्वनाम्नो रूपम् । द्रविणोदा अर्थपतिः । तस्मिन्स्तुतिरभिसंबद्धा ।

२१ यद्रूपमध्याहृत्यैकं वाक्यं करोति । 'द्रविणोदाः' तस्मिन्ने-कवाक्ये पदम् । स्तुत्ये द्रविणोदस्येकवाक्यतां कर्तुं सामर्थ्य-मुत्पादयितुमिच्छन् । अनया क्लृप्त्या 'द्रविणोदाः' पदं वाक्यस्याङ्गं भवेत् ।

२२–२३ 'यस्त्वम्' = ( ७२५ । १९ ) इत्यस्य स्थाने 'यस्तम्' इति दुर्गस्वीकृतपाठ आसीदिति भाति ।

२३ तं द्रविणोदसं देवमीळते ।

२३–२६ 'अस्यानेन सामानाधिकरण्ये सामर्थ्यमुन्नीय' इत्यन्वयः ।

२७ तौ द्वौ शब्दावेकवाक्यतयाऽभिसंबध्नाति । एकं वाक्यं ययोस्तौ एकवाक्यौ । तयोर्भाव एकवाक्यता ।

२८ यज्ञेषु = यजतिषु = हविःसंप्रदानेषु ( २९ ) । यजतिः = तिष्ठद्धोमः । जुहोतिः = उपविष्टहोमः ।

पत्रं पङ्क्तिः

७२६ २९ त्रीणि सवनानि यागस्य प्रधानानि स्थानानि । सवने सवने अग्नावाहुतिर्हूयते ।

३० द्रविणं = द्रविणात् + सः = सीदति ।

७२७ १ सोमः द्रविणसंभक्ता द्रविणं संभजते । द्रविणं + सः = सनुते ।

३ 'ईड स्तुतौ' ( धा० २ । ९ ) । यास्ककाले याच्ञास्तुति-वृद्धिपूजार्थे । स्तुतिर्निर्वचनिका ।

८ 'द्रविणसः' = 'द्रविणस्' शब्दस्य पञ्चम्येकवचनं षष्ठ्ये-कवचनं वा । 'द्रविणोदा द्रविणसः ० ० प्र यंसत्' ( ऋ० सं १ । ९६ । ८ ) । 'द्रविणसः' इति कर्मणि षष्ठी । तस्मादत्र 'प्र यंसत्' एतादृशं दानार्थे वर्तमानं क्रियापदमध्याहार्यम् । यास्ककृतो विवरणप्रयत्नो व्यर्थः । द्रविणः ( नपुंसकद्वितीयैकवचनं ) ददाति इति द्रविणोदाः । द्रविणस् शब्दो न तु द्रविणम् । द्रविणः = द्रव्यं धनम् । सोमार्थः केवलं काल्पनिकः ( ८ । ९ ) । 'द्रविणं = बलम्' (७२९।४–५) इदमपि चिन्त्यम् ।

१७–१८ द्रविणं = बलम् । तेन द्रविणोदा इन्द्रः । यस्मात्तस्य सर्वा बलकृतिः ।

२१ सर्वेषामधिपतिरिन्द्रः । तेन इन्द्रो बलवान् ।

२७–२८ यस्मादयमोजसो जातस्तस्मादयं बलवान् ।

७२८ ७ द्राविणोदसः = द्रविणोदसे हवीरूपद्रविणस्य प्रदात्रे हितः । 'तस्मै हितम्' ( पा० ५ । १ । ५ ) इति सायणः । द्रावि-णोदसशब्द ऋक्शाखायां सकृदेव ।

१०–११ एषोऽग्निः एतस्माद्बलादिन्द्राज्जायते । बलादिन्द्रान्मथ्यमानोऽ-ग्निरिति च पूर्वमुक्तमेव ( ६२४ । १३ ) ।

१२ इन्द्रादग्निर्जात इत्यर्थे नियमोऽपि भवति । एवम् 'अपि' शब्दस्य स्वास्थ्यम् ।

२१ 'अम्बा च दुला च' ( २८ ) इति ग० पाठः ( काठकसं० ४० । ४ ॥ तै० सं० ४ । ४ । ५ । १ ) ॥ मैत्रा० सं०

पत्रं पङ्क्तिः

७२८ २१ २ । ८ । १३ ) । 'अस्वाः दुला नितत्नी चुपुणिका अभ्रयन्ती मेघयन्ती वर्षयन्ती' ( काठकसं० ४० । ४ ) इति सप्तऽऽकाशान्वः [illegible] ।

७२९ ४ 'इत्यपि निगमो भवति' ( ७२५ । २५ ) न व्याख्यातम् ।

६ ऋतुयाजसंज्ञा यागाः । मधुमाधवादय ऋतुदेवा यत्रेज्यन्ते ते ऋतुयाजाः । दुर्गमते ऋतुयाजा इति केषांचिन्मन्त्राणां संज्ञा । ऋतुयाजाः सर्वे नेन्द्रार्थाः । ( कुन्तापाध्याये ) ऋतुयाजप्रैषाः ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | होता यक्षत् | इन्द्रं होत्रात् | ऋतुना | सोमं | पिबतु | होतर् | यज | (४२) । |
| २ | ,, | मरुतः पोत्रात् | ,, | ,, | ,, | पोतर् | ,, | (४३) । |
| ३ | ,, | ग्रावो नेष्ट्रात् | ,, | ,, | ,, | नेष्टर् | ,, | (४४) । |
| ४ | ,, | अग्निमाग्नीध्रात् | ,, | ,, | ,, | अग्नीत् | ,, | (४५) । |
| ५ | ,, | इन्द्रो ब्रह्मा ब्राह्मणात् | ,, | ,, | ,, | ब्रह्मन् | ,, | (४६) । |
| ६ | ,, | मित्रावरुणौ प्रशास्तारौ प्रशास्त्रात् | ,, | ,, | पिबतां | प्रशास्तर् | ,, | (४७) । |
| ७ | ,, | देवं द्रविणोदां होत्रात् | ऋतुभिः | सोमं | पिबतु | होतर् | ,, | (४८) । |
| ८ | ,, | ,, ,, पोत्रात् | ,, | ,, | ,, | पोतर् | ,, | (४९) । |
| ९ | ,, | ,, ,, नेष्ट्रात् | ,, | ,, | ,, | नेष्टर् | ,, | (५०) । |
| १० | ,, | ,, ,, अमात्होत्रा- दित्यादिनिरुक्तं ( ७२९ । ११ — १५ ) | ऋतुभिः | सोमम् [illegible] | पिबतु | अच्छावाक | ,, | (५१) । |
| ११ | ,, | अश्विनावध्वर्यू आध्वर्यवात् | ऋतुना | सोमं | पिबतां | अध्वर्यू | यजतम् | (५२) । |
| १२ | ,, | अग्निं गृहपतिं गार्हपत्यात् | ,, | ,, | पिबतु | गृहपते | यज | (५३) । |

ऋतुयाजेषु मैत्रावरुणः प्रैषसूक्तगतेन मन्त्रेण होत्रादीन्प्रेष्यति । ते च याज्यया वषट् कुर्वन्ति । अध्वर्युयजमानौ प्रेषितौ स्वस्वयाज्यां होत्रे प्रयच्छतः ( ऐ० ब्रा० २२ । ४ ) ।

द्रविणोदः [illegible] प्रकरणप्रकारः ।

अमात् होत्रात् ४।९ [illegible] ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७२९ | ६ | पोत्रात् ४९ ,, |
| | | नेष्ट्रात् ५० ,, |

निरुक्तम् ५१ ( ७२९ । ११–१९ )

अत्रैकस्मिन्नेव प्रैषे 'इन्द्रपानम्' ( ७२९ । १३ ) इति शब्दो न सर्वेषु चर्तुषु । इन्द्रपानामितिशब्दात् इन्द्रोऽत्र पाता द्रविणोदाश्चेत्यनुमानं कथं योग्यम्। इन्द्राय योग्यं पानं द्रविणोदाः पिबतु इत्येवार्थः ।

'इन्द्रस्य' इदं पदं प्रक्षिप्तमिव भाति । यस्मादिन्द्रः पिबतीत्यनुमानं कर्तव्यमेव। द्रविणोदा देव इन्द्रमरुद्ग्रावाग्न्यश्विमित्रावरुणेभ्यो भिन्न इति प्रैषमन्त्रेभ्यो भाति ।

८ होत्रपोत्रनेष्ट्राणि पात्राणि । तेभ्यो द्रविणोदाः सोममपात्। द्राविणोदसः = द्रविणोदसः ( छान्दसं दीर्घत्वम्)। द्रविणोदो नाम तुरीयं पात्रं तस्मात्पिबतु। 'ततः किम् ।' तेषां० समाख्या भवति' ( २१–२२ ) इति च. वर्जमितरेषु पुस्तकेष्वधिकः पाठः। स 'तद्यथा' इत्यनेनासंबद्धः। तस्मात्प्रक्षिप्त इव भाति।

१० तत्पात्रस्य 'द्रविणोदः' इत्येव नाम। एतमेव मन्त्रं मन्यन्ते। किंतु नायं मन्त्रो यस्मात् 'यस्यापत्यम्' इत्यादिवाक्यरचना क्लिष्टा। यस्माच्च 'अथाप्याह द्रविणोदाः पिबतु द्राविणोदसः' इत्यग्रेऽस्मिन्नेव खण्डे पठति । क. ख. च. पुस्तकेषु 'द्रविणोदसः' इति ऋगन्तः। न तु द्राविणोदसः।

११–१९ 'तथा ० अच्छावाक यज' इति । इदं मूलपुस्तके नासीत् ( २४–२९ ) केनाप्यस्थानेऽन्तर्भावितम् । तस्य स्थानं 'प्रेषितः' ( १७ ) इत्यस्यानन्तरम्।

१२ 'द्रविणोदसम्' इति क. ख. ञ. पाठः ।

१३ 'आयूयाः' 'अभिगूर्याः' इति कुन्तापाध्याये प्रैषपाठः ।

१९ १३ प्रयाजप्रैषाः ८ पाशुकप्रैषाः ११ अनुयाजप्रैषाः १ सूक्तवाकप्रैषः ३६ सुत्यायां सवनीयप्रैषाः = ६९ । एवं पञ्च-

पत्रं पङ्क्तिः

७२९ १५ प्रैषसूक्तानि। 'होता यक्षत्०' अयं प्रैषः पञ्चमे सूक्ते।

१६ सर्वे प्रैषा मैत्रावरुणेनोच्यन्ते। अध्वर्युगृहपतिभ्यां 'होतरेतद्यज' इत्युक्तो होता यजति (आश्व० श्रौ० ५।८)। अच्छावाकं प्रति मैत्रावरुणस्याऽऽज्ञा। अच्छावाकमैत्रावरुणौ होतुः पुरुषौ। मैत्रावरुणेन प्रेषितोऽच्छावाको याज्यां पठति।

१६–१७ अध्वर्युप्रतिस्थातारौ 'ऋतुना प्रेष्य' इत्युक्त्वा षड्ऋतुभिः मासैः प्रचरतः। ततः 'ऋतुभिः प्रेष्य' इति चतुर्भिः। ततः 'ऋतुना प्रेष्य' इति द्वाभ्याम् (मान० श्रौ० २।४।२)। हे मैत्रावरुण होतारं याज्यां पठितुमाज्ञापयेति अध्वर्युर्वदति। मैत्रावरुणः प्रैषमन्त्रं पठति। ततो होता तत्पुरुषा वा याज्यां पठन्ति। सप्तमाष्टमनवमदशममासेषु 'ऋतुभिः प्रेष्य' इति मैत्रावरुणं प्रति अध्वर्योरुक्तिः। प्रेष्य = याज्यां पठितुं चोदय।

१९ होत्रात् = होतृकृतात्। होत्रपोत्रादीनि तत्तदृत्विजां धिष्ण्या अथवा स्थानानि।

७३० १ पाठान्तरे 'उत पोत्रा० प्रयो हितम्' इति ऋक्शब्दा निरुच्यन्ते (१८–२०)। 'देवेभ्यः अदत्तम्०' इति पाठोऽधिकः सायणभाष्याद्गृहीतः (२२)। अमृक्तम् = अस्पृष्टमन्यैः। अशुद्धं चेत्कथमिन्द्रपानयोग्यम्।

४–५ 'अपाद्धोत्रात्०' (ऋ० सं० २।३७।४) इतीयमृक् मैत्रावरुणेन यः प्रैषो दत्तोऽच्छावाकं प्रति तस्याच्छावाकेन दत्तं याज्यारूपमुत्तरम्। प्रैषानन्तरं याज्या पठ्यते। 'अपाद्धोत्रात्' इयं याज्याऽच्छावाकेन पठ्यते।

५ 'अमत्त उत्त अजुषत प्रयो हितम्' एतत् 'अपाद्धोत्रात्' इत्यस्यामृचि (७२९।९)। तदत्र व्याख्यायते। 'आमिश्र्यात्'। 'कण्ड्वादिभ्यो यक्' (पा० ३।१।२७)। अन्यथा 'मिश्रयेत्' इति शुद्धं रूपम्। 'आमिश्रीयात्' कथमेतद्रूपं साध्यम्।

६ 'ऋतुना' = 'ऋतुभिः' इति वक्तुमुचितं यस्मात् 'ऋतुभिः

पत्रं पङ्क्तिः

७१० ६ [illegible] '[illegible]मनुकमनम्'। होत्रा = होतुः क्रिया श[illegible]। तया होत्रया। अभिगूर्तया = उद्यरितयाऽभ्युद्यतया।

६–७ 'सोमस्य स्वमंशम्' इत्यन्वयः। अत्र ऋक्पाठोऽनावश्यकः।

७-८ (७२८। ८–९) शेषः [illegible] व्याख्यातः।

८ तेषाम् (७२९। २६) ऋतुयाजानाम्। तत्पात्रम् 'ऋतु-पात्रम्' इत्यभिधीयते ([illegible]० औ० ५। ८) सोमः 'इन्द्रपानः' उच्यते (ऋ० सं० ९। ९६। ३। १२ च)। 'चमसा इन्द्रपानाः' (ऋ० सं० १।५४।९) 'इदं त्यत्पात्रमिन्द्रपानमिन्द्रस्य प्रियममृतमपायि' (ऋ० सं० ६। ४४। १६) 'नाम इन्द्रपानमूर्मिमकृण्वत' (ऋ० सं० ७। ४७। १)। मत्सरमिन्द्रपानमूर्मिम् (ऋ० सं० १०। ३०। ९) एवम् 'इन्द्रपानं' न पात्रस्य नाम। सोमस्य विशेषणं तत्। 'इन्द्रेण पेयम्' इत्यर्थः। पात्रं = पेयं वस्तु। चतुर्थं पेयमिन्द्रेण पातुं योग्यं द्रविणोदाः पिबतु (१–४)।

९ 'समाख्या भवति' (७२९।२६) इति मूलपाठः स्यात्।

१२ 'होत्रात्सोमम्' अत्र न कोऽपि स्तूयते। सोमपानेन स्तुति-रन्यत्र वर्तते न ऋतुयाजेषु। 'अस्य मदे०' इति निविदि (निविद् ११) इन्द्रकर्माणि कथ्यन्ते। तस्य मूलम् (ऋ० सं० २। १५)। 'अस्य मदे०' (ऋ० सं० ६।४४।१४) इति ऋचमपि इन्द्र स्तुतिपरा। १। १२४। ४ ॥ १। ५२। ५ ॥ १।५२।१० ॥ १।५२।१४ ॥ १।५६।३,५,६ ॥ १।८०। १,२ ॥ १।८५।१ [illegible] ॥ ४३।७ ॥ ४।२६।७ ॥ ६। २७।१ ॥ ६।४३ अस्य मदे ॥ [illegible]।८॥८।७।१४ ॥ ८।१७। [illegible] ॥ ८।६६।२ ॥ १०।४४।८॥एता ऋचोऽपि तथैव।

१४ [illegible]ऽपि देवाः सोम[illegible] स्तूयन्ते किंतु न बहुकृत्वः।

१९ तस्मै इन्द्राय संस्कारः प्रधानं यस्मिन्। सोमाप्यायनं = हिर-ण्येन सोमस्य संसर्गः। घृत[illegible]ण सोमः पूर्वं हत आसीत्। तस्मात् हि सोमऋत्विजोऽनेन [illegible]प्याययन्ति।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७३० | १६ | ' अंशरंशु० ' इत्यनेन सर्वे ऋत्विज आप्याययन्ति ' ( मैत्रा० सं० ३ । ८ । २ ) । ' ब्रह्मा राजानं विस्रंस्य हिरण्यमवदधात्याप्यायनाय । अंशुरंशुष्टे देव सोमेत्यारभ्य जपन्त्यृत्विजो यजमानश्च ' ( मान० श्रौ० २।२।१।१२ ) । |
| | १७ | ' आ त्वमिन्द्राय प्यायस्वा तुभ्यमिन्द्रः प्यायताम् ' ( मैत्रा० सं० १।२।७ ) ।आप्यायनसंस्कार इन्द्रार्थः (७३२ । २)। |
| ७३१ | ३ | ' तस्यापत्यम् ' ( पा० ४ । १ । ९२ ) ' शिवादिभ्योऽण् ' ( पा० ४ । १ । ११२ ) इति सूत्राभ्यां द्रविणोदसोऽपत्यं द्राविणोदसः । द्राविणोदसोऽग्निर्यस्यापत्यं स द्रविणोदाः । क्लिष्टोऽन्वयोऽयम् । द्रविणोदा एव द्राविणोदसः । अथवा । द्राविणोदसस्य पितुः ' द्रविणोदाः ' इति नाम स्यात् । इन्द्राग्निभ्यां भिन्नोऽयं द्रविणोदाः । |
| | १० | ' इन्द्रो द्रविणोदा अस्तु ' इत्यन्वयः । |
| | १२ | एतानि माध्यमिकानि सूक्तानि । |
| ७३२ | ३ | तासु ( अग्नेः ) उत्पत्तिः । तया योगात्संबन्धात् । ' अपां मित्रम् ' इति न योग्यं निरूपणम् । मित्रं मित्रभूता आपो धिषणा चाग्निं साधन् साधयन्त्युत्पादयन्ति । |
| | ५—६ | इदं नवर्चं सूक्तम् । नवमीवर्जं प्रत्येकस्याः ' देवा अग्निं धारयन्द्रविणोदाम् ' इत्यन्तिमः पादः । |
| ७३३ | ३ | अग्निचितावुख्याग्नावौदुम्बर्यादयः समिध आधीयन्ते । ' दृन्नः०' इत्यनेन क्रुमुकं घृतान्वक्तमादधाति ( मैत्रा० सं० ३।१।९ ) |
| | ५ | आसवः = पानम् । सर्पिः = उदकम् । |
| | १० | सामिधेन्यः = ' प्र वो वाजा० ' इत्याद्या एकादशसंख्याका ऋचो वह्निसामिन्धनहेतुत्वात्सामिधेन्य इत्युच्यन्ते । अन्नाद्यं कामः । तत्संबन्धि कर्म अग्नये अग्निदेवताकम् । |
| | ११ | धाय्या = सामिधेनीषु प्रक्षेप्तव्या ऋक् । ' धाय्याभिर्वै प्रजापतिरिमाँल्लोकानधयद्यं यं काममकामयत ' ( ऐ०ब्रा० १२।७ ) । ' यत्र यत्र वै देवा यज्ञस्य च्छिद्रं निरजानंस्तद्धाय्याभिरपि- |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७३३ | ११ | दधुस्तद्धाय्यानां धाय्यात्वम् ' ( ऐ० ब्रा० १२ । ७ ) । ' स्यूमर्हैतद्यज्ञस्य यद्धाय्यास्तद्यथा सूच्या वासः संदधियादेव-मेवैताभिर्यज्ञस्य च्छिद्रं संदधदेति ' ( ऐ० ब्रा० १२ । ७ ) धाय्या शस्त्रे प्रक्षेपणीया । ' मूलं वा एतद्यज्ञस्य यद्धाय्याश्च याज्याश्च । ताः समान्य एव स्युः ' ( ऐ० ब्रा० १३ । ७ ) । ' पाय्यसांनाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ' ( पा० ३ । १ । १२९ ) । धीयते समिदनया इति धाय्या । |
| | १६ | ' अपि'शब्देन ' अग्ने वाजस्य० ' इयमपि धाय्या । अस्य विनियोगस्य मूलं नोपलब्धम् । ' अग्ने वाजस्य० ' इति तृचः प्रातरनुवाके आग्नेये क्रतौ ( आश्व० श्रौ० ४ । १३ ) । ' त्वं ह यद्यविष्ठ० ' ( ८ ) इयमपि ( आश्व० श्रौ० ४ । १३ ) । |
| ७३४ | ३-४ | इन्द्राद्द्रविणोदसोऽयं जायते इत्यनेनाभिप्रायेणेदं द्राविणोद-सत्वं न । |
| | १२ | कठतैत्तिरीयवाजसनेयिसंहितासूक्तार्थोऽत्यन्तं भिन्नः । |
| | १८ | ' अग्ना अग्निश्चरतीति स्रुवेणाभिजुहोति ' ( मान० श्रौ० १ । ७ । १ । ४७ ) इति शास्त्रम् । अनेनाग्नेरेतदभिहो-माख्यं भागधेयं प्राप्तम् ( १८–१९ ) । |
| | २० | भागधेयं विधेम दध्मः । |
| ७३५ | २ | मूले समाख्याशब्दो नास्ति ( ७२५ । २६ ) । |
| | ४ | केनचिद्गुणसामान्येन संवादः = एकनाम । कुताश्चिदसमर्थकार-णाद्गुणेनानुवाद एकनाम । |
| | ५ | एकनाम्ने समर्थं कारणं नास्ति । यथा इन्द्राय योग्यं पानं तथाऽ-न्येभ्योऽपि देवेभ्यः । देवेष्वसामर्थ्यम् । तस्मात्सोमपात्राणां वायव्यानीति नाम । कुताश्चित्कारणादसामर्थ्यं देवेषु । |
| | ६ | सोमं हन्तुमसमर्था देवा वायुं प्रार्थयामासुः । वायुरेतं वरं वव्रे । मद्देवतान्येव पात्राण्यासन्निति । तस्मात्सर्वाणि सोमपात्राणि वायव्यानीत्युच्यन्ते ( मैत्रा० सं० ४ । ५ । ८ ) । ' हतः सोमोऽपूयत । देवैः प्रार्थितो वायुस्तमस्वदयत् । स वरम- |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७३५ | ६ | वृणोत् । मद्देवत्यान्येव वः पात्राण्युच्यान्ता इति तस्मान्नानादेवत्यानि सन्ति वायव्यान्युच्यन्ते' (तै० सं० ६ । ४ । ७ )। |
| | ११ | यद्दग्धुं = ये दग्धुमागच्छन्ति ( च. ट. ) । |
| | १८–१९ | मरुतः = मरुद्देवताः । दुर्गकृतोऽर्थोऽनवश्यः ( १४ ) । यद्यपि मरुद्भिः सह पानं तथाऽप्यग्नेः पातृत्वं न बाध्यते। |
| | २२–२३ | ' उपरिष्टात्त्वृच ऋतुयाजानाम् '( आश्व० श्रौ० ८ । १ )। सप्तमादीनां प्रैषाणामुपरिष्टात् ' मन्दस्व० ' ( ऋ० सं० २ । ३७ । १–६ ) इत्याद्याः षड्ऋचः क्रमेण प्रक्षेपणीयाः । |
| | २५ | सोमपानार्थे संबोधने द्रविणोदसो वनस्पतिशब्देन सामानाधिकरण्यम् । |
| ७३६ | १ | तेनैकं विशेषणमन्यद्विशेष्यम् । तस्माद्वनस्पतेर्द्रविणोदा नान्यः । |
| | २ | ' वनस्पते रशनया वियूय पिष्टतमया वयुनानि विद्वान् । वहा देवत्रा दिधिषो हवींषि ' ( मैत्रा० सं० ४ । १३ । ७ ) । ' होता यक्षदग्निं स्विष्टकृतम्' ( मैत्रा० सं० ४ । १३ । ७ ) । |
| | ३ | ' हे वनस्पते दिधिषो देवेषु हवींषि वह ' अत्र वनस्पतिर्हविर्वहनं प्रार्थ्यते । इदं कर्माग्नेः । |
| | ४ | स्विष्टकृन्नामा विकृतोऽग्निरस्मिन्प्रकरणे श्रूयते । तस्माद्वनस्पतिरग्निः । |
| | ८ | ' अभित्यं देवं सवितारमिति सवितृप्रसूत एव गृह्णाति ' ( मैत्रा० सं० १ । २ । ५ ॥ ३ । ७ । ४ ) । " उपांशुसवनमुपले निधाय तस्मिन्राजानं सर्वं मिमीते ' इन्द्राय त्वाभिमातिघ्ने ' ( मैत्रा० सं० १। ३।२ ) इतिप्रभृतिभिः पञ्चकृत्वो यथा क्रये " ( मान० श्रौ० २ । ३ । ३ ) । |
| | १० | ' अंशुरंशुष्टे ते देव सोमाप्यायतामिन्द्राय ' ( मैत्रा० सं० १ । २ । ७ ) । ' आ त्वमिन्द्राय प्यायस्व ' ( मैत्रा० सं० १ । २ । ७ ) । |
| | ११–१२ | ' पुनरपि चाप्यायते ' ( २७–२८ ) अस्मिन्पाठे ' पुनरपि ' |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७३६ | ११–१२ | न्यर्थम् । ' पुनरपि मीयते ' इति समञ्जसः पाठः । आप्यायनमेव संस्कारः । संस्क्रियते = आप्याय्यते । |
| | १२ | ' इन्द्राय त्वाभिमातिघ्ने इन्द्राय त्वा वसुमते रुद्रवते इन्द्राय त्वादित्यवते । अग्नये त्वा रायस्पोषदे विष्णवे त्वा श्येनाय त्वा सोमभृते विष्णवे त्वा ' ( मैत्रा० सं० १ । ३ । ३ ) । |
| | १४–१९ | सोमग्रहा नानादेवताभ्यो हूयन्ते । यथा । उपांशुः ( मैत्रा० सं० १ । ३ । ४ ) ऐन्द्रवायवः ( मैत्रा० सं० १ । ३ । ६ ) मैत्रावरुणः ( मैत्रा० सं० १ । ३ । ७ ) आश्विनः ( मैत्रा० सं० १ । ३ । ८ ) । |
| | १९ | ' उपयामगृहीतोऽसि ' इत्यनेन ग्रहणं ( मैत्रा० सं० १ । ३ । ४—३६ ) । |
| | २१ | ' अग्नये त्वा रायस्पोषदे ' इदं यजुर्न ऋक् । |
| | २२ | ' रायस्पोषदे ' इति मैत्रायणीकाठकवाजसनेयिसंहितापाठः । ' रायस्पोषदाय ' इति शुद्धं रूपम् । |
| ७३७ | १६ | पानं पिबन्ति ते पानपाः । |
| | १७ | धिष्ण्यं = स्थानम् । 'सर्वे वषट्कारं कृत्वा यजन्ति' ( आश्व० श्रौ० ८ । १ ) । वषट्कृतं = याज्यां पठित्वा नेष्टा वौषट् ब्रवीति । ततो हविर्दीयते । |
| ७३८ | १ | तदर्थं वागर्थं होता शस्त्रं ब्रूयादित्यर्थं सोमः साद्यते । |
| | ३ | ' धिष शब्दे ' ( धा० ३।२१ ) । |
| | ३–४ | सा वागर्थं धारयति । |
| | ५ | ' धिषणाभवः ' ( ७३७।९ ) न व्याख्यातम् । धिषणायां भवः धिषण्यः । |
| | ५–६ | धीः प्रज्ञा कर्म वैतस्यां वाचि सीदत्येतां वाचं सनोति संभजते वा । |
| | ६ | अथवैषा वाक् धियं कर्म वा संभजते । तयोः = धीकर्मणोः । यस्मात् धीः कर्म च तस्या वाचो निमित्तम् । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७३८ | १५ | 'वनु याचने' ( धा० ८।८ )। 'पिपर्तुभिः' इति थ. ध्र. ठ. ड. पाठः ( २६ )। |
| | १९ | अत्र अग्निर्द्रविणोदा इन्द्रो वा इत्येव प्रश्नः। उत्तमस्य ज्योतिषोऽत्र संबन्धो नास्ति। तेन 'उत्तमं च ज्योतिः भजेते' इत्यपपाठः ( २७ )। |
| ७३९ | ८ | पाठक्रमप्रयोजनस्य गृह्यमाणत्वात्। |
| | १२ | पाठे आनुपूर्वी। पृथिवीस्थाना अन्तरिक्षस्थाना द्युस्थाना इति देवतानां क्रमो देवतापदसमाम्नाये। |
| ७४० | ३ | अग्निशब्दस्यार्थो ( गुणः ) पार्थिवस्य ज्योतिषः संनिकृष्टः। जातवेदःशब्दस्यार्थः ( गुणः ) ततो विप्रकृष्टः। वैश्वानरस्य ततोऽपि विप्रकृष्टतरः। |
| | ४ | व्यवधानेन = इध्मादीनां तु न साक्षात् (= अभिधया ) अग्न्यर्थः। किंतु लक्षणया। |
| | ५ | अग्नेः स्थानमात्रं = पृथिवीमेव। |
| | ६ | उदिता प्राणवृत्तिः प्राणनं येषु तानि। |
| | ७ | प्रथमं निर्दिश्यन्ते। |
| | ८ | आद्वंद्वेभ्यः = 'उलूखलमुसले हविर्धाने द्यावापृथिव्यौ' इत्यादीनि द्वंद्वानि ( निघ० ५। ३। २९–३६ )। |
| | १२–१३ | 'क्रमप्रयोजनम्०' अयं श्लोकोऽधुनोपलभ्यबृहद्देवतायां न विद्यते। |
| | १४ | गुणस्यार्थस्याभिधानं तदेव सामान्यम्। अभिधाने अभिधाने कश्चिद्गुणो वर्तते येन तेषामग्निना संबन्धः। |
| | १७ | अभिधानस्य विशिष्टमभिधेयं किमर्थमिति नैरुक्ताः कारणं ददति। |
| | १८ | आप्नोतिवाचकं ब्राह्मणवाक्यं यास्को न पठति (७३९।१–२)। तेन 'आप्नोतेः' इति यास्कपाठो न भवेत्। अथवा 'इति च ब्राह्मणम्' ( ७३९।२ ) अनेन चकारेणान्यद्ब्राह्मणवाक्यं यास्केन पठितं स्यात्। |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७४० | २० | ' प्रजापतिरेता आप्रीरपश्यत्ताभिरात्मानमप्रीणीत । अग्निमेताभिर्यजमान आप्रीणीते ' ( मैत्रा० सं० ३।४।६ ) । ' आप्रीभिराप्नुवन् । तदाप्रीणामाप्रीत्वम् ' इति शाखान्तरे ( तै० ब्रा० २।२।८ सायणः ऐ० ब्रा० ६।४ ) । |
| | २०–२१ | आप्रीदेवताः=आप्रिय ऋचः । तासु या देवतास्ता अपि आप्रिय । |
| | २१–२२ | ऋचो देवता आप्नुवन्ति प्रीणन्ति वा । तस्मादृचः आप्रियः । |
| | २९ | ' सुप्यजातौ णिनिस्ताच्छील्ये ' ( पा० ३।२।७८ ) इत्यनेन प्रथमागामी । अयं प्रत्ययः अताच्छील्येऽपि इति वार्तिकद्वयात्स्पष्टम् । इध्मं विना इज्या न शक्या । अग्नेरिध्मोऽवश्यः । |
| ७४१ | १ | ' तनूनपात् ' इत्यनेन नराशंस इत्यनेन वा अग्निर्न नित्यमभिधीयते । 'इध्मः समिन्धनात्' (७३९।२–३) न व्याख्यातम् । |
| | १६ | ' सूक्तमेव ' इति ग. च. ज. पाठो ( २७ ) दुर्बोधः । जमदग्निस्तत्पुत्रो वा परशुराम ऋषिः । नेयमेकैव ऋगाग्नेयी किंतु सर्वं सूक्तमेवाऽऽग्नेयम् । ' आग्नेया इति तु स्थितिर्भक्तिमात्रमितरत् ' ( ७७०।६ ) । तेन 'सूक्तमेवाऽऽहाऽऽग्नेयं यास्कः' इति पाठः सुबोधः । |
| | १७ | यजनीयं = यजनाय योग्यं हितं वा । |
| | १९ | ' स्वतन्त्रः कर्ता ' ( पा० १।४।५४ ) ' तत्प्रयोजको हेतुश्च ' ( पा० १।४।५५ ) । यजमानो हवींषि ददाति । अग्निर्यजमानं हवींषि दापयति । एवमग्निर्हेतुः कर्ता च । |
| ७४१<br>७४२ | २१<br>१ | इध्मो जातवेदसोऽग्नेराधारः । |
| | १–२ | तेषां मञ्चानां ' क्रोशन्ति ' इति क्रियया अभिधानं तस्य प्राप्तिः । |
| | ३ | यत्तत्त्वमेव = यत् तत् त्वमेव । |
| | ४ | मित्रमहः = मित्राणां पूजयितः = नित्यमभ्यपेक्षमाणानामुपकारे प्रवृत्तः । |
| | ९ | अभ्यपेक्षमाणाः = ये त्वत्साहाय्यमपेक्षन्ते ते । अभ्युपेक्ष्यमाणः ( पाठान्तरम् २१ ) = अभ्यपेक्ष्यमाणः । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७४२ | ५ | यजमानानामुपकारे प्रवृत्तः ( पाठान्तरे २१ ) । यजमानानां चिकित्वान् । कर्माणि षष्ठी । 'चेतनावान् ' ( ७४१ । ७–८) न व्याख्यातम् । |
| | ९ | इध्मस्याग्नावावेशोऽग्निसाद्भवनम् । तस्मादिध्मोऽग्निः। |
| | १०–१२ | ' सर्वयजमानानां साफल्ये हेतुः ' इति च. पाठः (२२–२३) साधुः । ऋत्विजां साफल्यं नैव यागोद्देशः । सायुज्ये ( पाठान्तरे २४ ) = समीभावे देवतासमभावे । ' सायुज्यं सलोकतामाप्नोति ' इति बहुकृत्वो ब्राह्मणवाक्यम् । |
| | १२ | अस्माकं देवानाहूय यष्टुं तस्य तव युक्तम् । |
| | १४ | यज्ञेध्मः= यज्ञेऽग्नावाधीयमान इध्मः । |
| | १५ | समाप्तौ प्रणवेनावसानम् ( आश्व० श्रौ० १।२ ) । सामिधेन्या अन्ते ओँ इति प्रणवः समिदाधानं च । 'समिद्धो अद्य०'अस्मिन्मन्त्रे इध्मशब्द इध्मावाचकशब्दो वा नास्ति । ' आसीनः प्रणवे प्रणवे समिधमादधाति' (सत्या०श्रौ० २।१)। ' अग्नये समिध्यमानायानुब्रूहीत्युक्त्वा प्रणवे प्रणवे समिधमादधाति ' ( मान० श्रौ० १।३।१। |
| | १८ | ' समिद्भिः प्रेष्येति प्रथमं प्रेष्य प्रेष्येत्युत्तरान् ' ( मान० श्रौ० १।८।३।१७ ) । ' समिद्भिः प्रेष्यति प्रथमं प्रयाजं संप्रेष्यति प्रेष्य प्रेष्येत्युत्तरान् ' ( सत्या० श्रौ०४।३।१० )। |
| | १९ | ' श्रूयते ' नायं शब्दो योग्यो यस्माच्छ्रौतसूत्राणि न श्रुतिः । यदर्थं = समिदर्थम् । इध्मभावम्=इन्धनभावम् । |
| ७४३ | १ | व्यवहितं='समिद्धः' इति भिन्नशब्देन । |
| | २ | ऐष्टिके = दर्शपौर्णमाससंबन्धिनि । हौत्रं = होतुः कर्म । |
| | ३ | 'समिधो यजेति प्रथमं यज यजेत्युत्तरान्'( मान० श्रौ० १।३ २ । २ ) । प्रयाजं संप्रेष्यति ( सत्या० श्रौ० २ । २ )। |
| | ३–४ | ' अध्वर्युप्रेषितो मैत्रावरुणः प्रेष्यति प्रैषैर्होतारम् । होता यजत्याप्रीभिः प्रैषसलिङ्गाभिः ' ( आश्व० श्रौ० ३।२ ) । ' येऽ |

पत्रं पङ्क्तिः

७५१ ३–४ यजामहे समिधः समिधो अग्न आज्यस्य व्यन्तु ३ वौ ३ षळिति वषट्कारः ' ( आश्व० श्रौ० १।९ )।

७ प्रैष आराद्दूरादुपकरोति यजति कर्मण्यङ्गभावं गच्छति ।

७-८ समिदादिभिरुपकृत्य दर्शपूर्णमासाभ्यां यजेतेत्येवंरूपाणि यानि विनियुज्यन्ते तान्यङ्गानि । तानि सिद्धरूपाणि क्रियारूपाणि चेति द्विविधानि । क्रियारूपाण्येव संनिपत्योपकारकाण्याराद्दुपकारकाणीत्युच्यन्ते । तत्र कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म संनिपत्योपकारकम् । यथाऽवघातप्रोक्षणादि । द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकम् । यथा प्रयाजादि । संनिपत्योपकारकमारादुपकारकाद्बलीयः । आरादुपकारकस्थले हि प्रकरणं विनियोजकम् । इतरत्र तु व्रीहीन्प्रोक्षतीति वाक्यमेव ( आपदेवः )।

८ आप्रीः संनिपत्य संनिहितत्वेन उपकरोति । प्रैष आप्री यागः इति क्रमः । आप्रिय एव सार आप्रीप्रैषः । तस्मदाप्री संनिहिता । न तथा प्रैषः । यजतिः = यागः । ' आप्रियाम् ' इदं प्रायः ' आप्रियः ' इत्यासीन्मूलवृत्तौ । प्रैषस्य यजतावारादुपकारित्वम् । आप्रियो यजतौ संनिपत्योपकारित्वम् ।

१०–११ कः समिद्धः । को देवान्यजति । को जातवेदाः । को मित्रमहाः चिकित्वान् दूतः कविः प्रचेताश्च । सर्वत्र 'अग्निः' इत्येवोत्तरम् । सर्वाण्येतान्यग्निमेवाभिदधते । 'समिद्धः' 'यजासि' इति द्वे एव कर्मणी । कदाचित् 'मित्रमहः' अत्र 'मह' इति कर्म स्यात् । इतराण्यग्निवाचकान्यग्निविशेषणानि वा । एतेषामिध्मे गौणी वृत्तिः (१२) । तस्मात्तान्यग्न्यर्थानि । यदा आप्रियोऽग्न्यर्थत्वं न विपर्यस्यते तदा साऽग्निमेवाभिधत्ते यदा गौण्या वृत्त्या सा न निरूप्यते तदा ।

१९ आप्री यागे बहुलमुपकरोति । एते आप्रीप्रयाजाः ।

२१ यथा तनूनपान्नराशंसादिशब्दा आप्रीषु विद्यन्ते न तथा अग्निशब्दः । तस्मादग्निराप्रीदेवतासु नाम्ना न कथितः ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७४३ | २१–२२ | 'अग्निः' (निघ० ५ । १ । १) इत्यत्र समाम्नातः । |
| | २२ | 'तदपि (=इध्मस्य लिङ्गमपि) अस्यामाप्रियां नास्तीति असमाम्नानम् इध्मशब्देऽपि समानामिति चेत्' इत्यन्वयार्थौ । |
| | २३ | (पाठान्तरे ३२) 'आ च वह' = आह्वय चास्माकं देवान् । (यस्माद्देवान्यजसि तस्मात्) यज । एवमाह्वानं यजनं चेति द्वे क्रिये । एते क्रिये आप्रियां प्रैषिके वा न विद्येते । 'ये ३ यजामहे समिधः समिधो अग्न आज्यस्य व्यन्तु' अत्र 'समिधः समिधः' इति समाम्नानम् । 'होता यक्षदग्निः०' इति मैत्रावरुणेन दत्तः प्रैषः । 'ये ३ यजामहे०' इति होतुरुत्तरं प्रैषिकम् । प्रैषिके समिधः समाम्नाता न इध्मः । तदाख्यताम् (३३) = इध्म इत्याख्यताम् । 'समित्' शब्द एव समाम्नातव्यः किमिति 'इध्म' शब्दः । प्रैषिके समाम्नानात् 'समिधः समिधः' इति । क्रिया = व्यन्तु (भक्षयन्तु) । तया समिधो विशेष्यन्ते 'समिध आज्यस्य व्यन्तु' इति । एवम् इध्मशब्द आगतः । तेन इध्माभिधानेन अग्निः इज्यते । (पाठान्तरे ३३) अहमेवायामिध्म इत्याग्निः इध्ममभिसंपन्नः । |
| ७४४ | ४ | यजमानानां यजमानैर्दत्तेन हविषा जातं प्रज्ञानं यस्य सः । |
| | ११ | नपात् = नप्ता । |
| | १२–१३ | न विद्यते अन्तरं यस्याः सा । पितापुत्रयोर्मध्ये अन्तरं नास्ति । तस्मात् पुत्ररूपा कन्यारूपा वा प्रजा पितुरनन्तरा । 'पितुरनन्तरा या (प्रजा) सा पुत्राख्या । पौत्राख्या (पितु.)अननन्तरा इत्यर्थः' इत्यन्वयः । 'अननन्तरा' इत्यत्र द्वौ नञौ । |
| | १३ | न अनन्तरा अननन्तरा । पौत्ररूपा प्रजा अननन्तरा । यस्मात् पितापौत्रयोर्मध्ये पुत्ररूपं कन्यारूपं वा अन्तरमस्ति । 'या पितुरनन्तरा पुत्राख्या तस्याऽनन्तरा पौत्राख्या' इति ग. ज. पाठः (२८)। अत्र तस्य = पुत्रस्य । 'तस्याः' अवश्यम् । |
| | १५ | नततमः = नततरः । 'गौरत्र०' (७४१ । १०)। तत्रतस्मिन् पक्षे इति दुर्गव्याख्या । 'अत्र' स्थाने 'तत्र' शब्दो दुर्गस्वीकृतमूले स्यात् । अथवा । 'अत्र' स्थाने 'तत्र' प्रामादिकम् । |
| | १७–१८ | तस्मात् (पयः) तस्याः पुत्रः । |

पत्रं पङ्क्तिः

७४५ १० यस्मात् हवींषि यान्ति तस्मात् तानि 'यानाः' इत्युच्यन्ते।

१३ 'जिह्वया हित' दुर्बोधम्। 'जिह्वायां हित' इति सुगमम्। आज्यं जिह्वाया धीयते। कस्य जिह्वा। अग्नेः। 'जिह्वया = जुह्वा। हित = अग्नौ प्रक्षिप्त' इत्यर्थः स्यात्। 'कल्याणजिह्व' (७४५।४) न व्याख्यातम्। नापि (७४६।४) इत्यत्र। नापि (७४५।५) इत्यत्र।

१४ यानि ध्रुवाणि न भवेयुरिति तानि संपादय ध्रुवाणि कुरु। 'ध्रुवाणि नः स्युः' (२७) इति पाठान्तरमपि साधु। अर्थवस्तूनि = हवींषि। ध्रुवाणि = देवताः प्रति गन्तुं समर्थानि।

१५ हविः आज्येन अभिघार्यते दिह्यते। अलंक्रियते = कृष्णी क्रियते। अद्भिरुपस्तीर्यते च। एतैः संस्कारैस्तानि ध्रुवाणि भवन्ति।

१७ गमय = दूरी कुरु।

१८ 'इत्यर्थ.' व्यर्थं पदे।

७४६ ४ समभिव्यञ्जयन् = दृष्टिमधुराणि मनोहराणि कुर्वन्। मृष्टी कुरु = शुद्धानि कुरु। 'मृजू शुद्धौ' (धा० २।५६)।

१७–१८ 'देवान्नो यज्ञ गमय' (७४५।५) इति भाष्यवाक्यं न व्याख्यायेत।

७४७ १ कर्मणि वर्तमाने एव।

२ एषा नराणामभिमतफलदाता। नराणां फलमाशंसतीति नराशंसः। 'नराशंसस्य महिमानमेषाम्०' इत्यत्र 'एषाम्' इत्यस्य नराणामित्यध्याहृतेनान्वयः। एवं दुर्गः। ऋचि भाष्ये च ये देवा इत्यादि एषां तेषामित्यन्वयः (७४६।१७)।

३ यज्ञः = मन्त्रैर्देवतामुद्दिश्य द्रव्यस्य दानम्। 'द्रव्यदेवते कर्मणो रूपम्' इति मीमांसकाः। देवतामुद्दिश्य द्रव्यस्य त्यागः। अस्य प्रयोगस्याधिष्ठाता यज्ञः।

४ तद्यज्ञकर्म जगदुत्पत्तिरेवानुग्रहस्तस्य बीजम्।

६ यजनस्य = यागस्य। यजतस्य = यज्ञियस्य = यजनस्य संपादयितुः = प्रयोक्तुरभिमतफलसंपादयितुः।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७४७ | ७ | प्रयोक्त्रेऽभिमतं फलं संपादयति। 'यज्ञैरुपस्तुमः' इत्यन्वयः। |
| | ८ | उपस्थित = उपस्तुत ( च. ट. )। अग्न्युपस्थानम् = अग्नेः स्तुतिः। तदेवम् = अत एवम् ( च. ट. )। किमपि = फलदानायानिर्वचनीयमामर्थ्यम्। |
| | १२ | सौमिकः = अग्निष्टोमे हन्यमानः ( पशुः )। सोमः = मरुत्वतीयैन्द्राग्नवैश्वदेवादयः सोमग्रहाः। पश्वङ्गानि = पशुहवींषि। 'हृदयस्यावद्यति' जिह्वाया वक्षसो दोष्णः पार्श्वयोरित्यादीन्येकादशावदानानि ( मैत्रा० सं० ३। १०। ३ )। |
| | १२-१९ | अयं प्रयाजमन्त्रः ( १ ) इष्टिषु सोमे च प्रयुज्यते। सोमे भिन्नानि हवींषि। इष्टिष्वपि भिन्नानि। |
| | १३ | पश्वङ्गानि पुरोडाशा धाना इत्यादीनि। 'व्रीहिमयः पुरोडाशो भवति' ( मैत्रा० सं० ३। १०। २ )। 'हरिवं इन्द्रो धाना अत्तु' ( मैत्रा० सं० ३। १०। ६ )। 'पूषण्वान्करम्भः। सरस्वतीवान् परिवापः। इन्द्रस्यापूपः। मित्रावरुणयोः पयस्या' ( मैत्रा० सं० ३। १०। ६ )। |
| | १४ | तान्त्राणि = दर्शपूर्णमासयोः काम्येष्टिषु च विधीयमानानि। दर्शपूर्णमासतन्त्रेण कर्तव्यानि। आहवनीयस्यैशानदेशे आग्नेय आज्यभागो हूयते। आग्नेयदेशे सौम्यो हूयते। एतौ द्वौ आज्यभागौ। तन्त्रम् = अङ्गसंहतिः = विध्यन्तः। स च विध्यन्तः अवस्थानादिः संस्थाजपान्तः। प्रधानस्य तन्त्रणात्तन्त्रम्। तच्च दर्शपूर्णमासयोरेवाऽऽम्नातं नान्यास्विष्टिषु। तथापि तत्सर्वासामिष्टीनां साधारणम् ( आश्व० श्रौ० टीका १। १ )। तान्त्राणि = सर्वासामिष्टीनां साधारणानि। अग्नि सोममित्याज्यभागौ ( आश्व० श्रौ० १। ३ )। |
| | १४-१९ | 'प्रयाजा आज्यभागौ स्विष्टकृतः' एतानीष्टिषु दीयमानानां हविषां नामानि। |
| | १९ | अध्वर्युरग्नावैशानदेशे जुहोति। स स्विष्टकृद्धोमः। प्रधानयागात्पूर्वमिज्यते यैरिति व्युत्पत्त्यैते सर्वे मन्त्राः प्रयाजाः। |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७४७ | १६ | प्रकृतौ ( दर्शपौर्णमासयोः ) पञ्च प्रयाजाः । तत्र यजमानो यदा गोत्रेण वासिष्ठः शौनक आत्रेयो वाध्र्यश्वः क्षत्रियो वा तदा द्वितीयः प्रयाज आदौ नराशंसपदयुक्तः । अन्येषु गोत्रेषु तनूनपात्पदयुक्तः । शौनकगोत्राणां यजमानानां चातुर्मास्यगतमुख्येष्टिषु नव प्रयाजाः । पाशुके एकादश । ते सर्वे वासिष्ठात्रेयवाध्र्यश्वतत्तदृषिदृष्टसूक्तेभ्यो गृह्यन्ते । सर्वत्र द्वितीया ऋचो नराशंसपदघटिताः । एते चतुर्विधाः प्रयाजा नाराशंसवन्त इत्युच्यन्ते । मेधातिथिदृष्टसूक्ते द्वादश ऋचः । तत्र द्वितीयतृतीये ऋचौ क्रमेण तनूनपान्नराशंसवन्त्यौ । ताः सर्वविधयजमानार्थाः । तथैव दीर्घतमसा दृष्टे सूक्ते । एते प्रयाजा उभयवन्तः । ऋष्यन्तरदृष्टप्रयाजास्तनूनपात्वन्तः । तत्र द्वितीयः प्रयाजस्तनूनपात्पदयुक्तः । आवापः = हविर्धानान्मुष्टचां व्रीहिग्रहणम् । इमा व्रीहिमुष्टयो विशिष्टदेवतार्थं गृह्यन्ते । आवापिकाः = आवापोद्धारयोग्याः = प्रधानदेवताः ( आश्व० श्रौ० १।३ ) । आवापिकानि = विशिष्टदेवतायोग्यानि = विशिष्टानि । न साधारणानि । प्रधानदेवतावाहने ' देवानाज्यपानावह० ' इति मन्त्रं पठेत् । आज्यपाः = प्रयाजानूयाजदेवताः । ' अग्निं होत्रायावह । स्वं महिमानमावह ' इति स्विष्टकृतमावाहयेत् ( आश्व० श्रौ० १ । ३ ) । प्रभृतिपदेनानूयाजाः पत्नीसंयाजाश्च गृह्यन्ते ( आश्व० श्रौ० १ । १०–११ ) । |
| | १७ | ' अग्निरिति शाकपूणिः ' इदं मूले नास्ति ( ७४६ । २० ) । ' चेति वाग्निरिति शाकपूणिरिळ० ' एवं मूलपाठः स्यात् । |
| ७४८ | १ | आश्व० श्रौ० १ । ५ इत्यत्र ' इळः ' इति पाठः । |
| | ३ | तत्क्रियायुक्तः = इन्धनाक्रियायुक्तः । |
| | १४ | ' ईळितव्यो वन्दितव्यः ( ६४८ । ८ ) । यह्व इति महतो नामधेयं यातश्च हूतश्च भवति ' ( ' –१० ) न व्याख्यातम् । |
| | २० | अध्येषितः = प्रार्थितो वृतो वा । |
| | २२ | ' ईड्यः अग्ने ' इत्यत्र न काऽप्यन्या देवता वर्तते । अग्निः |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७४८ | २२ | स्वरूपेणैव वर्तते । नान्यै रूपैरग्निरत्र 'ईड्य' इति विशेषणाव्यवहितः । अत्र 'ईड्यः' ( ७४८ । ६ ) इति पदं न 'इडः' इति । तथा = अव्यवधानेन । ओषध्यादिरूपं विना । |
| | २३ | ऐष्टिके = इष्टिसंबन्धिनि । हौत्रे = होत्रा पठितव्ये मन्त्रे । अग्नेरव्यवधानेन श्रुतत्वात् । |
| ७४९ | ९ | 'इडः' इति पदादग्निरोषधीरूपेण व्यवहितः ( ७४८।२० )। |
| | २२ | प्राचीनं = प्राच्यां दिशि गतम् । प्रागग्रं वा जातम् । अश्वितं = गतम् । |
| | २९ | 'पुनरेव' अत्र 'पुनरेवम्' इति मूलपाठः स्यात् । 'एव' इत्यस्य न कोऽप्यर्थः । प्रादिशा = विधिवाक्येन । तद्विधिवाक्यम् ।'प्रागुदग्वाभिप्रव्रज्य बर्हिरच्छैति' ( मानवश्रौ० १ । १ । १ । २८ ) । बर्हिः अच्छ किमर्थमेति । लवनार्थम् । एवं प्राचि उदीचि वा जातं बर्हिः । प्रागग्रं वा । |
| ७५० | १ | 'प्रागुदग्वा बर्हिश्छिनत्ति' नैवं विधिवाक्यमुपलब्धं मया । 'तत्सामर्थ्यात्' इति शब्दात् 'बर्हिश्छिनत्ति' इति प्रामादिकम् । 'बर्हिरच्छैति' अयं शुद्धः पाठः । प्रागुदग्वा बर्हिरच्छ गच्छेत् । किमर्थम् । लवनार्थम् । |
| | २ | प्रदिशा = मन्त्रेण । स मन्त्रः 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां बर्हिर्देवसदनं दामि' ( मैत्रा० सं० १ । १ । २ ॥ ४ । १ । २। मान० श्रौ० १ । १ । १ । ३४ ) । अयं मन्त्रो लवनार्थः । प्रेयमगाद्धिषणा बहिरच्छेति विद्या वै धिषणा विद्ययैवैनदच्छैति' ( मैत्रा० सं० ४ । १ । २ ) । अयं बर्हिः प्रति गमनाय मन्त्रः । |
| | ३–४ | 'उरु प्रथस्वोर्णम्रदमिति प्रथयत्येवैनत्' ( मैत्रा० सं० ३ ।१ । १३ )।'विप्रथस्व । इति प्रथयत्येवैनत्' ( मैत्रा० सं० ४। १ १४ ) । |
| | ९ | उरु प्रथस्वेति वेदिं स्तृणाति ( मा० श्रौ० १ । २ । ६ । ७ ) । 'वृजी वर्जने' ( धा० २ । १९ ॥ ७ । २४ ॥ १० । २७९ )।'वृजी छेदने प्रस्तरणे वा' धातुपाठे न विद्यते । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७९० | ११ | सगुणीकृतात् = युक्तात् । देवानां = हविर्दातॄणां यजमानानाम् । अभीप्सितेन = इष्टेन वस्तुना । |
| | १३–१४ | ' आहुतिद्वारेण वृष्टिर्भवति तत ओषधिप्ररोहस्ततसुखम् ' इदं कस्यचिद्ब्राह्मणवाक्यस्य सार इव भाति । |
| | १५ | ' अग्निरिति शाकपूणिः ' इति यास्को न ब्रवीति । ' इदमपि अपिना किं द्योत्यते । पूर्वस्मिन् खण्डे इळः = अग्निः ओषधयो वा । यदा ओषधयस्तदौषधयो यज्ञाङ्गम् । बर्हिरपि यज्ञाङ्गम् । |
| | १६ | तद्द्वारेण = बर्हिर्द्वारेण । बर्हिः पृथिव्यां स्तीर्यते तदाऽग्निः स्तूयते । एवं बर्हिर्व्यवधानम् । |
| | १९ | बर्हिः = ' बृहि वृद्धौ ' ( धा० १ । ७३७ ) । |
| | २१ | ' प्राञ्चमुद्धरन्ति ' ( मैत्रा० सं० १ । ६ । ९ ) । |
| | २२ | अनाग्निका = अ + नग्निका । |
| | २४ | आज्यभागौ प्रक्षिप्येते । घृतं च हूयते । |
| ७९१ | ३ | ' षोऽन्तकर्मणि ' ( धा० ४ । ४१ ) । अवस्यन्ति = व्यवस्यन्ति = तत्प्राप्तुं प्रयतन्ते । अन्ते प्राप्नुवन्ति वा । |
| | १९ | व्यच् = वि + अञ्च् । व्यचस्वतीः = विविधेनाञ्चनेन तद्वत्यो युक्ताः । |
| | २१ | विप्रियन्ता = विविधमाश्रिता भवन्तु ( च. ) । ' विप्रियन्तां ' ' पृ पूरणे ' इत्यस्य यकि रूपम् । विप्रियन्तां = व्यापृता भवन्तु । |
| | २३ | ' वरतममङ्गमृरू ' ( १३ ) ' यज्ञे गृहद्वार इति कात्थक्यः ' ( १४–१५ ) न व्याख्यातम् । |
| ७९२ | ३ | ' विश्वं यज्ञे उपकरणमाभिरेति = इत्यन्वयः । उपकशरणम् ( च. पाठः २९ ) = उपकरणं + शरणम् । सर्वं यज्ञशरणमाभिरेति । यज्ञशरणं = यज्ञ एव शरणं गृहम् । |
| | १८ | अवश्यायते ( घनी भवति ) इत्यवश्यायः । ' श्यैङ्गतौ ' (धा० १ । ९८८) । प्रुष्वा बिन्दवः । अवश्यायः = तुषारः । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७५३ | १२ | ' यजते ' स्त्रियां द्विवचनम् । न साक्षाद्यज्ञं कुर्वाणे । किंतु यजमानद्वारेण । |
| | १३ | ' प्रशस्ये ' मूले नास्ति । ' उपाके ' ( उप + अञ्च् इत्यस्मात् ) = समीपे । |
| | १३–१४ | योषणे = स्त्रियौ । |
| | १६ | ' आ ' ऋचि प्रथमं पदम् । ततस्तदुत्कृष्य ' सदताम् ' इत्यनेन च योज्यम् । दुर्गमते ' नियोनौ ' इत्येकं पदम् । अथवा । ' नि ' स्वतन्त्रमेव पदं स्यात् । ' आसीदताम् ' इति यदा क्रियापदं तदा ' नि ' इत्येकं पदम् । यदा ' न्यासीदतां ' तदा ' नियोनौ ' इति । प्रथमपक्षे ' निः ' पादपूरणः । ' नियोनौ ' इत्यत्र ' निः ' किमर्थः । पादपूरणाय । वस्तुतः ' नि ' अयमुपसर्गः ' सदताम् ' इत्यस्माद्व्यवाहितः पश्चात्प्रयुक्तः ( छन्दसि परेऽपि । व्यवहिताश्च । १ । ४ । ८१ । ८२ ) । ' आसीदतामिति वा न्यासीदतामिति वा ' अत्र द्विविधयोः क्रियापदयोः किं प्रयोजनम् । दुर्गस्वीकृतपाठे ' वा ' पदे नास्तामिति भाति । ' निशब्दश्चोत्तरपादपूरणः ' इदं प्रक्षिप्तं स्यात् । |
| | १७ | ' नियोनौ ' इत्यत्र ' नि ' उत्तरप( पा )दस्थम् । तथापि ' आसदताम् ' इत्यनेन युज्यते । |
| | १८ | यदा ' आसीदताम् ' इति क्रियापदं तदा ' निः ' पादपूरण एव । ' उत्तरपादपूरणः ' इत्यत्र ' उत्तरः पादपूरणः ' इति पाठ आवश्यकः । अथवा । उत्तरस्य द्वितीयस्य पादस्य पूरण इत्यर्थः स्यात् । |
| ७५४ | १ | ' अग्निरिति शाकपूणिः ' इति किमर्थं न ब्रवीति यास्कः । ' अग्निः ' इत्येकवचनम् । ' उषासानक्ता ' इति द्विवचनम् । एतस्मात्कारणात् । अग्न्यर्थे द्विवचनं न युक्तम् । |
| | २ | उषाः ' उच्छी विवासे ' ( धा० ६ । १९ ) इत्यस्मात् । अग्नेर्दीप्तिः ' उषाः ' इत्युच्यते । किमिति । सा तमो विवासयति । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७९४ | २-३ | आहुतिर्नक्ता यस्मात्साऽऽज्येनाक्ता । ' आहुतिरग्निमानक्त्याज्येन ' ( २९ ) इति पाठान्तरम् । ' आहुतिं नक्ताज्येन० अग्नि ' इति ट. पाठः । म घ.पुस्तके ' आहुति अग्नि नक्ताज्येन अग्निं ' एवं लिखितः । इदं केवलं लेखकमौर्ख्यम् । नक्ता = अक्ता । अत्र ' न् ' व्यर्थः । ' आहुतिरनक्त्याज्येन ' इति पाठः स्यात् । |
| | ६ | ' शुक्रपेशमम् ' इति घ. झ. ट. पाठः । ' शुक्रपेशम् ' इति च. पाठः ( २८ ) । |
| | ९ | ' शुक्रं शोचतेर्ज्वलतिकर्मणः ' न व्याख्यातम् (७९३ । ६) । ' पिश अवयवे ' ( धा० ६ । १५६ ) दीपनायामपि । विपिशितं = विशेषेण दीप्तम् । अथवा । विविधेष्ववयवेषु विभक्तम् । |
| | १० | यावानाश्रयस्तावति भवति रूपम् । रूपं सर्वाण्यङ्गानि व्याप्नोति । विपिशितं = विनिहितं शरीरे । |
| ७९९ | ३ | मनुष्यहोतारावपेक्ष्य दैव्यौ होतारौ । होतृमैत्रावरुणौ ; विशेषणम् ( ग. च. ज. पाठः २२-२४ ) । 'होतृमैत्रावरुणौ' अयं 'मनुष्यहोतारौ' इत्यस्यार्थः मूले प्रान्तभागे लिखित. केनाप्यज्ञलेखकेनान्तर्भावितः स्यात् । तथा 'विशेषणम्' इति 'दैव्यौ' इत्यस्य व्याकरणभाषया निरूपणं प्रान्तभागे लिखितं तथैवान्तर्भूतं स्यात् । ' मनुष्यहोतारावपेक्ष्य दैव्यौ होतारौ ' इत्येव पाठो मौलिकः सुवचश्च । 'आनङ् ऋतो द्वंद्वे ' (पा० ६ । ३ । २९ ) इत्यनेन ' होतृमैत्रावरुणौ ' अशुद्धम् । ' होतापोतारौ ' इतिवत् ' होतामैत्रावरुणौ ' । तेन ' होतृमैत्रावरुणौ विशेषणम् ' इदं प्रक्षिप्तम् । |
| | ६-७ | मनुष्यस्य ( मनुष्य ) प्रचोदयन्तौ । ' मनुष्यस्य मनुष्यस्य ' इयं द्विरुक्तिर्न व्याख्याता ( ७९४ । २० ) । ' पूर्वस्याम् ' (२०-२१) । इत्यस्य स्थाने ' प्राच्याम् ' इति दुर्गस्वीकृतपाठः प्राय आसीत् । |
| | १३ | अनुग्रहस्य कारू कर्तारौ । स्वाधिकारे यानि कर्माणि तेष्वनु- |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७९९ | १३ | ग्रहेण संनिधानं तयोः । तेनाऽऽहृतौ मनुष्यैः । पूर्वं कारू कर्तारावृत्विजौ (७–८) । अत्र कर्तारावनुग्रहस्य । |
| | १४–१५ | 'गार्हपत्येऽग्निप्रणयनान्यादधाति' (मान० श्रौ० १ । ५ । ३ । १९) । 'अग्निमुद्यच्छति' ( मान० श्रौ० १ । ५ । ४ । ३ ) । "अग्निप्रणयनान्यादाय 'प्राचीमनु प्रदिशं प्रेहि विद्वान्' इत्यध्वप्रथमाः प्राञ्चोऽभिप्रव्रजन्ति" (मान० श्रौ० १ । ५ । ४ । ७) इदं प्रणयनम् । |
| | १५–१६ | 'उद्धराहवनीयमित्युक्त्वा गार्हपत्यादाहवनीयं ज्वलन्तमपराह्णे व्युच्छन्त्यां प्रातः' ( मान० श्रौ० १ । ६ । १ । १ ) । इदमुद्धरणम् । 'प्राञ्चमुद्धरन्ति' इदं विधिवाक्यम् । तत्कर्तव्यं प्रदिशति । |
| ७९६ | १ | 'देवीः' इत्यस्य 'देव्यः' इति प्रथमाविभक्त्या विपरिणामः । |
| | १६ | अनु पश्चात्प्रधानयागानन्तरमिज्यते यैरिति व्युत्पत्त्या होत्रा पठ्यमाना याज्यामन्त्रा अनुयाजा इत्युच्यन्ते । 'इडया वसुमत्या' अत्र 'वसुमत्या' 'इडया' इत्यस्य विशेषणम् । तेनेडा पार्थिवाऽनुयाजशब्दसामर्थ्यात् । |
| ७९७ | ४–६ | त्वष्टा = तु + अष्टा । तु = तूर्णम् । अष्टाऽश्नोतेः । 'त्वष्टा तूर्णमश्नुते त्विषेर्वा वृद्ध्यर्थस्य' इति दुर्गस्वीकृतपाठः स्यात् । |
| | ६ | 'त्विष दीप्तौ' ( धा० १ । १०२६ ) । त्वष्टा = त्विष्टा । मूले 'त्विषेर्वास्याद्दीप्तिकर्मणः' । वृद्ध्यर्थो दुर्गेण कुत उपलब्धः । |
| | ७ | 'तक्षतेः(२९)त्वक्षतेः' मध्ये दुर्गेण कः पाठः स्वीकृत इति न ज्ञायते । त्वक्षातिर्धातुः त्वष्टृशब्दस्य संनिहितः । |
| | ८ | 'करोति' इति त्वक्षतेः सामान्यार्थः । 'तक्षू त्वक्षू तनूकरणे' (धा० १ । ६९६–९७) । 'इति नैरुक्ताः' ( ७९६ । ८) 'स्याद्दीप्तिकर्मणः' (९) 'स्यात्करोतिकर्मणः' (९) न व्याख्यातम् । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७९८ | १ | ' इषितो यजीयान् ' ( ७९७ । १४ ) न व्याख्यातम् । |
| | ७ | व्यपदेशः = भेदेन निर्देशः । |
| | ९–१० | स यष्टा मनुष्यहोत्रा संबोध्यते । |
| | १२ | वर्धकिः = तक्षा । |
| | १९ | ' माध्यमकः ' इति छ. त. द. (७९७ । २७) ग. च. ज. ( ७९८ । २९–२६ ) पाठः । |
| | २१ | 'अग्ने महाँ असि० आवह देवान् । अग्निमग्न आवह । अग्निमावह । अग्निषोमावावह । इन्द्राग्नी आवह । अग्निं होत्रायावह । स्वं महिमानमावह । सुयजा च यज जातवेदः ' ( तै० ब्रा० ३ । ५ । ४ ॥ आश्व० श्रौ० १ । ३ ) । |
| | २२–२३ | ' व्यपदेशे सति ' इत्यस्यानन्तरम् ' अपि 'शब्दोऽध्याहार्यः । |
| | २३ | योऽदिन्द्रायोच्छुस्मनेन ( च. पाठ. ३० ) । ' दिन्द्रायोच्छुष्म ' एतान्यक्षराणि ' यो दशाति '( २८ ) इत्यत्र लिखितव्यानि । किंतु लेखकप्रमादात् ' सोऽनेन ' इत्यस्य मध्येऽन्तर्भावितानि । |
| | २४ | ' तमद्य होतर् यज ' ( ७९९ । ५ ) अत्र अग्निर्होतरित्याहूयते ( = संबोध्यते ) ' यज ' इति चोच्यते । |
| ७९९ | १ | ' स्विष्टकृत् ' नामाग्निर्यागश्च । ' हे अग्ने स्वं महिमानमावह' ( ७९८ । २४ ) = आत्मानमावह । इदं विशेषलिङ्गम् । स्वस्मात्स्वमहिमा पृथक्क्रियते । विधिवशात् = यागार्थम् । |
| | २ | स्वमात्मानं यागार्थं होतरित्याहूय संस्मरति । तैस्तैर्गुणैरात्मानं द्विधा त्रिधाऽनेकधा वा विभज्य यजति । ' आत्मना ' ( १ ) पदं व्यर्थम् । अथवा । आत्मना = स्वयमेव । यजनादन्यद्वा कार्यं संपादयति । |
| | ३ | अग्नेः कर्मात्मा यज्ञसंपादनायाऽऽवश्य आत्मा । यत्तक्षणगुणमधिष्ठितो यदधिष्ठितः । परः = भिन्नः । |
| | ४ | पाकेन = पक्त्वा परिणामेन । तं कर्मात्मानम् । तमधिकृत्य = त विषयीकृत्य । ' त्वष्टा रूपाणि हि प्रभुः पशून्विश्वान्त्समानजे । तेषां नः स्फातिमा यज ' (ऋ० सं० १ । १८८ । ९ ) । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७५९ | ४ | ' त्वष्टा रूपाणि पिंशतु ' ( ऋ० सं० १०।१८४।१ )। ' रूपैरपिंशद्भुवनानि विश्वा ' ( ऋ० सं० १०।११०।९) । |
| | ५ | तत् = तस्मात् । |
| | ६ | देवशिल्पी = देववर्धकिः । मनुष्यवर्धकेर्गुणस्तक्षणमग्नौ वर्तते विशेषरूपेण । |
| | ७ | असावपि = अग्निरपि । |
| | २० | ' अव्ययात्त्यप् '( पा० ४ । २ । १०४ ) । आविः जातः = आविः + त्यः = आविष्ट्यः । ' त्यः ' इत्यस्य दुर्गमतेऽर्थस्तानिता । तत्त्यः ( २२ ) = तत् आविः + त्यः भवो जातो वा । |
| ७६० | ६ | ' रात्राह्नाहाः पुंसि ' ( पा० २ । ४ । २९ ) इत्यनेन ' अहोरात्रः ' । कथम् ' अहोरात्रे ' । द्विवचने वक्तव्ये ' अहोरात्रौ ' इति रूपं योग्यम् । |
| | ८ | ' आवामन्यतरम् ' ' आवामन्यतमम् ' इति पाठान्तरे ( २४ ) । ' अन्यतरम् ' इति शुद्धः पाठः । अहश्च रात्रिश्चेति द्वे एव । तयोरन्यतरो न त्वन्यतमः । |
| | १४ | ' चारु चरतेर्जिह्मं जिहीतेरूर्ध्वमुच्छ्रितो भवति ' ( ७५९ । १३ ) ' प्रत्यक्ते ' ( १६ ) न व्याख्यातम् । |
| ७६१ | ९ | उपाश्लिष्य = मृदुहस्तेन पशूनामङ्गानि स्पृष्ट्वा । क. ख. वर्जम् ' उपावाश्लिषय ' ( २५ ) इति प्रामादिकः पाठः । स च च. पुस्तके ' उपाश्लिष्य ' इति शुद्धी कृतः । |
| | १३ | अनाश्रितविशेषः = अत्र विशिष्टं देवतावाचि लिङ्गं नास्ति । |
| | १५ | अस्य पशोरात्मानम् । आत्मना = स्वकृतेन केनचित्कर्मणा । |
| ७६२ | ४ | यूपाञ्जनीया = यूपाञ्जनसंबन्धिनी । यूपाञ्जनीया ऋक् ' अञ्जन्ति त्वा० ' इति । दुर्गस्वीकृतपाठे ' अग्निरिति शाकपूणिः ' ( ७६१ । ६ ) नासीदिति भाति । स एव पाठो योग्यो |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७६२ | ४ | यस्मात् ' अञ्जन्ति- ' इयमृग्यूपपरा । अष्टादशखण्डे च ' अग्निरिति शाकपूणिः ' ( १२ ) इति वर्तते । |
| | ९ | ' वनस्पते ' इत्यभिधानेन । ( होता ) ' प्रेषितो यूपाया-ञ्ज्यमानायाञ्जन्ति त्वामध्वरे देवयन्त इत्युत्तमेन वचनेनार्धर्चे आरमेत् ' ( आश्व० श्रौ० ३ । १ ॥ ऐ० ब्रा० ६ । २ )। |
| | १४ | ' निविन्पुरोरुचः प्रैषा विश्वामित्रस्य सर्वशः ' इति प्रवादः । |
| ७६३ | २ | प्रधानक्रिया = पशुविशसनम् । तस्य यूपः पूर्वमङ्गम् । पूर्वाङ्गभावयित्वात् ( च. पाठः २३ ) = पूर्वाङ्गभावयितत्वात् + पूर्वाङ्ग भावयित्वा । भावयित्वा = संपाद्य । तद्द्वारेण = पूर्वाङ्गद्वारेण । 'प्रधानक्रिया पूर्वाङ्गभावयितत्वात्' अत्र ' भावयित ' इतीदं किंरूपम् । ' भावितम् ' इति शुद्धं रूपम् । ' भावयित ' प्रामादिकम् । |
| | ५, ७ | अस्य वाक्यस्य यूपपरोऽर्थः । किंत्वस्य परा पुरोरुगग्निपरैव । अत्र ' इहापि ' अस्थाने लिखितमिति भाति । " ' अग्निरिति शाकपूणिः ' इहापि " एवं मूलवृत्तिः स्यात् । यथा ' उपावसृज ' इत्यस्यामृचि वनस्पतिशब्देनाग्निरेवाभिहितस्तथेहापि । कदाचित् ' उपावसृज ' इयमृग्यूपपरा भवेत । ' अञ्जन्ति ' इयमृगग्निपरैव । यथा परा निःसंशयमग्निपरा । शाकपूणिमतेन ' उपावसृज ' इयमग्निपरैव । इहापि ' अञ्जन्ति ' इत्यस्यामप्यग्निपरत्वमेव । |
| | ६ | 'उपावसृज' इत्यस्यामृचि वनस्पपिशब्दस्यार्थो नाऽऽविष्कृतः । तेन तस्य मन्त्रस्य यूपपरोऽर्थो भवतु । किंतु नायं शाकपूणेरभिप्रायः । |
| | ७ | ' त ( यज्ञं ) पुरोरुग्भिः प्रारोचयन् । यत्पुरोरुग्भिः प्रारोचयस्तत्पुरोरुचां पुरोरुक्त्वम् ' ( ऐ० ब्रा० ११ । ९ ) । वायुरग्रेगा इति कुन्तापाध्याये पठिताः सप्त पुरोरुचः । नेयं पुरोरुक् । पाठान्तरे (७६२।२०) ' अञ्जन्ति ' (७) पुरोरुगुच्यते । 'देवेभ्यः' इयं च । पुरोरुक् =पुरोनुवाक्या । यजतौ = यागे । पुरोरुग्यजतौ = पुरोनुवाक्यासु । होता यक्षदित्यादिषु । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७६३ | ७ | ' अञ्जन्ति त्वा० ' इयं पुरोरुक् पुरोनुवाक्या । तथा ' देवेभ्यो वनस्पते ' इयं च । 'अञ्जन्ति' इत्यस्य मन्त्रस्य परा पुरोरुक् । ऋगेव पुरोरुक् । |
| | ७–८ | अस्य मन्त्रस्य परा ऋक् पुरोरुग्यजतौ संनिपतति हविर्वहनालिङ्ग-लिङ्गिता च । तेन सा वनस्पतिशब्देनाग्निमेवाभिधत्ते । |
| | १८ | पर्णैर्ज्वलित । ' हिरण्यपर्ण ऋतपर्णापि वोपमार्थे स्याद्धिरण्यवर्णपर्णेति ' ( १३–१४ ) । ' पुराणस्ते सोऽर्थो यं ते प्रब्रूमः ' ( १४–१५ ) ' वा ' ( १६ ) न व्याख्यातम् । |
| | २१ | सव्येन पितृणां कव्यवहनम् । तद्विपरीतेन = प्रदक्षिणम् । |
| | २१–२२ | रशनया नियूय = सुनिपुणं निबध्य । |
| | २२ | अनवेक्षितं = अवेक्षणाभावात्प्रमादेन । |
| ७६४ | ३ | रजः = उदकम् । |
| | ४ | प्रपिष्टं प्रहतं चूर्णीकृतं तमो यत्र । अथवा । प्रपिष्टाः=सुरूपाः । |
| | ६–७ | ' प्रदिवस्ते अर्थं विद्मः ' इति दुर्गस्वीकृतपाठो भवेत् । |
| | ६–८ | ' अयं यो होता ' ( ऋ० सं० १० । ५२ । ३ ) अस्या ऋचः ' देवा दधिरे हव्यवाहम् ' इत्यन्तिमो भागः । एतादृशमन्त्रेभ्यस्ते हविर्वहनरूपमर्थं विद्मः । |
| | १० | ' तस्यैषा ' ( ७६३ । १६ ) इत्यस्य स्थाने ' अथैषा ' इति दुर्गस्वीकृतपाठो भवेत् । |
| | ११ | वनस्पतिशब्दस्याग्नौ प्रायेण वृत्तिरित्युपप्रदर्शनार्थम् । |
| ७६५ | ५ | ' यज्ञे ' ( ७६४ । १६ ) ' प्रब्रूहि ' ( १६ ) न व्याख्यातम् । |
| | १६–१७ | वनस्पतिशब्देन = यूपाभिधानेन । यूपाभिधानेन वनस्पतिर्वनस्पतिशब्देन चाग्निरभिधेय इत्यन्वयः । |
| | १७ | ' यूपाभिधानेन वनस्पतिः ' इदमनवश्यं केवलं निरूपणम् । |
| | १८ | अधियज्ञे भिन्नोऽर्थः । अधिदैवते भिन्नश्च । |

पत्रं पङ्क्तिः

७६५ १८–१९ ' अञ्जन्ति त्वा ' अस्य मन्त्रस्याग्निपरत्वम् ।

१९ यज्ञाङ्गम् = यूपः । अधियज्ञे = यज्ञे । अयं मन्त्रो यज्ञाङ्गमभिवदति ।

२० अस्या ऋचः । ' अस्य मन्त्रस्यास्या ऋचः ' अत्र बहुलो भाषादोषः । लेखकप्रमादेन बहुलो विवरणभागः प्रान्तलिखितो दुर्गवृत्तावन्तर्भावितः स्यात् । ' मन्त्रार्थे ' इदमनवश्यम् । ' सामर्थ्यम् ' इत्यस्यानन्तरं विरामचिह्नं भवेत । मन्त्रार्थ इति ( एवम् ) । कथम् ।

२४ यस्मात् = येनाञ्जनेन ।

७६६ ३ काथक्यपक्षेऽर्थयोजनायाम् ' ऋतपर्ण ' ' प्रब्रूहि ' पठ्यते । किंत्वृतपर्णशब्दस्यार्थो न दीयते । ' हृतपर्ण ' इति ग. ज. पाठः ( २० ) । 'ऋ' स्थाने ' हृ ' प्रमादेन पतितः स्यात् ।

१६ उत्तमः प्रयाजः पञ्चमः । ' पञ्चमे स्वाहामुं स्वाहामुमिति यथावाहितमनुद्रुत्य देवता यथाचोदितमनावाहिताः स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्त्विति ' ( आश्व० श्रौ० १ । ५ ) । यथावाहितमग्निम् । अग्निरावाहितः । इतरेऽनावाहिता देवाः ।

१८ शौनकस्य मतेनाऽऽग्नेयः । न याज्ञिकानां मतेन ।

७६७ १ अग्नेः स्तुतिमनुद्रुत्य शीघ्रमुच्चार्य ।

२ याभ्य आहुतीर्दीयते ताः संप्रदानम् । ' कर्मणा यमभिप्रैति स संप्रदानम् ' ( पा० १ । ४ । ३२ ।

३ अत्र देवताः संप्रदानं नाग्निः ।

८–९ अध्वर्युणा स्वाहाकृतिभ्यः प्रेष्येति प्रेषितो मैत्रावरुणो होतारं प्रेष्यति । होता यक्षदग्निं स्वाहाज्यस्य स्वाहा मेदसः स्वाहा स्तोकानां स्वाहा स्वाहाकृतीनां स्वाहा हव्यसूक्तीनां स्वाहा देवा आज्यपा अग्न आज्यस्य व्यन्तु होतर्यजेति ( प्रैषसूक्ते १३ ) । अयमेकादशस्य प्रयाजस्य प्रैषः स्वाहाकृतिप्रैष इत्युच्यते ।

पत्रं पङ्क्तिः

७६७ ९ प्रैषेण संस्कारः प्रैषसंस्कारः ।

१४–१५ 'प्रजापतिर्यदहोष्यत्तं स्वा वागभ्यवदज्जुहुधीति सोऽजुहोत् । स्वाहा । इति स्वा ह्येनं वागभ्यवदत्तत्स्वाहाकारस्य जन्म' ( मैत्रा० सं० १ । ८ । १ )।

१९ अनेन स्वाहाशब्देन ।

२० सुष्ठु = शोभनम् । आपाद्य = कृत्वा ।

७६८ १ 'हविरदन्तु देवा यजन्तीति' ( पाठान्तरम् २२ ) । अत्र 'यजन्ति' इत्यस्य केनान्वयः ।

६ प्राधान्येनाग्रतोगामी ।

८ गार्हपत्यादुत्तरवेदिमुत्तरवेद्यां वर्तमानमाहवनीयं प्रति प्रणीतोऽग्निः । उत्तरा वेदिर्यस्य स उत्तरवेदिक आहवनीयोऽग्निः ।

११ प्रजाया एकादशैवेति प्रदर्शनार्थम् ।

१२–१३ ननु द्वादश आप्रीदेवता यासामनुकीर्तनं = या अनुक्रान्ताः ।

१३–१४ 'सत्यम् । अनुक्रान्तानां द्वादश यासामनुकीर्तनम्' ( च० पाठः २५–२६ ) ।

१५ प्रयाजास्तत्तद्देवतासंस्कारपराः ।

१६ 'दश वै पशोर्देवता दशास्मिन्प्राणा यद्दश प्रयाजा या एवास्मिन्देवतास्ता एतद्यजथ य एष एकादशो यस्या एव देवतायै पशुरालभ्यते तामेवदद्यजथ' ( मैत्रा० सं० ३ । ९ । ८ ) 'एकादश प्रयाजान्यजति' ( तै० सं० ६ । ३ । ७ ) । यजतौ = यागे ।

७६९ १ देवताध्यानं यज्ञाङ्गमिति श्रूयते । 'यस्यै देवतायै हविर्गृहीतं स्यात्ता ध्यायेद्वषट्करिष्यन्' ( ऐ० ब्रा० ११ । ८ )।

२ एतद्विषयं = देवताविषयम् । तत्प्रकरणम् ।

५–६ 'आ श्रावय' इत्यध्वर्युर्ब्रवीति । एतदाश्रावणम् । ( आश्रुतादिः ) । 'अस्तु श्रौषट्' इत्याग्निधः । एतत्प्रत्याश्रावणम् । तदनन्तरं प्रयाजयाज्या । ततः प्रयाजनाम्न्य आहुतयः ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७६९ | ५-६ | अन्ते यजमानोपस्थानान्तः क्रियाकलापः = यजमानकृतमनुमन्त्रणम् ( सत्या० श्रौ० ६ । ८ ) । ' प्रजाया इति आश्रुतादि० प्रसिद्धत्वात् ' इदमसंबद्धं प्रान्तभागे लिखितमिहान्तर्भावितमिव भाति । |
| | ६ | ओ श्रावयेत्यादिः प्रीणात्वित्यन्तः क्रियाकलापः ( च. ) । |
| | ७ | किमिति ' प्रयाजेषु हूयमानेषु ' । ' प्रयाजा हूयन्ते ' इति किमिति न । |
| | ८ | आज्यस्य व्यन्तु ३ वौं ३ षट् । अथवा । आज्यस्य वेतु ३ वौं ३ षट् । एवं प्रयाजानामन्ते वषट्कारः ( आश्व० श्रौ० १ । ५ ) । प्रयाजप्रवादाः = प्रयाजसंबन्धिनो वादाः । ' आप्रीणा वषट्कारसंबन्धात्० ' = सर्वासामाप्रीणामन्ते वषट्कारो वर्तते । स एवैकस्तासां विशेषः । अन्यत्सर्वं स्वभावतोऽविशिष्टम् । आप्रीवाक्येषु नास्ति किंचिद्विशिष्टं पदं येन देवतानिश्चयः स्यात् । |
| | ९ | ' विशेषभावः ' ( पाठान्तर २५-२६ ) = विशेषः भेदः । अन्यो भेदो न निर्णायकः । |
| | १३ | एतस्मिन्नर्थे = अस्मिः प्रयाजानुयाजसंबन्धे । |
| | १४ | ' ये द्वे ऋचौ दृष्टे तयोर्मध्ये एषा ' इति वाक्यसमाप्तिरवश्या । |
| | १६ | ' त्रयो वै पूर्वेऽग्नयः प्राधन्वन् हव्यं देवेभ्यो वहन्तो वषट्कारः प्रावृश्चदथ योऽयमिदानीं स भीषायाद्रवदीदृगु स आरिष्यतीति तं देवा अपाशामुरुप ना आवर्तस्वेति सोऽब्रवीद्भागो मेऽस्त्विवति वृणीष्वेत्यब्रुवन्त्सोऽब्रवीत्त्रयो वै मे पूर्वे भ्रातरः प्राधन्वन्हव्यं देवेभ्यो वहन्तो वषट्कारः प्रावृश्चत्तेषा भा ोऽस्त्विवति वृणीष्वेत्यब्रुवन्त्सोऽब्रवीद्यदेव किंचाहुतं बहिष्परिधि स्कन्देत्तदेव तेषां भागधेयमसदिति' ( मैत्रा० सं० ३ । ८ । ६ ॥ शत० ब्रा० १ । ३ । ६ । १३-१६ ) । |
| | | ' वषट्कारेण वृक्णेषु भ्रातृषु '—' अपचक्राम देवेभ्यः सौचीकोऽग्निरिति श्रुतिः । स ऋतुष्वप्सु वनस्पतिषु निलीनोऽभवत् । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७६९ | १६ | अग्न्यभावे असुराः प्रादुर्बभूवुः । असुरान्हत्वा देवा अग्निमन्वैक्षन्त । हविर्वहेति ते तमूचुः । स वरानवृणोत् । आयुरस्तु च मे दीर्घं हवींषि विविधानि च । अरिष्टिः पूर्वजानां च भ्रातॄणामध्वरेऽध्वरे ॥ प्रयाजाश्चानुयाजाश्च घृतं सोमे च यः पशुः । मद्देवत्यानि वै सन्तु यज्ञो मद्देवतोऽस्तु च ' ॥ द्वे ऋचौ ( ऋ० मं० १० । ५१ । ८–९ ॥ बृहद्दे० ७ । ६१–७४ ) । |
| ७७० | १४–१५ | सर्वस्य हविष ऊर्जस्वन्तं भागमवधार्यायं भागो रसवानिति निश्चित्य दत्त । |
| | १६–१७ | 'अग्निं सोममित्याज्यभागौ' ( आ० श्रौ० १ । ३ ) । 'त्वमग्ने सप्रथा असि ' इत्याग्नेयाज्यभागस्य पुरोनुवाक्या ( ऐ० ब्रा० १ । ४ ) । |
| | २० | वषट्कारेण वज्रभूतेन प्रवृक्णा हिमिताश्छिन्नाः । |
| | २१ | तत्र पूर्वे इत्यादि ( ७६९ । १६ टिप्पणी ) । |
| ७७१ | ४–५ | प्रकृष्टा मुख्या दिशः प्रदिशः । |
| | ९ | स्थितिः = निश्चयः । |
| | १० | आग्नेयत्वं मन्यते ( पाठान्तरे २३ ) = आचार्यः । ब्राह्मणमन्त्रः ( पाठान्तरे २४ ) = ब्राह्मणसहितो मन्त्रः । |
| | १५ | यदीतरद्भक्तिमात्रं ( १३ ) किमर्थोऽयं विचारः । |
| | १७ | 'उपदिश्यमानानुपतिष्ठतेऽनुमन्त्रयतेऽभिमन्त्रयतेऽभिमृशाति जपति ' ( सत्या० श्रौ० ६ । १ ) । |
| | १८ | अभिसंहितं = विशिष्टदेवतामुद्दिश्य देयमिति निर्धारितम् । |
| ७७२ | १० | 'इतीमानि' निरुक्तमूले 'तान्येतानि' ( ७७० । ८ ) । दुर्गस्वीकृतमूले 'इतीमानि' पाठः स्यात् । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७७२ | ११ | ऋग्वेदे दशाऽऽप्रीसूक्तानि तत्र प्रथमं कण्वानां ( मेधातिथेः ) 'सुसमिद्धो न आवह' (१।१३)। द्वितीयं (दैर्घतमसं) तद्वर्ज्यानामाङ्गिरसां ' समिद्धो अग्न आवह ' ( १ । १४३ ) । तृतीयमगस्तीनां 'समिद्धो अद्य राजसि' (१।१८८)। चतुर्थं शुनकानां ' समिद्धो अग्निर्निहितः पृथिव्याम् ' ( २ । ३ ) । पञ्चमं विश्वामित्राणां ' समित्समित्सुमनाः ' ( ३ । ४ ) । षष्ठमत्रीणां 'सुसमिद्धाय शोचिषे ' ( ५ । ५ ) । सप्तमं वासिष्ठानां ' जुषस्व नः समिधमग्ने अद्य ' ( ७ । २ ) । अष्टमं कश्यपानां ' समिद्धो विश्वतस्पतिः ' ( ९ । ५ ) । नवमं वाध्र्यश्वानां ' इमं मे अग्ने समिधं जुषस्वेळः ' ( १० । ७० ) । शुनकवाध्र्यश्ववर्जितानां भृगूणां दशमं 'समिद्धो अद्य मनुषो दुरोणे' ( १० । ११० ) । अत्रैकादशाऽऽप्रियो ( आप्र्यृचः ) ऽनुक्रान्ता न सूक्तानि । दुर्गकृतविवरणं प्रामादिकम् । तान्येतानि वक्ष्यमाणानि न त्वनुक्रान्तानि । |
| | १५–१७ | वासिष्ठम् ( ७ । २ ) । आत्रेयम् ( ५ । ५ ) । वाध्र्यश्वम् ( १० । ७० ) । गार्त्समदम् ( २ । ३ ) । |
| | १८ | अत्र सर्वत्र द्वितीया ऋचो नराशंसपदघटिताः । एतानि चत्वारि सूक्तानि नराशंसवन्ति । |
| | १९–२१ | ( मैधातिथं ) काण्वम् (१ । १३ ) । दैर्घतमसम् (१।१४२)। एते द्वे प्रैषिकं चोभयवन्ति । शेषाणि तनूनपात्वन्ति । |
| | २० | प्रैषिकं सूक्तं = कुन्तापाध्याये द्वितीयं प्रैषसूक्तम् । तदिह निरुक्तेऽस्मिन्प्रकरण उपवर्णितम् । प्रयाजसूक्तसंबन्धेनैव तस्य निर्देशः कृतः । |
| | २३ | नाराशंसं यजन्ते ते नाराशंसयाजिनः । |
| ७७३ | १ | अन्ये सर्वे न तनूनपाद्याजिनो यस्माद्द्वावुभयवन्तावुभययाजिनौ । |
| | २ | एकादशाऽऽप्रीसूक्तानि । एकं निर्वचनमवधारणं ( निश्चयेन प्रयोगः ) च येषां तानि । |
| | ३ | एतानि सूक्तान्यृक्शाखायां वर्तन्ते । एतेषु न विवादः । निश्चयेनैतानि तेषु तेषु यागेषु विनियुज्यन्ते । उभयवत्पक्षेऽपि निश्च- |

| पृ० | पङ्क्तिः | |
|---|---|---|
| ७७३ | ३ | यः । 'सौत्रामणी' इति यागस्य नाम । अस्मिन्सुरापानं विहितं पशुत्रयहिंसा च । प्रथमे पशौ 'समिद्धा इन्द्र उषसामनीके' ( मैत्रा० सं० ३ । ११ । १ ) । द्वितीये 'समिद्धो अग्निरश्विना' ( मैत्रा० सं० ३ । ११ । ३ ) । उत्तमे 'समिद्धो अग्निः समिधा' ( मैत्रा० सं० ३ । ११ । ११ ) । एतानि त्रीण्याप्रीसूक्तानि । दशतय्यामृग्वेदे भवात् । |
| | ६ | सौत्रामण्या प्रथममैन्द्रं द्वितीयमाश्विनं तृतीयं छन्दोदेवताकम् । प्रैषिके = प्रैषसूक्ते । न परिसंख्यातान्याप्रीसूक्तेषु यास्काचार्येण । |
| | ७ | अग्निचितौ 'ऊर्ध्वा अस्य समिधो' ( मैत्रा० सं० २ । १२ । ६ ) । अश्वमेधे 'समिद्धो अञ्जन्कृदरम्' ( मैत्रा० सं० ३ । १६ । २ ) । आग्निकम् = अग्निचितौ प्रयुक्तं ( सूक्तम् ) । |
| | ८--९ | आग्निकं सदपि सूक्तमिष्टकानामुपधाने प्रयुज्यते । तैत्तिरीयवाजसनेयिशाखयोरेताः पञ्च पश्वङ्गभूता आग्नेय्यः सामिधेन्यः । |
| | ९ | उत्तमाया = पञ्चम्याम् । 'आग्निकमुत्तमायां चितौ' इदं सूत्रवद्भाति । मानवश्रौतसूत्रं स्यात् । |
| | ९--१० | 'समास्त्वाग्न०' ( शत० ब्रा० ६ । २ । १ । २१ ) । आप्रियः ( शत० ब्रा० ६ । २ । १ । २८ ॥ कात्या० श्रौ० १६ । १ । ११--१२ ) । |
| | ११ | 'द्वादशाप्रीरप्येयेषु' इदमपि सूत्रं स्यात् । 'अप्येयेषु' ( २६ ) इदं दुर्बोधम् । अप्येयेषु = अपि + एयेषु ( ? ) 'एयेषु' प्रामादिकम् 'एतेषु' इत्यस्य स्थाने । एतेष्विष्टकोपधानेष्वाप्रीरपि विनियुज्यात् । 'एतेषु' अयमपि सांशयिकः पाठः । |
| | ११--१२ | 'उत्सक्थ्या०' ( वा० सं० २३ । २१ ) । इत्यश्वं यजमानोऽभिमन्त्रयते ( का० श्रौ० २० । ६ । १७ ) । यदाऽपोऽश्वमभ्यवगाहयति तदा अहं च त्वं च वृत्रहन्निति ब्रह्मा |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७७३ | ११–१२ | यजमानस्य हस्तं गृह्णाति ( तै० ब्रा० ३ । ८ । ९ ॥ तै० सं० ७ । ४ । १९ ) । |
| | १४ | आप्रीकार्ये प्रयोगव्यभिचारात् । एतेषां सूक्तानामन्यत्राऽऽप्रीकार्यात्प्रयोग. । अयमेव व्यभिचारः । आप्रीकार्य एव नैतानि सूक्तानि प्रत्युज्यन्ते । |
| | २० | प्रयोगादन्यथाभाविनि = प्रयोगेऽनावश्यके ( देवतापदे ) । अन्यत्रापि = अश्वमेध इतरयागेषु वा । देवतापदनिपातकल्पः । देवतापदं निपातत्वेन मन्तव्यम् । कल्पः = व्यवस्था । |
| | २१ | अश्वप्रतिग्रहप्रायश्चित्तम ।‘वरुणो वा एतं गृह्णाति योऽश्वं गृह्णाति यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाञ्चतुष्कपालान्निर्वपेद्वरुणमेव स्वेन भागधेयेनोपधावति स एवैनं वरुणपाशान्मुञ्चति ’ ( तै० सं० २ । ३ । १२ ) । ‘ यो वा अश्वं प्रतिगृह्णाति वरुण स प्रसीदति तदश्वहविषा यष्टव्यं निर्वरुणत्वाय चतुष्कपाला भवन्ति चतुष्पाद्वा अश्व. कपालैरेवैनमाप्नोति यावन्तोऽश्वास्तावन्तः पुरोडाशा भवन्ति सर्वत एवैनं मुञ्चति अथ यः पुन. प्रतिग्रहीष्यन्त्स्यात्तस्य वारुणा नेमाः स्युः सौर्यवारुणा नेमाः। यद्वारुणो वरुणादेवैनं मुञ्चत्यथ यत्सौर्य. स्वामेव देवतामुपप्रतिगृह्णात्यात्मनोऽहिंसायै ’ ( मैत्रा० सं० २ । ३ । ३ ) । चतुष्कपालः पुरोडाश एवाश्वहवि. । |
| ७७४ | २ | ‘ रेजन्ते अग्ने पृथिवी मखेभ्यः ’ अत्र ‘ अग्ने ’ इति पदं संबोधनम । तथाऽपि केवलमारुते हविषि नाग्नेरुपयोग· । तस्मादग्निदेवताऽत्र निपातवत् । |
| | ३ | तद्देवाग्निपदम् । चातुर्मास्येषु वैश्वदेवं पर्व । तत्र ‘ विश्वान्देवान्यजति’ ( मैत्रा० सं० १ । १० । ६ ) । तत्र ‘प्रचित्र०’ इति याज्या ( आ० श्रौ० २ । १६ ) । अत्राप्यग्निपदं सार्थम् । |
| | ९ | ‘ ईळे अग्नि ’[१] त्विषीमन्तो ’ ‘ अग्ने याहि ’[३] ‘ प्रचित्रैमर्कं ’ ‘ ये अग्नयो ’ ‘ आ वो यन्तू ’ ( मैत्रा० सं० ४ । १४ । ११)।एताः षड्ऋचः ‘आग्निमारुतीं पृश्निमालभेत वृषिकामः ’ |

पत्रं पङ्क्तिः

७७४ ९ इति काम्ये पशौ विनियुज्यन्ते । अत्राग्निपदं सार्थम् । 'त्विषीमन्तो०' (ऋ० मं० ६ । ६६ । १०) इत्यत्र 'जुह्वो नाग्नेः' इत्यग्निपदं नैपातिकमपि न निपातवदत्र । 'अग्ने याहि' (ऋ० मं० ७ । ९ । ५)' अत्र ब्रह्मकृद्रुण. सरस्वती अश्विनौ आपो विश्वेदेवा नैपातिकाः । न मरुतः । एषोऽत्र देवतापदनिर्णयः ।

८-९ अग्निपक्षे 'तिस्रो देवीः' भारती द्युस्थानेत्यादि कथं निरुच्यम् । भारतीसरस्वतीडा एता देवता अग्नेर्भिन्नाः । 'आ नो यज्ञं भारती' इयमाप्रीऋक् (निरु० ८ । १३) । अग्निरेव द्युस्थाने भारती मध्यमस्थाने सरस्वती पृथिवीस्थान इडेत्यभिधीयत इति प्रतिसमाधानं न प्रतिसमाधाननामयोग्यम (१०--११) ।

१७ नराशंसस्थाने किं तनूनपादाप्री प्रयोज्या ।

१८ न्यायविदः = तर्केण निर्णयं कुर्वाणा मीमांसकाः ।

१९ समनुगंस्यन्ते = सम्यक्सत्येनानु तर्केण निश्चेष्यन्ति । 'गमेरिट् परस्मैपदेषु' (पा० ७ । २ । ५८) इत्ययमिडागमः परस्मैपद एव भवति ।

## अथ नवमोऽध्यायः ।

७७६ १० तेषामपि = द्रव्याणामपि ।

१४ लक्षणं = यद्यत्पृथिव्यायतनं तदत्रान्तर्भाव्यम् । इदं लक्षणमिति ग्रहीतव्यम् । अथवा । साधारणधर्म इति ।

१७ पुरुषान्तरजन्मा । पुरुषस्यानन्तरं जन्म यस्य ।

१९-२० अश्वमेधो विशिष्टं कर्म । तत्राश्वो मुख्याङ्गम् ।

७७७ २ अश्वस्य स्तोमः स्तुतिः । अश्वस्तोमस्येदं (सूक्तम्) अश्वस्तोमीयम् । 'अश्वस्तोमीय एव' इत्यनेन 'मा नो०' इत्येव दुर्गस्वीकृतपाठे द्वितीयः खण्डः ।

४ 'अश्वो वोह्ळा' इति खण्डो दुर्गेण न व्याख्यातः

पत्रं पङ्क्तिः

७७७ ४ वोह्ळाऽश्वः सुखं रथमिच्छति । उपमन्त्रिणो हसनां हास्यकारिकां नर्मवाचमिच्छन्ति । शेपः ( पुंप्रजननं ) रोमण्वन्तौ भेदौ ( रोमशां योनिम् ) इच्छति । मण्डूको वार्वारि इत् ( एव ) इच्छति । तस्माद्धे इन्दो ( सोम ) इन्द्रायेन्दो परिस्रव । यास्केन 'वोह्ळा' पदं त्रिः विधेयं क्रियते ।

६–७ 'सुखं कस्मात्सुहितं खेभ्यः' ( नि० ३ । १३ ) सुखं = कल्याणम् । कल्याण = पुण्यम् । सुखं = सुहितं भवति । सु ( सुहितं ) + खं = सं ( भवति ) । अथवा । सुखं = सु ( सुहितं ) + खं = गं ( गम्यति ) । 'गम्यति' इदं किं गमे रूपम् ।

७ 'कल्याणं कमनीयं भवति' ( नि० १ । ३ )

८ 'हसेता० सृच्छतीति' कस्येदं व्याख्यानम् । 'हसेता' दुर्बोधम् ।

९ 'मा नो व्याख्यात' कुत्र । 'मा नः समस्य दूढ्यः' अयं मन्त्रः ( निरु० ५ । २३ इत्यत्र ) । 'मा नोऽहिर्बुध्न्यो रिषे०' अयं च ( निरु० १० । ४५ ) इत्यत्र व्याख्यायते । 'मा नो मित्रः ०' अयं मन्त्र इहैव व्याख्यायते नान्यत्र । 'मा नो' इति तृतीयखण्डस्य प्रारम्भः । अयं खण्डः प्रक्षिप्त इव भाति । नास्यात्र किमपि प्रयोजनम् । ठ. ड. पुस्तकयोरश्वो वोह्ळेति महाराष्ट्रवैदिकपाठ इति लिख्यते । किं त्वयं खण्ड छ.त.द. पुस्तकेष्वपि विद्यते ।

१४ 'मा नस्त्वं' इत्यत्र 'त्वम्' इत्यनेन को निर्दिश्यते ।

२२ देवजातस्य = देवेभ्यो जातस्य ।

७७८ १ प्रजापतिर्द्वितीयामाहुतिमश्वावजुहोत् ।

२ विदथे = संग्रामे । 'यज्ञे विदथे' इति किंकारणो व्यत्यासः ।

४ परिख्या तिरस्करणे । मा तिरस्कुर्वन्तु । परिख्यानं = निन्दा ( सायण ) ।

९ आयुः = वायुः । वायुशब्दस्याद्यो वकारो लुप्तः । वायुः = व + आयुः । आयुः = अयनः ।

| पत्रं | पङ्क्तिः |
|---|---|
| ७७८ | ६ ऋभुक्षा ऋभौं = उरौं । विश्वं = नित्यम् ( ट. ) । |
| | ८ ' राजेति च ' निरुक्तमूले ' राजति वा ' ( ७७७ । १९ ) । |
| | १० शकुनिः = शक् + उ ( उत् ) + निः ( नयतेः ) । = शक् + उ (उत्) + निः ( नदतेः ) ( १२ ) । = शक् + उ ( उत् ) + निः ( तक्रतेः ) ( १२ ) । = श(शं) + कुनिः ( करः ) ( १३ ) । = शक्नोतीति ( १९ ) । ' शकुनः शकुनिः शकुन्तः शकुन्तिका ' एते शब्दाः शक्धातोः । शक्यते भविष्यं ज्ञातुं येन । अथवा । शक्यते गगनं गन्तुं येन । |
| ७७९ | १–२ वयमाममनोज्ञा वाचः श्रुत्वा कनिक्रदज्जनुषं प्रब्रुवाण इति सूक्ते जपेत् ( आश्व० गृ० ३ । १० । ९ ) । |
| | ३ नुतिः = विपरिणामः । अयं विपरिणामो भाष्ये (७७८।२१) न विद्यते । |
| | ४ ' जन्म ' ( ७७८ । २१ ) ' ईरयति ' (२२) ' कल्याण-मङ्गल. ' ( २२-२३ ) ' मा च त्वा ' ( २४ ) इत्यत्र ' च ' न व्याख्यातम् । ' ईरयति ' इत्यस्य स्थाने ' इयर्ति ' ' कल्याण ' इत्यस्य स्थाने ' प्रशस्त ' इति दुर्गस्वीकृतपाठौ स्याताम् । |
| | ८–९ विश्व्या = सर्वतः । कुतोऽपि । |
| | ९–१० शकुनीनां नामानि तेषां ध्वन्यनुरोधेन । |
| | १४ अस्यैव = गिरतेरेव । |
| | १९–१८ म् + अङ्गलं = मङ्गलम् । ' अङ्गलमङ्गवन्मज्जयति पापक-मिति नैरुक्ताः ' इत्येकं वाक्यम् ( ७७८ । २३–२४ ) । |
| | १६ मङ्गलं दधिमध्वक्षतादिभिः क्रियते । ' मङ्गवत् ' ( ग. च. ज. पाठः ) = अङ्गवत् ( पाठान्तरे २९ ) । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७७९ | १७ | मङ्गलं = म् ( मज्जयति ) + अङ्गलम् ( अङ्गवत् ) । अङ्गवन्माङ्गं मत्पापकं मज्जयति नाशयति । अयं यास्कस्यार्थः । |
| | २० | मामनदमङ्गलं गच्छतु । |
| | २१ | अर्थमभ्युत्थितम् = अर्थं साधयितुमुत्थितम् । |
| | २३–२४ | अभिववाशे = न्यवेदयत् । |
| ७८० | १० | गृत्समदन. ( पाठान्तरं २७ ) = गृत्मान्मादयति । |
| | ११ | ' इति सा निगदव्याख्याता ' ( २ ) गृत्स इति मेधाविनाम गृणातेः स्तुतिकर्मणः ' ( ३ ) ' मण्डो मदेर्वा मुदेर्वा ' ( ६ ) न व्याख्यातम् । |
| | १६ | मण्डति मण्डते वा सरः । अथवा । मण्डयति वर्षासमयम् ( इति वैयाकरणाः ) । |
| | १७ | भक्तय. = अलंकरणरूपा येषा. । |
| ७८१ | ३ | मौनं व्रतं चरितुं शीलं येषां ते । |
| | ६ | लुप्तोपमो वाक्यार्थः । ' अपि वोपमार्थे स्यात् ' (७८०।२३–२४ ) ' पर्जन्यप्रीतां ' ( २४ ) न व्याख्यातम् । |
| | ७ | उपाकृत्य = उपकरणं वेदपठनार्थं मौञ्जीबन्धनाख्यं संस्कारं कृत्वा । पवित्रे पाण्योर्येषां ते । |
| | ७–८ | नियत. कालो वेदपठनस्य येषां ते । |
| | २९ | ' इति सा निगदव्याख्याता ' ( १९ ) न व्याख्यातम् । |
| ७८२ | ७ | प्रतिकितवं = कितवे कितवे वर्तमानम् । |
| | ११–१२ | प्रावेपाः = देवने चलन्तः । बृहतः = स्थूला. । प्रवाते जाताः (१३) ववृतानाः ( १६ ) पुनः पुनश्चाल्यमानाः । अक्षाः । एतानि सर्वाण्यक्षविशेषणानि । |
| | १२ | महतो वृक्षस्य । 'प्रवेपिणो महतो विभेदकस्य ' (११–१२)। इति भाष्यम् । |
| | १९ | दुर्गः ' विभीदकस्य वा ' इति विकल्पेनार्थं करोति । यः कोऽ- |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७८२ | २९ | पि वृक्षः स्याद्बिभीदको वा । मूले वा नास्ति ( ११–१२ ) । इार्णे = ऋणमोचनाय । |
| ७८३ | १ | आस्फुरकं = देवनम् । अयं शब्दः कोशेषु नोपलभ्यते । ' आस्फारक ' (पाठान्तरे २९ )। निर्गतर्णे = अक्षदेवनेन धनं लभ्यते । तेन चर्णमुक्तो भवति । कुलस्य कृते कृतमृणं पुत्रपौत्रैर्देयं भवति । न तथा देवने कृतम् । |
| | २ | ' अपार्णं वा ' इति न विकल्पः । निर्ऋणम् = अपार्णम् । अपार्णं विभीदकवृक्षाय जलं नावश्यकम् । |
| | ३ | ' अपरता अस्मात्० ' ( ७८२ । १३ ) इति मूलम् । दुर्गपाठेऽस्मान्नास्ति । |
| | ४–५ | सोमस्य भक्षो यथा जागृविस्तथा विभीदकः ( अक्षाः )। |
| | ५ | कोष्ठे भवं कोष्ठ्यं जाड्यम् । |
| | ५–६ | द्यूतकारशब्दं श्रुत्वा जागर्ति । |
| | ७ | मह्यमचच्छदत् = मां वारं वारमचच्छदद्व्यलोभयत् । |
| | १३ | ' इषिका तूलिका स्मे ' ( अमरः २ । १० । ३२ )। इषीका तृणकाण्डं वेतसकाण्डं वा । इषीकया तूलिकया सूचीसदृशैस्तीक्ष्णतृणै. । विमुच्यते = त्यज्यते । एवं मुञ्जो मुञ्चतेः । मुञ्जादिषीकास्तृणशलाका निर्गच्छन्ति । एवं स इषीकाभिर्विमुच्यते त्यज्यते । |
| | १४ | ' इष इच्छायाम् ' ( धा० ६ । ७० ) । ईष गतिहिंसादर्शनेषु ' ( धा० १ । ६१२ ) । |
| | १५ | इतरेषीका = विलीनसुवर्णपरीक्षणार्थमुपयुक्ता शलाका । ईषाशब्द इषीकातो भिन्नः । |
| | १६ | ' विभेदनात् ' ( ७८२ । १६ ) ' जागरणात् ' ( १६ ) ' प्रशंसत्येनान्० वेदयन्ते ' ( १७–१८ ) न व्याख्यातम् । प्रथमया ( १७ ) ऋचा । परिद्यूनः ( १७ ) = निर्विण्णः । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७८३ | १७ | ग्रावा सोमं हन्ति । तस्माद्धन्तेः । हकारस्य गकारः । हन् = गन । राव उपजनो । ग् + रा + व + अन् = ग्रावन् । |
| ७८४ | ६ | अ + दरणीयाः ( २९–२६ ) = विदारयितुमशक्याः । |
| | ७ | 'क्षिप्रकारिणः ' ( २ ) ' घुष्यतेः ' (२) न व्याख्यातम् । |
| | ७–१० | आशवः क्षिप्रकारिणः ( यास्कः १–२ ) । आशवः = अश्नीथ ( दुर्गः ) । यदद्रयः पर्वताः साकमाशवो वाचं वदन्ति तस्मात्तेभ्यो वाचं वदत हे ऋत्विजः । सोमिनश्च यूयमिन्द्राय श्लोकं घोषं भरथ । |
| | १४ | ' नराशंसः ' पाठान्तरे ( २८ ) । निघण्टुषु ' नाराशंसः ' । ' कः पुनरेष नराशंसः ' इत्यत्र ' नाराशंसः ' इत्यवश्यम् । |
| | १६ | मन्त्रः केवलं नरस्तुत्यर्थः । |
| | २०–२१ | सामान्या स्तुतिर्निर्नास्तीति सत्यम् । किंतु केचिद्राजान ऐकैकश्येनैकैकशः स्तूयन्ते यथा भावयव्यः । |
| | २३ | सर्वेषु पुस्तकेषु 'नराशंसस्य' । 'नाराशंसस्य' इत्यवश्यम् । तस्य नाराशंसस्य मन्त्रस्यैषा ऋग्भवतीति यास्कस्यार्थः ( ४ ) । |
| ७८५ | १२ | बालः = बलवर्ती । बले वर्तते = बलिन्यायत्तो भवति । मातापितृभ्यां भर्तव्यो भवति । ' बलं भरं भवति '(नि० ३ । ९ )। 'बालो बलवर्ती० प्रतिषेधव्यवहित' ' (३–९) ' मनस ईर्षया '( ५–६ ) ' राज्ञः ' ( ६ ) न व्याख्यातम् । बा + अलः । बा = अम्बा ( अस्मै बालाय ) अलं भवति । अ + बलः । अ = अम्बा ( अस्मै बालाय ) बलं भवति । ' बलभर्ती '( पाठान्तरे २२ ) = बलेन भर्तव्यः । अ = अविद्यमानं बलं यस्य स अबलः = बालः । ' बाल ' इत्यत्र ' ब ल ' इति द्वे अक्षरे प्रतिषेधेनाकारेण व्यवहिते । यथा ब + अ + लः = बालः । |
| | १४ | भावः = आर्जवम् । |
| ७८६ | ७ | ' तत् ' पदं व्यर्थम् । |

| पत्रं | पङ्क्तिः |
|---|---|
| ७८६ | ८ भावयव्यस्य स्तुतेर्लाभः। तस्य निमित्तम्। पूर्वं प्रकृतो भावयव्यः। भावयव्येन स्तुतिर्लब्धा। तस्य किं निमित्तम्। यज्ञसंयोगः। |
| | ९ स्तुतिमेतां प्रभरे। सहस्रसवैर्योगाद्भावयव्यो राजा स्तुतिं लभते। |
| | ११ सामान्यं युद्धोपकरणानाम्। स्तुतिर्न केवलं भावयव्यस्य। |
| | १४ स कस्मात्स्तुतिं लभत इत्युपोद्घातः। |
| | १५ नाराशंसमन्त्रे नराः स्तूयन्ते यथा भावयव्यः। राजानः केन कारणेन स्तुतिं लभेरन्। यज्ञेन तेषां संयोगस्तेन। |
| | १७ उपाक्रियन्ते = गृह्यन्ते। |
| | २३ सर्वावस्थातः = सर्वावस्थासु। |
| | २४ 'स्थाने स्थाने स्थानाधिपतिभागिनी सर्वा स्तुतिः' इत्यन्वयः। स्थानाधिपतीन्भजत इति। |
| ७८७ | ३ स्थिरति = स्थिरी भवति (योद्धा)। स्थिरः विपरीतः रस्थिः रथः। |
| | ४ 'रममाणो० रसतेर्वा' (७८६। ४) न व्याख्यातम्। र = रममाणः। थः = तिष्ठति। रपति शब्दं करोति रसति शब्दं करोतीति रथः। |
| | १५ ततः = दृढाङ्गत्वात्। |
| | १७ अविक्लवा अनवखण्डिता अधिष्ठातारो यस्य। सु = शोभनाः कल्याणा अविक्लवानवखण्डिताः। वीराः = अधिष्ठातारः। |
| | १८ प्रतीकारः = हिंसाप्रतिबन्धः। |
| | २० संस्तम्नुहि = दृढं कुरु। मूले 'संस्तम्भस्व' (११)। |
| ७८८ | ४ 'दुन्दुभ्यतेर्वा स्याच्छब्दकर्मणः' (७८७ १२)। न व्याख्यातम्। |
| | ५ निष्कुषितः = सुषिर उत्खातगर्भः। |
| | १४ भारद्वाजस्य = भरद्वाजपुत्रस्य गर्गस्य। |
| | १७ दुन्दुभिः शब्देन पुरुत्रा बहुषु स्थानेषु वर्तते। |

| पत्रे | पङ्क्तिः | |
|---|---|---|
| ७८८ | १८ | विष्ठितं ( वि + स्थितं ) = स्थावरम् । जगत् = जङ्गमम् । ' जगत् ' इत्यस्य जगदेवार्थः । ' विष्ठितं स्थावरं जङ्गमं च यत् ' इति यास्कः ( १० ) । ' बहुधा ' ( १९ ) न व्याख्यातम् । बहुधा = बहुभिः प्रकारैः । |
| ७८९ | ११ | 'बह्वीनां पितेति । इषुधिरभिधेयः । बह्वीनामिषूणां पिता पालयिता । तेन हि ताः पाल्यन्ते । अस्येषुधेर्बहुः पुत्र इषुकलापः पुत्रस्थानीयः । स हि तेनेषुकलापेन त्रायते । बहु वा हितं तदर्थं कुर्वन्तीति । यश्चेषुधिः समना संग्रामानवगत्य ज्ञात्वा च चिश्चाकृणोति । शब्दानुकरणम् । स हि इषौ निष्क्रम्यमाणे चिश्चेति शब्दं करोति । स इषुधिर्धानुष्केण पृष्ठे निनद्धो बद्धः प्रसूतः अनुज्ञातश्च सन्संकाः । संकाशं दधतेऽस्मिन्योधा इति संकीर्यन्ते वाऽस्मिन्योधा इति संकाः । शत्रुसंकटं सर्वाः पृतनाश्च स्फद्ध ( ? ) निनीय तमाः (?) संग्रामभक्तीः जयति । विवक्षातः कारकाणि भवन्तीतीषुधेः कर्तृत्वमित्युवटभाष्ये' ( ट० ) । |
| | ११–१२ | ' इषुर्द्वयोः ' ( अमरः २ । ८ । ८७ ) । द्वयोः = स्त्रीपुंसयोः । इषवः कन्याः पुत्राश्च । एवमिषुधिर्बह्वीनां कन्यकानां पिता बहवश्चास्य ( इषुधेः ) पुत्राः । |
| | १४ | चिश्चाकृणोति = प्रस्मयते । |
| | १४–१५ | ' अवाध्रियमाणः ' इति छ. त. द. पाठः ( २९ ) । ' अपध्रियमाणः ' इति ग. च. ज. पाठः ( २६ ) । अवध्रियमाणः = अधोमुखो ध्रियमाणः । अयं पाठः समीचीनतरः । स्मयः = आश्चर्यम् ( प्रथमेऽर्थे ) । हसनम् ( द्वितीये ) । |
| | १९ | संकटान् = निबिडान् । |
| | २० | संपृक्तान् = संपर्केण स्थितान् । |
| | २०–२१ | याः ( पृतनाः ) अभिलक्ष्य । इषव एव केवलं न त्वन्यदस्त्रम् । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७८९ | २१ | पताकार्थे = शत्रुपताकाग्रहणाय । आच्छादनार्थे वा । 'इति व्याख्यातम्' (८) न व्याख्यातम् । व्याख्यातं = स्पष्टम् । |
| | २२ | 'निनद्धः' (८) इत्यस्य स्थाने दुर्गवृत्तौ 'निबद्धः' इति पाठः । |
| ७९० | १ | 'गोधे तले ज्याघातवारणे' (अमरः २ । ८ । ८४) । कलापः = तूणीरः (अमरः ३ । ३ । १२) । कलापिभिरङ्गुलित्राणार्थं गृहीतं चर्मपट्टकम् । 'कलापिपट्टकम्' (२४) अत्र 'पिः' ह्रस्वो ननु दीर्घः । |
| ७९० | १२ | 'भोगः० अहेश्च फणकाययोः' (अमरः ३ । ३ । २३) । 'अहिरिवेति । हस्तघ्नः स्तूयते त्रिष्टुभा । हस्ते स्थितो हन्ति हस्तघ्नो घेटकः (?) प्रकोष्ठादित्राणं वा योऽहिः सर्प इव भोगैः शरीरावयवैर्बाहुं पर्येति परिवेष्टयति । किंभूतः । ज्याया हेतिमिषुं परिबाधमानो बाणान्रक्षन्स हस्तघ्नो विश्वानि सर्वाणि वयुनानि प्रज्ञानानि विद्वान्प्रजानन्परिदृष्टकारी पुमाञ्शूरोऽक्लीबः पुमांसमक्लीबं विश्वतः परिपात्वित्युवटभाष्ये' (ट०) । |
| | १५ | ज्याया मौर्व्या वध आघातः । |
| | १६ | 'सर्वाणि प्रज्ञानानि प्रजानन्पुमान्पुरुमना भवति' (८-९) न व्याख्यातम् । सर्वज्ञः पुरुषः पुमान्पुरुमना उदारचित्तो भवति । |
| | १७-१८ | अमनस्कां (स्वपतौ यस्या मनो नास्ति) स्त्रियमपेक्ष्य पुरुषे तत्पतौ बहुतरमुदारं मनः । उदारमनाः खलु स पतिर्योऽमनस्कामपि भार्यां न त्यजति । इदं पुरुमना इति निर्वचने । स्त्रियमपेक्ष्येत्यादि न कस्यचिन्मूलस्यार्थः । |
| | १८ | 'पुंस अभिवर्धने' (धा० १० । १०४) । यः पुंसते पौरुषं कुरुते स पुमान् । |
| | १८-१९ | यस्य पौरुषस्य पौंस्यं (बलं) इति नाम । यत्पौरुषं पौंस्य- |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७९० | १८–१९ | मित्यभिधीयते। पुमांसम्। च. पुस्तके ' पुरुमांसम् ' (२७)। पुरुमांसं = पीनम्। |
| | २१ | ' अभ्यश्नुवते कर्माणि ' ( निरु० ३। ९ ) इत्यभिधानतः। ' अङ्गुलयः ' इत्यभिधेयतः। अ ' अभीशवः ' = रज्जवो रश्मयः। |
| ७९१ | १२ | उपविष्टो नयति। अत्र ' क ' पदं प्राग्वर्तमानं ' नयति ' पदमपेक्ष्यते। |
| | १६ | निघण्टुषु ' अभाशवः ' इत्यस्य रज्ज्वर्थो न दीयते। |
| | १६–१७ | मनोऽनुयच्छन्ति = अश्वस्य मनसो नियन्त्रणं कुर्वन्ति। |
| | १७ | पनायत हे द्रष्टारः। विपरिणामोऽनवश्यः। |
| | २० | ' धन्वन्त्यस्मादिषवः ' ( ६ ) न व्याख्यातम्। |
| ७९२ | ९ | ' समे क्ष्मांशे रणेऽप्याजिः ' ( अमरः ३। ३। ३२ )। आजिं रणं जयेम। 'आजेवनम् अजेवनम् आजवनम् ' (२६) इत्येतेषां कोऽर्थः। |
| | १३ | अपकामं शत्रोः। शत्रोः कामं धनुरपकृणोतु नाशयतु। |
| | १९ | प्रदिशः = प्रकृष्टा मुख्या दिशः। |
| | २० | ' ज्या वयोहानौ ' ( धा० ९। २७ )। जिनाति = वृद्धो भवति न जयति। पुनः पुनः कर्षणेन ज्या कार्षिता घृष्टा दीर्णा भवति। ' प्रज्यावयतीषूनिति वा ' ( ४ ) न व्याख्यातम्। |
| | २२ | तस्या ज्यायाः। तस्य ( २८ ) धनुर्गुणस्य। ' तस्याः तस्य ' इति द्वौ पाठौ। |
| ७९३ | ११ | कर्णं प्रत्यागनीगन्ति। |
| | १५ | आत्मनो मध्यमिषुं निनाय। |
| | १७ | आत्मानं प्रत्याकृष्यमाणा। |
| | २० | शत्रूणामन्तं यन्ती सर्वाञ्छत्रून्नाशयन्ती। |
| ७९४ | ११ | सुपर्णं = गार्ध्रं = गृध्रस्येदम्। सुपर्णं सौपर्णं गार्ध्रं पक्षं यदिषुर्वस्ते परिधत्ते। वाजान्पक्षानभिप्रेत्य ( ३० ) ऋचि सुपर्णं |

पत्रं पङ्क्तिः

७९४ ११ मेकवचनमेव । इषुशब्दोऽत्र स्त्रीलिङ्गः ( १ ) । 'पक्षो वाजः' ( अमरः २ । ८ । ८७ ) । 'वाजा इषवः' इति दुर्गकृतोऽर्थः प्रामादिकः । प्रथमार्धस्य विवरणं च । दुर्गमत इषुशब्दः पुंलिङ्ग एव । 'सुपर्णं वस्ते । द्वाभ्यां त्रिष्टुबनुष्टुब्भ्यामिषुं स्तौति । या इषुः सुपर्णं वस्ते परिधत्ते । सुपर्णः पक्षी । तस्य विकारः सौपर्णमिति भवति । तत्र कृत्स्नवन्निगमः । पक्षमभिप्रेत्यास्या इषोर्मृगो दन्तः फलम् । मृगो मृगयतेः । स हि वेध्यं मृगयते । या च गोभिर्गोविकारैः श्लेष्मैः स्नायुभिः संनद्धा प्रसूता धनुष्मता प्रचोदिता सती पतति शत्रुबलं प्रति । या इषुर्यत्र नराः संद्रवन्ति विद्रवन्ति च तवास्मभ्यमिषवः । इषुरिति संततिः । शर्म शरणं यंसन् यच्छन्तु ददतु । यंसन्निति लेटो रूपम् । उवटभाष्यम्' ( ट० ) ।

११–१२ अत्र पशुपक्षिनामानि तदवयवानां स्थाने प्रयुज्यन्ते । सुपर्णः = गृध्रो गरुत्मान् । सुपर्णं सौपर्णं गार्ध्रं पक्षम् । मृगः = हस्ती । मृगः = मार्गः = हस्तिदन्तः । गोभिः = गवामवयवैः ।

१३ फलं = बाणाग्रम् । अमार्गेषु तु = यदि फलानि न मृगावयवमयानि । 'व्यध ताडने' ( ४।७९ ) इत्यस्माद्व्यधनम् ।

१३–१४ वेद्धव्यं भागं मृगयतीति मृगो दन्तः ।

१५ अथ स्नाव च श्लेष्मा च 'गोभिः संनद्धा पतति प्रसूता' ( निरु० २ । ५ ) ।

१९ अश्वमजति चोदयतीत्यश्वाजनी ।

२२–२३ यस्माच्चर्मणोऽपकृष्टा भवति तस्मादण्वी ।

७९५ १३ 'आजङ्घन्ति । कशास्तुतिः । अनुष्टुप् । एषामश्वानां सानुमानूनि समुच्छ्रितानि मांसोपचितान्यङ्गानि आजङ्घन्ति आघ्नन्ति अश्ववाराः । जघनान् जघनानि चोपजिघ्नते उपनिघ्नन्ति । हे अश्वाजनि अश्वानामश्वाजनि । अजनि. क्षेपणी च । क्षेपणी

पत्रं पङ्क्तिः

७९५ १३ तस्याः संबोधनम् । हे अश्वाजनि हे कशे प्रचेतसः परिदृष्टकारिण· प्रज्ञान् अश्वान् समत्सु संग्रामेषु चोदय प्रेरय । जयायेति शेषः । उवटभाष्ये ' (ट.) । आद्योऽर्धर्चः परोक्षः । उत्तरः प्रत्यक्ष. । जिघ्नमाना इति घनधातोः शानचि रूपम् । शत्रन्तमृक्संहितायां नोपलभ्यते । ' एको वृत्रा चरसि जिघ्नमानः ' ( ऋ० सं० ३ । ३० । ४ ) ।

१४ ' आघ्नति ' ( ६ ) ' उपघ्नति ' ( ७ ) दुर्गेण न पठितम् । तथा ' जङ्घन्यते: ' ( ७९६ । ३ ) । सायणस्वीकृतनिरुक्तपाठे ' आघ्नन्ति उपघ्नन्ति ' । यया त्वया सादिन अश्वारोहा वा एषामश्वानां सानूनि आघ्नन्ति जघनांश्चोपघ्नन्ति सा त्वं कशे इत्यादि. सायणकृतोऽर्थः । किंतु ' जङ्घन्ति ' इदं न बहुवचनम् । हनो यङ्लुकि ' जङ्घति ' इति बहुवचनान्तं रूपं स्यात् । ऋक्संहितायां जिघ्नसे जिघ्नते जिघ्नन्ते जिघ्नमान इति रूपाणि वर्तन्ते । तानि हनसदृशस्य घनधातो रूपाणि । तेन जिघ्नते इति उत्तमपुरुषैकवचनम् । ' अभीमिन्द्रो०० जिघ्नते ' ( ऋ० सं० १ । ५४ । १० ) । ' इन्द्रो वृत्रस्य सानु वज्रेणावजिघ्नते ' ( ऋ० सं० १।८० । ५ ) । 'एको वृत्राणि जिघ्नसे । इन्द्र००' ( ऋ० सं० ८ । १९ । ३ ) । 'उज्जिघ्नन्ते० पर्वतान्० मरुतः' ( ऋ० सं० १।६४। ११ ) । एवं 'जिघ्नते' एकवचनमेव । ' जङ्घन्ति ' तथैव । कशा एषां सानु आजङ्घन्ति जघनांश्च उपजिघ्नते । यास्कसायणदुर्गकृतोऽर्थः प्रामादिकः ।

१५ सरणानि = चलानि ।

१७ रथ्या = रथयुक्ता अश्वाः । एते रथस्य पुरस्ताद्वर्तन्ते । एषां पश्चात्पृष्ठ्याः । अभिहंघ्नन्ति ( च. पाठः ३० ) = अभिहन्ति + अभिघ्नन्ति ।

७९६ ४ ' उरुक्रम् ' इति ग. च. ज. पाठः ( २३ ) प्रामादिको यस्मात्

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७९६ | ४ | ' करोतेरुत्तरपदम् ' (७) इत्युच्यते । उरु कमन्नं यस्मात्तदुरुकम् । उरु = बह्वन्नम् । करं = करोति (५) । |
| | ६ | ऊर्जः = अन्नस्य । ऊर्करम् = ऊर्क्करम् = ऊर्क् + करम् । |
| | ९ | ' उरु मे करादिति तस्मादुरुकरमुरुकरं ह वै तदुलूखलमित्याचक्षते परोक्षम् ' ( शत० ब्रा० ७ । ५ । १ । २२ ) । यास्कगृहीतपाठः कुत्रत्यः । दुर्गस्वीकृतपाठो यास्कपाठाद्भिन्नः । तथा शतपथपाठादपि केनचिदंशेन । |
| | १३ | ' उरुकरम् ' इत्यत्र गुणस्य ( = अर्थस्य ) अभिधानं शब्दस्थाक्षराणां व्यत्यासेन न व्यवहितं परोक्षीकृतम् । |
| | १४ | ' उलूखलम् ' इत्यत्राक्षराणां व्यत्यासेन गुणोऽर्थो व्यवहितो न प्रत्यक्षः । |
| ७९७ | १ | ( उलूखलं ) 'वैष्णव्या सादयति वैष्णवं ह्युलूखलं भवति ' ( मैत्रा० सं० ३ । २ । ७ ) । |
| | १–२ | ' यच्चिद्धि त्वं गृहे गृह उलूखलक युज्यसे । इह द्युमत्तमं वद जयतामिव दुन्दुभिः ' इति दक्षिणस्या श्रोण्यामुलूखलं मुसलं प्रयुनक्ति ( सत्या० श्रौ० ११ । १९ ) । |
| | २ | ' तमेताभिश्चतसृभिरभिसुषाव यच्चिद्धि त्वं गृहे गृह इति ' ( ऐ० ब्रा० ३३ । ५ ) । |
| | २–३ | प्रादेशमात्रमुलूखलं चयने उपधीयतेऽनेन मन्त्रेणाभिमन्त्र्य कस्मिञ्श्रौतसूत्र एतदुपलभ्येत । |
| | ५ | बहून्यन्नानि धान्यान्युलूखले कुट्यन्ते । स तेषां संस्कारः । तस्मिन्संस्कार उलूखलस्य गम्भीरो ध्वनिः । |
| | ७ | गम्भीरस्वनो दुन्दुभिर्जयस्य पूर्वरूपं चिह्नम् । |
| | १९ | वृष+भः । भं + वृषा = प्रजां वर्षति । वृष = बृष = बृहति । भम् = अति । ' वृहू उद्यमने ' ( धा० ६ । ६६ ) । बृहू इत्यन्ये । अतिवृहति = अतिशयेनोद्यच्छति । किम् । |

पत्रं पङ्क्तिः

७९७ १९ रेतः । कुत्र वडवायोनौ । तस्मात्सर्वो वृषकर्मा ( वृषणकर्मैव कर्म यस्य सः ) वृषभः । कस्मात् । वर्षणात् । इदं मूलं दुर्बोधम् । ' वृषकर्मा वृषभः ' इत्येव सुवचम् [ ' अतिबृहति रेत इति वा ' अस्य ' तद्वृषकर्मा०० ' इत्यादिना कः संबन्धः । अति + बृहति ( महत्यां योनौ ) रेतः यस्य सः। बृह = वृष । भं = रेतः । वृषभः = अश्वो वृषकर्मणाऽश्वो वृषभः । तेनैव वृषकर्मणा नृगोरपि वृषभः । दुर्गमते वृषः= अश्वः । वृषभः = नृगौ ( २९ ) ।

१८-१९ अश्वस्य वर्षकर्म कीदृशम् । रेतोवर्षरूपम् ।

१९ युक्त उद्यक्तो गोयोनौ रेतः सेक्तुम् । वृषभ इति शब्दो नतु वृषः । दुर्गमते ' वृषः कस्मात् ' इति प्रश्नः । अन्यथा भकार उपजनः कथं स्यान्नृगोरर्थे । अश्वो वृषा = अश्ववृषा । ' वृषणात् ' इति क. ख. ग. च. ज. पाठः । ' वर्षणात् ' इति पाठान्तरम् ( २८ ) । मूले इन्द्रोऽग्निर्वा वृषभः । कस्मात् । यस्मात्तौ प्रजां प्रजावृद्धय आवश्यकं जलं वर्षतः ।

७९८ ११ व्याख्यातं ( ३ ) = स्पष्टम् ।

१२ मन्त्रस्यैकवाक्यतया व्याख्या कर्तव्या ।

१४ आजि. = स्पर्धया पलायनं तदर्था भूमिर्वा । ' आजयनस्याऽऽजवनस्य वेति वा ' ( ४ ) ' भर्वतिरत्तिकर्मा ' ( ५ ) ' प्रधनं संग्रामनाम प्रकीर्णान्यस्मिन्धनानि भवन्ति ' ( ७ ) न व्याख्यातम् । आजिराजयन । आ + जि । मर्यादीकृतायां तस्यां भूमौ जवनं जवो वेग इष्टो जयार्थम् । दुर्गकृतं विवरणं यास्ककृताद्विवरणाद्भिन्नम् ।

१९ ' युक्त्वा रयन्त युक्ता रयन्त ' इति च. पाठः ( २६ ) । ' रयन्त ' किमिदं रूपम् । परस्मैपदे ' रयन ' । किंतु ' रय गतौ ' आत्मनेपदम् । ' रयध्वम् ' इति शुद्धं रूपम् । हे जना युक्ता अवहिता एनं प्रति रयध्वं गच्छत इत्यारटन्त उपयन्ति ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ७९८ | १५-१६ | न्यक्रन्दन्नुपयन्त इति ऋक्। 'न्यक्रन्दयन्त उपयन्ति' इति दुर्गकृतो विपरिणामः किमर्थः। तथैव 'अमेहयन्' इत्यस्य 'अमेहयन्तः' 'मेहयन्तः' वा (२७)। 'निक्रन्दयन्तः' इत्यवश्यम्। अकारः किमर्थः। |
| | १६ | 'मेहयन्तः' पाठान्तरम्। 'अमेहयन्तः' अत्राकारोऽनवश्यः। |
| | १७ | भविष्यति। 'माविष्यति' इति ग. च. ज. पाठो दुर्बोधः (२८)। 'धाविष्यति' इति पाठः स्यात्। मूत्रकरणानन्तरं लघु सुखेन च धाविष्यति। 'भविष्यति' पाठे न किमपि स्वारस्यम्। |
| | १८ | गावो विद्यन्ते येषां ते गोमिनः। सुभगम्। 'सुतगम्' इति ग. च. ज. पाठो दुर्बोधः (२८)। |
| | १९ | तद्वा सुभगं वा महत्त्रम्। 'मूभर्वा वृषभाः' (ऋ० सं० १०। ९४। ३) मूभर्वा यवसारवादिनः। |
| | २१ | 'वाहिका' शब्दः कोशेषु नोपलभ्यते। वाहिका = गवां बलेन नयनमित्यर्थः स्यात्। |
| ७९९ | २ | मूलं सर्वेषु पुस्तकेषु 'द्रुममयो' (७९८। ७) न 'द्रुमयः'। 'वृषभं च' (७९८। ८) 'संग्रामे व्यवहृत्य' (८) न व्याख्यातम। व्यवहृत्य = युद्धव्यापारं कृत्वा। |
| | २१ | अवसितं आजौ मरणं यस्य सः। 'अवसिताजिसरणं मुद्गलम्' इत्यस्य केनान्वयः। अथवा। अवसितं आजौ सरणं यस्मिन्कर्मणि यथा स्यात्तथा। एवं 'जितायाम्' इत्यस्य क्रियाविशेषणं स्यात्। अवसिताजिसरणं जितायाम्। 'जिताया० पविद्धं मुद्गरम्' इदं प्रक्षिप्तमिव भाति। |
| ८०० | २ | 'आद्यन्ते' इति पाठान्तरम् (२६)। कोऽर्थः। 'आज्यन्तोऽपि काष्ठोच्यते' (निरु० २। १५)। |
| | ३ | अपविद्धः = त्यक्तः। उपदिशन् = दर्शयन्। अवासिताजिसरणमत एवाऽऽज्यन्त अपविद्धं मुद्गरमुपदिशन्। 'अवसित० |

पत्रं पङ्क्तिः

८०० ३ मुद्गरः ' ( ७९९ । २१ ) इदमस्थाने प्रमादाल्लिखितम् ।
'स' ( २ ) इति पदे सति ' असौ ' इत्यस्य किं प्रयोजनम् ।
'असौ ( राजा ) अज्ञ इति तम् ' मूलपाठः स्यात् । अथवा ।
' मावज्ञम् ' ( अवज्ञया ) इति पाठः स्यात् । तस्मिन्नाज्यन्ते।
तस्मिन्पदं निरर्थकम् । अथवा । तस्मिन्नाज्यन्त आजौ ।

४ तस्मै प्रत्याचचक्षे = तस्य प्रत्याख्यानं निर्भर्त्सनमकरोत् ।

५ ' द्रुघणः ' अत्र कश्चित्परशुर्द्रुघणतुल्यो बलेन । न मुद्गरो
यथा दुर्गमते ।

' मुद्गलस्य हृता गावश्चोरैस्त्यक्त्वा जरद्गवम् ।
स शिष्टं शकटे कृत्वा गत्वैक ऋजुराहवम् ॥
द्रुघणं युयुजेऽन्यत्र चोरमार्गानुसारकः ।
द्रुघण चाग्रतः क्षिप्त्वा चोरेभ्यो जगृहे स्वगाः ' ( सायणभाष्ये )।
' आजावनेन भार्म्यश्च इन्द्रासोमौ तु मुद्गलः ।
अजयद्वृषभं युक्त्वा ऐन्द्रं च द्रुघणं रथे ॥
युद्धचन्संख्ये जयं प्रेप्सुरैन्द्रोऽप्रतिरथो जगौ ' ( बृहद्दे० ८ ।
१२ -१३) । आजेरन्तः । अन्तस्य को मध्यः । 'आज्यन्तः=
आजिः ' इत्यर्थे भवेत् ।

७ पृतनानां शत्रुसेनानामजनात्पराचोदनात् । ' पृतनानां जय-
नात् ' इति समीचीना व्युत्पत्तिः ।

८ ऋक्शाखाया पृतना = शत्रुसेना । पृतना जिगाय । पृतना-
जयो यत्र तत्र स्तूयते । पृतनाज्यं = शत्रुजयः । पृतनाशब्दो
न मनुष्यवाची ।

१० उत्तरपदविषय एव विकल्पः । ते = मनुष्याः । दुर्गविवरणं
प्रामादिकम् । मुद्ग + लः = मुद्गवान् ।

१४ मदनं गिलति । तस्मान्मदनादपि सुन्दरतरः ।

८०१ १२ ' तवतेर्वृद्धिकर्मणः ' ( १ ) दुर्गेण विवरणार्थं न पठितम् ।
' वा ' पदं ( २४ ) किमर्थम् । ' तविषी ' पदं ( निरु०
२ । २४ ) इत्यत्र किं न व्युत्पादितम् । किमर्थमत्र ।

| पत्रे | पङ्क्तिः |
|---|---|
| ८०२ | १० परुष्णि आ इति पदपाठः। यास्कमतेऽपि ( ८०१ । १८ )। दुर्गमते ' परुष्ण्या ' इत्येकं पदम् । ' आसेवध्वम् ' इत्यत्र ' आ ' उपसर्गो दुर्गमते कुत आगतः । |
| | ११ दुर्गमते ' आर्जीकीया ' एव ' मरुद्वृधा '। किंतु ते भिन्ने। हे मरुद्वृधे असिक्न्या सह । हे आर्जीकीये वितस्तया सुषोमया च सह । यास्ककृतोऽर्थः समीचीनः ( ८०१ । १९ )। |
| | १६ प्रवियुतं = प्रकर्षेण भिन्नम्। कृष्णजलत्वादन्याभ्यो भिन्ना यमुना। अत्र यकारास्तित्वात् ' यु मिश्रणे ' (धा०२१७) इति धातुः । स प्रपूर्वः स्यात्प्रविपूर्वो वा । गङ्गाद्याभिर्नदीभिर्युता भवति । अथवा । कृष्णजलत्वादन्याभ्यो वियुता भवति । ' मुना ' इत्यक्षरद्वयस्य कोऽर्थः का च व्युत्पत्तिः । गच्छत्यर्थः कथं ताभ्यामुद्भाव्यते ।' प्रयुवती गच्छतीति वा ' (८०१ । २१) इत्यत्र ' वा ' ' ऋजीकप्रभवा वा ' ( ३ ) इत्यत्र ' वा ' दुर्गेण न पठितः ( ८०२ । १२ )। |
| | २१ ' यद्भार्गवो होता भवति श्रायन्तीयं ब्रह्मसामँ सारस्वतीरापस्तदेवेन्द्रियं वीर्यं तेज आप्नोति वाचा वा एतमभिषिञ्चन्ति यमभिषिञ्चन्ति वाक्सरस्वती सारस्वतीरापो यत्सारस्वतीभिः सूयते यावत्येव वाक्तया सूयते ' ( मैत्रा० सं० ४ । ३ । ९ )। सरस्वत्या अद्भिरभिषेकेण राजेन्द्रियं वीर्यं तेज आप्नोति । अर्थवादः = इयं सरस्वत्या अपां स्तुतिः । स्तुत्यर्थमेवेयं कथा। |
| | २३ ' सरस्वतीं तृतीयम् ' इति मैत्रायणीसंहितापाठः । तृतीयं सरस्वतीं प्राविशत् । स एव शुद्धः पाठः । |
| | २४ शु + द्राविणी । अत्र ' तु ' व्यर्थम् । अथवा । शु =आशु । तु = तुन्ना । द्री = द्राविणी । |
| ८०३ | २ कुटिलानि = कुटिला वक्रा गतयः। 'पर्ववती भास्वती कुटिल०' इति महाराष्ट्रीयपाठः ( ८०१ । ३० )। नायं दुर्गसंमत इति तेनापठनाद्भाति । |
| | ४–९ बलदेवः सितो वासुदेवोऽसितः । |

पत्रं पङ्क्तिः

८०३ ६ यद्यपि सर्वा नद्यो मरुद्वृधास्तथाऽप्येकैव मरुद्वृधेत्यभिधीयते । दुर्गमते ' मरुद्वृधे ' इति सर्वासां विशेषणम् ।

८ वितस्ता विदग्धा इति पदे । अथवा । वितस्ताऽविदग्धा इति । ' तसु उपक्षये ' ( धा० ४ । १०६ ) । वि + तस्ता = विक्षीणा विदग्धा । ग्रीष्मे माऽतिक्षीणा भवेत् । अविदग्धा इति पदेऽकारः कुतस्त्य. । वितस्तैषा सदानीरा इत्यत्र किं प्रमाणम् । यास्ककाले ' तसु वृद्धौ ' स्यात् । वि + तस्ता = विवृद्धा । महती दूरे अस्याः कूले । विस्तीर्णेयं नदी ।

९ विदेघो माथवोऽग्निं वैश्वानरं मुखे बभार । अग्निर्मुखान्निष्पद्येतेति भीत्या पुनः पुनः पृच्छ्यमानोऽपि न किंचिदुवाच । ' तं त्वा घृतस्नवीमहे ' इत्यृग्भागश्रवणादग्निर्वैश्वानरो मुखादुज्जज्वाल । तं न शशाक धारयितुम् । सोऽस्य मुखान्निष्पेदे इमां पृथिवीं च प्राप । सरस्वतीमारभ्य प्राङ्दहन्नभीयाय । स इमाः सर्वा नदीरतिददाह नतु सदानीराम् । ब्राह्मणास्ता न तरन्त्यनतिदग्धाऽग्निना वैश्वानरेणेति ( शत० ब्रा० १ । ४ । ३ । १०–१४ ) ।

१० महाकूला महती दूरे कूले यस्याः सा । महाकुला ( २९ ) महती चासौ आकुला च । 'महाकूला' इति समीचीनः पाठः ।

१२ तद्धितेन = तद्धितवृत्त्या । ' ऋजूकप्रभवा ' इति ङ. घ. ठ. ड. पाठः । ' ऋजुक० ' इति थ. पाठः ( ८०२ । २८ ) । वृत्तौ सर्वेषु पुस्तकेषु ' ऋजीकप्रभवा ' ।

१४ ' विप्रापणाद्वा ' इदं ' विपाशनाद्वा ' इत्यस्यानन्तरं मूले ( ८०२ । ४ ) । दुर्गवृत्तौ ' उरुंजिरा ' इत्यस्यानन्तरं पठ्यते ( ८०३ । १८ ) ।

१८ उरुंजिरा = उरुमपि रोगं जीरयति । उरुजलेति दुर्गः ।

१९ शोभनाः सोमा यस्यास्तीरे सा ।

२१ स्यन्दते = गच्छति ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ८०४ | ७ | आप आपयित्र्य इति दुर्गस्य न यास्कस्य । तदर्थमेव 'घाः ता.' इति दुर्गकृतोऽन्वयः ( ८ ) । |
| | १० | 'भोजनाय च' चपदं किमर्थम् । |
| | १६–१८ | 'एता रोगं धयन्ति' इति कर्तरि कारके । 'रुग्णा एना धयन्ति' इति कर्मणि । 'ओषं धयन्ति' इति छ. त. द. पाठः (२३)। 'ओषधयन्ति' इति ग. च. ज. पाठे ( २६ ) अनुस्वारः प्रमादाद्गलितः स्यात् । ओषं दाहं धयन्ति । 'उषति' इति ग. च. ज. पाठः ( २७ ) इदं प्रामादिकम् । ओषं दोषं धयन्ति । अत्र दकारप्रश्लेषः । |
| ८०५ | ८–१० | निरुक्तमूले ऋक्पाठो न यजुःपाठः । यजुःशाखासु 'या ओषधयः प्रथमजाः' इति पाठः । 'मनै' इत्यस्य स्थाने 'मन्वे' इति च । यजुःशाखीया ऋगग्निचयने विनियुज्यते । ऋक्शाखीया यजमानस्य ज्वराद्युपतापशान्त्यर्थम् ( आश्व० श्रौ० ६ । ९ ) । |
| | १४ | जीवनं हेतुः प्रयोजनमस्य तज्जीवनहेतु ( अन्नम् ) । अन्नाभावे स्थितिर्जीवनं नास्तीत्यस्मात्कारणात् । देवानां जन्माऽऽपेक्षिकमन्नावलम्बित्वात् । |
| | २१ | धामशब्दस्य त्रयोऽर्थाः । |
| | २३ | 'सप्तशतं पुरुषस्य मर्मणाम्' ( निरु० १४ । ६ ) । 'सप्तोत्तरं मर्मशतम्' ( गर्भोपनिषत् ) । |
| ८०७ | १८ | पराचीव नश्यसि = अरण्ये प्रवसते जनायारण्यमपसरतीति भाति । तेन मनसि भीरुत्पद्यते । |
| | १९ | यथा जना ग्रामवार्तं पृच्छन्ति तथा । |
| | २० | भीरिव = भीसदृशो मनोविकारः । विन्दती३ ( ९ ) । प्लुतः प्रश्ने । |
| ८०८ | १ | पारिमधुरं पर्याप्तम् । अत्र पारिः सर्वतोभावे नेपदर्थे । |
| | ९ | आग्नेयमग्न्यधिष्ठितं सर्वं वस्तुजातं प्रकाशम् । श्रद्धया सर्वं प्रकाशं न किंचिदज्ञेयम् । एवं श्रद्धा = अग्निः । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ८०८ | २१ | 'प्रधानाङ्गे' ( ११ ) न पठितम्। |
| ८०९ | १ | शिरः श्रद्धारूपम्। |
| | १३–१४ | 'सौममेककपालं यस्य हिरण्यं नश्येद्यो वा हिरण्यं विन्देत्। अग्निर्वा अग्ने हिरण्यमविन्दत्। अस्यां वै स तदविन्दत्' ( मैत्रा० सं० २। २। ७ )। 'कण्टकः कन्तपो वा कृन्ततेर्वा' ( ८–९ ) न व्याख्यातम्। 'स्याद्गतिकर्मणः' (९) न पठितम्। |
| ८१० | १३ | 'प्रज्ञानानि' ( ७ ) न व्याख्यातम्। |
| | १८ | शोकैः = ज्वालाभिर्दाहैः। 'शुच ज्वलने' वेदे। |
| ८११ | ६ | 'इति सा निगदव्याख्याता' न व्याख्यातम् ( २ )। |
| | ८ | असाधारण्येन = न सर्वाः किंतु विशिष्टा देवताः। |
| | ८–११ | 'इन्द्राणीं च० मध्यमा' इति प्रतिपक्षः। '...पद्यते' ( ११—१३ )। इति दुर्गकृतं समर्थनम्। ने... समीचीनं समर्थनं यस्मादत्र तिस्रो देवता आहूयन्ते। |
| | ११ | मध्यमा = इन्द्राणी। इदमपि न समीचीनं समर्थनं यस्मादन्याख्या एतदुदाहरणं भाष्यकारमतेन। |
| ८१२ | १ | अश्वादय एतस्मिन्नेव खण्डे समाम्नाताः। अश्वादिः पूर्वो वर्गः। |
| | ४ | द्वित्वे नियमार्थं = द्विवचनयुक्ता ये शब्दास्ते अष्टावेवेति नियमार्थम्। |
| | ७–८ | मित्रावरुणावग्नीषोमाविन्द्राग्नी इत्यन्यान्यपि द्वंद्वानि सन्ति। तान्यत्र किं न समाम्नातानि। |
| | १० | केवलयोः = एकैकयोः। अस्मात्प्रकरणादन्यत्रापि। |
| | १३ | उषसः कालमध्ये समाम्नानम्। उषःप्रभृतीनामुषसा सह समाम्नानं यस्मात्तस्मात्तेषां प्राय एक एव कालः। 'उषसः कालमध्ये' इदमपूर्णं वाक्यम्। नायं मूलपाठो भवेत्। |
| | १३–१४ | पृथिवीस्थानद्युस्थानदेवतानामत्र समाम्नानेन महान्संकरः स्यात्। |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ८३३ | ८ | जनान्तेभ्यो हितश्च। ऐकदेशिकः = एकदेशे भवः। अल्पेभ्य एव हितः। |
| | १३–१४ | परः + जेता। परः + जनयिता ( रसानाम् )। |
| | १९ | प्राजेयिता ( रसानाम् )। प्रार्जयिता संपादयिता। |
| ८३५ | ४ | 'वर्षेणोषधी०' ( २८ ) इति क. ख. वर्जमितरेषु पाठः। वर्षेण + ओषधीः = वर्षेणौषधीः। |
| | ८ | 'भीतः' ( ८३४ । २३ ) 'दुष्कृतः' ( २४ ) 'महान्ह्यस्य वधः' ( २२–२३ ) न व्याख्यातम्। 'अप्यनपराधः' ( २३ ) मूले। [illegible] 'नपराधोऽपि'। |
| ८३६ | १० | 'चमन्त्यास्मिन्निति' [illegible] |
| ८३७ | २ | अवतम् = अव [illegible] पतितम् = अवाक् + अतितम्। |
| | २० | तस्य क्षेत्र[illegible] वर्षणरूपं पालनम्। तस्योपपत्तौ सार्थत्वे [illegible]माणकार्हति। यदि वर्षणं न स्यात्कथं जना ग्रामे व[illegible] [illegible]नति नाम्नः साफल्यं सार्थक्यम्। |
| | २२ | [illegible]स्य पतिः' इति मध्यमस्य विगृहीतं नाम। न क्षेत्रप[illegible]रति सामासिकम्। |
| ८३८ | [illegible] | क्षेत्रस्य पतिनोपनामि[illegible] वशीकृतानि प्रापितानि द्रव्याणि येषां तेषामस्माकं शार्कररस्तु। |
| | १२ | 'पोषायित्नु + आ' इत्यत्र 'आ' ( २ )। |
| | १४ | इदमाहरतेति परिचारकानाज्ञापयन्तः। |
| | १९–२० | 'इयं क्षेत्रस्य पत्न्यस्यामेव प्रतितिष्ठति' ( मैत्रा० सं० २। १। १ )। 'इयं क्षेत्रस्य पतिर्यत्क्षेत्रपत्योऽस्यामेव प्रतितिष्ठति' ( काठ० सं० ९। १७ )। 'इयं वै क्षेत्रं पृथिव्यस्यामदीनायामन्ततः प्रतिष्ठास्यामः' ( कौषी० ब्रा० ३०। ११ )। |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ८३८ | १९-२० | ' इयं वा अदितिः प्रतिष्ठा वा अदितिरस्यामेवैनं तदर्दीनाथामन्ततः प्रतिष्ठापयन्ति ' ( शाङ्खा० श्रौ० १६ । १० १६ ) । ' क्षैत्रपत्यं चरुं निर्वपेज्जनताभागत्येयं वै क्षेत्रस्य पतिरस्यामेव प्रतितिष्ठति ' ( तै० सं० २ । २ । १ ) । दुर्गेण पठितं वाक्यं कौषीतकिब्राह्मणस्थम् ( कौषी० ब्रा० ३० । ११ ) । तस्य वाक्यस्य न काम्येष्ट्या क्षैत्रपत्येन चरुणा वा संबन्धः । नापि तत्र ' क्षेत्रस्य पतिः ' इति शब्दौ वर्तेते । ' प्रतितिष्ठति ' इत्यस्य स्थाने तत्र ' अन्ततः प्रतिष्ठास्यामः ' । अत्र मैत्रायणीकाठकतैत्तिरीयसंहितास्थं वाक्यमनुरूपम् । पृथिवी ेत्रस्य पतिः । अत्र तु मध्यम. क्षेत्रस्य पतिः । तेन नेयमृग- ` । |
| | २. | ेवी मध्यमश्च क्षेत्रस्य पतिः । पृथिवी क्षेत्रस्य ५. गं पठति तद्भक्तिमात्रं रूपकं न वास्तवम् । |
| ८३९ | १६ | ' भुक्त्वेति न्यत्र ' इति ' ' वा पालयितारो वा ' ( ९ ) ' मृ० र्मा पूजाकर्मा वा ' ( ९ ) न व्याख्यातम् । |
| | २१ | अत एव = अस्मादेव । यदा. प्यजामिता । |
| | २२-२३ | सा संज्ञा निगमेन दीयते । |
| | २३-२४ | ' मरुद्भिर्वै व.णेन्द्रो वृत्रमहन्न ऋते चोऽशक्नोद्वीर्यं कर्तुं यन्मरुत्वतीयो ग्रहो गृह्यते मरुत्वतीयं शस्य. माध्यंदिनं सवनं वीर्यवत् ' ( मैत्रा० सं० ४ । ६ । ८ ) हो मरुद्देवताकः शस्त्रं च मरुद्देवताकम् । इदमत्र पुनरुक्त |
| ८४० | ६ | किमर्थं पुनरुक्तिरिति यदा समीचीनं विशिष्टं पाधान्यं न विद्यते तदा ' अस्यामे० ' इत्यादि प्रतिसमाधान. |
| | २० | समाने = एकस्मिन् । |
| | २१ | अविच्छिन्ना प्रसक्तस्यानुस्मृतिर्यस्मिन् । |

पत्रं पङ्क्तिः

८४० २४ पौनरुक्त्ये तत्पदं न योज्यम् । अयमेकः पक्षः । प्रयोगे वा तद्युक्तमन्त्रवाक्यमसाधु । अयमपरः । अथवा । पौनरुक्त्येन योज्यं युक्तं तत्पदमेवासाधु । अथवा । तत्संयोगात्तन्मन्त्रवाक्यमप्यसाधु ।

२६ ' तेन यथाकथाचहस्ताभ्यां णयतौ ' ( ५ । १ । ९८ ) । इति पाणिनिसूत्रम् । ' यथाकथाच ' इदं कष्टार्थेऽव्ययम् ।

२७ ' छन्दसि दृष्टानुविधिः ' इति व्याकरणमहाभाष्ये । वेदे सर्वं साधु न किंचिदपि व्याकरणनियमभङ्गादसाधु । छन्दसोऽनुरूपो नियमः कल्प्यः ।

२८ 'अर्थानुविधाने = स्वार्थानुविध नैव ' ( ट. ) ।

८४१ २ तदेतदवगतं भवति =

१० ' कामतो देवत ' इति सार्वत्रिकः पाठः । ' सपत्नघम् ' माणकायाम् । ' सपत्ननाशनरूपोऽर्थो देवता' इति

२३ नत किंतु मधुमान्सन्नपि मधु अविरतं न श्चोततीति विशेषः ।

२४ यरूपः सन्नपि हिरण्यमिव न दृश्यमानः ।

८४२ ३– यायावरः प्रयाणशीलः ( तै० सं० ५ । २ । १ सा० भा० ) । यायावर्यं प्रयाणं तस्य प्रतिपत्तिः प्राप्तिः स्वीकारो वा । प्रयाण आवश्यके वास्तोष्पतीयहोमः कर्तव्यः । यायावरः = प्रयास्यन् ।

४ गृहाद्गमनं गृहगमनम् ।

४–९ हीनं बलीवर्दैः । अन्वाहरेयुर्वास्तोष्पतीयामाहुतिं दद्युः । बलीवर्दैरयुक्ते शकटे होमं न कुर्युः । तादृशो होमो रुद्रस्य भवति न वास्तोष्पतेः । अग्निं रुद्रं क्रूरं भूतम् । अयुक्ते शकटे होमे

पत्रं पङ्क्तिः

८४१ ४–५ कृतेऽग्नौ रुद्रः क्रूरो भवति । 'सर्वेष्वेव युक्तेषु होतव्यं वास्तोष्पत्यं ह्येतन् । न हीनमन्वाहर्तवै रुद्राय हि तद्धीयते यद्धीनमन्वाहरेयुः रुद्रं भूतमन्वाहरेयुः' (मैत्रा० सं० १ । ९ । १३ )। दुर्गदत्तपाठे 'अन्वाहर्तवै' इत्यस्य स्थाने 'अन्वाहरेयुः'।

२१ गृहकारिका = गृहस्य रचना गृहारम्भे स्थालीपाकः कर्तव्यः।

२१–२३ 'वास्तोष्पत्यं पयसि स्थालीपाकं श्रपयित्वा तस्य जुहोति अमीवहा वास्तोष्पते वास्तोष्पते इत्येताभ्याम्' ( मान० गृ० १ । ६ । १९ )। सर्वेषु युक्तेषु अमीवहा वास्तोष्पते वास्तोष्पते इत्येते निगद्याऽऽहुतिं जुहोति' ( मान० श्रौ० ६ । २ )।

२२ हितास्तस्य वा यायावर्या बलीवर्दाः । तेषां प्रतिपत्ति. योगः । युक्तेषु बलीवर्देषु ।

८४२ २ सर्पादिरस्मद् । तस्य प्रतिपक्षो वैरी नकुलादिः ।

४ 'नः सुमुखः' ( ८ १९ ) न पठितम् ।

१० यस्माद्गुणो विकल्पेन तस्मात्

१२ अतोऽस्मात् ।

२० पौनःपुन्ये भृशार्थे च यङ् । तीति पुनः पुनर्भृशं वा भवति । बोभवीति सत्यं भवति भवत ।

२३ मुहूर्तं क्षणेन । मुहूर्तकालं प्रत्येकस्मिन्मुहू गे ।

२४ यागः सर्वदा भवति । न तत्र कालनिषेधः

८४४ ७–८ 'वसोष्पते नि रमय मय्येवास्तु मयि श्रुतम्' थ० सं० १ । १ । २ पाठः । 'उपप्रेहि वाचस्पते देवेन सह । वसुपते विरमय मय्येव तन्वं मम' इति मैत्रायणीस पाठः ( ४ । १२ । १ )।

| पत्रं | पङ्क्तिः |
|---|---|
| ८४४ | ११ 'इति सा निगदव्याख्याता' (८) न पठितम् । |
| | १२ निर्णेजनं शुद्धिः । |
| ८४५ | ५–६ यास्कभाष्ये प्रथमोऽर्धर्चः परोक्षकृत उत्तरः प्रत्यक्षकृतः । दुर्गः सर्वमेव प्रत्यक्षं मन्यते । तेन 'दीप्यते' इत्यस्य 'दीप्यसे' इति विपरिणामः । |
| | ७ प्रदेशं प्रति = प्रदेशे । 'दीदयत्' (८४४ । ३०) छ. त. द. पुस्तकेषु न विद्यते । तेन दुर्गेण न पठितम् । |
| | १० इन्द्रोऽपि प्रत्यक्षीकृतो दुर्गेण । तेन 'वर्धते' इत्यस्य 'वर्धेथाः' इति विपरिणामः । |
| | १२ 'इति सतः' (२–३) न व्याख्यातम् । |
| ८४६ | १ आज्यं पुरोडाशो वपा इति पशौ त्रय आहुतयः । प्रत्येकस्या याज्यानुवाक्ये । इयमनुवाक्या । |
| | ४ सर्वेऽपि भूतसंघा यमवशाः । देवाः (उद्धृतः १) कथं यमवशा भवेयुः । |
| | ८ मार्गेण = मरणहेतुना । |
| | ८–९ तमेव मार्गं तस्य प्राणिनः स्पाशयित्वा रुद्ध्वा । 'तस्कर इव' तस्य मार्गं बद्ध्वा रुद्ध्वा । अयं प्राणी जीवितादनन्तरं स्वर्गमार्गेणान्यमार्गेण वा गन्तुमिच्छति । तस्य तं मार्गं बद्ध्वा रुद्ध्वा । अनुपस्पाशयमानं = सूक्ष्मदृष्ट्या चिह्नयितारं निरीक्षमाणम् । |
| | ९ यमः सर्पो ज्वर इत्यादिर्मरणहेतुर्भवति । जीवनादुत्सर्पणस्यैते मार्गाः । स्पाशयतिश्चिह्नार्थः (निरु० ३९१ । २१) इत्यत्र । अत्र बन्धनार्थः । स्पाशय् इत्यस्याभ्यासो व्याकरणे निषिद्धः । तथाऽप्यत्र पस्पाशय् । अनु + पस्पाशयमानम् । अनुपस्पाशयमानं निरीक्षमाणम् । तत्र तस्मिन्नेव मार्गे । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ८४६ | ९–१० | उपयंस्यामि = नियन्त्रयिष्यामि हनिष्यामि । |
| | १३ | ' राध्नुहीत्यर्थः ' इत्यत्र ' इत्यर्थो ' व्यर्थः । |
| | १५ | ' प्र + वतः । उत् + वतः । नि + वतः ' इत्येतेषां शब्द-व्युत्पत्तिः । यास्कमते ' प्र + अवतः । उत् + अवतः । नि + अवतः ' इति । ' अवतः ' इत्यत्राकारस्य लोपः । ' उद्वतो निवतः ' एतौ शब्दौ व्युत्पत्त्यर्थमेवात्र पठितौ नार्थ-पूरणाय । ये जना मरणानन्तरं स्वर्लोकं प्रयान्ति तान्महतो बहुसंख्याकान्प्रवतो जनाननु पश्चात्परेयिवांसमनुगच्छन्तम् । पन्थानं मार्गं चानुपस्पशानं दर्शयन्तम् । |
| | १८ | यमशब्दप्रसङ्गेन । वैवस्वतो यमः । अग्निरपि यमः । अत्र समाननामधेयत्वम् । न शब्दसारूप्यम् । |
| | १९ | अग्निरपि यमनामा इति विचारो विषयः । इयं प्रतिज्ञा । |
| ८४७ | ११ | द्वौ पादौ यस्याः सा । एकस्या ऋचो द्वावेव पादौ । |
| | १२ | प्रातरनुवाकाश्विनयोर्विनियोगः । नायं विनियोग आश्वलायनसूत्रे विद्यते । विनियोगो लैङ्गिक इति सायणः । |
| | १६–१७ | ' महाप्रतीका भयप्रतीका दीप्तप्रतीका वा ' इति दुर्गस्वीकृत-मूलं स्यात् । ' त्वेषप्रतीका बलप्रतीका यशःप्रतीका ' ( १–२ ) न व्याख्यातम् । |
| | १८ | ' दधाति ' ( १ ) मूले ' ददाति ' वृत्तौ । |
| | १९ | ' इन्द्रेण सह संगतः ' ( ३ ) न व्याख्यातम् । |
| | २१ | यमौ इति व्यपदेशो भेदेन कथनम् । एको यम एव । द्वितीयोऽग्निः । विभावयितुम् = उपपादयितुम् । |
| ८४८ | १५ | ' कन्यानां ' ( ८४७ । ९ ) न पठितम् । |
| | १७ | यज्ञसंयोगेन = यज्ञे यजमानः पत्न्या सहाग्नौ व्रतमुपैति । तत्प्रधानाः = अग्निप्रधानाः । संपद्यन्ते जायाः । अग्नौ साक्षिणि दीक्षाव्रतम् । दीक्षासमाप्तिपर्यन्तमग्नौ पारतन्त्र्यम् । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ८४८ | १७ | व्रतोपगमनात् = 'व्रतमुपायानीति यजमानो ब्रवीति। सोऽग्निमेवाभीक्षमाणो व्रतमुपैति। अग्ने व्रतपते व्रतं चरिष्यामि' (शत० ब्रा० १।१।१।१–२)। 'व्रतोपयानात्' (२८) इति पाठान्तरम्। आव्रतविमोकात् = 'अथ संस्थिते विसृज्यते। अग्ने व्रतपते व्रतमचारिषम्' (शत० ब्रा० १।१।१।३)। 'हि यज्ञसंयोगेन' (८४७। ९–६) न व्याख्यातम्। |
| ८४९ | १ | प्रथमं कौमारकं कुमारीभावः सोमदेवताकः। |
| | १–२ | उपजायमानानि चारुताऽङ्गानां प्रविभागः स्वरसौष्ठवं च यस्मात्। |
| | २ | ईषदनङ्गेन समाहितं हृदयं यस्यास्ताम्। 'अनङ्गाङ्ग' इत्यत्र 'अङ्ग' शब्दस्य न किमपि प्रयोजनम्। |
| | ३ | वैवाहिके कर्मण्युपगतायाः। |
| | ८ | उपचयः = आधिक्यम्। |
| | १८ | 'पश्चाहुत्या' (८४७। ७) 'समृद्धम्' (२७) इत्यपपाठौ। |
| | २० | स्वेनोपकारेण = क्षीरदानेन। 'सायंवासाय' इत्युक्ते 'स्वेनोपकारेण' इत्यनवश्यम्। प्रान्ते लिखितं वृत्तावन्तर्भावितं स्यात्। |
| | २९ | मिन्वानः = प्रक्षिपन्। 'डुमिञ् प्रक्षेपणे' (धा० ५।४)। किं प्रक्षिपति। 'उदकेन संमिन्वानः' कोऽर्थः। उदकेन सर्वं क्लेदयन्नित्यर्थः स्यात्। |
| ८५० | १ | 'स्नेहति' (२३) इत्यपपाठः। |
| | ११ | 'अववृष्टे मित्रो जनान्यातयतीति पूर्वामाहुतिं जुहुयात्। अन्यां दुग्ध्वाऽथ पुनरग्निहोत्रं जुहुयात्' (मान० श्रौ० ३।२।८)। अवपतितेन वर्षेण दूषितं हविरववृष्टम्। (तै० ब्रा० |

पत्रं  पङ्क्तिः

८९० ११ सा० भा० ३ । ७ । २ ) । अग्निहोत्रे द्वे आहुती होतव्ये ( तै० ब्रा० सा० भा० ३ । ७ । २ ) ।

१६ ' शब्दं ' ( ९ ) ' जुहोतिर्दानकर्मा ' (८)न व्याख्यातम् ।

८९१ ४ पशवोऽपि कामकारतोऽङ्गानि प्रसारयितुं शक्नुवन्ति ।

६—७ प्राणसतत्त्वो बुद्धिसतत्त्वश्च । प्राणस्वरूपो बुद्धिस्वरूपश्च ।

१४ अभिषेकस्योपरिष्टादनन्तरम् ।

१८ कं = सुखम् ।

८९२ ७ अस्य मन्त्रस्य हिरण्यगर्भ ऋषिः । स आत्मानमधिकृत्य ' हिरण्यगर्भः समवर्तत० ' इति तृतीयपुरुषं कथं प्रयुञ्जीत । यतः स सर्वात्मा । सर्वे आत्मानो यस्य सः । तस्मादेक आत्मा हिरण्यगर्भमुद्दिश्य तृतीयपुरुषं प्रयुञ्जीत । नेदं पर्याप्तं प्रतिसमाधानम् ।

९ कल्पान्ते तस्या अवस्थायास्तिरोभावः । कल्पादौ चाऽऽविर्भावः। हिरण्यगर्भो महानात्मा बुद्धिरित्यर्थः । अविवक्षितावभिधानमभिधाता च यस्य । हिरण्यगर्भ एव मन्त्रस्याभिधाता । किंतु व्यवहारे मन्त्रः कंचित्पुरुषविशेषमभिधातृत्वेन गृह्णाति । विशिष्टार्थं चानुवक्ति । तस्मात्तृतीयपुरुषप्रयोगोऽकिंचित्करः । न तस्य कोऽप्यर्थः । मन्त्रा दृष्टा ननु कृताः ।

१२ कृतकत्वेऽहमिति प्रयोग आवश्यकः ।

२३ तस्मात् ' विधेम ' इत्यस्य हविःशब्देन नातिरन्वयः । हविःशब्देन सह यथाऽनुकूलोऽर्थो भवेत्तथा ' विधेम ' इत्यस्यार्थः कार्यः । ' विधेम ' = परिचरेमेति वस्तुतोऽर्थः । कृष्णला = गुञ्जा । शतगुञ्जं हिरण्यं चरौ निधेयं तेन शतायुर्भवति ।

२७ सर्वभूतानामन्तः प्रकाशस्तेन कृतः ।

८९३ २ हिरण्यगर्भः शरीराद्युपेतः ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ८९३ | ३ | परमात्मा सर्वान्विशेषान्त्यजति तस्मात्स हिरण्यः। परमात्मा क्षेत्रज्ञस्य हिरण्यगर्भस्य प्रकृतिः। हिरण्यगर्भः स्वतो हिरण्यमयः सुवर्णमयो गर्भः (१)। अथवा। सर्वेषां प्राणिनामयं हिरण्यमयो गर्भः। |
| | १० | ' अस्थिस्नायुमज्जानः ' पुरुषस्य गुणान्गृह्णाति ( निरु० १४। ९ )। |
| | ११–१२ | इतरेतरशक्तिग्रहणमेव रक्तशुक्रयोर्व्यतिषङ्गः। |
| | २३ | ' इति सा निगदव्याख्याता ' ( २० ) न व्याख्यातम्। |
| ८९४ | ९ | करिष्यमाणं क्रियमाणं च भूतम्। तस्य भूतस्य कर्ता। ' कृतं च ' किं न कथितम्। कृतस्यापि स एव कर्ता। |
| | १२ | अप्सु भवमाप्यम्। |
| | १३ | व्यूहेन = पृथक्पृथक्। धातू विचरन्नन्तःप्रविशन्। अकृतात्मभिर्यैरात्मा न वशीकृतस्तैरज्ञैः। |
| | १६ | वैश्वकर्मणो भागः। |
| | २० | विषुवान्नामैकविंशमहः। यागविशेषस्य नाम। |
| ८९५ | ३ | ' इन्द्रो विश्वकर्माऽभवत्प्रजापतिर्विश्वकर्माऽभवत् ' ( ऐ० ब्रा० १८। ८ )। एवं विश्वकर्मणोऽनुभावः पराक्रमः सर्वस्थानेषु वर्तते। तथापि लिङ्गबहुत्वात्स मध्यमः। |
| ८९६ | ९ | अभिसंपन्नानि = प्राप्तवन्ति। तद्भावं गतानि। ' इष इच्छायाम् ' ( धा० ६। ६० ) ' इष गतौ ' ( धा० ४। २१ ) ' इष आभीक्ष्ण्ये ' ( धा० ९। ५३ ) च। इष्टकान्तयोः को भेदः। तथा क्रान्तगतयोः। इषधातोर्मतनतार्थौ कथमुद्भवतः। तेषां भूतानां तेषु भूतेष्विष्टानि० नतानि वाऽद्भिः सह संमोदन्त इष्टानि भूतानि ( १४–१९ )। |
| | १२–१३ | भावना = संस्कारः ( ट० )। तस्य विश्वकर्मणः परिज्ञानं तस्मिञ्श्रद्धा तस्योपासना। |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ८९६ | १३ | तेन विश्वकर्मणा सह । |
| | १४ | परियुताभिः = परितो वहद्भिः । |
| | १४–१५ | सम् = तेन कर्मणा समानम् । |
| | १६ | सप्तशब्दो न कुत्रापि व्याख्यातः । सप्तऋषयः = सप्तर्षिसंज्ञकस्तारकासमुच्चयविशेषः । 'ऋष आकर्षणे दर्शने वा' 'ऋषी गतौ' ( धा० ६ । ७ ) । नत्वाकर्षणे दर्शने वा । |
| | १६–१७ | 'तत्र संमोदन्ते यत्रैतानि सप्तऋषीणानि ज्योतींषि' इति यास्ककृतोऽर्थः ( ८९९ । ११–१२ ) । तेभ्यो ज्योतिर्भ्यः परः । तानि ज्योतींष्यादित्येन संमिलन्ति । |
| | १७ | अधिदैवते 'तेभ्यः पर आदित्यस्तान्येतस्मिन्नेकं भवन्ति' ( ८९९ । १२ ) न व्याख्यातम् । दुर्गेण कृतोऽर्थो निरुक्तमूलात्किंचिद्भिन्नः । |
| | १८ | एकं सन्तं बहुधा विश्वमाहुः । परे = देवतासतत्त्वविदः । 'यत्र परे सप्तऋषीनेकमाहुः' ( ८९९ । ७ ) इति ऋगन्वयः । अस्य दुर्गेण द्वे वाक्ये कृते । |
| | २४ | विज्ञानसतत्त्वमात्रं = केवलं विशेषरहितं विज्ञानम् । तच्च सविशेषविज्ञानस्य बीजम् । |
| ८९७ | १ | ततः परमात्मनः प्रच्युताः । बिभ्रत इत्यादि वाक्यमपूर्णम् । बिभ्रतीति विपरिणामेन पूर्णं भवेत् । |
| | २ | यावद्वेदान्तशास्त्रेण ताद्भाव्यं परमात्मैकीभावः शिष्यत उपदिश्यते तावत् । उपदेशात्प्रागित्यर्थः । |
| | ३–४ | शरीरं क्षेत्रं परमात्मा क्षेत्रज्ञः । कश्चिज्जीवात्मा स्वविशिष्टविज्ञानशक्त्याऽधिकां हिरण्यगर्भावस्थामनुभवति । हिरण्यगर्भावस्थामनुभवन्मन्त्रेण व्याख्यायत इति तद्व्याख्यानमधिदैवमित्युच्यते । |
| | ६ | महतीमधिदैवावस्थामनपेक्ष्य । |
| | ६–७ | शरीरे शरीरे वर्तमान आत्मा विश्वकर्मा परमात्मैवेत्युपदेशः । |

पत्रं पङ्क्तिः

८९७ ६–७ अस्य विश्वकर्मणस्तद्व्याख्यानमध्यात्मम् । इमानि त्रिचतुराणि वाक्यान्यपूर्णानि गलितशब्दानि भवेयुः ( १–७ ) ।

९ वायोर्यः क्रियापरिस्पन्दः प्राणस्तस्य तत्कृतत्वात् ।

११ सर्वप्रज्ञातः = सर्वैः प्रज्ञातः । सर्वेषां प्रज्ञातेतीष्टम् । 'सर्वप्रज्ञानः' सर्वप्रज्ञाता' वा पाठः स्यात् ।

१४–१९ विक्षेपः = विभागोऽनेकधाकरणम् ।

१९–१६ विक्षिप्तविहितानां च तेषामिन्द्रियाणाम् । भिन्नभिन्नशक्तिभिरिन्द्रियाणि विक्षिप्तानि विभक्तानि । अस्येन्द्रियस्यायं विषय एवं विहितानि च ।

१६ संदर्शयिता = तान्विषयानिन्द्रियेभ्य आत्मा सम्यग्दर्शयति । विषयाणां सम्यग्ज्ञानं यदिन्द्रियैरवाप्यते तदात्माधीनम् । विक्षिप्तेभ्यो विहितानां तद्योग्यानां विषयाणाम् । परमात्मेन्द्रियेभ्यो विषयान्दर्शयति ।

१७ तदधिष्ठितानां = तेन परमात्मनाऽधिष्ठितानाम् । विषयालोकाय विषयप्रत्यक्षायेन्द्रियेषु सामर्थ्यमुपजनयत्यात्मा ।

१८ तेषु तेष्विन्द्रियादिषु परमात्मनः शक्तिविक्षेपात् । पूर्वस्मिन्नर्थे 'तेषाम्' ( ८९९ । ९ ) इत्यनेन सर्वनाम्ना भूतानि न संनिहितानीति विज्ञाप्यते। अत्र तु 'एषाम्' ( ८९९ । १४ ) इत्यनेन संनिहितानीन्द्रियाणि विज्ञाप्यन्ते । तथैव 'तेभ्यः पर आदित्यः' ( ८९९ । १२ ) इत्यत्र ज्योतींषि दूराणि । 'एभ्यः पर आत्मा' ( ८९९ । १३ ) इत्यत्रेन्द्रियाणि संनिहितानि । तथैव 'यत्रैतानि' ( ११ ) 'यत्रेमानि' ( १६ ) इत्यत्र स एव भेदः। एतस्मिन्नात्मनि तानीन्द्रियाणि। अत्रेन्द्रियेभ्य आत्मा संनिहिततरः । 'यत्रैतानि' अयं प्रामादिकः पाठः स्यात् । मूलपाठः 'यत्र तानि' इति भवेत् । एषामिन्द्रियाणामिष्टानि जीवात्माख्यानि सत्त्वानि तत्र संमोदन्ते यत्रेमानि० इत्यादि ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ८९७ | १८–२० | क्षेत्रज्ञविभूतीनामिष्टानि यानि जीवात्माख्यानि सत्त्वानि तानि। |
| | २० | सप्तेन्द्रियाणि = पञ्च ज्ञानेन्द्रियाणि मनो बुद्धिश्च । |
| | २०–२१ | ऋषीणानि = विषयान्द्रष्टॄणि । ऋषीणानि = द्रष्टॄणि । इन्द्रियाण्येव ज्योतींषि । |
| | २१ | अध्यात्मे ' व्याप्ता '( ८९९ । १३ ) ' एभ्यः पर आत्मा तान्येतस्मिन्नेकं भवन्ति ' ( १६—१७ ) । उभयार्थनिरूपणे ' क्रान्तानि वा गतानि वा ' ( १० ॥ १९ ) न व्याख्यातम् । |
| | २३–२४ | ' यदुपविष्टम्भात् ' इदं दुर्बोधम् । ' यदवष्टम्भात् ' इति पाठः स्यात् । अथवा । उपविष्टम्भः = अवष्टम्भः । शक्तिरेवान्नम् । तस्यान्नस्यावष्टम्न आश्रयः । |
| ८९८ | ३ | स्वधारूपा शक्तिः । स्वधाऽन्नम् । सर्वेभ्यो भावेभ्यः परम् । |
| | ४ | मन्त्रः परमेष्ठिन आर्षम् । |
| | ६ | यावत्संभवस्तावन्मन्त्राणां विषयो योज्यः । योऽर्थः संभवति स उत्पाद्यः । |
| | १० | इतिहासः = इतिवृत्तम् ( ११ ) । |
| | ११ | परस्य विश्वकर्मणः कृतिः । सैवार्थवादः । परकृतिवर्णनरूपोऽर्थवादः । |
| | १३ | दिष्टौ = विधौ । उदितो विवक्षितः ( ट. ) । विधौ चोदनायां योऽर्थो वक्तुमिष्टस्तस्य समर्थनाय । अर्थवादस्य प्रयोजनं विध्युदितार्थप्रतिपात्तिः । |
| | १९ | ' विश्वकर्मा ह भौवनः ' निरुक्तमूले ' ह ' ( ८९९ । १७–१८ ) नास्ति । ' विश्वकर्मा ह भौवनोऽन्तत ईजे ' ( शाङ्ख० श्रौ० १६ । २ ) । तेन हैतेन विश्वकर्मा भौवन ईजे ' ( शत० ब्रा० १३ । ७ । १ । १४ ) ' सर्वं सर्व- |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ८९८ | १५ | मेधः ' (शाङ्ख० श्रौ० १५ । १५ )। यथोदितं सर्वनामकं सर्वमेधनामकमिदं कर्म । संबन्धदर्शनेन = अस्य सर्वैर्वस्तुभिः संबन्धं दृष्ट्वा । यथोदितं = सर्वमेधवर्णनं शाङ्खा० श्रौ० १५ अध्याये । शत० ब्रा० १३ । ७ । १ । अध्याये च । |
| | १६ | ' सर्वं सर्वमेधः ' ( शाङ्खा० श्रौ० १५ । १७ ) इत्यनेन सर्वस्य सर्वात्मकत्वम् । वैश्वकर्मणीमवस्थामात्मन्युन्नीय = अहं विश्वकर्मेति निश्चित्य । |
| | १७ | ' भूतेषु चाऽऽत्मनः ' ( होता ) इति पाठ इष्टः। होता = यो जुहोति । भूतान्यात्मनि जुहोत्यात्मानं च भूतेषु । ' हन्त सर्वेषु भूतेष्वात्मानं जुहवानि ' ( शा० श्रौ० १५ । २ )। ' भुवनानामात्मनि होता भूतेषु चाऽऽत्मानम् ' ( ८५५।१८ ) इदं निरुक्तमूले न वर्तते । |
| | १८ | ' सर्वमेधे सर्वाणि भूतानि जुहवांचकार ' ( ८५५ । १८ ) न व्याख्यातम् । |
| | २० | सर्वमेधसंपत् दर्शनेन श्रुत्या शास्त्रेण वा कृता । ' दर्शनकृतः ' ( २९ ) इति पाठे दर्शनं करोतीति दर्शनकृत्तस्य । यः शास्त्रं जानाति तस्य । सर्वेषु कर्मसु सर्वमेधः संपद्यते । |
| | २०–२१ | ' गार्हपत्येऽधरारणिमनुप्रहृत्याऽऽहवनीय उत्तरारणिमात्मन्यग्नीन्समारोप्यारण्यं प्रव्रजेत् ' ( शा० श्रौ० १६ । १ )। |
| | २१ | ' अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ' ( शत० ब्रा० ३ । २ । १ । ३३–३६ ) अनेन = सायंहुतेन हविषा । |
| | २१–२६ | कस्माद्ब्राह्मणादिदमुद्धृतमिति न ज्ञायते । तेन तदर्थोऽपि न स्पष्टः । |
| | २२ | सर्वं हविरग्निमनुसरति । सर्वमग्निमनु । |
| | २३ | अनेन सकृद्धुतेन हविषा सर्वं हुतं भवति । तेनेष्ट्वा = तेन हविषा । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ८९८ | २४ | तावत् = तथैव । यस्यैते आहुती = यः सायं प्रातश्च जुहोति । ' द्वे आहुती ' ( शत० ब्रा० २ । ३ । १ । २२–२९ ) । |
| | २९ | न बद्धम् = अनन्तम् । यावज्जीवम् = जीवन्नेव । एतयोर्देव-तयोः = एतयोराहुत्योः । अन्यतरामाहुतिमनु दत्त्वा स बहूनि नबद्धान्यनन्तान्याप्नोति । अग्निहोत्रात्सर्वप्राप्तिः । आनन्त्यप्रा-प्तिरित्यर्थः । |
| ८९९ | १ | मेधे = कर्मणि । यथाऽग्निहोत्रे । सर्वः = न कश्चिद्विशिष्टो जीवात्मा । यजमानस्य बुद्धिपुरःसरं सर्वात्मना तादात्म्यम् । |
| | १–२ | सर्वेण हविषा । हविरपि सर्वम् । सर्वस्मिन्नग्नौ न विशिष्टे । सर्वस्यै देवतायै । सर्वार्थे = सर्वकामावाप्त्यर्थम् । आत्मानं हुत्वा । सर्व एतादृशेन तादात्म्येन वस्तुतः सर्वे भवति । आदौ भेदेऽप्यन्ते न कोऽपि भेदः । |
| | २ | समासार्थः ' स यत्मायम्० ' इति ब्राह्मणवाक्यस्य । |
| | ३ | दर्शनतः = वैदिकवचसा । |
| | ३–४ | इतः सर्वमेधोऽहीनः । सर्वमेध इति निरूढा संज्ञा । तत्र सर्वप्रा-णिनां होमो नाऽऽत्मनः । |
| | ४ | ' अश्वमेधस्त्रिरात्रो यज्ञक्रतुः ' ( शा० श्रौ० १६ । १ । २) । ' अश्वमेधादनन्तरं पुरुषमेधोऽवशिष्टकामावाप्तये ' ( शा० श्रौ० १६ । १० । २ ) । ' तस्मिन्त्सर्वमाश्वमेधिकं कर्म ' ( शा० श्रौ० १६ । १० । ४ ) । ' तदनन्तरं सर्वमेधः । तस्मिन्पौरुषमेधिकं पुरस्तात्कर्म ' ( शा० श्रौ० १६ । १९ । ७ ) । ' पौरुषमेधिकं पञ्चममहः ' ( शा० श्रौ० १६ । १९ । ९ ) । ' तत्र पुरुषमालभन्ते ' ( शा० श्रौ० १६ । १९ । १० ) । ' वाजपेयः षष्ठम् ' ( शा० श्रौ० १६ । १९ । ११ ) । ' आप्तोर्यामः सप्तमम् ' ( शा० श्रौ० १६ । १९ । १२ ) । ' तत्र सर्वान्मेधानालभन्ते ये केच प्राणिनः |

पत्रं पङ्क्तिः

८९९ ४ ( शा० श्रौ० १६ । १९ । १३ ) । ‘ अहीनः ’ इत्या-
ङ्गिरसादियज्ञानां नाम ( आ० श्रौ० १० । २ ) । ‘ अथा-
हीनाः ’ ( आ० श्रौ० १० । १ ) । अश्वमेधे ‘ त्रीणि
सुत्यानि भवन्ति ’ ( आ० श्रौ० १० । ८ ) । इति त्रीण्या-
श्वमेधिकानि सुत्यानीत्यर्थः स्यात् । निरूढसंज्ञे सर्वमेधेऽहीने
त्रीण्याश्वमेधिकानि सुत्यानि पञ्च पौरुषमेधिकानि सुत्यानि
वाजपेयाप्तोर्यामौ च यामावन्तर्भवन्ति ।

६ आत्महोमस्याविधानात् = ‘ आत्मन्यग्नीन्त्समारोप्यारण्यं प्रव्र-
जेत् ’ ( शा० श्रौ० १६ । ६ । ३–४ ) ।
अनेनाऽऽत्महोमो विहित इति भाति । कदाचिदिदं दुर्गपुस्तके
नाऽऽसीत् । ‘ आत्महोमस्य विधानात् ’ ( २६ ) इति पाठ
आत्महोमः कथमनुपपन्नः ।

७ सर्वभूतानि = विशेषान् = विशिष्टात्मनः = जीवात्मनः ।

८ पश्यन् तत्त्वम् । आत्मज्ञानीत्यर्थः ।

८–९ ‘ स्वयमेव जुहाव ’ इत्यन्वयः ।

१८–१९ होता कथमृषिः । यथा ऋषिर्मन्त्रान्पश्यति तथा होता द्रव्य-
गुणकर्मदेवतायाथार्थ्यं पश्यति तस्मात् ।

८६० १ मुख्यस्य निष्प्रपञ्चस्य पारमार्थिकरूपस्य च्छादयिता प्रजो-
त्पत्त्या । निष्प्रपञ्चं प्रपञ्चेनाऽऽच्छादयत् ।

२ तथा मुख्यो निष्प्रपञ्चः सन् ।

३ प्रजापतिः प्रयोगे सर्वमेधेऽवर्तत फले च । फलं प्राप्तवान् ।

१६ प्रयोगावस्था फलावस्था च=प्रयोगः सर्वमेधानुष्ठानम् । सैवावस्था ।
विश्वकर्मा सर्वमेधमनुष्ठितवान्सर्वमेधयागफलं च लब्धवान् ।
एतयोर्द्वयोरवस्थयोर्वर्तमानो विश्वकर्मोच्यते यजस्वेत्यादि ।

१८–१९ हविषि सर्वमेधो वर्तत इति वेदानुज्ञया मतिः कार्या । सर्वमेध
ईदृशेन दर्शनेनानया मत्या संपद्यते ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ८६० | १९ | अनया बुद्ध्या विश्वकर्मा सत्यमेव विश्वकर्मा भवति । मूले ' वर्धयमानः ' ( ११ ) । वृत्तौ ' वर्धमानः ' । |
| | २१ | दर्शनकृते = सर्वमेधसंपद्दर्शनेनोत्पादिते । |
| | २२ | ' जनासः ' ( २६ ) इति छ. त. द. पाठो दुर्गेण स्वीकृतः । |
| | २३ | तव समानपतित्वमिच्छन्ति । यथा ज्ञानिनां पतिस्त्वं तथाऽज्ञानिनामपीति त्वामर्चयन्ति । |
| ८६१ | ४ | अधिभूतं प्रधानं येषां ते । ' त्वष्टा विश्वकर्मा ' एते नामनी कलाभिज्ञं भौतिकवस्तुषु कर्मकारिणं देवं दर्शयत इति पौराणिका मन्यन्ते । त्वष्टा तक्ष्णोति । ' विश्वकर्मा ' इत्यपि तस्यैव नाम । |
| | ९ | आध्यात्मिकेऽर्थेऽपि सर्वज्ञानं सामान्यम् । त्वष्टेत्यादीनि ब्रह्मणोऽपि नामानि । तत्र न कोऽपि विरोधः । देवानां नामान्यादौ मनुष्यनामान्यासन् । |
| | ९–१० | ' तीर्णे ' इत्यस्मात् ' त ' ' अन्तरिक्षे ' इत्यस्मात् ' अरु ' ' क्षियति ' इत्यस्मात् ' क्ष्यः ' । |
| | १०–११ | ' तूर्णमर्थं रक्षत्यश्नोतेर्वा ' ( ८—६० । १४ ) इति मूले । ' तूर्णं रक्षत्यश्नुते वा ' इति दुर्गस्वीकृतपाठः । ' तूर्णम् ' इत्यस्मात् ' त ' ' अर्थम् ' इत्यस्मात् ' अर ' ' रक्षति ' इत्यस्मात् ' क्ष्यः ' ' अश्नुतेर्वा ' इत्यस्मात् ' क्ष्यः ' । |
| | २३–२४ | वाजिनं = भृशमन्नवन्तमिति यास्कः ( १६ ) । दुर्गकृतोऽर्थो भिन्नः । तेन ' भृशमन्नवन्तम् ' इति दुर्गपाठे न स्यात् । |
| | २४ | गतं = ज्ञातम् । ' जूतिर्गतिः प्रीतिर्वा ' ( १६ ) ' सहस्वन्तं ' ( १७ ) ' पृतनाजितं ' ( १७ ) ' तार्क्ष्यमिह ' ( १८ ) ' इति ' ( १८ ) न व्याख्यातम् । |
| ८६२ | ८ | किंतु तेन गरुत्मताऽस्य तार्क्ष्यस्य वर्षकर्मासमानम् । तेनायं पक्षिराजस्तार्क्ष्यः । |
| | २०–२१ | मद्यःशब्दस्याद्यात्वेत्यादयोऽर्थाः । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ८६२ | २१ | ' शवसा ' ( १३ ) ' सहस्रसानिनी शतसानिनी ' ( १४–१९ ) ' सा ' ( १९ ) ' एनां ' ( १९ ) ' प्रयुवतीमिव ' ( १९ ) वृत्तौ न पठितम् । |
| ८६३ | १–४ | तेषां ब्राह्मणादीनामनुग्रहः पूर्वः । यथा सूर्यो ज्योतिषाऽपस्तनोति तथेन्द्रो बलेन पञ्च कृष्टीरविलम्बेनैवेतस्ततः क्षिपति नाशयति । |
| | ४ | हविषा विधेम = हविर्दद्म इति हविषेत्यस्य हविरिति विपरिणामः। कस्मा इति संप्रदानार्थे चतुर्थी । |
| | ५ | अवैधुर्याय = अवैयर्थ्याय । |
| | ५–६ | उपमानं ज्योतिषेति तृतीया । उपमेयमप इति द्वितीया । द्वितीयान्ततृतीयान्तयोः शब्दयोः कथमुपमानोपमेयभावः । |
| | ७ | सहस्रं शतं वा बहुसंख्याकं धनं ददातीति सहस्रसाः शतसाः । |
| | ९ | यथेषुसदृशीं युवतिं तरुणी न वारयन्ते तथा । एवम् = ईदृशी । अतितराम् । |
| | ११ | इषुः किमर्थं युवतिरित्युच्यते । |
| | १४ | ' वधकर्मणः ' ( ८६२ । १६ ) दुर्गस्वीकृतमूले नाऽऽसीत् । ' मन्यन्त्यस्मादिषवः ' ' मन्युंत्यस्मादिषवः ' वेति च (८६२ १६--१७ ) । अस्य कोऽर्थः । ' मन्यन्ति ' इति नैव चतुर्थगणस्थमनधातो रूपम् । किंतु ' मन्यन्ते ' इत्येव । |
| ८६४ | २ | श्येनः अभिचारयागः । अजिर एकाहः । आदिशब्देनेषुवज्रयागौ निर्दिष्टौ । |
| | ३ | ' मन्यो मरुत्वः ' ( ६ ) इतीन्द्रस्य नामनी । |
| | ४ | आरुजन्तः = आरुह्य रुजन्तः ! 'आरुह्य' इत्यस्य स्थाने ' समारुह्य ' वृत्तौ । |
| | ५ | धृषिता इति पदं नत्वधृषिताः । |
| | ६ | संशिश्यमानाः = तीक्ष्णीकुर्वन्तः । |

| पत्रं | पङ्क्तिः |
|---|---|
| ८६४ | ८ नरः = मरुतो न तु मनुष्यः। |
| | ९ 'संनद्धाः कवचिन इति वा' (८६३। २२) न व्याख्यातम्। कवचेनाग्निरूपाः। संनद्धा अत एवाग्निरूपाः। |
| ८६५ | ३ 'नः' (८६४। १८) 'वचनानि' (१८) न पठितम्। |
| | ६ 'सविता सर्वस्य प्रसविता' (८६४। १९) इति भाष्ये। 'सविता व्याख्यातः' इति दुर्गः। |
| | १९ 'हैरण्यस्तूपः' इत्यस्य स्थाने ग. च. ज. पुस्तकेषु 'आङ्गिरसः' (३०)। |
| | २१ 'अरमयत्' (१२) 'अतूर्णे' (१४) न पठितम्। |
| ८६६ | १ 'अनारम्भणे' इत्यस्य स्थाने 'अनालम्बने' इति पाठः समीचीनः। |
| | २ 'सौवर्णीं' इति विशेषणस्य किं प्रयोजनम्। 'अतिजडाम्' इत्यर्थः स्यात्। 'आभूतसंप्लवान्' (२६) अत्र 'त्' स्थाने 'न्' प्रामादिकः। |
| | ४ उपावृत्तं = भूमौ पतितम्। अनायासेन रजस्तस्मादपनेष्यन्नुपावृत्तमश्वं यथाऽश्वबन्धो धूनुयादित्यन्वयः। |
| | ५ धूयत इति धुनिर्मेघः। |
| | ९ 'सविता समुदितारम्' (८६५। १४) इति न व्याख्यातम्। यस्मात्सवितुः समुदित्रा मेघेन संबन्धस्तस्मात्सविता मध्यमः। समुदितृ=सम्+ उत्+इतृ। इधातोस्तृजन्तं रूपमेतृ नत्वितृ। समुदेतृ। समुद्रं=सम्+उद्रम्=उदकसंघटयितारम्=उदकबन्धितारम्(९)। अन्तरिक्षमेव समुद्रः। धुनिः=कम्पयिता। अतूर्ते=अनवकाशे। अधुक्षदुदकानि। |
| | १३ कः स्तुतः। स्तुतः= स्तवः (दुर्गः)। |
| | १६ 'तदभिवादिन्येषर्ग्भवति' इत्यस्य 'आदित्योऽपि सवितोच्यते' इत्यनेन संबन्धः (१२)। 'तथा(१३) प्रोवाच' (१६) इदं |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ८६६ | १६ | प्रक्षिप्तमिव भाति । दुर्बोधं च । अर्थम् हिरण्यस्तूपस्य पुत्रो न हिरण्यस्तूपः । हिरण्यस्तूपो हिरण्यरूपो हिरण्यव्रतो वा । |
| ८६७ | १ | 'अन्यकल्पीनः' एतत्प्रामादिकं रूपम् । 'आन्यकल्पिकः' इति साधु । |
| | १–२ | हिरण्मयः स्तूपो हिरण्मयः स्तूपोऽस्येति वा (८६६।२२–२३) ' स्तूपः स्त्यायतेः संघातः' (२३) । ' आङ्गिरसः' (२४) न व्याख्यातम् । 'जुह्वे' (२४) न पठितम् । |
| | १९ | तृतीयमण्डलद्रष्टा विश्वामित्रः । अस्य सूक्तस्य द्रष्टा प्रजापतिः । तेनायं प्रजापातीर्विश्वामित्रपुत्रः । |
| | २० | 'सर्वरूपः पोषति प्रजा रसानुप्रदानेन' ( १३–१४ ) सर्वाणि भूतानि' (१४) 'महत्वास्मै' (१५) 'प्रज्ञावत्त्वं' (१५)'अपि वा' ( १५ ) 'आदिलुप्तं (१६) न व्याख्यातम् । 'इमाः' (१४) इत्यस्य स्थाने दुर्गवृत्तौ 'एनाः' ( ८६८ । १ )। |
| ८६८ | ५ | 'अस्मै' (८६७.१५ )=त्वष्ट्रे । अस्य त्वष्टुरसुरत्वं महदित्यर्थः स्यात् । |
| | १२ | 'अपि वा' (८६७ । १५) इत्यस्य न किमपि प्रयोजनम् । प्रक्षिप्तं स्यात् । दुर्गस्वीकृतपाठे 'अपि वा' नाऽऽसीदिति भाति । 'अस्मै' इत्यपि तथा । |
| | १४ | व्यक्तेः सर्वं निरर्थकम् । |
| | १४–१५ | प्रज्ञायां केचिदर्था अभिव्यक्ता इतरेऽनभिव्यक्ताः । |
| | १५ | 'असुरत्वमादिलुप्तं' (८६७ । १६) दुर्बोधम् । |
| | १९–२० | वायुः 'वा गतिगन्धनयोः' ( धा० २ । ४० ) इत्यस्मात् । अथवा । वेतेर्गतिकर्मणः । अथवा । इ गतौ । वकार उपजनः । |
| ८६९ | ७ | 'तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः ' ( अमरः २ । ८ । २९ ) । |
| | १० | 'प्रवर्धय' इत्यस्य स्थाने 'प्रवर्धयतु' इति महाराष्ट्रपाठः (२९)। |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ८७१ | १७ | भाष्ये 'चोदयत्' ( ७ ) नतु 'चोदयति' । |
| ८७२ | ७ | जरया=वृद्ध्या । |
| | १९ | भाष्ये 'चिरलब्धः' ( ८७१।११-१२ ) वृत्तौ 'अचिरलब्धः'। |
| | १७ | प्राणानित्यादिपञ्चमाङ्कपाठभेदेषु च. पुस्तके 'प्राणान्० मा त्वमुत्क्रामीः' ( २९ ) इत्यादि वर्तते । तत्र 'मा त्वमुत्क्रमीः' इति शब्दा बृहदारण्यकोपनिषदि ( ६।१।१३ ) वर्तन्ते । तेषां प्रयोजनम् ( ८७३।८ ) इत्यत्र । नात्र । |
| ८७३ | १० | 'प्रवर्धय च नः' ( ८७२।२९ ) 'रन्धय च' ( २९ ) न पठितम् । |
| | १०-११ | अस्माकम् ( अनुगृहाण ) अस्मान् । |
| | १४ | असुनीतिर्हविर्न भजते । तस्मै हविर्न दीयते । अतो घृतशब्दोऽत्रोदकवाची । |
| ८७४ | २० | 'हि'(१४)न व्याख्यातम् । 'ज्योतिषो वोदकस्य वा' ( १७ ) इति भाष्ये । वृत्तौ 'वा' स्थाने 'च'कारः (८७५।७)। आयुः ज्योतिः स्यादुदकं वा स्यादिति भाष्यार्थो भवेत् । दुर्गमतेऽयं श्लोकः शब्दो मध्यमस्य ज्योतिष उदकस्य च । |
| ८७५ | ५ | 'बोधयत्यस्मृतः' इत्यपपाठो भवेत् । अस्मृतो न स्मृतोऽहं त्वयेत्यायुं बोधयतीत्यर्थः स्यात् । भाष्ये 'बोधयन्' (८७४।१६ ) इति न 'बोधयति' इति । 'बोधयत्यस्मृत इति' प्रक्षिप्तं भाति यस्मात् 'मनुष्यस्य कर्णौ' इत्यन्वयः । |
| | ७ | सतत्त्वः=तत्त्वतः । |
| ८७६ | ७-८ | अभिमतफल० + अभिमतकाम० = अभिमतफलकाम० इति ग. च. ज. पुस्तकेषु द्वौ पाठौ मिश्रितौ ( २६ )। |
| | ९-१० | अस्मानाकम्पितहृदयान्करोति । |
| | १३-१४ | योऽस्मान्प्रति पापमतिस्तं पापमतिम् । |
| | २३ | 'स्रवेदिति० नष्टमित्येवं' ( २८-३० ) ग. च. ज. पुस्तकेषु ( १६-१८ ) इत्यत्र वर्तमानमप्यत्राधिकं प्रान्तभागे विवरणमिति लिखितं वृत्तौ लेखकप्रमादादन्तर्भावितं स्यात् । |

| पत्रं | पङ्क्तिः |
|---|---|
| ८७७ | ८–९ 'परुषि० सुखात्किल' दुर्बोधम्। पाठावपि न समीचीनौ (२९)। |
| | ९ 'तस्य शेषोऽस्येति वा' इदमपि दुर्बोधम्। |
| ८७८ | ८–९ 'हि' (१) 'जातानि तानि' (२) न पठितम्। |
| ८७९ | १ इति वा' इत्यत्र वाशब्दः। स वृत्तौ न व्याख्यातः। |
| | २४ 'यज्ञोखा' (१८) न व्याख्याता। दुर्गस्वीकृतमूले 'यज्ञोऽस्य' इति पाठः स्यात्। चयने मृत्तिकाया उखा निर्मीयते। तस्यां चाग्निर्निधीयते। 'मित्रैतां त उखां परिददाम्यभित्त्या एषा मा भेदि। इति मित्रायैवैनां परिददात्यभित्त्यै। यदि मित्रायापरित्ता भिद्येत' (मै० सं० ३।१।८)। मा स्रिधत् = मा भिद्यताम्। |
| ८८० | १२ 'घर्मस्य' इत्यस्य स्थाने ग. च. ज. पुस्तकेषु 'वामदेवस्य' (२७ २८)। |
| | १७ पाकशब्द ऋग्वेदेऽपक्वप्रज्ञवाची। |
| | १८ 'अन्तित इति ऋषेर्दृष्टार्थस्य' (८) 'एषा' (९) न पठितम्। प्रीतिर्भवत्याख्यानसंयुक्ता' (८) न व्याख्यातम्। |
| | २० 'स च तामुपजीवति' इत्यवश्यमर्थसमाप्त्यर्थम्। 'वृत्तेरध्यात्मवत्' दुर्बोधम्। |
| | २१ 'पुरूरवा असीति प्राण एव तत्' (मै० सं० ३।९।५)। |
| ८८१ | १३ 'तथा तथैनम्' अत्रैनंशब्दो व्यर्थः। |
| | १४ तस्य पुरूरवसोऽधिकारस्तस्मादुद्भवः। कस्योद्भवः। अथवा। तदधिकारस्योद्भवः = तदधिकारः। उद्भवशब्दो व्यर्थः। |
| | २१ ऐडे = इडापुत्रे। |
| | २२ प्रजायमानां = प्रसूयमानाम्। |
| | २३ 'अपरप्रहेयाः' इति ग. च. न. पाठः (२९)। स एवार्थः। |
| ८८२ | २ 'नोऽसुरान्' अत्र नःशब्दो व्यर्थः। |

इति दशमोऽध्यायः।

पृष्ठं पङ्क्तिः

## अथैकादशोऽध्यायः ।

८८३ २०–२१ 'सोममादाय सहस्रं सवानयुतं च सवानभरत्' इति सरलोऽन्वयः ।

८८४ १ तेषां केषाम् । पृष्ठ्यानां दक्षिणाभिः संबन्ध इत्यर्थः स्यात् ।

२–३ 'तृप्तौ प्राप्तायाम्' इत्यन्वयः ।

३ पृथक्त्वपक्षः = अनेकदेवतापक्षः । पृथक्त्वपक्षे = यदा बहवो देवास्तदेन्द्रः सोमपानेन मत्तो भूत्वेतरान्देवान्सोमपानविरहितान्कृत्वाऽभ्यभवत् ।

३–४ सोमाहरणे ये प्रतिबन्धमकुर्वस्ते विश्वावस्वादयो गन्धर्वा अरातयः । तान्पृथिव्यामवरुध्याजहात् । ते गन्धर्वा इन्द्रं पृथिव्यामनुसर्तुं नाशक्नुवन् ।

४ त्रित्वं तिस्र एव देवता इति नैरुक्तपक्षः । दुर्गकृतमिदं विवरणं क्लिष्टम् । त्रित्वपक्षे = यदा तिस्र एव देवतास्तदाऽदानान्यश्नमानान्दानमतीमकरोत् ।

८ 'ऐन्द्रे च सूक्ते सोमपानेन च स्तुतस्तस्मादिन्द्रं मन्यन्ते' ( ८८३ । १४ ) न व्याख्यातम् । कोऽयं श्येन इति प्रश्ने श्येन इन्द्रो यस्मादियमृमिन्द्रसूक्ते वर्तते । श्येनः सोमपानेनात्र युक्तः । सोमपानं च नित्यमिन्द्रेण संबद्धम् ।

९ यदा सहस्रशब्देन सहस्रसाव्यं सत्रमभिप्रेतं तदाऽयुतं दक्षिणा न सवाः । 'सहस्रं सहस्रसाव्यम्' इत्यत्र 'सहस्रं' ( ८८३ । ११ ) 'सवायुतं सोमभक्षाः' ( १२ ) 'इति' ( 'इत्यैन्द्रे' इत्यत्र १४ ) न पठ्यते ।

१० सहस्रसाव्यं सत्रं विकल्प्यते ।

१२ आवृत्तिरग्नेः = अग्निष्टोमस्याऽऽवृत्तिः ।

१३–१४ अहनि दश चमसभक्षाः ।

१५–१६ सोमपीथं निष्क्रीणीते = सोमपानमर्हति ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ८८४ | १६ | प्रश्लेषे = रूढिबाधकारणे। सहस्रशब्देन रूढ्या सहस्रसाव्यमेव सत्रमभिप्रेतम्। |
| | १७ | सत्रे ऋत्विग्भ्यो दक्षिणा न दीयन्ते। इदं रूढिबाधाय न पर्याप्तं कारणम्। |
| | २० | प्रसर्पका नाम ऋत्विग्विशेषाः। ते सोमयागे ब्रह्माणमनु प्रसर्पन्ति। तेभ्यो दीयमानः सोमः प्रासर्पकः (आ० श्रौ० ५।३)। |
| | २४ | अस्ति प्राप्तिः = दृश्यत उदाहरणेभ्यः। हिमशब्दो विशिष्टार्थवाची सामान्य उदकार्थे प्रयुज्यते। |
| | २९ | एवं वाऽर्थः कर्तव्यः। |
| ८८९ | २ | हिमवति भवो हैमवतः। मूजवति भवो मौजवतः। |
| | ८ | स सोम आत्मानं त्रिषु स्थानेषु स्थापनेन तनूकरणे तनूत्रयकरणेऽयतत। इदं प्रान्तभागे विवरणत्वेन लिखितं मूलेऽन्तर्भावितं स्यात्। अथवा। सतनूकरण इति सर्वं सामासिकं पदम्। इति सोमस्य सतनूकरणे ब्राह्मणम्। 'यत्र वा एषोऽग्रे देवानां हविर्बभूव तद्धेक्षांचक्रे मैव सर्वेणैवाऽऽत्मना देवानां हविर्भूवमिति स एतास्तिस्रस्तनूरेषु लोकेषु विन्यधत्त' (शत० ब्रा० ३।९।४।१२)। 'तद्वै देवा अस्पृण्वत। तेऽस्यैतेनैवैतास्तनूराप्नुन्वत्स कृत्स्न एव देवानां हविरभवत्' (शत० ब्रा० ३।९।४।१३)।' इति स तनूकरणे' इति मैत्रायणीसंहितायां (४।९। ४) नास्ति। तत्र 'स्वतनूभूतम्' इत्यस्य स्थाने 'सतनुं भूतं' वर्तते। 'आप्याययति' इत्यस्य स्थाने च 'आप्याययन्ति'। |
| | १० | आत्मानं सोममेवाऽऽपाद्येत्यन्वयः। |
| | १३ | आश्चर्यं = चित्रतः = विरला = क्वचित्। |
| | १६ | परार्थं = परार्था। |
| | २३ | 'इति सा निगदव्याख्याता(१९)' न पठितं न वा व्याख्यातम्। |

| पत्रं | पङ्क्तिः |
|---|---|
| ८८६ | ५ अप्राकृतः = अप्रकृतः = अप्रस्तुतः । तस्य प्रक्रिया उक्तिः । |
| | ६ अधिदैवमापन्नश्चन्द्रमाः कथं प्रकृतः । |
| | १७ 'सूर्याविदे वधूवस्त्रं दद्यात्' ( आ० गृ० १ । ८ । ८ ) इत्यनेन कथं विवाहे विनियोगः । |
| ८८७ | ८ एष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः' ( शत० ब्रा० १ । ६ । ४ । ५ )। |
| ८८८ | ३ 'नाराशंमावभिप्रेत्य पूर्वपक्षापरपक्षाविति वा' ( ८८७।१६ ) न व्याख्यातम् । 'आप्यायितांश्चमसान्सादयन्ति ते नाराशंसा भवन्ति' ( आ० श्रौ० ५ । ६ ) । नाराशंसा नाम त्रयः पितृगणा ऊमा और्वाः काव्याश्चेति । ते चानुभवनमाप्यायितानां चमसानां देवता भवन्तीति नाराशंसाश्चमसा भवन्ति । सोमपक्षे नाराशंसांश्चमसानाप्याययन्ति । चन्द्रमःपक्षे पूर्वपक्षे वर्धमानाः कला अपरपक्षे विहीयमानाः कलाः । |
| | ६ 'आप्यायस्व सं ते पयांसीति भक्षशेषान्' ( आप्याययन्ति ) ( मा० श्रौ० २ । ४ । १ । २ ) । |
| | १० अविनाभावात्कर्मणः । किमिदं कर्म । |
| | १४ एकैकश्येन = एकैकशस्तस्य भावः । |
| | १६ ओषधेः सोमस्य चन्द्रमसः संपद्यते । अस्मिन्वाक्ये कः कर्ता । चद्रमसा साम्यं संपद्यत इति स्यात् । |
| | १७ स्मरन्ति ( = पठन्ति ) यस्मादायुर्वेदः स्मृतिसदृशः ।<br>' सर्वेषामेव सोमानां पत्राणि दश पञ्च च ॥<br>तानि शुक्ले च कृष्णे च जायन्ते निपतन्ति च ॥<br>एकैकं जायते पत्रं सोमस्याहरहस्तथा ।<br>शुक्लस्य पौर्णमास्या तु भवेत्पञ्चदशच्छदः ॥<br>शीर्यते पत्रमेकैकं दिवसे दिवसे पुनः ।<br>कृष्णपक्षक्षये चापि लता भवति केवला ' ॥<br>( सुश्रुतः २९ । २०—२२ ) । |
| ८८९ | ३ ' सोमो लक्षणत्वात् ' दुर्बोधम् । सोमोपलक्षणत्वात् ' स्यात् । यथा मासोपलक्षण० पूर्वम् । मासश्चन्द्रमाः सोममुपलक्षयति यथा पूर्वं सोमो मासमुपालक्षयत् । |

पत्रं पङ्क्तिः

८९० १० अतिमूर्तिर्दूणाशो बहुसुवर्ण इत्येकाहस्य त्रीणि नामानि । 'शुक्लं चान्द्रमस्या' ( आ० श्रौ० ९ । ८ ) ।

१३–१४ पूर्वपक्षाद्युपक्रम्य = पूर्वपक्षादिमुपक्रम्य ' इति स्यात् । ' पूर्वपक्षादिमभिप्रेत्य ' ( ३–४ ) इति मूले ।

१५–१६ ' अपरपक्षान्तेषु ' अत्र बहुवचनस्य न किमपि प्रयोजनम् ।

२१ ' एककर्मे ' इदमशुद्धम् । सर्वं वाक्यं दुर्बोधम् ।

२२ ' पूर्णे चन्द्रमस्युपवसेत्पौर्णमासीमदर्शनेऽमावास्यायाम् ' ( मा० श्रौ० १ । ४ । १ । १ ) । वृत्तावुपवसेदित्यस्य स्थाने ' उपचये ' शब्दोऽशुद्धः । ' इत्यर्धमासेज्यामभिप्रेत्य ' ( ६ ) न व्याख्यातम् । अर्धमासेज्या = दर्शपूर्णमासेष्टिः ।

८९१ ६ समाने हविषि=राजयक्ष्मगृहीतस्येष्टौ ( मै० सं० २ । २ । ७ ॥ ४ । १२ । २ ) ।

१५ 'इह तु० स्मरन्ति' इति पूर्वपक्षः ।
भूमेर्योजनलक्षे तु सौरं विप्रास्तु मण्डलम् ।
लक्षे दिवाकराच्चापि मण्डलं शशिनः स्मृतम् ॥ (ब्रह्मपुराणम् २३ । ५ ) ।

१७–१९ ' सर्वदेवतानां द्युस्थानत्वे सत्यपि कर्मसंयोगेन विशेषस्थाननियमो विवक्षितः' इत्यन्वयः ।

२० ऐन्द्रेषु=इन्द्रकर्मसु ।

२३ तस्य = इन्द्रस्य । कर्तृत्वेन मेघवधस्य ।

८९२ ७ मृत्युः = मृच्युः । मृ = मृतं + च्यु = च्यावयति ।

८ क्षीणकर्मा = हस्तपादान्प्रसारयितुं न शक्नोति ।

१५–१७ 'परं मृत्यो ध्रुवं मृत्यो० भवति ' इदं दुर्गस्वीकृतमूले नाऽऽसीत् । ' परं मृत्यो ध्रुवं मृत्यो० ' इत्यादि न भाष्यम् । किंत्वृक्सदृशो मन्त्रः । कुतस्त्य इति न ज्ञायते । 'कथितं तेन मृत्यो मृतं च्यावयते भवति मृत्यो० ' इदं दुर्बोधम् । 'मदेर्वा मुदेर्वा तेषामेषा भवति ' इदमसंबद्धम् ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ८९२ | १९ | 'संकुसुको नाम यमपुत्रस्तस्याऽऽर्षम्' इति पाठोऽवश्यः। अन्यथा नामपदस्य न किमपि प्रयोजनम् । 'संकुसुकस्याऽऽर्षम्' इति समीचीनतरम् । |
| | २४ | 'तवानाधृष्याः' इत्यन्वयः । |
| ८९३ | १—३ | 'त्वेषमित्था०' इदं कस्योदाहरणम् । इदमप्यसंबद्धम् । 'त्वेषमित्था० व्याख्याता' दुर्गस्वीकृतपाठे नाऽऽसीत् । |
| | २१ | 'मोदमानाय स्तूयमानाय' (१२) 'सर्वं विभूताय' (१३) न पठितम् । 'स्तूयमानाय' इति 'शब्दाय्यमानाय' (१२) इत्यस्यार्थः । |
| | २२ | 'प्रीतौ' (१३) न व्याख्यातम् । |
| ८९४ | १ | 'बलमायतिर्महती' इदं केषां शब्दानां विवरणम् । भाष्ये न तादृशाः शब्दाः । |
| | ३ | 'द्यावापृथिव्यौ वः परिचरतः' (८९३ । १४) अत्र 'वः' शब्दः किमर्थः । प्रक्षिप्तः स्यात् । |
| | ६—७ | उत्तमेन ज्योतिषा सह व्यपदेशात्पठनात् । |
| | १९ | 'उदाशिश्रियत्' (१०) 'सविता देव इति' (११) न पठितम् । |
| | १७ | सर्वगन्तॄणां गमनस्य वायुपूर्वकत्वादित्यन्वयः । उच्छ्रयणमुपपद्यते । |
| | २१ | 'क्रत्वा देवानामजनिष्ट चक्षुराविरकर्भुवनं विश्वमुषाः' । |
| ८९९ | ७ | अथर्ववेदे 'ददातु' इत्यस्य स्थाने 'दधातु' सत्यधर्मणः' इत्यस्य स्थाने 'विश्वराधसः' ( अथ० सं० ७ । १७ । २ ) । मैत्रायणीये 'ददातु दाशुषे' इत्यस्य स्थाने 'दधातु नो रयिम्' ( मै० सं० ४ । १२ । ६ ) । |
| | १७ | 'ददाति' । मूले 'ददातु' (९) । |
| ८९७ | १० | यथा मध्यस्थानदेवतासु वायुः प्रथमस्तथा मध्यस्थानदेवगणेषु मरुतः प्रथमाः । |
| | ११ | यत्र बहुभिर्मरुद्भिर्मरुत्समुदायेन कर्म साध्यं तत्र वायुर्देवता । |
| | ११-१३ | सप्तकपालेषु मारुतेषु गणेषु विज्ञाताः । मरुन्नामानि ( मै० सं० २ । ६ । ६ ॥ २ । ११ । १ ) । |

| पृष्ठं | पङ्क्तिः | |
|---|---|---|
| ८९७ | १२–१३ | यत्र सप्तकपालेषु पुरोडाशः क्रियते तत्र मरुतः पृथक्शो निर्दिश्यन्ते। 'सप्तकपाला भवन्ति सप्तसप्त मारुता गणास्तस्मात्सप्तकपाला गणेन गणेन जुहोति गणश एव मरुतः प्रीणाति' ( मै० सं०३।३।१० )। 'सप्तकपालो भवति सप्त हि मरुतः' ( मै० सं० २।१।८ )। |
| | १३ | सप्तस्कन्धाः । तैर्वायुना सह विचरन्ति मरुतः। स्कन्धाः = गणाः। |
| | १४–१९ | सर्वे देवगणा मरुतः। |
| | १९ | मध्यमा वाक् स्त्रियः सर्वाः पुमान्सार्धं च मध्यमः। गणाश्च सर्वे मरुतो गुणभेदात्पृथक्पृथक्॥( बृहद्दे० ९।४८ )। दुर्गकाले बृहद्देवताग्रन्थे भिन्नाः पाठा आसन्। अधिकाश्च श्लोकाः। च. ट. पुस्तकयोः— ' सर्वा स्त्री मध्यमस्थाना पुमान्वायुश्च सर्वगः । गणाश्च सर्वे मरुत इति वृद्धानुशासनम् '॥ इति पाठान्तरं प्रान्ते दीयते। |
| | २०–२१ | 'वा मितरोचिनः' इत्यत्रापि 'वा+अमितरोचिनः' इति संधिविग्रहः शक्यः। |
| | २१ | 'तेषाम्' इत्यस्य केनान्वयः। 'तेषां मरुतां भाष्यस्य' इत्यन्वये कोऽर्थः। समानसंहितत्वाद्भाष्यस्य तेषाम्। तेषां=मरुताम्। मरुच्छब्दस्य भाष्यं समानसंहितम्। समाना संहिता यस्य तत्समानसंहितम्। 'मरुतो मितराविणो वा मितरोचिनः'। 'मरुतो मितराविणः' इत्यत्र मितराविणोऽमितराविणश्चेति द्वे अपि पदे संभवतः। ' वा मितरोचिनः' इत्यत्रापि तथैव। एवं भाष्यं समानसंहितम्। |
| | २२ | 'महदूद्रवन्ति इति महाराष्ट्रपाठः। ग. ज. पाठः ' महद्रुवन्ति ' ( ३० )। अयं पाठः शुद्धः। किंत्वयं निरुक्तमूले नैकस्मिन्नपि पुस्तके लभ्यते। ' रवन्ति ' इदमशुद्धम्। दुर्गस्वीकृतमूले 'महद्रुवन्ति' इति पाठः स्यात्। |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ८९८ | १ | मितशब्देनामितशब्देन वा बाहुल्यं बहुप्रकारता च दर्श्यते । 'महद्भवन्ति' इत्यनेन रवस्य महत्ता दर्श्यते । |
| | १७ | 'अश्वपतनैः' (७) 'कल्याणकर्माणो कल्याणप्रज्ञाः' ( ८–९ ) न पठितम् । |
| ८९९ | १४ | 'सहजोषणाः' ( ७ ) न पठितम् । 'तृष्णक्तृष्यतेरुदन्युरुदन्यतेः' ( ८ ) न पठितं न वा व्याख्यातम् । |
| | २१–२२ | तदव्यापत्तये = हविरन्नं वा व्यापन्नं व्यर्थं मा भूत् । |
| | २४ | 'मह्यं ग्रहं गृह्णाति' इत्यस्य स्थाने मै० सं० (४।८।७ ) 'मह्यं गृह्णाति मह्यं गृह्णाति' इति । |
| ९०० | ३ | मेघे भवा मेघ्याः । |
| | १२ | ऋतेन = भूत्या । भान्ति भवन्ति वा = युज्यन्ते । |
| ९०१ | ३–४ | अजामितायै = पुनरुक्तिपरिहाराय । |
| | ९–१० | 'सुरख्यानाः सुरप्रज्ञाः' ( ९००।१८ ) न पठितम् । |
| | १० | 'तस्य यत्स्वपतः' ( ९००।२४ ) अत्र 'तस्य' इत्यस्य स्थाने दुर्गस्वीकृतमूले 'अस्य' आसीदिति भाति । |
| | १९ | 'विम्वा' इदं प्रथमैकवचनम् । 'विम्वना' इति तृतीयैकवचनम् । |
| ९०२ | ९–१० | ' यदस्वपथ गृहे ' ( ९००।२४ ) न पठितम् । |
| | १४ | अङ्गाना रसोऽङ्गिरसः ( बृह० उ० १।३।८ ) । |
| ९०३ | १ | पृष्ठयस्येदं पार्ष्ठिकम् । |
| | २ | ' बहुरूपाः ' ( ९०२ । १८ ) ' गम्भीरकर्माणो वा गम्भीरप्रज्ञाः ' (१९) ' इत्याग्निजन्म ' (२०) न पठितम् । |
| ९०४ | १ | तदधिकारो द्युलोकवासायाधिकारः पुण्यकर्म तस्य प्रक्षये । |
| | ४ | ' प्राणमन्वीयुः ' ( ९०३ । १६ ) ' सत्यज्ञा वा यज्ञज्ञाः ' ( १७ ) ' नः ' ( १७ ) ' ह्वानेषु ' ( १७ ) न पठितम् । |
| | १३ | प्रसङ्क्ष्यमाणान् = ऋङ्निर्वचनप्रसङ्गेन येषां निर्वचनमवश्यंभावि तान् । |

पत्रं पङ्क्तिः

९०५ ७–८ 'नः' (९०४।२४) न पठितम्।

१२ 'अपि चैषाम्' (२) मूले। वृत्तौ 'तेषाम्'।

१८ स्तुत्युपपत्तेः = देवतामध्ये यस्मादेषां स्तुतिस्तस्मात्स्तुतिरुपपन्ना योग्येत्यस्मात्कारणादेते देवा एव देवगणा वेति नैरुक्तमतम्।

२० अग्न्यादिदेवानां विपर्ययो विरुद्धस्वभावः। नैतेऽग्न्यादिदेवसदृशाः। एतद्विवरणं तद्धर्मदेवताप्रकार इत्यनेन विरुद्धम्। तस्माद्विपर्ययः = विशिष्टः प्रकारः।एत ऋषयोऽअग्न्यीदेदवतानोमव विशिष्टः प्रकारः। तत्तद्धर्मविशिष्टानां देवतानां प्रकारः।

९०६ १२ अस्य सूक्तस्य वासिष्ठ ऋषिः स एव देवता। ठ. ड. पुस्तकयोः 'वसिष्ठस्याऽऽर्षम्। इन्द्रदेवताकम्'। किंत्वत्रेन्द्रो न स्तूयते। श्वित्यञ्च इति सूक्तस्य नवानामादितस्त्वृचाम्।
वसिष्ठ एव (आद्यानुक्रमणी ७।३॥)
संवादं सूक्तमैन्द्रं वा श्वित्यञ्चस्तु प्रचक्षते (बृहद्दे० ५।१६३)।

२० असङ्गेन = अप्रतिबन्धेन।

९०७ १० एतस्मादेव दर्शनात् = अस्माच्छतपथवाक्यात्।

१२ 'इन्द्रो० मृत्रि' इदं प्रान्ते लिखितम् 'ऐन्द्याम्' इत्यस्य विवरणं वृत्तावन्तर्भावितं स्यात्। ऐन्द्रीशब्दो बहुकृत्वः पूर्वमागतः।

२५ 'आसन्यानां' (१७) 'दानवान्' (१८) न पठितम्।

९०८ १ आ + दृ + स + ते = आदर्षते। इदं दृधातोर्लेटि रूपम्।

३ सह् + स + ते = साक्षते। सहधातोर्लेटि रूपम्।

१५ लिङ्गविशिष्टस्य मध्यमस्य विभवो व्याख्यातः। यदा मध्यमो देवगणस्तदा लिङ्गकथनमनवश्यम्। यदा मध्यम इन्द्रो वायुर्वा तदा तौ लिङ्गविशिष्टौ पुरुषावित्यर्थः।
तयोः स्त्रियोऽत्र समाम्नाताः।:

९०९ १५ अवश्याय एव रस उदकं तस्यानुप्रदानं संधिवेलायाम्। तेन प्रथमं तामभिप्रेत्योच्यते।

पत्रं पङ्क्तिः

९०९

१६ यदादित्यः (२९) = यत् आदित्यः । यत् = यदा ।

१७ अदितिः = संधिवेला ।

१८ ' व्रते कर्माणि ' (३) 'आशास्तेर्वा' (९) 'बहुरथ': (९) 'अरीन्नियच्छाति ' (६) ' जन्मसु कर्मसूदयेषु ' (७) न पठितम् ।

१९ तदेवं = तत् एवम् । तत् = तदा । ' अर्धवर्तिन्यादित्ये ' दुर्बोधम् । आदित्ये अर्धवर्तिनी अदितिः । अर्धेन रात्रौ वर्ततेऽर्धेनाह्नि । एवमादित्येऽर्धवर्तिन्यदितिः । यतो यस्मादादित्याल्लब्धस्त्वयाऽऽत्माऽस्तित्वं जन्म तस्मिन्नर्धवर्तिनी त्वम् ।

२० ' त्वमपि ' अत्रापिशब्दस्य किं प्रयोजनम् ।

२२ स्वाधिकारयुक्तासु = इतिकर्तव्यताः स्वाधिकारयुक्ताः । प्रत्येकस्य स्वोऽधिकारः । तत्संबद्धा इतिकर्तव्यताः कर्तव्यानि । नराः स्वाधिकारयुक्ता इतिकर्तव्यतां कुर्वन्ति ।

२६ ' स्तुवन्ति ' ( ७ ) इत्यस्य स्थाने दुर्गस्वीकृतमूले ' आह्वयन्ति ' आसीदिति भाति ।

९१०

२० वरुणादयः सर्वे आदित्याः । तन्मध्येऽयं स्तुतः । तस्मादयमप्यादित्यः । अदितेर्जात आदित्यः ।

२१ प्रमाणं विदन्ति ते प्रामाणिकाः । 'तदधीते तद्वेद' ( पा० ४ । २ । ५९ ) । स्तुतौ प्रामाणिकाः । स्तुतिं प्रमाणं ये विदुस्ते ।

९११

१–३ ' अदितिर्दाक्षायणी । अदितेर्दक्षो अजायत ' इत्येव पर्याप्तम् । ' दक्षाद्वदितिः पारि ' इत्यनवश्यम् ।

३ संहितायां ' भूर्जज्ञे० ' इति पूर्वार्धम् ।

६–७ मनुष्याद्दिशः कथमजायन्तेति न ज्ञायते । दिशां प्रजननं स एव भावः क्रिया । इदं कर्मासौ कथमकरोत् ।

७ ' देवताजन्म प्रतिक्रियया ' इदं दुर्बोधम् । दिश एव देवतास्तासां जन्मार्थं प्रतिक्रिया यज्ञकर्म तद्द्वारेत्यर्थः स्यात् ।

११ समानजन्मानौ समनन्तरजन्मानौ । प्रातःसंधिवेलाया आदित्यो जायते । सायंसंधिवेलाऽऽदित्याज्जायते । समानशब्दः कथं समनन्तरवाची ।

पत्रं पङ्क्तिः

९११ १३ देवधर्मेण = माहाभाग्याद्देवताया इत्यादि ( निरु० ७।४ )।

१३–१४ अदितिर्महानात्मा। तदपेक्ष्यादितिः कारणं जन्महेतुर्दक्षस्य भवति।

१४–१५ यदा दक्षो महानात्मा तदा सा दक्षस्य कार्यं च भवति।

९१२ १२–१३ 'किल्भिदं सुकृतकर्मणो भयं' ( ९११। २४ ) न व्याख्यातम्। 'इति वा' ( २४ ) न पठितम्। तेन 'किल्बिषं कीर्तिमस्य भिनत्ति' इति दुर्गस्वीकृतपाठ आसीत्। किल् + विषं = किल् + भिदम्। किल् = सुकृतकर्म। भिदं = भयम्। पापं सुकृतकर्मणो बिभेति। अथवा। किल् = कीर्तिम्। भिदं = भिनत्ति। पापं (पापकर्म)अस्य पापकर्म यः करोति तस्य कीर्तिं भिनत्ति।

९१३ ९ 'महदेतत्' इति 'अध्वानम्' इत्यस्य विशेषणम्। तदशुद्धम्। 'महान्तमेतम्' इति शुद्धम्।

१० 'जङ्गम्यतेः' ( ९१२। २१ ) 'रमतेः शब्दकर्मणः कथम्' ( २४ ) न व्याख्यातम्।

१२ अर्थस्याऽऽधानम् = अर्थमस्मास्वाधत्से। 'का तेऽस्मास्व०' (९१२।२१ ) इत्यत्र वृत्तौ 'का तवास्मा०'।

१४ 'पारित एनां तक्म' ( ९१२। २२ ) 'इति सतः' ( २३ ) 'पर्यासीति' ( २३ ) इत्यत्र 'इति' 'आख्यानं' ( ९१३। १ ) न पठितम्

१७ धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते।
न ता नदीशब्दवहा गर्तास्ताः परिकीर्तिताः॥ ( ख. पुस्तके टिप्पणी )।

१८ 'कथं रसानि०' इत्यत्र 'कथम्' आश्चर्ये। तान्युदकानि रसानि रसवन्ति पेयानि कथं स्युः।

२३ चिरकालीनो वृष्ट्युपरमः।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९१४ | ३ | पुनरागच्छेत् = संतनुयात् = अविच्छिन्नं संततं कुर्यात् । पराचैः = पराङ्मुखैर्गमनैः । वर्षवर्त्माचिन्त्यम् । यस्मात्ताश्चिरविच्छिन्नम् । अष्टमासान्यावद्देवो न ववर्ष तेन । |
| | ४--५ | अर्थं पूर्वमभिहितवती किं त्वं येनात्राऽऽगताऽसि । |
| | ५ | किं वा न जातं = किमस्माभिर्न कृतं येन पुनर्नाऽऽगता त्वम् । |
| | १६ | आश्वलायनसूत्रे प्रउगं न कथ्यते । अन्वारम्भणीयेष्टावस्या ऋचो विनियोगः ( आश्व श्रौ० २ । ८ )। |
| | २० | ' अन्नवती ' ( १३ ) ' कर्मवमुः ' ( १४ ) न पठितम् । |
| ९१५ | १२ | ' इमानि च ' ( ३ ) न व्याख्यातम् । |
| | १४ | वागर्थेषु सर्वेषु प्रज्ञानेषु प्रज्ञेयेषु वस्तुषु विधीयते । तस्मात्सरस्वती मध्यमा वाक् । |
| ९१६ | ६ | ट. पुस्तके ' निवचयन्ती ' इत्यस्य ' प्रज्ञापयन्ती ' इति प्रान्तेऽर्थो लिख्यते । स ठ. ड. पुस्तकयोः ' निर्वचयन्ती ' इत्यस्य स्थाने लिख्यते ( २३ ) । |
| | ११–१२ | ' एता ओषधीः ' इत्यन्वयः । ' एतानि ' ( २९ ) इति पाठे ' एतानि पयांमि ' । |
| ९१७ | १४ | ' सहोपस्यासः ' इत्यन्वयः । |
| | १६ | ते अभिधाने निर्ज्ञाते = एतत्तयोर्निर्वचनम् अर्थः । |
| | २१ | नक्षत्रेष्टकोपधानं ( मैं० सं० २ । १३ । २९ ॥ तै० सं० ४ । ४ । १० ) । तेषां मध्ये पौर्णमास्यमावास्ये न निर्दिश्येते । तैत्तिरीयसंहितायां नक्षत्राणामन्ते ' पूर्णा पश्चाद्यत्ते देवा अदधुः ' इति वाक्यम् । तस्य कल्पसूत्रेऽयं विनियोगः । "पूर्णा पश्चादिति पौर्णमासीं पुरस्तादुपधाय कृत्तिका नक्षत्रमिति नक्षत्रेष्टका उपदध्यादा विशाखाभ्याम् । ततः 'यत्ते देवा अदधुः' इत्यमावास्यां पश्चादुपधाय ततः शेषाः । सर्वान्ते पौर्णमासीम्" । ' पूर्णा पश्चादुत पूर्णा पुरस्तात् ' इति पौर्णमासीमुद्दिश्य ऋक् । ' यत्ते देवा अदधुः ' इत्यमावास्यामुद्दिश्य ( तै० सं०३ । ५ । १ ) । |
| | २२ | ' प्रदर्शनात् ' अत्र 'प्र'व्यर्थम् । दर्शनं = ब्राह्मणवाक्यम् । |

| पृष्ठं | पङ्क्तिः | |
|---|---|---|
| ९१८ | १ | चतुर्दशके पक्षे = यत्र चतुर्दशाहान्येव वर्तन्ते । चतुर्दशीसंयोगाच्चन्द्रमसि कलाहीने सत्यनुमतिरित्युच्यते । तत्संयोगाभावेन चन्द्रमण्डले पूर्णे सति राकेत्युच्यते । |
| | ४ | 'क्रत्वे दक्षाय नो हिनु' इत्यस्य स्थाने 'इषं तोकाय नो दध.' इति काठकसंहितायाम् ( १३ । १६ ) । तदेव यास्कमूलं यस्मात्तस्य भाष्ये 'अन्नं च नोऽपत्याय धेहि' ( ६ ) इति वर्तते । क्रत्वे दक्षाय नो हिनु = अस्माकं दक्षाय क्रत्वे दक्षक्रतौ समृद्धयागे हिनु प्रीतियुक्ता भव । |
| | ९ | 'प्र ण आयूंषि' इत्यत्र ( मै० सं० ३ । १६ । ४ ) 'प्र ना आयूंषि' । |
| ९२० | १५ | 'पृथुजघने' ( ८ ) 'असि' ( ९ ) 'स्तुकः स्त्यायतेः संघातः' ( ८ ) न पठितम् । |
| | १६ | 'सु असास्वेषु सीदतीति वा' ( ९–१० ) न पठितं न वा व्याख्यातम् । |
| ९२१ | ४ | 'काहुतं हविर्जुहोतीति वा' ( ९२० । ११–१२ ) न पठितं न वा व्याख्यातम् । |
| | ७ | 'सुवृतम्' ( २६ ) इति पाठान्तरं 'सुकृतम्' इत्यस्य स्थाने । ( तै० सं० ३ । ११ । ९ ) 'सुभगम्' । |
| | ८ | तस्यामेव संहितायां 'पितॄणां तस्यै' इत्यस्य स्थाने 'पितॄणां तस्याः' । |
| | १६ | 'विदितकर्माणं ( ९ ) 'सुह्वानामाह्वये' ( १० ) 'नः' ( १० ) न पठितम् । विद्मना ज्ञानेनापांसि यस्य । |
| ९२२ | १३ | 'प्रत्याचचक्ष' ( ९ ) इति परस्मैपदम् । |
| | १४ | 'हि' ( ६ ) 'परिष्वङ्क्ष्यते' ( ७ ) 'अधानेन' ( ८ ) 'प्रत्याचचक्ष' ( ९ ) न पठितम् । 'परिष्वजस्व' भाष्ये किं न लिखितं यास्केन । तदावश्यकम् । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९२२ | १६ | दुर्गस्वीकृतमूले कदाचित् 'परिष्वजस्व' 'परिष्वजताम्' इति पाठः स्यात् । |
| | १७ | आधानेन = अध + अनेन । |
| | १८ | उपगम्यमानेन समानेन त्वद्योग्येन पुरुषेण । |
| | १९ | कल्याणाय भद्रां कल्याणभद्राम् । |
| | २१ | उभयस्थानां = द्युलोकेऽन्तरिक्षे च वर्तमानाम् । |
| ९२३ | २ | संवित्साधनं = ज्ञानसाधनम् । |
| | २०-२१ | आत्मनो ज्योतिरात्मनः शब्दश्च । |
| | २४ | आत्मानं प्रतिलभते = विद्युतः पुनः पुनर्द्योतनं पुनर्जन्म । |
| ९२४ | १ | अन्तरिक्षलोकस्य काम्यानीष्टान्युदकानि । 'अन्तरिक्षरमाणानि' इदम् ' अन्तरिक्षलोकस्य ' विवरणम् । अन्तरि ( मध्ये ) + क्ष ( क्षरमाणानि ) = मेघोदरेषु मेघोदरेभ्यः क्षरमाणानि । अप्यान्यम्मयानि काम्यानीष्टानि वस्तूनि । अप्या = अद्भ्यो जाता । अथवा । अप्या = अप्यान्युदकसंबद्धानि । |
| | २ | अधिपत्नी = आधिपत्यं कुर्वती । |
| | ३ | अपः = अध्यपः = अद्भ्यः । 'अयं' (९२३।१९ ) 'अद्भ्यः' (१९-१६ ) 'इति' ( १६ ) न पठितम् । |
| | ४ | मनुष्यः = मनुषो जातो मनुषे हितो वा । 'मनुष्यः' ( १६ ) न व्याख्यातम् । |
| | १० | वपुष्मत्तया = सौन्दर्येण । |
| | १७ | 'तस्य वाऽवश्यम्' अत्र 'वा' शब्दस्य किं प्रयोजनम् । |
| | १८ | अस्या ऋचो भाष्यस्य च दुर्गकृतोऽर्थो न सरलः । |
| | २२ | ( मै० सं० ४।१२ ) 'बडित्था' । |
| | २३ | 'जिनोषि' इत्यस्य स्थाने 'हिनोषि' । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९२५ | १ | अङ्कस्थाः पाठभेदा अल्पांशेन दुर्बोधाः ( २१–२९ ) । 'अश्रिणवन्ति' ( २६ ) 'अशृण्वन्ति' ( २७–२८ ) अस्य शब्दस्यात्र न किमपि प्रयोजनम् । 'इत्यविरोधः' अस्य पाठान्तरम् 'असमानार्थौ मे' ( २६ ) मम मते एतावर्थावसमानौ विरुद्धाविति पाठान्तरस्यार्थः । |
| | ५ | 'त्वं पर्वतानां मेघानां' ( ९२४।२३–२४ ) 'भेदनं ( २४ ) न पठितम् । |
| | १५–१८ | यास्कमते भूमिरत्र न प्रधाना । विनियोगे भूमिः प्रधाना । अयं विरोधो विद्वद्भिः परिहर्तव्यः । किंत्वयं दुष्परिहार्यः । समनुगंस्यन्ते = साधयिष्यन्ति (च. घ.) प्रान्ते । |
| | १९–२० | विभूतिरिन्द्रान्न पृथक् । पौराणिकास्त्विन्द्राणीं पृथक्त्वेन मन्यन्ते । इन्द्रः पतिरिन्द्राणी पत्नीति । |
| ९२६ | ११–१२ | अपरंचन = किंच । यास्कभाष्येऽपरंचन = अपरां समाम् । अपरंचन = अन्यद्भूतजातमिव ( सायणः ) । ' अपरामपि समाम्' इत्यस्य 'न कदाचिदपि' इत्यर्थः कथं लभ्यते । |
| | १७ | वृषाकपिरादित्य इति नैरुक्ताः । |
| ९२७ | ९ | सर्वेष्वपि देवेष्विति निर्धारणम् । 'प्रियं' (९२६।२२) हविरित्यस्य विशेषणम् । निर्धारणार्थे 'प्रियः' इति तत्परिणम्यते दुर्गेण । तद्भाष्यविरुद्धम् । |
| | ९–१० | यस्य यस्मै वृषाकपय इदं हविर्गच्छति ( ९२६ । २१–२२ ) । वस्तुतस्तु यस्य वृषाकपेर्ऋषेरिदमप्यं हविः प्रियं देवानामिति तेषु तान्प्रति नितरां गच्छति । |
| | १० | ' नि ' ( निगच्छति ) (९२६ । २२ ) इत्यत्र न पठितम् । |
| | ११ | ' तमेतद्ब्रूमः ' ( २३ ) = सोऽप्यहमेवं ब्रवीमि । अयमर्थः कथं भाष्यस्य स्यात् । सोऽहमेतद्ब्रवीमीति दुर्गस्वीकृतमूले पाठः स्यात् । |
| ९२८ | २ | ' निर्मिमाय ' ( ९२७ । १९ ) न पठितम् । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९२८ | ८ | तदात्मना = तेनाऽऽत्मनैवंभूता तद्रूपा सा गौरीः । ' एक आत्मा यस्तेनाऽऽत्मना ' इत्यन्वयः । |
| | १०–११ | गुणाभिधानं गुणवाचकं पदम् । |
| ९२९ | १ | ' दिगाश्रयाणि ' ( १६ ) ' सर्वाणि भूतान्युपजीवन्ति ' ( १६–१७) न पठितम् । |
| | ४–५ | अ ( अभिव्यञ्जयत् ) + क्षरं ( क्षरति ) इति दुर्गः । उदकसाहाय्ये सर्वमिदं संचरति । |
| | १९ | ' इति वा ' ( ११ ) ' मननाय ' ( ११ ) ' आदित्यमिति वा ' ( १३ ) न पठितम् । |
| | २४ | ' मायुमिव ' ( १२–१३ ) ' इति याज्ञिकाः ' ( १३ ) न पठितं न वा व्याख्यातम् । |
| ९३० | १ | घर्मार्थे या पयो दुग्धे सा घर्मधुक् । घर्म इति दर्शयागार्थस्य पयसो नाम । |
| | २१ | ' सुदोहनां ' ( १४ ) भाष्ये । 'सुघदुघां' वृत्तौ । |
| | २३ | ' एनां ' ( १५ ) भाष्ये । ' एतां ' वृत्तौ । |
| | २४–२५ | ' न इत्येष हि श्रेष्ठः सर्वेषां सवानां यदुदकं यद्वा ' ( १५–१६ ) न पठितं न वा व्याख्यातम् । |
| | २६ | ' सुप्रब्रवीमि वागेषा माध्यमिका घर्मधुगिति याज्ञिकाः ' (१७) न पठितम् । |
| ९३१ | ५ | प्रसूतम् = आज्ञप्तम् । |
| | ६ | रुचितः = शोभमानः । |
| | १९ | सूर्यादुदकमध्यात्मीकृत्याऽऽत्मसात्कृत्वा । तेनोदकेनेत्यन्वयः । |
| | २२ | तृणो मेघस्तमद्धि न तु तृणम् । |
| | २४ | आ = आसेवन्ती शुद्धमकलुषमुदकम् । आ = सर्वतः । चरन्ती = मध्यस्थाने चरन्ती |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९३२ | १ | ' सूयवसात्० ' इत्यस्मिन्मन्त्रे घर्मधुक् गौः स्पष्टा न तथा माध्यमिका वाक् । |
| | १९ | ' इति सा निगदव्याख्याता ' ( १२ ) न पठितं न वा व्याख्यातम् । |
| ९३३ | ४–९ | सोमयागे प्रायणीया नामेष्टिः । तत्र ' पथ्यां यजति स्वस्तिं यजति ' इति क्रमो ब्राह्मणे (मै० सं० ३ । ७ १॥ तै० सं० ६ । १ । ५ ॥ श० ब्रा० ३ । २ । ३ । ८ ) । स एव क्रमोऽत्र । 'पथ्यां स्वस्तिं प्रथमां प्रायणीये यजति' ( कौ० ब्रा० ७ । ८ ) । 'परस्तात्पथ्या इत्यादि च' ( कौ० ब्रा० ७ । ८ ) । |
| | १८ | ' वसूनि ' ( १० ) न पठितम् । ' निरमणे ' ( १०–११ ) न पठितं न वा व्याख्यातम् । |
| | २२ | ' हविषः ' इत्यस्य केनान्वयः । ' हविषा दातॄनिति स्यात् । च. पाठः ( ३० ) ' हवि गोपायतु ' = हविरस्मान्गोपायतु । |
| ९३४ | १२ | ' अनसः संपिष्ठान्मेघात ' ( ५—६ ) इति यास्कः । ' अनसो वायोः ' इति दुर्गः । |
| | १३ | ' यत् ' ( ८ ) न पठितम् । |
| | १९ | ' इवानः शाकटमान० एतस्मादेव ' ( ७–८ ) न पठितं न वा व्याख्यातम् । |
| | २२ | ' मध्यमास्वभावप्रायोवृत्त्युपप्रदर्शनार्थम् ' अत्र ' प्रायोवृत्ति ' इत्यस्य कोऽर्थः । |
| ९३५ | ५ | ' मेघं दर्शयन् ' इत्यन्वयः । |
| | ७ | शाकटानः = शकटाख्यमनः । ' विमुक्तपाशि ' ( १ ) न पठितम् । |
| | ९ | ' प्रेरितवतः परागताद्वा ' ( २ ) न पठितं न वा व्याख्यातम् । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९३६ | ६ | ‘ गृणामा ’ ( ९३५ । १७ ) भाष्ये ‘ गृणातु ’ वृत्तौ । |
| | ७ | ‘ प्रभृथस्य ’ ( ९३५ । १८ ) ‘ नः ’ ( १९ ) ‘महाद्दिवा’ इत्यत्र ‘ दिवा ’ ( १७ ) न पठितम् । |
| | १९ | ‘ स्मदभि ’ ( ९३५ । १६ ) ‘ ज्योतिषो वा ’ ( १८ ) ‘ उदकस्य वा ’ ( १८ ) इत्यत्र ‘ वा ’ ‘ नः ’ ( १९ ) न पठितं न वा व्याख्यातम् । |
| ९३७ | ६ | ‘ सुरमणीयानि ’ ( ९३६ । १६ ) ‘ सचा ’ ( १६ ) न पठितम् । |
| | ७ | ‘ रोदसी रोदसी ’ ( ९३६ । १६—१७ ) न पठितं न वा व्याख्यातम् । |

इत्येकादशोऽध्यायः ।

---

## अथ द्वादशोऽध्यायः ।

---

| | | |
|---|---|---|
| ९३९ | १२ | पक्षे = देवतानानात्वपक्षे । |
| | १६ | स्तुतानि शस्त्राणि यस्मिन् । |
| | १९ | च. ठ. पुस्तकयोः ‘एकैकस्याश्विशब्दस्य’ ( २७ ) इति प्रान्ते पाठभेदो लिख्यते । ‘ तयोरेकैकस्य पृथग्भावेन स्तुत्यभावात् ’ इत्येव सुवचम् । ‘ अश्विशब्दस्य ’ इति पदस्य न किमपि प्रयोजनम् । |
| | १९–२० | एकोऽश्वी न कुत्रापि स्तूयते । |
| | २१ | नासत्याविति नाम्ना तयोः पृथक्स्तुतिर्न विद्यते । अस्य विधानस्य किं प्रयोजनमत्र । ‘ नासत्यः ’ इत्यप्येकैकस्य स्तुतिर्न विद्यत इति सुवचम् । |
| | २२ | प्रथमस्य = मध्यस्थानस्याश्विनः । |
| | २३ | तमोभागो मध्यमः । स संधौ न स्थिरः । तमोभागो हीनो भवति ज्योतिर्भागो वर्धते च । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९३९ | २४ | संध्यन्तरं द्युस्थाना देवतेति रूपान्तरं भवति न मिश्ररूपम्। तमोभागो नष्ट एव भवति। |
| ९४० | १२ | अथास्मिन्पक्षे राजानौ पुण्यकृताविति मतेऽश्वैरश्विनावित्येतन्निर्वचनं महाभारतादीतिहासग्रन्थैः संगतम्। |
| | १३ | 'ज्योतिषान्यः' इत्यत्र 'अन्यः' (९३९। २) 'तमोभागो हि मध्यमो ज्योतिर्भाग आदित्यः' (७—८) न पठितम्। |
| | १४–१५ | अनुविष्टम्नाति = प्रविशाति। |
| | १५ | अनु = अनुविष्टम्भानन्तरमेव। 'अनु' (९३९। ७) न पठितं न वा व्याख्यातम्। |
| | १६ | प्रातरनुवाक आग्नेयः क्रतुः प्रथम उषस्यो द्वितीय आश्विनस्तृतीयः। अग्निरुषाऽश्विनावेते प्रातर्यावाणो देवाः। अयं प्रातरनुवाको महति रात्रिभागेऽवशिष्टेऽनूच्यः। पुरा मनुष्यादिप्राणिवाचः पुरा शकुनिवादादनुब्रूयात्पुरा तमस अपघातात्। (ऐ० ब्रा० ७। ५)। उदयात्पूर्वमाश्विनं स्तोत्रं संधिकालसंबद्धम्। 'पुरावाचः प्रवदितोः। व्युष्टायां पुरा सूर्यस्योदेतोरनुब्रूयात्' (मै० सं० ४। ५। ३)। |
| | १८ | 'तद्भागम्' प्रामादिकम्। 'स भागः' इति शुद्धम्। |
| ९४१ | ४ | उपजातं देवतादर्शनाय चक्षुर्यस्य। तमसो ज्योतिषश्च संधिः। 'इति सा निगदव्याख्याता' (९४०। २२) न पठितम्। रात्रिपर्यायेषु=अतिरात्रोऽग्निष्टोमस्यैका संस्था। तस्यां द्वादश शस्त्राणि पठ्यन्ते। चतुर्णां चतुर्णामेकः पर्यायः। एवं द्वादशानां त्रयः पर्यायाः। दशानां घटिकानामेको भागः। एवं रात्र्यास्त्रयो भागाः। प्रथमः पर्यायः प्रथमे भागे। द्वितीयो द्वितीये। तृतीयस्तृतीये पठ्यते। एवं रात्रौ पठ्यमानत्वात्ते रात्रिपर्याया इत्युच्यन्ते। |
| | १३ | तिरोअह्न्याः सोमाः। 'तिरोअह्नया अहस्तिरस्कृत्य रात्रौ |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९४१ | १३ | प्रयोक्तव्या अतिरात्रगताः सोमविशेषाः' ( तै० सं० ७।३।१३) अत्रत्यसायणभाष्ये आश्विनश्च द्विकपालः पुरोडाशः । |
| | १३–१४ | आश्विनः पुरोडाशो द्विकपालः काम्येष्टिषु । यथा (मै० सं० २।३।९) अग्निष्टोमे ग्रहश्च । इदं तयोः कर्म । |
| | १५ | बाहुल्येन संस्तव एव न त्वसंस्तवः । |
| ९४२ | ४ | महाराष्ट्रमूले 'वमातिषु० सुरातयोः' ( ९४० । २९–३०) इत्याधिकः पाठः। रातिः = दानम्। वसातयः = रातयः। यस्मात्ता रातयस्तयोरश्विनोर्वमन्ते स्म । वसातिशब्दो वक्तेर्वा वहतेर्वा । 'अपे त्वा वृत्रहणं' दुर्बोधम्। |
| | १७–१८ | मम+अव+अवशीताम् । वश कान्तावित्यस्मात् । |
| | १८ | 'पापेनालिप्यमानया' (११) न पठितम्। |
| | १९ | देवाः शरीराणि संकल्पानुरूपाणि गृह्णन्ति । देवानां स्वतन्त्राणि नामानि नान्याश्रितानि । |
| ९४४ | ४ | 'प्रहिणुत' (९४३ । १८ ) न पठितम् । |
| | ७ | 'एतदपि' ( ९४३ । १९ ) न पठितं न वा व्याख्यातम् । |
| | ८ | अनादृते त्वयि । त्वयीत्यनेन को बोध्यते । इदमसंबद्धमेव । अनादृतेषु युष्मास्वित्यवश्यम् । |
| | ९ | आवः 'अव तर्पणे' इत्यस्मात् । |
| | १४–१६ | 'सर्वा ह्यस्मिन्देवताः प्रातरनुवाकमनुब्रुवति प्रमोदन्ते' ( ऐ० ब्रा० ७।६ )। |
| | १६ | आ+उप्यन्ते = स्तूयन्ते। |
| | १९ | 'उच्छी विवासे' ( धा० १ । २१६ ) । विवासः समाप्तिः । |
| ९४५ | ८ | 'अन्नवति' (३) न पठितं न वा व्याख्यातम् । |
| | ९ | 'मंहनीयं' (३) 'अस्मभ्यं' (३) न पठितम् । |
| ९४६ | १२ | यतः = यस्मात्सूर्यात् । |
| | १७ | 'स्यात्' ( ९४५ । १९) इदित्यनेन विकल्पो दर्श्यते । प्रत्यह-मायन्तीनामुषसां निर्देशः । अथवा । बहुवचनं पूजार्थम् । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९४६ | २१ | 'अपि निगमो भवति' ( ९४६ । २१–२२ ) न पठितम् । 'स्यात्' (१९) ' गावो गमनादरुषीरारोचनान्मातरो भासो निर्मात्र्यः' (२२) न पठितं न वा व्याख्यातम् । |
| ९४७ | ३ | भृशं हीनोऽस्मीति = नाहं प्रथममक्षान्विसृजामीति (ट.) । |
| | ७ | आस्फारम् = महान्तं ध्वनिं कृत्वा । ' आम्फारं संस्कृतम् ' इति दुर्गः । |
| | २५ | त्रित्वे = तिस्र एव देवता इति पक्षे । एतस्मिन्पक्षे सूर्या = सूर्यप्रभा न तु सूर्यदुहिता । |
| | २६ | यानश्वान्रथे विनियुज्य । सूर्यस्य प्रभा सूर्यात्पृथक्संबोधनार्थम् । |
| ९४८ | १ | सूर्यप्रभाऽस्याधिदेवता । ' मुकाशनं ' ( ९४७ । १७ ) ' प्रकाशयति कर्मणः ' (१९) न पठितम् । |
| | ६ | वहतुं = वहनम् । वहतुः = वहनस्यालंकारार्थं माङ्गल्यार्थं च वरस्य पुरतो वहनीयो हरिद्रागुडादिमङ्गलद्रव्यसंघः । |
| | १२ | सुकिंशुकं शल्मलिमिव । तेन शल्मलिना सूर्य उपमीयते । उपमानयोगः पुष्टतरः = इयमुपमा सूर्यस्यातिरक्तत्वं दर्शयति । आदित्यो रक्तवर्णोऽनयोपमया रक्ततरो भाति । |
| | १३ | सुकिंशुक इति विशेषणमादित्ये युक्ततरम् । शल्मलौ गौणम् । |
| | १७ | हिंसायां = यदा हिंसाऽवश्या तदा । |
| | १७–१९ | ' सविता सूर्याम्० ' इयं कथा कस्मिन्ब्राह्मणे विद्यत इति न ज्ञायते । ऐतरेयब्राह्मणस्था कथा भिन्ना ( ऐ० ब्रा० १७।१)। |
| | २१–२२ | ' प्रजापतये वा ' इत्यैतिहासिकपक्षो नास्मत्संमतः । तमितिहासमैतिहासिकाः कथयन्ति । कथमेतदिति = कोऽयमितिहास इति तान्पृच्छ । |
| | २२ | ' इतिहासो मृग्यः ' ( २८–२९ ) इति ग. च. ज. पाठ आसीदिति भाति । च. पुस्तके ' इतिहासं शृणु ' इति शोधः कृतः । किंतु स ट.पुस्तकानुरोधेन न कृतः । ' इतिहासं शृणु ' इत्यस्मात्पाठात् ' इतिहासो मृग्यः ' इति पाठः प्राचीनः । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९४९ | २–३ | यदा सूर्यविभूतिरवश्यायान्वर्षति तदा स तान्कम्पयति । कम्पनयोगात्सा विभूतिः (वृषा)कपायीत्युच्यते । |
| | १८ | मध्यम इन्द्रो वृषाकपाय्याः पुत्रस्तेन सा सुपुत्री । |
| | १९ | माध्यमिका वागिन्द्रस्य पत्नी तेन तस्याः स्नुषा । रसहरणं सूर्येण क्रियते नत्विन्द्रेण । तेन कथं सामान्यम् । कथं च तयोः सहस्थानम् । इन्द्रोऽत्राऽऽदित्यस्तेन सामान्यम् । |
| | २० | 'मिथुनसामान्यात्' दुर्बोधम् । इन्द्रो मध्यमो वागपि माध्यमिका । तयोर्मिथुनम् । इदं सामान्यं स्यात् । घसत् = प्राश्नातु । |
| | २६ | 'तमेतद्ब्रूम आदित्यं' (१३–१४) न पठितं न वा व्याख्यातम् । |
| | २८ | 'सुखकरं हविः' (१३) छ. त. द. पुस्तकेषु नास्ति । दुर्गस्वीकृतमूलेऽपि नाऽऽसीदिति भाति । |
| ९५० | १–९ | स्नु = सूनुः । तं सनोतीति स्नुषेति समीचीना व्युत्पत्तिः । |
| | ६ | 'वृद्धिकर्मणः' (९४९ । १२) 'सुखाचयकरं' (१३) न पठितम् । |
| ९५१ | १ | 'अप्यगूहन्' (१५० । १९) भाष्ये । 'अपागूहन्' वृत्तौ । |
| | ४ | 'विवस्वतेऽप्यश्विनौ' (९५० । १९–१६) इत्यत्रा 'अपि' न पठितम् । |
| | १४-१५ | 'तेषु व्यस्तं रूपं च' इत्यस्य 'तेष्वन्यत्तद्रूपं च' (२७–२८) इति पाठान्तरस्याप्यर्थो न ज्ञायते । |
| | १५ | व्यवहारः = निरूपणम् । |
| | १६ | तथा सति = यदा सरण्यूरश्वा भवेत्तदा । |
| | २१ | 'त्वाष्ट्री सरण्यूः' (९५०।१८) इतीतिहासश्च न पठितो न वा व्याख्यातः । वृत्तिस्थेतिहासाद्भाष्यस्थेतिहासो भिन्नः । यास्ककथितेतिहाससदृश इतिहासः सायणभाष्ये वर्तते । कुत्रत्योऽयमितिहास इति न ज्ञायते । |

पत्रं पङ्क्तिः

१९२ १३ भविष्यता योगेन = सवितुः सरण्याश्च योगो न भूतः किंतु भावी ।

१६ प्रथमखण्डे 'तमोभागो मध्यमः' इत्युच्यते (नि० १२।१) अत्र 'त्वष्टा मध्यमः' । तेन 'तमोभागस्य' इत्यपपाठः स्यात् ।

२० देवधर्मेण = देवेष्विदं शक्यम् । या जाया सा स्वभर्तुर्माताऽपि भवति । द्युस्थानस्य त्वष्टुः ।

२१ जाया कथं माता । जायतेऽस्यां पुत्रत्वेन पतिरिति ।

१९३ ९ अस्यां = दिवि ।

१९४ ३–४ यजमान उख्याग्निं शिक्ये प्रणयति । उखायामग्निनिधानात्प्राक् शिक्यपाशाः प्रतिमोक्तव्या भवन्ति ।

४ 'प्रज्ञानानि' (१९३ । १९) 'मेधावी' (१६) 'वरणीयः' (१७) न पठितं न वा व्याख्यातम् ।

१० 'व्यचिख्यपन्' (१९३।१७) 'सविता' (१७) द्वितीयम् 'एतस्मात्सामान्यात्' (१९–२१) न पठितम् ।

१७ 'पश्वेकादशिन्यामापस्तम्बेनैकादशपशूनां लक्षणानि पठितानि । तन्मध्येऽधोरामः सावित्र इति । सावित्रः पशुः = सवितृदेवताक इत्यर्थः । अधस्तात्कृष्ण उपरिष्टाच्छुभ्र इति । रामशब्देन कृष्ण उच्यते । रामा शूद्रा । कृष्णवर्णात्सामान्यात् । कृकवाकुः कुक्कुटः । चरणायुध इति यावत्' । (ट. ठ. ड.) ।

१९५ २–५ 'अग्निं चित्वा न रामामुपेयात्' । (वासिष्ठधर्मशास्त्रम् १८ । १७) । 'योऽग्निं चित्वाऽन्यस्य स्त्रियमुपैति' तेन प्रायश्चित्तिः कार्या (मै० सं० ३।४।७) । 'अग्निं चित्वा प्रथमं चित्वा न रामामुपेयात् । द्वितीयं चित्वा नान्येषां स्त्रियः । तृतीयं चित्वा न कांचन' (काठकसं० २१।७) ।

६–७ रामशब्दो रामा स्त्रीति मूलमर्थं त्यजति सामान्यश्च भवति । वृत्तः = प्रवृत्तः ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९९९ | १८ | 'प्रागुत्सर्पणात्' ( ९९३।२४–२९ ) = तस्मात्सावित्रात्कालात्परतः ( दुर्गः ) । सवितुरुत्सर्पणात्पुरतश्चलनात्प्रागित्यर्थः स्यात् । |
| ९९६ | ६ | आघ्रः = आघ्रातुः । |
| | ७ | 'वार्ता वृत्तौ' ( अमरः ३ । ३ । ७९ ) । वार्तार्थम् = उपजीविकार्थम् । 'तुर इति यमनाम तरतेर्वा त्वरतेर्वा त्वरया' ( ९९९।२४–२९ ) 'वा' ( २७ ) 'उदयेन' ( २८ ) न पठितं न वा व्याख्यातम् । |
| | १४ | अनुत्सृप्तः = उत्सर्पणात्प्राक् ( ९९३।२४–२९ । ) । |
| | १५–१६ | अन्धः = अ ( अस्मिन् ) + न् ( न ) + ध ( ध्यानम् ) । |
| | १६–१७ | 'तद्भगाय पर्याजहूरुस्तद्भगोऽवेक्षांचक्रे तस्याक्षिणी निर्ददाह तस्मादाहुरन्धो भग इति' (शत० ब्रा० १ । ७ । ४ । ६ ) । प्राशित्रभक्षणकथा ( तै० सं० २ । ६ । ८ ) । |
| | १७-१८ | ऐतिहासिकपक्षस्याभिप्रायोऽयमर्थवाद एव । |
| | १८–१९ | 'जनं भगोऽगच्छत्तस्मादाहुर्जनो गन्तव्यस्तत्र भगेन संगच्छता इति' ( मै० सं० १ । ६ । १२ ) । |
| | १९ | 'जनं भगो गच्छतीति वा' ( ९९९ । २७ ) अत्र वाशब्दः किमर्थः । चशब्द आवश्यकः । इति च ब्राह्मणमित्यर्थे । |
| | २० | यदा तदा = सर्वदैव । आत्मना = स्वयमेव । |
| ९९७ | १० | 'कमन्यमादित्यादेवमवक्ष्यत्' ( २६ ) इति महाराष्ट्रमूलेऽधिकम् । |
| | २४ | 'उदगमत्' ( १७ ) न पठितम् । |
| ९९८ | ८ | एते सर्वे देवा आत्मैवेत्येकत्वपक्षः । चक्षुषा = सूर्यरूपेण चक्षुषा । |
| | ९ | 'एष वै सर्वेषां देवानां चक्षुः' । इदं ब्राह्मणवचनं भेदपक्षयाज्ञिकपक्षसमर्थनाय । |

पत्रं पङ्क्तिः

९५८ २४ व्यपदेशात् = सहनिर्देशात् ।

२६ ' तस्मादेतौ यज्ञेन यजन्ते ' ( मै० सं० १ । ६ । १२ ) । ' भगांशौ ' पदं तत्र नास्ति । ' न यज्ञे यजन्ते ' इति ग. च. ज. पाठः ( ३१ ) । ' यज्ञेन यजन्ते ' इति मूलपाठः स्यात् । ' अयज्ञियम् ' ( २९ ) इति न भाष्यकृतोऽर्थः । भाष्यमते शुक्रं लोहितम् ।

२७ }
९५९ १ } ' विश्वरूपे अहनी ते कर्मे ' ( ९५८ । १७ ) इत्यन्वयः ।

२ ' द्यौरिव चासि ' ( ९५८ । १७ ) इत्यत्र ' च ' ' सर्वाणि ' प्रज्ञानान्यवस्यन् ' ( १७–१८ ) ' दत्तिः ' ( १८ ) न पठितम् ।

५ ' भाजनवती ' ( ९५८ । १८ ) न पठितं न वा व्याख्यातम् ।

२१ ' कृतः ' ( १३ ) = व्यापारितः ।

२२ अभ्यानट् = अभ्यापन्नः । प्राप्त इत्यर्थः ।

९६० २२ ' त्रिधा ' ( १२ ) ' सूयन्त इति वा ' ( १५ ) इत्यत्र ' इति वा ' ' भवन्तीति ' ( १६ ) इत्यत्र ' इति ' न पठितम् । ' त्रेधाभावाय ' ( २८ ) इत्याधिकं महाराष्ट्रमूले ।

२३ ' निधानं पदैः ' किमर्थमेतत् ।

९६१ ४–५ पांसुरे = प्यायने ।

६–७ ' स्वपनमेतत्० ' इति निरुक्तमूले ( नि० ५ । ३ ) ।

८ ' समूह्ळं पांसुल इव ' ( ९६० । १४– १५ ) भाष्ये । समूह्ळमिव पांसुले ' वृत्तौ ।

१४ ' पिंशानियाः ' इत्यस्य स्थाने ' पंसनीयाः ' ( ९६० । २९ ) महाराष्ट्रमूले । ' पंसनीयाः ' इत्यस्य कोऽर्थः ।

९६२ १ ' नियमतः ' कोऽर्थः । अत्र द्युस्थानप्रकरणे तस्य नियमनात्पठनाद्विश्वानरो द्युस्थानः । वस्तुतस्त्वयं पृथिवीस्थानः ।

१३ ' महतो बलस्य ' ( ६ ) ' वा ' ( ७ ) ' स्थानां ' ( ७ ) न पठितम् ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९६२ | १५ | एवैः = कामैः । अथवा । = अयनैः (गमनैः) । अथवा । = अवनैः ( रक्षणैः ) । |
| | १६ | ऊत्या = पथा । |
| ९६३ | ११ | ‘ भूरिमध्वानं नयति स्वर्गस्य लोकस्यापि वोहळा ’ ( ३ ) ‘ अनेन ’ ( ४ ) न पठितं न वा व्याख्यातम् । |
| | ११–१३ | योऽग्निर्यजमानं स्वर्गं लोकं नयति सोऽपि भुरण्युः । तत्संपाती = तेनाथवा स इव यः संपतति (३–४) । |
| | १३ | अग्निचित् = योऽग्निं चिनुते स यजमानः । ‘ तत्संपाती भुरण्युः ’ (४) इत्यत्र ‘ भुरण्युः ’ न पठितम् । |
| | १४ | उपात्ताः संपादिता अपूर्वसंभारा यज्ञियवस्तुसंचया येन । तदेव = तदैवेति स्यात् । ‘ स्वर्गस्य लोकस्यापि ’ (३) = स्वर्गं लोकमपि । ‘ वोहळा ’ (३) = यो वहति । |
| | २१ | ‘उत्तरस्यामन्वयस्तेन व्येषि’ (६) इति सायणभाष्ये निरुक्तपाठः । |
| ९६५ | २–३ | प्रत्यङ्कृत्वा = प्रतीच्यां दिशि स्थापयित्वा । |
| | ४ | ‘ प्रत्यङ्ङिदं ज्योतिरुच्यते ’ ( ९६४ । २१–२२ ) न पठितं न वा व्याख्यातम् । |
| | ९ | ऋचि वर्तमानं ‘ दृशे ’ ( ९६४ । २० ) पदं भाष्ये वृत्तौ च न व्याख्यातम् । दृशे = दर्शनाय । |
| | १६ | ‘ अभिविपश्यसि ’ इत्यस्य स्थाने ‘ अभिविपश्येति ’ दुर्गस्वीकृतमूले पाठः स्यात् । |
| ९६६ | ९–१० | सूर्याद्वर्षः । वर्षादोषधयः । ओषधिभ्य आहुतयः । एवमग्निपोषणं सूर्येण । ‘ अग्निं च विषं च ’ (३) इत्यत्र ‘ चद्वयं ’ ‘ विषमिति ’ (३) अत्र ‘ इति ’ ‘ द्यावापृथिव्यौ च धारयति ’ (४) ‘ आह ’ (५) न पठितम् । |
| | ११ | ‘ विपूर्वस्य स्नातेः शुद्धयर्थस्य ’ नेयं यास्कपद्धतिः । ‘ विष्णातेः शुद्धिकर्मण ’ इति यास्को ब्रूयात् । |
| | १९–२० | निगूढस्याप्यग्नेः प्रकाशनाय धूम एव कारणम् । |
| | २० | ‘ रजसा तु मध्यमः ’ (२६) इति ग. च. ज. पाठः । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९६७ | १३ | पर्वकालं = कर्मकालं कर्मयोग्यं कालम् । |
| | १४ | ' इत्यग्निः ' (९) इत्यत्र ' इति ' ' सर्वे ' (९) ' तत् ' (७) ' वृषाकम्पनः ' (७) न पठितम् । |
| | १९ | कर्मण्या = कर्माणि साधुः कृषियोग्या । |
| | १९ | उपसंहृतैः = उपसंपन्नैः = आत्मसात्कृतैः । |
| ९६८ | ११ | ' एहि ' (३) ' वः '( ३ ) ' आदित्यः '(४) न पठितम् । |
| | १३ | ' समेतद्द्रुमः ' (९) न पठितं न वा व्याख्यातम् । |
| | १३–१४ | शोभनमर्थं = जगतोऽनुग्रहम् । |
| ९६९ | ६–७ | आदित्यो वृक्षो यस्मात्स वृश्चति क्षपयति । |
| | ७–८ | वृ ( वृतः ) + क्ष ( क्षये ) = वृक्षः ( ९६८।२१ )। |
| | ८ | पुण्यकृतो निवासायाऽऽदित्यं गच्छन्ति । पला ( परा ) + शं ( शरणम् ) = पलाशः । क्षये = क्षयाय निवासाय । 'स्थाने' ( ९६८ । २१ ) ' वृक्षो व्रश्चनात्पलाशं पलाशनात् ' (२२) 'तत्र' (२३) 'इत्यपि' अत्र ' इति ' (९६९।२) न पठितम् । |
| | १० | ' सर्वस्य पाता वा पालयिता वा ' ( ९६८ । २३ ) न पठितं न वा व्याख्यातम् । |
| | १२ | गत ( आदित्यलोकम् ) आत्मा येषाम् । |
| ९७१ | ६ | ' अपि निगमो भवति ' ( ९७० । २० ) ' पार्वीरवी च दिव्या ' (२०) इत्यत्र ' पार्वीरवी ' ' च सर्वे च देवाः '(२२) ' स्तुत्या ' ( २३ ) ' इमानीति ' (२४) इत्यत्र ' इति ' न पठितम् । |
| | २१ | ' प्रयुक्तानि ' (२३) न पठितं न वा व्याख्यातम् । |
| | २२ | ' निर्वचनस्यास्यामृच्युत्तरे पादे सम्यक्पाठोऽन्वेष्यः ' दुर्बोधम् । |
| ९७२ | ८ | ' इति सा निगदव्याख्याता ' (६) न पठितम् । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९७३ | ६ | 'रश्मिवन्तः' (९७२ । २० ) 'पर्यासते' (२१) 'एषां' (२१) 'अन्तः' (२२) 'आरब्धुं' (९७३ । १) न पठितम् । |
| | १४–१९ | 'आरम्भं शक्नुवन्ति' इत्यन्वयः । |
| | १८ | पृथिवी व्याख्याता । इह द्यौरुच्यते ( निघण्टुभाष्ये ) । समुद्रो व्याख्यातः । अन्तरिक्षनामसु ( निघण्टुभाष्ये ) । उत्तमोऽभिधेयः ( ट. ठ. ड. ) । |
| | २० | 'अज एकपाद्व्याख्यातः०' इत्यादि पुनरुक्तमेकस्यामृचि तेषां स्तुतिरिति कथनार्थम् । पूर्वत्र भिन्नास्वृक्ष्वेकैकस्या देवतायाः स्तुतिः । |
| ९७४ | १२ | 'अस्माकं शृणोतु' नेदं शुद्धं संस्कृतं किंतु प्राकृतभाषादूषितं संस्कृतमेतत् । 'अपि च नः' (३) 'अजश्चैकपात्पृथिवी च समुद्रश्च' ( ३–४ ) 'सर्वे च देवाः' (४) इत्यत्र सर्वे 'च' शब्दः ' कविशस्ता मेधाविशस्ताः' (९) न पठितम् । |
| | १९ | ' यज्ञवृधो वा ' (४) इत्यस्यानन्तरं दुर्गस्वीकृतमूले 'उदकवृधो वा ' इत्यधिकमासीदिति भाति । |
| | १६–१७ | 'कविभिर्मेधाविभिः शस्त्रैर्नैघण्टुकत्वेन शस्ताः' इत्यन्वयः । |
| | १७ | 'मन्त्राः' (९) न पठितं न वा व्याख्यातम् । |
| | २१–२२ | ध्यानारम्भणे युक्त उपयुक्तः । ध्यानायोपयुक्तः सन् । |
| ९७५ | १८ | 'कर्माणि' (१०) भाष्ये । ' अन्नानि' वृत्तौ । |
| | १९ | 'पूर्वेन्द्रे' (१०) न पठितं न वा व्याख्यातम् । ' पूर्वेन्द्रे ' इदं पूर्वयेन्द्र इत्यस्यापभ्रंशः । |
| | २० | ' अचेन्योऽनूपास्ते' (१०–११) इत्यत्र भाष्ये यः = इन्द्रः । वृत्तौ तु यः = यजमानः । भाष्यकृतादर्थाद्वृत्तिकृतोऽर्थो भिन्नः । |
| ९७६ | १ | आदित्यादेते पृथग्भिन्ना इति पक्षे । |
| | १७–१९ | आदित्यो दृश्यते तथाऽऽदित्या अपि । एवं ते प्रत्यक्षाः । सप्तऋषयो दूरे वर्तन्ते । तस्मात्ते नाऽऽदित्यवत्प्रत्यक्षाः । किंतु ते परोक्षाः । इदं न वास्तविकं यस्मात्तेऽपि दृश्यन्ते । अपि |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९७६ | १७–१९ | च । शब्दः कथं प्रत्यक्षः परोक्षो वा । अथवा । आदित्यशब्दो व्युत्पत्तिदृष्ट्या प्रत्यक्षवृत्तिः । 'अदितेः पुत्राः' इति । न तथा 'सप्तऋषयः' इत्यादयः शब्दाः । ते हि परोक्षवृत्तयः । तस्मात्प्रत्यक्षवृत्तिः शब्दः प्रथमं निर्देश्यः । |
| ९७७ | १५–१६ | 'आहुतीरादित्येभ्यश्चिरं' (४) न पठितं न वा व्याख्यातम् । |
| | १६ | अविद्यमान उत्सर्गस्त्यागो यस्य तत् । यावदायुषं जुहूपात्रं न त्याज्यं यजमानेन । |
| | १७ | 'नः' (५) 'मित्रश्चार्यमा च भगश्च' (५–६) इत्यत्र 'चशब्दाः' न पठितम् । |
| ९७८ | २२ | 'आदित्ये' (१०) 'अप्रमादं संवत्सरं' (१०) 'अस्तमितमादित्यं यन्ति' (११)'अस्वप्नजौ सत्रसदौ च देवौ वाय्वादित्यौ' (१२) 'सप्तऋषयः प्रतिहिताः' (१३)' षळ् ' (१३) ' विद्या सप्तम्यात्मनि' (१३) 'सदमप्रमादं' (१४) 'इमान्येव' (१४) न पठितम् । |
| | २३ | तेनोदकेनेद्धाः । रश्मयोऽनिन्धनाः । |
| ९७९ | १ | स्वस्य कर्मणोऽनुत्सर्गेणेत्यन्वयः । उदकदानेनाऽऽदित्यं रक्षन्ति । उदकमादित्यस्य भक्षः । 'निरिन्धनोऽपि' इति द्वयोरनयोः शब्दयोर्न किमपि प्रयोजनम् । |
| | ३ | आत्मानम् = आदित्यमेव । |
| | १० | अप्रमाद्यन्तीन्द्रियाणीत्यन्वयः । |
| | १२ | ' आत्मानं यन्ति ' ( ९७८।१९ ) ' अस्वप्नजौ सत्रसदौ च देवौ'(१५—१६) ' इत्यात्मगतिमाचष्टे ' ( १६ ) न पठितम् । ' संवत्सरं ' ( १० ) ' अस्वप्नजौ सत्रसदौ च देवौ ' ( १२ ) ' विद्या सप्तम्यात्मनि ' ( १३ ) ' आत्मानं ' ( १९ ) न व्याख्यातम् । |
| | १५–१६ | ' अन्नं पानं पचनव्यूहं स्वरसान्तर्भूतं तेजो वायुवृत्तिः ' इत्यस्य कावन्वयार्थौ । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १८० | ९ | ' तिर्यग्बिल ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा ' ( १७९ । २२–२३ ) ' सर्वरूपं ' ( २३ ) ' आदित्यरश्मयः ' ( २३–२४ ) इत्यत्र ' आदित्य ' ' तियग्बिल ' ( २९ ) ' सर्वरूपं ' ( १८० । १ ) ' अत्र ' ( १ ) न पाठितम् । |
| | ५–६ | चमनम् = उदकम् । यथा चमसो मधुपूर्णस्तथा । रश्मिरूपाणि च्छिद्राणि । यथा चमसस्य तिर्यञ्चि च्छिद्राणि तथाऽस्य मण्डलस्य रश्मयास्तिर्यञ्चः । मधुपूर्णे चमसे छिन्द्राणि किंकृतानि । |
| | ७ | भूतानां संप्लवो नाशः । तदवधि । |
| | ९ | सूर्य उदकमम्तीति स चमसः । |
| | १२ | तदधिष्ठात्रा सूर्येण । |
| | १९ | आत्मगतिपक्षे ' ऊर्ध्वबोधनः ' ( १७९ । २९ ) ' ऋषयः सप्त ' ( १८० । १ ) ' इन्द्रियाणि यानि ' ( १ ) ' गोप्तॄणि ' ( १ ) न पठितं न वा व्याख्यातम् । |
| | १९–२० | इन्द्रियाननुभूतं = ब्रह्मरसो ब्रह्मज्ञानं वेन्द्रियैर्नानुभूयते । ' इन्द्रियत्वेन भृतं ' ( पाठभेदः २७–२९ ) अयं पाठभेदो दुर्बोधः । |
| | २० | के ते विधातारः । |
| १८१ | १७ | ' ऋजुगामिनाम् ' ( ९ ) ' इति ' ( ९ ) ' दानं ' ( ९ ) ' अभि नो ' ( ९ ) ' सर्वे देवाः ' ( ११ ) न पठितम् । |
| | १७–१८ | अन्तारिक्षं रश्मीन्नावृणोति न प्रतिबध्नाति । |
| | १९ | ' कल्याण्यां मतौ ' ( ८–९ ) ' चिरं ' ( ११ ) न पठितं न वा व्याख्यातम् । |
| १८२ | २१–२२ | ' मनुष्यधृतः ' ( ११ ) ' सर्वे च देवा इहाऽऽगच्छत ' ( १२ ) न पठितम् । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९८३ | ९ | 'दाशतयीषु' वृत्तौ । 'दशतयीषु' (९८२।१२) यास्कभाष्ये । |
| | १४–१९ | विश्वशब्दोपेतं मन्त्रजातं सूक्तं वा कर्मणि योज्यमिति न्याय्यम् । |
| | २२ | 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम् ' ( पूर्वमीमांसा १ । २ । १ ) समाम्नाये = वेदे । |
| | २२–२९ | कर्मसु यावन्तो गायत्रच्छन्दोयुक्ता मन्त्रा आवश्यकास्तावन्तो वेदेनोत्पाद्याः। किंतु तादृशं मन्त्रजातं नालं कर्मोत्पादे कर्मसिद्ध्यै । |
| ९८४ | २ | ओप्यन्तां = प्रयुज्यन्ताम् । |
| | ३ | इति पश्यन्यास्काचार्य इत्यन्वयः । |
| | ५ | यावदलं कर्मणि ( तावत् ) वैश्वदेवानां मन्त्राणां गायत्रे छन्दसी· यमनुत्पत्तिर्गमयतीत्यन्वयः । |
| | ५–७ | बहुविश्वशब्दावर्थे प्रत्यासन्नौ । तयोरर्थयोरल्पो भेदः । प्रायस्तौ समानार्थौ । |
| | ७ | अत्यन्तगतः = सार्वत्रिकः । अयं सिद्धान्तो नियमो वा न सर्वत्र युक्तः । सर्वत्रगो नियमोऽवश्यः । 'अपि चैवमनत्यन्तगत इत्युद्देशः' अयं सर्वेषु पुस्तकेषु पाठः । किंत्वयं दुर्बोधः । भाष्ये 'इत्युद्देशः' इत्यस्य स्थाने 'एष उद्देशः' (९८२।१४)। |
| | १९ | केषुचित्सूक्तेष्वेकस्यामेव ऋचि देवतालिङ्गं वर्तते । केषुचिन्नै·कस्यामपि । यथा 'बभ्रुरेकः' इत्यस्मिन् । ' बभ्रुरेक इति दश द्विपदा अलिङ्गाः' (९८२।१४–१६ ) इति छ. त. द. पुस्तकेषु 'एकलिङ्गं' इत्यस्यानन्तरम् । इतरेषु 'भवति' इत्यस्यानन्तरम् । नेदं दुर्गेण व्याख्यातम् । ऋचि ऋचि भिन्ना देवता विशिष्टालिङ्गा किंतु नामरहिता । अत्र विश्वशब्दो विश्वलिङ्गं वा नास्ति । तथाऽपि वैश्वदेवानां स्थाने प्रयुज्यते । तस्माच्छाकपूणिमतं नात्यन्तगम् । |
| | १६ | 'ऋध्याम' इयमृगाश्विनी । जर्भरी तुर्फरी पर्फरी एतादृशाः शब्दा अस्मिन्सूक्ते सन्ति । तेन सर्वं सूक्तं पर्फरीसूक्तमित्य· भिधीयते । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९८५ | १ | 'इम०००० वतः' अत्र चतुष्पञ्चाक्षराणि ग. च. ज. पुस्तकेषु गलितानि । 'इमं न अस्माकं मन्त्रम्' इति पाठः स्यात् । क. ख. घ. ट. ठ. पुस्तकेषु विद्यमाना वृत्तिः सायणभाष्यमेव । |
| | २ | 'भक्षेमहि' इति पाठोऽशुद्धः । भक्षयेमहीत्यवश्यम् । |
| ९८६ | १२ | 'यज्ञेन यज्ञमयजन्त देवाः' ( ३ ) 'तमालभन्त तेनायजन्त' ( ४ ) 'ह' ( ५ ) 'समसेवन्त' ( ६ ) 'यद्विवसते' ( ७ ) न पठितम् । |
| | १३–१५ | स्थावरजङ्गमभावमापन्नमत एव सर्वगणं सर्वनामानम् । |
| | १५ | 'तं वः०' इत्यत्रापि पश्वाहुत्या ( चराथा ) ओषध्याहुत्या (वसत्या) चाग्निरिध्यत इत्युच्यते । सर्वमग्निरेव । एतच्चोक्तम् । |
| | १६ | एतादृशं दर्शनं ज्ञानं यस्य जातं तस्य प्रयोक्तुर्यजमानस्य । |
| | १८ | देवभाविनः = देवभावं प्राप्ताः । |
| | २२ | अन्यद्भवतीति अन्यभावि । न अन्यभावि अनन्यभावि । तादृशयज्ञस्य फलमन्यथा न भवति । |
| ९८७ | १ | 'साधनाद्द्युस्थानो देवगण इति नैरुक्ताः । पूर्वं देवयुगमित्याख्यानम्' ( ९८६ । ६–७ ) न पठितं न वा व्याख्यातम् । क एते साध्याः । यज्ञकर्मसाधनात्ते दिवमाप्नुवन् । तेन साध्या द्युस्थानो देवगण इति नैरुक्तमतम् । पूर्वस्मिन्युगे पृथिव्यां साध्यनामका देवा आसन्नित्याख्यानं पौराणिकमतम् । |
| | २ | वैदिकशब्दा अर्थाश्च नित्याः । तेन पूर्वे ज्ञानवन्तो यज्ञकर्माणि कृत्वा तत्पदमापेदिरे । |
| | ७ | 'अग्निः पशुरासीत्तेनायजन्त' ( तै० सं० ५ । ७ । २६ ) इत्येव । तत्र 'तमालभन्त' नास्ति । |
| | ८–९ | ते यस्मात् = यस्मात्ते । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९८७ | ९ | 'अग्निर्वसुभिर्वासवः' (९८६।८) भाष्ये। 'वासवोऽग्निः' वृत्तौ। |
| | १९ | 'सुगा वो देवाः सदना अकर्म य आजग्मेदं सवनं जुषाणाः। भरमाणा वहमाना हवीᳪष्यस्मे धत्त वसवो वसूनि, (य० वा० सं० ८। १८)। स्वगा वो देवाः सदनमकर्म य आजग्म सवनेदं जुषाणाः। 'जक्षिवांसः पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि' (तै० सं० १। ४। ४४)। 'सुगा वो देवाः सदना कृणोमि य आग्मेदᳪ सवनं जुषाणाः। जक्षिवांसः पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि' (मै० सं० १। ३। ३८)। 'सुगा वो देवाः सदनेदमस्तु य आजग्म सवनेदं जुषाणाः। जक्षिवांसः पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि' (काठकसं० ४।१२)। कपिष्ठलसंहितायां (३। १०) 'आजग्म' स्थाने 'आजग्मुः' इति विशेषः। इतरथा कपिष्ठलसंहितापाठः काठकसंहितापाठसदृशः। इयमृक्कस्यां संहितायां वर्तत इति न ज्ञायते। उपरि निर्दिष्टासु संहितासु 'सुपथा' इत्यस्य स्थाने 'सदना' अथवा 'सदनं' वर्तते। दुर्गस्वीकृतमूले 'सुपथेदमस्तु' (२१) इति पाठ आसीदिति भाति। 'सवनानीमानि' (१७) इत्यस्य स्थाने 'सवनमिदं' (२४) च। |
| ९८८ | ३ | 'आग्नेयं प्रातःसवनमैन्द्रं माध्यंदिनं वैश्वदेवं तृतीयं सवनम्' (मै० सं० ४। ९। ९)। 'नव समिष्टयजूंषि तृतीयसवने हूयन्ते' (मै० सं० ४। ८। ४)। तेन वसवो द्युस्थानाः। |
| | १६ | 'अरमन्त' (९) 'भवाः' (१०) 'च' (१०) 'अर्वाच एनान्पथः' (११) न पठितम्। |
| | १९ | 'रमयन्त' (१०-११) न पठितं न वा व्याख्यातम्। कदाचिद्वर्तमाना इत्येष शब्दो 'रमयन्त' इत्यस्य व्याख्या स्यात्। |
| ९८९ | १ | अहतान् = नवान्। प्रहतान् (पाठभेदे २२) = सदागमनेन हतान् उत्तमाम्। |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९८९ | १९ | वाजिनो देवाश्वाः। 'नो भवन्तु' (१०) ह्वानेषु' (१०) 'सुमितद्रवः' (११) 'इति वा' (११) 'इति वा' (११) 'इति' (१२) 'अस्मत्' (१२–१३) न पठितम्। 'अमीवा देवाश्वाः' (९८९। १३) न पठितं न वा व्याख्यातम्। |
| ९९० | १–२ | अ(आ) + हिं (हन्ति)। र (रहसि) + क्षसः (क्षिण्वन्ति)। |
| | २ | अमीवाः = रोगान्। |
| | २१ | 'देवानां पत्न्य उशत्यः' (१३) 'अवन्तु नः' (१४) इत्यत्र 'नः' 'चान्नसंसननाय' (१४) 'ता नो देव्यः' (१५) 'शर्म' (१६) न पठितम्। |
| ९९१ | १९ | अग्न्यादिभिः पुरुषैरित्यन्वयः। 'अपि च' इत्यत्र 'च' (१०) 'इन्द्रस्य पत्नी' (१०–११) 'अग्नेः पत्नी' (११) 'अश्विनोः पत्नी' (११) 'देव्यः' (१२) न पठितम्। |
| | १७ | राट् राजमाना। 'राजतेः' (११) 'कामयन्तां' (१२) न पठितं न वा व्याख्यातम्। |
| | १८–१९ | रोदसी इति प्रगृह्यं शाकल्यस्य पदकारस्य मतेन। तेन तद्द्विवचनम्। किंत्वत्र तदेकवचनम्। तेन न प्रगृह्यम्। |
| ९९२ | २ | कश्चासौ कालः। भुक्तवत्सु पुरुषेषु = अग्न्यादिपुरुषभोजनानन्तरम्। 'य ऋतुः कालो ज्यायानां य ऋतुः कालो ज्यायानाम्' (९९१। १२) इति द्विरुक्तिरध्यायपरिसमाप्तिद्योतनाय। |
| ९९४ | १० | अतिस्तुतय इति नैरुक्तानां समयः सिद्धान्तः। तमनुसृत्य। |
| | ११ | 'अपो सुम्यक्ष०' इत्यस्याऽऽर्षच्छन्दोविनियोगा न दीयन्ते। |
| ९९५ | २ | स्तोत्रियश्चानुरूपश्च स्तोत्रियानुरूपौ न तु स्तोत्रिनुरूपे। |
| | ३ | 'ते' (९९४-२२) 'न त्वा' (२२) इत्यत्र 'न द्यावापृथिव्यौ' (२२) इत्यत्र च 'न' न पठितम्। 'वज्रिन्' (२३) 'अभ्यश्नुवीताम्' (२३) न पठितं न वा व्याख्यातम्। |

| पत्रं | पङ्क्तिः |
|---|---|
| ९९५ | १९ 'यत्' (१२) 'गतिकर्मणः' (१३) 'एतत्' (१४) न पठितम्। |
| | २१ व्यवधीयते = व्यवहितोऽदृश्यो भवति मनुष्यः। |
| ९९६ | १४ 'हि' (९) 'च' (९) 'पोषेषु' (१०) न पठितम्। |
| | १८ 'यत्रामाद्यद्वृषाकपिरर्य ईश्वरः' (९–१०) 'अथैषाश्विनोः' (१२) न पठितं न वा व्याख्यातम्। |
| | २३–२४ 'अथैषा वाचः प्रवह्लितेव' इदमष्टमखण्डस्यान्ते। पञ्चमषष्ठसप्तमाष्टमखण्डा दुर्गस्वीकृतमूले नाऽऽसन्। |

---

| पत्रं | पङ्क्तिः |
|---|---|
| ९९७ | ३ सृण्येवेति। नेयं यास्ककृतभाष्यपद्धतिः। यास्कः ऋक्प्रतीकानि न पठति। द्विविधा सृणिर्भवति। अत्र सृणिशब्दः स्त्रीलिङ्गः। तेन 'भर्ता हन्ता' इति अशुद्धे रूपे। 'भर्त्री हन्त्री' इत्यवश्यम्। 'सृण्येव' अत्र न सृणिशब्दः। द्वौ सृण्यौ न द्वे सृणी। 'सृण्यशब्दस्य कोऽर्थः। |
| | ४ यथा सृणिः भर्त्री तथा अश्विनौ अपि भर्तारौ। 'चापि' इत्यत्र 'च' शब्दः अनवश्यः। जर्भरी = भर्तारौ। 'इत्यर्थः'। यास्कः इत्यर्थशब्दौ भाष्ये न प्रयुनक्ति। तुर्फरीतू = हन्तारौ। |
| | ६ तुर्फरी = क्षिप्रहन्तारौ। उदन्यजेव = उदकजे इव। |
| | ७ रत्ने सामुद्रे चान्द्रमसे इति अध्याहृतम्। समुद्रे भवं सामुद्रम्। चन्द्रमसि भवं चान्द्रमसम्। किमिदं चान्द्रमसं रत्नम्। चन्द्रकान्तः चन्द्रमसि न विद्यते। किंतु चन्द्ररश्मिभिः स्पृष्टः सन् द्रवते। जेमने = जयमने। |
| | ८ जरायु = जरायुजम्। 'शरीरं' अध्याहृतम्। |
| | ९ 'शारदम्' अयं कस्य अर्थः। अजरं = अजीर्णम्। अत्र सायणभाष्यम्। 'सृण्येव सृण्याविव। सृणिरङ्कुशः। |

पत्रं पङ्क्तिः

९९७ ९ अङ्कुशाहौं मत्तगजाविव । जर्भरी गात्रविनामं कुर्वन्तौ । यद्वा । सृण्येव । सृणिर्द्विविधा । मत्तगजस्यैकत्रावस्थापयित्र्येका । अपरा बाधयित्री । तादृश्यौ सृण्याविव जर्भरी भर्तारौ एकत्रैवावस्थापकौ । तथा तुर्फरीतू तर्कितारौ शत्रूणां हन्तारौ । नैतोशेव । नितोशतिर्वधकर्मा । नितोशयतीति नितोशः । तस्यापत्यं नैतोशः । ताविव तुर्फरी शत्रूणां हन्तारौ । पर्फरीका पर्फरीकौ शत्रूणां विदारयितारौ । यद्वा । स्तोतृजनानां धनादिदानेन पूरयितारौ । उदन्यजेव उदन्यजे इव । उदके भवं उदन्यम् । तत्र जाते रत्ने इव निर्मलौ । कान्तियुक्तावित्यर्थः । जेमना जेमनी जयशीलौ । मदेरू बलातिशयेन मत्तौ स्तुत्यौ वा । ता तौ पूर्वोक्तगुणौ अश्विनौ युवां मे मदीयं जरायु जरायुजमत एव मरायु मरणशीलं शरीरम् । अजरं जरारहितं मरणधर्मरहितं कुरुतम्' । यास्कभाष्यं दुर्बोधम् । यस्मात् यास्कः सृण्यनैतोशशब्दयोः अर्थौ न ददाति । रत्नशब्दः नपुंसकः । अश्विनौ पुमांसौ । तौ रत्नाभ्यां कथं उपमीयेताम् । सायणभाष्यं अपि न साधु । कदाचित् अयं अर्थः स्यात् । ' जर्भरी ' इदं भृधातोः यदि नामरूपं स्यात् । भृधातोः अभ्यासः जर्भृ । इकारो नामकरणः । यः पौनःपुन्येन भृशं वा बिभर्ति सः जर्भरिः । पर्फरीका । अत्र कआगमः छन्दोर्थः स्यात् । जर्भरिवत् पर्फरिशब्दः फृधातोः यदि नामरूपं स्यात् । धातुपाठे फृधातुः नैव विद्यते । स कदाचित् भृधातोः उच्चारभेदः स्यात् । तुर्फरिशब्दः पर्फरिसदृशो भाति । ' पर् ' इत्यस्य स्थाने ' तुर् ' इत्यादेशः ग्रामीणैः कृतः स्यात् । ' तुर्फरीतू ' इत्यत्र तूआगमः छन्दोर्थः स्यात् । उदन्यजशब्दः ' उदन्य–उदज ' इत्यनयोः शब्दयोः समासेन घटितः स्यात् । उदनि भवः उदन्यः । उदनः जातः उदजः । अयं कश्चित् उदकचारी पक्षी स्यात् । धर्मकर्मशर्मभर्मवत् जेमन्शब्दः जिधातोः मन्प्रत्ययान्तः उत्पन्नः स्यात् । जेमा जेमनौ जेमनः इति तस्य रूपाणि भवेयुः । मदेरुशब्दः मदधातोः । अश्विनौ श्येनाभ्यां उपमीयेते । यथा–'विभिः श्येनेव दीयतम्'

पत्रं पङ्क्तिः

१९७ ९ ( ऋ० सं० ९ । ७४ । ९ ) । ‘कुह श्येनेव पेतथुः’ (ऋ० सं० ८ । ७३ । ४) । ‘श्येनाविव पतथो हव्यदातये सोमं सुतं महिषेवाव गच्छतः’ (ऋ० सं० ८ । ३९ । ९ ) । सृण्य—नैतोश—उदन्यजाः इमानि केषांचित् पक्षिणां नामानि स्युः । यथा इमे पक्षिणः अरिभूतान् पक्षिणः जयन्ति स्वभक्ष्यं च अपहरन्ति तथा अश्विनौ अत्रिच्यवनादीन् आपदः उद्धरतः । ता तौ युवां अश्विनौ मे मम जरायु जरावशं मरायु मरणवशं शरीरं अजरं जरामरणमुक्तं कुरुतम् । अय केवलः तर्कः ।

१२ तरत् = तरति स पापं सर्वम् । मन्दी = यः स्तौति ।

१३ धावति = गच्छत्यूर्ध्वां गतिम् । धारासुतस्य अन्धसः = धारया अभिषुतस्य अन्धसः = धारया अभिषुतस्य सोमस्य मन्त्रपूतस्य वाचा स्तुतस्य । अयं आत्मपरोऽर्थः ऋचि न विद्यते । तरत् = समुद्रं तरन् । ‘तरत्समुद्रं पवमान ऊर्मिणा’ ( ऋ० सं० ९ । १०७ । १९ ) । सोमरसः जलेन मिश्र्यते तस्मात् सोमः समुद्रं तरति इति ऋषिः वक्ति । सोमः मन्दी इति उच्यते । यस्मात् सः तृप्यति पातॄन् हर्षयति च । एतादृशः सोमः पवित्रं प्रति धावति । सुतस्य अन्धसः सोमस्य धारा पवित्रं प्रति धावति । अस्य सूक्तस्य चतस्रः ऋचः । प्रत्येकस्याः अन्तिमः पादः तरत्स मन्दी धावतीति । इन्द्रादयो देवाः पिबेयुः इति सोमः त्वरया पवित्रं प्रति शुद्धीकरणार्थं धावति इति अतिशयोक्तिः ।

१९ चत्वारि शृङ्गेति । ईदृशानि प्रतीकानि अस्मिन् एव अध्याये दृश्यन्ते । आदौ त्रयः एव वेदाः आसन् । न चत्वारः ।

२० प्रातःसवनं माध्यंदिनं तृतीयं सवनं इति त्रीणि सवनानि । ‘प्रायणीयोदयनीये’ इति द्वयोः इष्ट्योः नामनी ।

२१ हस्तासः = छन्दांसि । त्रिधा = त्रेधा = मन्त्रब्राह्मणकल्पैः ।

२२ रोरवणमस्य सवनक्रमेण । आदौ ऋचः । तदनन्तरं यजूंषि । तदनन्तरं सामानि । एवं सवने सवने क्रमः । अयं त्रिविधः पाठः अस्य वृषभस्य रोरवणमित्युच्यते ।

पत्रं पङ्क्तिः

११७ २३ यदेनमृग्भिः ० स्तुवन्ति। इदं ब्राह्मणवाक्यवत् भाति।

२४ एष हि महान् देवो यद्यज्ञः। इदमपि तथैव।

२४–२५ एष हि मनुष्यानाविशति यजनाय। इदमपि तथैव। अत्र सायणभाष्यम्। " यद्यपि सूक्तस्य अग्निसूर्यादिपञ्चदेवताकत्वात् पञ्चधायं मन्त्रो व्याख्येयस्तथापि निरुक्ताद्युक्तनीत्या यज्ञात्मकाग्नेः सूर्यस्य च प्रकाशकत्वेन तत्परतया व्याख्यायते। अस्य यज्ञात्मकस्याग्नेः चत्वारि शृङ्गा चत्वारो वेदाः शृङ्गस्थानीयाः। यद्यपि आपस्तम्बेन ' यज्ञं व्याख्यास्यामः। स त्रिभिः वेदैर्विधीयते ( परिभा. १।३ ) इत्युक्तम्। तथाऽपि आथर्वणस्येतरानपेक्ष्यैवैकाग्निसाध्यानां कृत्स्नकर्मणां अभिधायकत्वात् तदपेक्षया चत्वारि शृङ्गेत्युक्तम्। त्रयोऽस्य पादाः सवनानि त्रीण्यस्य पादाः। प्रवृत्तिसाधनत्वात्पादा इत्युच्यन्ते। द्वे शीर्षे ब्रह्मौदनं प्रवर्ग्यश्च। इष्टिसोमप्राधान्येन इदं उक्तम्। सप्त हस्तासः सप्त च्छन्दांसि। हस्ता अनुष्ठानस्य मुख्यं साधनम्। छन्दांस्यपि देवताप्रीणनस्य मुख्यसाधनमिति हस्तव्यवहारः। त्रिधा बद्धः मन्त्रकल्पब्राह्मणैः त्रिप्रकारं बद्धः। बन्धनमस्य तन्निष्पाद्यत्वम्। वृषभः फलानां वर्षिता। रोरवीति भृशं शब्दायते। ऋग्यजुःसामोक्थैः शस्त्रयागस्तुतिरूपैः होत्राद्युत्पादितैः ध्वनिभिः असौ रौति। एवं महो देवः मर्त्यान् आविवेश। मर्त्यैः यजमानैः निष्पाद्यत्वात् प्रवेश उपचर्यते। अथ सूर्यपक्षे व्याख्यायते। अस्य आदित्यस्य चत्वारि शृङ्गाणि चतस्रो दिशः। एताः श्रयणार्थत्वात् शृङ्गाणीत्युपचर्यन्ते। त्रयो ऽस्य पादाः। त्रयो वेदाः पादस्थानीयाः भवन्ति गमनसाधनत्वात्। तथाहि 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते' इत्युपक्रम्य ' वेदैरशून्यैस्त्रिभिरेति सूर्यः ' ( तै. ब्रा० ३। १२। ९। १ ) इति हि वेदत्रयेण गतिराम्नाता। द्वे शीर्षे। अहश्च रात्रिश्च द्वे शिरसी। सप्त हस्तासो अस्य। सप्त रश्मयः षट् विलक्षणाः ऋतवः एकः साधारणः इति वा सप्त हस्ता भवन्ति। त्रिधा बद्धः त्रिषु स्थानेषु क्षित्यादिषु अग्न्याद्यात्मकत्वेन संबद्धः। ग्रीष्मवर्षाहेमन्ताख्यैः त्रिभिः त्रेधा बद्धो वा।

पत्रं पङ्क्तिः

१९७ २४–२९ वृषभः वर्षिता। रोरवीति शब्दं करोति वृष्ट्यादिद्वारा। सः महो महान् देवः मर्त्यानाविवेश तन्नियन्तृतया। 'सूर्य आत्मा जगतस्तस्थुषश्च' (ऋ० सं० १।११५।१) इति हि श्रुतम्। एवं तु अन्नादिपक्षेऽपि योज्यम्।"

अत्र व्याकरणमहाभाष्यम्। "चत्वारि शृङ्गाणि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च। त्रयो अस्य पादास्त्रयः कालाः भूतभविष्यद्वर्तमानाः। द्वे शीर्षे द्वौ शब्दात्मानौ नित्यः कार्यश्च। सप्त हस्तासो सप्त अस्य विभक्तयः। त्रिधा बद्धस्त्रिषु स्थानेषु बद्ध उरसि कण्ठे शिरसीति। वृषभो वर्षणात्। रोरवीति शब्दं करोति। कुत एतत्। रौतिः शब्दकर्मा। महो देवो मर्त्याँ आविवेशेति। महान्देवः शब्दः। मर्त्या मरणधर्माणो मनुष्याः। तानाविवेश"।

२८ यन्तः = गच्छन्तः ईजाना वा। अपेक्षन्ते = ईक्षन्ते। स्वर्यन्तो नापेक्षन्ते = ते अमुमेव लोकं गतवन्त ईक्षन्ते।

१९८ २ विश्वतोधारं = सर्वतोधारम्।

अत्र महीधरभाष्यम्। 'सुष्ठु विदन्ति जानन्ति ते सुविद्वांसः ज्ञानकर्मसमुच्चयकारिणः। ये सुविद्वांसः यज्ञं वितेनिरे वितन्वन्ति अनुतिष्ठन्ति। कीदृशं यज्ञम्। विश्वतोधारं विश्वतो धारा यस्य तम्। आहुतिदक्षिणान्नानि यज्ञस्य धाराः। वैश्वानरमारुतपूर्णाहुतिवसोर्धारावाजप्रसवीयानि वा यज्ञस्य धाराः। यद्वा विश्वस्य जगतो धारयितारम्। ते यज्ञकर्तारः स्वः स्वर्गं यन्तो गच्छन्तो नापेक्षन्ते पुत्रपश्वाद्यपेक्षां न कुर्वते कृतकृत्यत्वात्। द्यां स्वर्गं चाऽऽरोहन्ति। कीदृशीं द्याम्। रुणद्धि जरामृत्युशोकादीन् सा रोदसी ताम्। रोदसी इति दिवो विशेषणं न तु द्यावापृथिव्योरभिधानम्। दिव इत्युपादानात्। यद्वा। ये यजमानाः सुविद्वांसः सुष्ठु कर्मप्रकारं जानन्तः विश्वतोधारं जगद्धारणहेतुं यज्ञं वितन्वन्ति विशेषेण कुर्वन्ति ते द्यां अन्तरिक्षं आरोहन्ति। तथा रोदसी द्यावापृथिव्यौ आरोहन्ति। ततः स्वर्यन्तः स्वर्गस्थं आदित्यमण्डलं प्राप्नुवन्तः अन्यत्किमपि स्थानं न अपेक्षन्ते।"

पत्रं पङ्क्तिः

१९८ २ रोदसीपदस्य द्यावापृथिव्यौ इत्यर्थः । इदं पदं व्यर्थम् । यस्मात् पृथिव्याः अत्र न किमपि प्रयोजनम् । 'द्यां'पदेन द्यौः कथितैव। 'ईक्षन्ते' 'विश्वतोधारं' 'वितेनिरे' एते शब्दाः ऋक्शाखायां न वर्तन्ते। अस्या ऋचः भाषाशैली अर्वाचीना। ये सुविद्वांसो विश्वतोधारं सर्वस्य जगतः धारयितारं यज्ञं वितेनिरे वितन्वन्ति ते द्यां आरोहन्ति। स्वर्यन्तः स्वर्गं गच्छन्तः स्वर्गादन्यत् न किंचिदपेक्षन्ते ।

३ प्रवह्लिकेव = प्रवह्लिका इव । 'प्रवह्लिका' इत्यस्य कोऽर्थः। स्तुतिः वर्णनं वा इति अर्थः स्यात् । इव शब्दः किमर्थम् ।

१९९ १ 'गुहा गूहतेः' ( १९८ । ९ ) ।

५ 'ओंकारो महाव्याहृतयश्चेत्यार्षं' ( १९८ । १० ) 'प्रजापतिः ० त्रयी विद्यामभ्यतपत् । तस्या अभितप्ताया एतान्यक्षराणि संप्रास्रवन्त भूर्भुवः स्वरिति' ( छा० उ० २ । २३ । २ )। 'तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ओंकारः संप्रास्रवत्' ( छा० उ० २ । २३ । ३ ) एतदार्षं विवरणम् ।

७–९ आख्यातानामर्थः कथमप्रसिद्धतरः। नामान्यप्यप्रसिद्धानि सन्ति। उपसर्गनिपातानामर्थोऽनिश्चितो भवेन्नत्वाख्यातानाम् । दुर्गकृतं विवरणमकिंचित्करम् ।

१५–१६ के एते एके। अधिभूतविदः। भूतानि सर्पादीनि ये जानते ते।

१७ मृगाः पशुभ्यः कथं भिन्नाः । तूणवशब्दस्य कोऽर्थः । विशिष्टं वाद्यमित्येकोऽर्थः । पशुमृगयोर्मध्ये निर्देशात्तूणवः प्राणी स्यात्। 'पशुषु = गवादयः । तूणवेषु = वीणाजातिषु । वादित्रेष्वित्यर्थः । मृगेषु = सवरादिषु ( ? )' ( ट. ) ।

१८ आत्मप्रवादाः = अध्यात्मवादिनः । प्रवदतीत्यशुद्धं प्रवदन्तीत्यवश्यम् ।

१९ 'एष्वेव लोकेषु त्रीणि' ( १९८ । १६ ) भाष्ये । 'एषु लोकेषु त्रीणि वै तुरीयाणि' इति मै० सं० । 'वायौ' ( १७ ) भाष्ये । 'वाते' मै० सं०।'सादित्ये' ( १८ )

| पत्रं | पङ्क्तिः | |
|---|---|---|
| ९९९ | १९ | मै० सं० नास्ति । 'स्तनयित्नावथ ' ( १८ ) भाष्ये । 'स्तनयित्ना अथ ' मै० सं० । ' ब्राह्मणाः वदन्ति ' ( १९ ) भाष्ये । ' ब्राह्मणः वदति ' मै० सं० । ' या च देवानां या च मनुष्याणां ' ( २० ) मै० सं० नास्ति । ' वाग्वै सृष्टा चतुर्धा व्यभवत्ततो याऽत्यतिरिच्यत सा वनस्पतीन्प्राविशत्सैषा याऽक्षे या दुन्दुभौ या तूणवे या वणायाम् ' ( मै० सं० ३ । ६ । ८ ) । |
| | २० | तदेतद्ब्राह्मणं स्पष्टम् । रथंतरं ( ९९८ । १७ ) वामदेव्यं ( १७ ) बृहत् ( १८ ) एतानि साम्नां नामानि । |
| | २२ | इतरे वर्णाः कीदृशीं वाचं वदन्ति । ते किं पशवः । एतेषां मतानां मूलमन्वेष्यम् । ततोऽर्थः स्पष्टो भवेत् । |
| १००० | १० | ' ऋचो अक्षरे परमे व्यवने ' ( २ ) ' ऋचा ' ( ३ ) न पठितम् । ' ऋचश्च ह्यक्षरे परमे व्यवने धीयन्ते० प्रति प्रतीति च ब्राह्मणम् ' (३—७ ) न पठितं न वा व्याख्यातम् । |
| | ११–१२ | अधियज्ञ ओंकारः । अधिदैव आदित्यः । अध्यात्मनि आत्मा । |
| | १५ | ओंकारं विना देवा नार्च्यन्ते । तस्याः = वाचः । |
| | १६ | व्यवनं विशिष्टं विविधं वा अवनं रक्षणम् । ऋचां परमं रक्षणमक्षरमोंकारः । नानादेवतेषु च मन्त्रेषु ( ६ ) ॐकार आवश्यकः । विविधमस्मिञ्छन्दोजातमिति दुर्गः । |
| | २१ | अक्षरं सर्वेषां शब्दानां मूलम् । |
| | २५ | ' ओंकार एवेदं सर्वम् । ओमित्येतदक्षरमिदं सर्वम् ' ( मा० उ० १ ) । ' ओमितीदं सर्वम् ' ( तै० उ० अनुवाकः ८ ) । |
| | २६ | तानि = ऋगादीनि । |
| १००१ | १ | प्रणवः = ॐ । प्रणवस्य विग्रहः शरीरम् आत्मा । |
| | ११ | ऋगेष आदित्य इत्यन्वयः । |
| | १३ | प्रत्यृचः = सर्वाणि भूतानि ( ४—५ ) । ' प्रत्यृचः सर्वाणि भूतानि ' ( ४—५ ) ' यदेनेनार्चन्ति ' ( ७ ) प्रत्यृचः |

पत्रं पङ्क्तिः

१००१ १३ सर्वाणीन्द्रियाणि ' ( ७ ) यान्यस्मिन्नात्मन्येकं भवन्ति ' ( ९ ) न पठितं न वा व्याख्यातम् ।

१३-१४ मात्रेभ्यः ( ९ ) = अवयवेभ्यः ।

१४ ' भवति ' ( ९ ) ' इत्यधिदैवतं ' ( ६ ) ' अथाध्यात्मं ' ( ६ ) ' अत्र ' ( ७ ) ' उच्यन्ते ' ( ७ ) ' भवति ' ( ८ ) न पठितम् ।

१९ अयमात्मा शरीरं वा ऋक् । यास्कभाष्ये शरीरमेव ( ७ ) ।

२१ ' अविनाशिधर्म ' ( ८ ) भाष्ये । ' अविनाशिधर्मि ' वृत्तौ । ऋक् प्रत्यृग्यथाऽवयवः प्रत्यवयवः । ऋच ऋग्यजुःसामानि । प्रत्यृचो ब्राह्मणानि ( ? ) । देवाः प्रसिद्धाः । अक्षरमोंकारः । अथवा । ऋक् आदित्यः । प्रत्यृचः सर्वाणि भूतानि । देवा रश्मयः । अक्षरम् अन्यन्मात्रेभ्यो भूतेभ्यः । अथवा । ऋक् शरीरम् । प्रत्यृत्र इन्द्रियाणि । देवा इन्द्रियाणि । अक्षरम् अविनाशिधर्म ।

१००२ १९ वाचः क्षयो निवासः । ' नाम्य क्षयो भवति ' ( २७ ) मूलः च. पाठः । स ' वाक्क्षयो भवति ' इति शुद्धी क्रियते । अ ( न ) + क्षरं ( क्षयः ) । ' न क्षीयते ' ( ४ ) अस्य विवरणम् ' अक्षयं ' । अथवा । ' अक्षयो भवति ' । ' वाक्क्षयः ' इति दुर्गस्वीकृतपाठः । ' वाक्क्षरं ' ( २९ ) इति पाठभेदः । वाचः क्षरं निवासः । क्षयस्याभावोऽक्षयम् ( ४ ) अव्ययीभावः ।

१७-१८ यथाऽरा अक्षे वर्तन्ते तथा ।

२२ ' अन्तस्योपप्रदर्शनार्थः ' इदं ' परिसमाप्त्यर्थः ' इत्यस्मात्कथं भिन्नम् । ' वान्तस्य ' अत्र च. मूलपाठो दुर्वाच्यः । अन्तः सिद्धान्तः स्यात् ।

१००३ १ ' अभ्यूह्लः ' इति क. ख. छ. त. द. पुस्तकेषु ( १००२ । २६ ) । वृत्तौ ' अभ्यूढः ' ।

१-२ अभ्यूढः = वितर्कितः ।

| पत्रे | पङ्क्तिः |
|---|---|
| १००३ | ३ पुनरयं० = अयं पुनर्मन्त्रार्थः । |
| | ४ निगमशेषाः = उपनिषदो वेदान्ताः । |
| | ९ वाक्यार्थसामर्थ्यात् = वाक्यार्थाधारेण । उन्नीतं तर्कितमर्थाभिधाने सामर्थ्यं शक्तिर्येषाम् । तस्य विचारस्यापरे पर्यायाः । ' उपरि ' अशुद्धम् । |
| | १९ उपदेशेनार्थं गृह्णन्ति त औपदेशिका असाक्षात्कृतधर्माणः । |
| | १८ पारोवर्येण = आचार्यपरम्परया ( निरु० पृ० ९८।प० ८) । एतेषु = औपदेशिकेषु । |
| | २३ नियोगे = कर्मणि । |
| | २९ ' मनुष्या वा ' = मनुष्या वै । उत्क्रामत्सु = स्वर्गं गच्छत्सु । मृतेष्वित्यर्थः । |
| १००४ | २ पुराकल्पः = पूर्वयुगवृत्तान्तः । |
| | ३ 'तेभ्य एतं मन्त्रार्थचिन्ताभ्यूहमभ्यूहं प्रायच्छन् ' इति वृत्तौ । ' तेभ्य एतं तर्कमृषिं प्रायच्छन्मन्त्रार्थचिन्ताभ्यूहमभ्यूढं ' भाष्ये (१००२।१०–११) । तर्क एव ऋषिः । अभ्यूढो वितर्कितो मन्त्रार्थचिन्तारूपोऽभ्यूहः । एतद्रूपस्तर्क एव ऋषिः । तं प्रायच्छन् । ' को न ऋषिर्भविष्यति ' इति प्रश्नस्य उत्तरमिदम् । |
| | ३–४ समस्तार्थरूपमेतमूहं प्रायच्छन्नित्यन्वयः । |
| | ४–९ भवन्तः शक्यन्ते शक्नुवन्ति । ' शक विभाषितोऽमर्षणे ' ( ४।८१ ) । |
| | ६ सूक्ते = स्पष्टे । ' किंच ' ( १००२।११ ) इत्यत्र ' किंचित् ' । |
| | २१ ' प्रजवेषु यत् ' ( १३ ) 'अत्राऽऽह ' ( १४ ) न पठितम् । |
| | २२ न साक्षात्तेऽर्था दृश्यन्ते । |
| | २४ संयजन्ते = परस्परेण संपूजयन्ति – ऐकमत्येन स्वगाद्यर्थान्पूजयन्ति । |

पत्रं पङ्क्तिः

१००६ ६ प्रतिभानवतां = बुद्धिमताम्। तेषां मनोवृत्तयो न सर्वत्र संच-रितुं शक्नुवन्ति।

७ ऊहब्रह्म = तर्करूपं ब्रह्म। शब्दानामर्थानां ये न्याया ये विवरणनियमास्तत्र संकटेषु। दुर्बोधार्थेष्वित्यर्थः। 'ऊह ब्रह्माण ऊह एषां ब्रह्मेति वा' (१६) 'अथाऽऽगमो यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनु-भवति' (१००४।१७–१८) न पठितं न वा व्याख्यातम्।

१० 'अस्या उद्वाहितोनेश्चानेदाद्वेदः' इदमतीव दुर्बोधम्।

१२–१३ श्रुतिर्विद्यतेऽस्य स श्रुतिमान्। तस्य बुद्धिरियं विद्या। सा तां बुद्धिं वर्षति नरं श्रुतवन्तं करोति। 'श्रुतिमति बुद्धिः' इति विग्रहः। अन्यथा 'श्रुतिः मतिः बुद्धिः' एवं विग्रहो भवेत्। (निरु० १४।१४ पृ० १०१३। प० २२–२३) इत्यत्र 'विद्याबुद्धिमताम्' इति विद्यते। तेनात्र इयं विद्या श्रुतिरूपा मतिरूपा बुद्धिरूपा इत्यर्थः स्यात्। 'श्रोतव्यः मन्तव्यः निदिध्यासितव्यः' इत्येवं उपनिषत्सु उच्यते।

१६–१८ वेदे विधयः प्रतिषेधाः प्रसवाः (तेषामपवादाः) नियमाः (नियम-विधयः) परिसंख्या (तद्रूपः प्रतिषेधः) पुनर्वचनं (पुनरुक्तिः) परा-र्थवादाः (अर्थवादाः) तैर्वेदो गहनः संकटः।

१८ श्रुतमनतिक्रम्य प्रमां ज्ञानं यो गृह्णाति तस्य। श्रुतावलम्बिन इत्यर्थः। वेदशब्दान्वाच्यार्थेनैव गृह्णाति न लक्ष्यार्थेन।

१९ परमं दुर्विज्ञानानि दुर्विज्ञेयानि तथाऽपि वेदनीयानि।

१००७ २ व्याख्यानं दैवतं सप्तमाध्यायादारभ्य त्रयोदशाध्यायं यावत्।

यज्ञाङ्गं च। दैवतं प्रकरणं यज्ञस्य अङ्गं इति च व्याख्यातम्। यज्ञादृते दैवतस्य न कोऽप्युपयोगः। सर्वं दैवतं कर्मपरम्। 'यद्दैवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्ति'। (नि० अ० ७ ख० ४)। अत्र यज्ञाङ्गस्य भिन्नः अर्थः। ऊर्ध्वमार्गगतिं = ऊर्ध्वमार्गेण गमनम्। कः ऊर्ध्वमार्गः कथं च आत्मा तेन गच्छति इत्यस्मिन् अध्याये व्याख्यायते। यस्मात्कर्म समाप्तं तस्मात्

पत्रं पङ्क्तिः

१००७ २ ऊर्ध्वमार्गस्य मोक्षस्य गतिः व्याख्येया। किंतु एतद् ऊर्ध्व-मार्गप्रकरणं निघण्टौ नान्तर्भवति।

३ सूर्ये आत्मेत्युदितस्य हि कर्मद्रष्टा। इदं दुर्बोधं अशुद्धं अपूर्णं वा। 'सूर्य आत्मेत्युदितस्य निर्देशः' इति वाक्यं स्यात्। 'सूर्य आत्मा' अयं उदितस्य सूर्यस्य निर्देशः। स हि कर्मद्रष्टा। स हि स्थावराणि जङ्गमानि च यानि कर्माणि कुर्वन्ति तेषां द्रष्टा साक्षी। तस्मात् पापं कर्म हेयं पुण्यं च कार्यम्।

३–४ अथैतदनुप्रवदति। कः अनुप्रवदति। कुत्र चायं अनुप्र-वादः। अयं अनुप्रवादः अत्र न दत्तः। 'सूर्य आत्मा' इत्यत्र सूर्यः साक्षीत्युच्यते। अयं प्रवादः। तस्य अनुप्रवा-दाय अन्याः ऋचः अवश्याः। किंतु अनुप्रवदन्ती ऋक् नैकाऽपि पठ्यते। महाराष्ट्रपाठे 'अनुप्रवदन्ति' इति बहुवचनम्।

४ अथैतं महान्तं०। अयं भिन्नः अधिकारः। 'ऋग्गणः' इत्य-नेन बह्व्यः ऋचः पठिताः आसन् इति भाति। किंतु अत्र एकैव ऋक् पठ्यते। 'इन्द्रं मित्रं' इत्यादिः। एषः + ऋग्गणः = एष ऋग्गणः। न तु एषर्गणः।

५ आत्मजिज्ञासया। महति आत्मनि इयं जिज्ञासा कथं उद्भवेत्। स आत्मानं जानात्येव। आत्मजिज्ञासा व्यष्टीनां (जीवात्मनां) स्यात्। तदर्थं महानात्मा स्वरूपं प्रवक्ति।

८–९ जन्मना अहं जातवेदाः अग्निः अस्मि। जातः एव अहं जात-वेदोऽग्निसंज्ञां प्राप्तवान्। घृतरूपं मे चक्षुर्भवति। अमृतं च मे आस्यं भवति। अहमेव त्रिधातुः अर्कः। त्रिधातुः सुबद्धः ध्रुवः। अर्कः = मन्त्रः। रजसः = लोकस्य। विमानः = विमाता। सर्वान् लोकान् अहं विमिमे। घर्मः = तप्तं दुग्धं यत् देवेभ्यः निरुप्यते। अजस्रः = सततः। अहं देवेभ्यः अविच्छेदं घर्मं ददामि। मम नाम हविः। अस्यां ऋचि अग्निः स्वं महिमानं वर्णयति। न महतः आत्मनः।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १००७ | १०–११ | प्रथमजा:=प्रथमं जातः । ऋतस्य = महतः आत्मनः । महतः आत्मनः अहं अन्नं प्रथमं जातमस्मि । सर्वेभ्यो देवेभ्योऽपि प्रथमं जातं अस्मि । अहं अमृतस्य महतः आत्मनः नाम धारयामि । अहमेव अमृतः महानात्मा । यः यजमानः मां (अन्नं) अन्यस्मै ददाति सः एव मावत् मादृशः (महानात्मा) भवति । अन्ननामधेयं अहं यः केवलं अन्नमत्ति अन्नशब्देन महान्तं आत्मानं न जानाति तं अद्मि नाशयामि । महतः आत्मनः आत्मानं भिन्नं पश्यन्तः सर्वे नश्यन्ति । कस्यामुपनिषदि इयं ऋक् वर्तते इति न ज्ञायते । इयं ऋक् तैत्तिरीयोपनिषदि एवं पठ्यते—' अहमस्मि प्रथमजा ऋता३स्य । पूर्वं देवेभ्यो अमृतस्य ना३भायि । यो मा ददाति स इदेव मा३वाः । अहमन्नमन्नमदन्त मा३द्मि' इति । अत्र शांकरभाष्यम् । 'अहमस्मि भवामि । प्रथमजा: प्रथमज. प्रथमोत्पन्नः ऋतस्य सत्यस्य मूर्तामूर्तस्यास्य जगतो देवेभ्यश्च पूर्वं अमृतस्य नाभिः अमृतस्य नाभिर्मध्यं मत्संस्थं अमृतत्वं प्राणिनां इत्यर्थः । यः कश्चित मा मां अन्नं अन्नार्थिभ्यो ददाति प्रयच्छति आत्मना ब्रवीति स इदित्थं एवं अविनष्टं यथाभूतं आवा अवति इत्यर्थः । यः पुनरन्यो मामदत्त्वाऽर्थिभ्यः काले प्राप्ते अन्नं अत्ति तमन्नं अदन्तं भक्षयन्तं पुरुषं अहं अन्नमेव संप्रति अद्मि भक्षयामि ।' तैत्तिरीयब्राह्मणे एवमेव ऋक्पाठ. । सायणकृतः तदर्थः कर्मपर. । |
| | १२ | स ह ज्ञात्वा० । स आत्मा आत्मानं ज्ञात्वा कस्मैचित् जिज्ञासवे प्रादुर्बभूव । यदि स महान् आत्मा तर्हि तस्मिन् आत्म–जिज्ञासा कथं उद्भवेत् इति पूर्वं उक्तमेव ।<br>' इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।<br>मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ।<br>महतः परमव्यक्तमव्यक्तात्पुरुषः परः ' ( कठोप० ३ । १०–११ ) । अत्र महानात्मा त्रिगुणाहंकाररूपः । स 'अथैष महानात्मा ' इत्यत्र ' स ह ज्ञात्वा' इत्यत्र च अभिप्रेतः |

पत्रं पङ्क्तिः

१००७ १२ स्यात् । प्रादुर्बभूव = आत्मरूपं आविश्चकार कस्मैचित् जिज्ञासवे । तं च जिज्ञासुं एवं व्याजहार उवाच । किमुवाच ।

१३-१४ आत्मानं अध्यात्मजम् । आत्मा अध्यात्मजः कथं स्यात् । अध्यात्मजं = नित्स्वरूपम् । अन्तिकं = नैकट्येन अथवा सुज्ञेयतया । स्पष्टमित्यर्थः । अन्यस्मै जिज्ञासवे आचक्ष्व इति । ' आचचक्ष्व ' इति अशुद्धम् । ( निरु० ११ । ३४ ) इत्यत्र ' आचचक्ष ' इत्यस्य स्थाने गुर्जरपाठः ' आचचक्ष्व ' इति । यदि ' आचचक्ष ' इति पाठः तदा स महान् आत्मा आत्मानं अन्यस्मै आचचक्ष आचचक्षे इत्यर्थः । एवं तं व्याजहार (१२) = एवं त आत्मान निरूपयामास = अध्यात्मजं आत्मानं अन्यस्मै अन्तिकं आचचक्षे । प्रथमोऽर्थः साधीयान् । 'एवं तं० आचचक्ष्वेति ' अशुद्धम् । महाराष्ट्रपाठः इतोऽपि अशुद्धतरः । पाणिनीयव्याकरणे ' आचचक्ष ' इत्यपि अशुद्धम् । ' आचचक्षे ' इति शुद्धम् ।

१५-१६ पथिभिः आचरन्तं परा चरन्तं च अनिपद्यमानं गोपां आत्मानं अपश्यम् । सध्रीचीः विषूचीः वसानः सः भुवनेषु अन्तः आवरीवर्ति इत्यन्वयः । आ च परा च पथिभिः चरन्तं = सर्वत्र वर्तमानम् । अनिपद्यमानं = अशयानं सर्वदैव जाग्रतम् । गोपां = पालयितारम् । सध्रीची. = ऋजुमार्गेण गच्छन्तीः प्रजाः । विषूचीः = विषममार्गेण गच्छन्तीः प्रजाः । वसानः = आच्छादयन् पालयन् । आवरीवर्ति = सर्वत्र सर्वदा वर्तते इत्यर्थः ।

१७ ' आवरीवर्ति भुवनेष्वन्तरिति ' । एतादृक् ऋक्भाष्यप्रारम्भः गतेषु अध्यायेषु न दृश्यते । अथैष । अतः परं महतः आत्मनः लक्षणानि दीयन्ते । सत्त्वलक्षणः एव अयं आत्मा । न तस्मिन् रजस्तमसी वर्तेते ।

१८ तत्परम् । तत्सत्त्वलक्षणं वस्तु सर्वेभ्यः परम् । तद्ब्रह्मेत्युच्यते । सत्त्वलक्षणः = नित्यसत्त्वस्थः । ( भ० गी० २ । ४५ ) ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १००७ | १८ | तत्सलिलम् । ' आपो ह वा इदं आसन् सलिलमेव '। ( बृ० पू० उ० १ । १ ) । ' सलिल एको द्रष्टाऽद्वैतो भवति ' ( बृ० उ० ४ । ३ । ३२ ) । अव्यक्तम् । ' अचिन्त्यमव्यक्तमनन्तरूपम् ' ( कै० उ० १ । ६ ) । |
| | १८–१९ | ' अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ' ( कठोप० ३ । १५ ) । |
| | १९ | अमृतम् । 'तद्ब्रह्म तदमृतं स आत्मा' ( छा० उ०८।१४।१) । शुक्रम् । ' तच्छुक्रं पुरुषलिङ्गम् ' ( मै० उ० ६ । ३५ ) । तन्निष्ठः = तस्मिन् महति आत्मनि निष्ठा यस्य । भूतात्मा = पञ्चभूतैः परिवेष्टितः आत्मा = जीवात्मा । सर्वे जीवात्मानः महति आत्मनि स्थिताः भवन्ति । न ते स्वतन्त्राः । भूतात्मशब्दः मैत्रायण्युपनिषदि बहुकृत्वः प्रयुज्यते । दशसूपनिषत्सु नैकदाऽपि दृश्यते । ' असौ भूतात्मा अन्तःपुरुषेणाभिभूतः ' ( मै० उ० ३ । ३ ) । |
| | २० | भूतप्रकृतिः = पञ्चमहाभूतानां प्रकृतिः महान् आत्मा इति वैशेषिकाः वदन्ति । तत्क्षेत्रम् = ' इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ' ( भ० गी० १३ । १ ) । ' तत् महान् आत्मा क्षेत्रं ' इदं वैशेषिकमतस्य व्याख्यानम् । तत् ज्ञानात् क्षेत्रज्ञम् = तत् ( महानात्मा ) क्षेत्रज्ञानात् क्षेत्रज्ञम् । ' एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ' ( भ० गी० १३ । १ ) । ' अनुप्राप्य निरात्मकं ' इदं किमर्थं अत्र पठ्यते । अस्य पूर्वेण परेण वा न कोऽपि संबन्धः । ' अनुप्राप्य ' इदं ' अप्राप्य ' अथवा ' अननुप्राप्य ' इति स्यात् । क्षेत्रज्ञं अप्राप्य अननुप्राप्य वा क्षेत्रं निरात्मकम् । क्षेत्रज्ञाभावे क्षेत्रं नास्त्येव । |
| | २०–२१ | अथैष महानात्मा० । यदि महानात्मा सत्त्वलक्षणः तर्हि तस्मिन् त्रैगुण्यं कथं उद्भवेत् । त्रैगुण्यं भूतात्मनि वर्तते । महति आत्मनि सत्त्वं विशुद्धरूपेण तिष्ठति । किंतु रजस्तमसी अभितः वर्तेते । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १००७ | २२ | कामद्वेषः = ' काम एष क्रोध एष रजोगुणसमुद्भवः ' (भ० गी० ३ । ३७ ) । ' कामद्वेषः ' इति समाहारद्वंद्वः कथं स्यात । ' स नपुंसकम् ' ( पा० २ । ४ । १७ ) इत्यनेन ' कामद्वेषं ' इत्यवश्यम् । ' कामद्वेषौ ' इति सरलम् । रजः-शब्देन कामद्वेषौ सूच्येते । तमसः किं प्रयोजनम् । तमोगुणेन क्षेत्रज्ञानां भूतात्मनां पृथक्त्वं भिन्नत्वं संपाद्यते । तमोगुणाभावे क्षेत्रज्ञभेदो न स्यात् । |
| | २३ | अविज्ञातस्य=यावन्महानात्मा न ज्ञायते तावत् । विशुद्धचतः= विशुद्धस्य । विभूतिं कुर्वतः = सर्वाः विभूतयः महतः आत्मनः रूपाणि । सर्वाः विभूतयः महानात्मैव । किंतु ज्ञानाभावेन ताः भिन्नाः दृश्यन्ते । एतदेव क्षेत्रज्ञपृथक्त्वम् ।<br>' यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।<br>तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ' (भ० गी० १०।४१)<br>एतासां विभूतीनां वर्णनं भगवद्गीतायां दशमेऽध्याये । |
| १००८ | १ | परिभातिलिङ्गो महानात्मा । ' प्रतिभातिलिङ्गः ' इति महाराष्ट्रपाठः । महानात्मा परितः सर्वत्र भाति । आत्मनः ऋते न किंचिदपि वर्तते । प्रतिभाति = आत्मा आत्मानं प्रति भाति । आत्मा आत्मनः अन्यत् न किंचित् पश्यति । चतुर्थे खण्डे 'महानात्मा प्रतिभां अप्येति' इत्युच्यते । तेन ' प्रतिभालिङ्गः ' इति पाठः स्यात् । 'तमोलिङ्गः' अस्य कः अन्वयः । ' तमोलिङ्गो भवति ' इति स्यात् । स्वयं परिभातिलिङ्गोऽपि सन् केनचित् कारणेन महानात्मा तमोलिङ्गो भवति । तत्कारणं माया । ' विद्या प्रकाशलिङ्गस्तमः ' इदं अतीव अशुद्धम् । ' विद्या प्रकाशलिङ्गा ' इत्यवश्यम् । विद्या प्रकाशलिङ्गाऽपि सती केनाचित् कारणेन तमः ( अविद्या ) भवति । महान् आत्मा = विद्या । परिभातिलिङ्गः = प्रकाशलिङ्गा । द्वयोर्वाक्ययोः एक एव अर्थः । |
| | १-२ | ' अपि निश्चयलिङ्गः ' इत्यादि । अपिशब्देन सिद्धान्तः सूच्यते । आकाशः = महानात्मा । निश्चयः लिङ्गं यस्य । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १००८ | १–२ | आकाशस्य महत. अत्मानः लिङ्गं स्वरूपं निश्चितमेव। महानात्मा स्वयप्रकाशः । अथवा । 'निश्चयलिङ्गः आकाशः' इदं चतुर्थखण्डस्य सूचकं स्यात् । यस्मात् आकाशगुणः निश्चितः एव । अयं खण्डः अशुद्धः दुर्बोधश्च । |
| | ४ | 'आकाशगुणः शब्दः' इत्यादि वैशेषिकमतम् । 'गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्यप्तेजोवायूनां पूर्वं पूर्वं अपोह्य आकाशस्य उत्तरः' ( न्यायदर्शने ३ । १ । ६४ ) । पृथिव्या स्पर्शान्ताः सर्वे गुणाः । अप्सु गन्धः अपोह्यते । तेन अप्सु रसरूपस्पर्शाः । तेजसि गन्धरसौ अपोह्येते । तेन तस्मिन् रूपस्पर्शौ । वायौ स्पर्शः एव । तथाच आकाशे शब्दः । 'रूपरसगन्धस्पर्शवती पृथिवी । रूपरसस्पर्शवत्यो आपः । तेजो रूपस्पर्शवत् । स्पर्शवान् वायुः । ते आकाशे न विद्यन्ते' ( वैशेषिकसूत्राणि २ । १–५ ) । शब्द आकाशस्य एव गुणः इति गौतमकणादमतम् । शब्दः पृथिव्यप्तेजोवायुषु अपि वर्तते इति सांख्याः वेदान्तिनश्च । 'प्रकृतेर्महांस्ततोऽहंकारस्तस्माद्गणश्च षोडशकः । तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि' (सांख्यतत्त्वकौमुदी २२ )। द्रविडोपाभिधराजेश्वरशास्त्रिकृतं अस्य श्लोकस्य विवरणम । " शब्दतन्मात्रादाकाशं शब्दगुणम् । शब्दतन्मात्रसहितात्स्पर्शतन्मात्राद्वायुः शब्दस्पर्शगुणः । शब्दस्पर्शतन्मात्रसहितात् रूपतन्मात्रात्तेजः शब्दस्पर्शरूपगुणम् । शब्दस्पर्शरूपतन्मात्रसहितात् रसतन्मात्रात् आपः शब्दस्पर्शरूपरसगुणाः । शब्दस्पर्शरूपरसतन्मात्रसहितात् गन्धतन्मात्रात् शब्दस्पर्शरूपरसगन्धगुणा पृथिवी जायते इत्यर्थः " । पञ्चीकरणेन एतत् सिध्यति । " सर्गाद्यकाले परमेश्वरः सृज्यमानप्रपञ्चवैचित्र्यहेतुप्राणिकर्मसहकृतः मायासहितः नामरूपात्मकनिखिलप्रपञ्चं प्रथमं बुद्धौ आकलय्य इदं करिष्यामीति संकल्पयति । ततः आकाशादीनि पञ्चभूतानि अपञ्चीकृतानि तन्मात्रप्रतिपाद्यानि उत्पद्यन्ते । तत्र आकाशस्य शब्दो गुणः । वायोः शब्दस्पर्शौ । तेजसः शब्दस्पर्शरूपाणि । अपां शब्द- |

पत्रं　　पङ्क्तिः

१००८　४ स्पर्शरूपरसाः । पृथिव्याः शब्दस्पर्शरूपरसगन्धाः " ( वेदान्तपरिभाषायाम् ) ।

६ ' पृथिव्या भूतग्रामस्थावरजङ्गमाः ' । इदं अशुद्धम् । ' भूतग्रामाः ' इत्यवश्यम् । भूतानां ग्रामाः संघाः । ते स्थावराश्च जङ्गमाश्च । पर्वतादयः स्थावराः । प्राणिनः जङ्गमाः । ' स्थावरजङ्गमाः ' इदं विशेषणं अनवश्यम् । पृथिव्याः स्थावरजङ्गमा भूतग्रामा जायन्ते । तदेतद् मायोपाधिकं विपरिणतं ब्रह्म। अहर्युगसहस्रमेतस्मिन्नेव खण्डे व्याख्यायते ।

७ ' सुषुप्स्यन् ' कस्य विशेषणम् । ' तदेतत् ' इदं नपुंसकम् । ' सुषुप्स्यन् ' इत्यस्य विशेष्यं पुंलिङ्गं भवितुमर्हति । अङ्गानि प्रत्याहरति कूर्मवत् ।

' यदा संहरते चाऽयं कूर्मोऽङ्गानीव सर्वशः ' ( भ० गी० २ । ५८ ) ।

८ अपियन्ति = तस्यां प्रलीना भवन्ति । एकी भवन्ति । पृथिवीरूपमापद्यन्त इत्यर्थः । पृथिवी अपः अप्येति । अब्रूपं गृह्णाति । आपो ज्योतिषमपियन्ति । ' ज्योतिषम् ' इति अशुद्धम् । ' ज्योतिः ' इति शुद्धम् । ज्योतिः वायुमप्येति । वायुः आकाशमप्येति ।

९ आकाशः मनः अप्येति । मनः विद्यामप्येति । विद्या = व्यष्टिबुद्धिः। विद्या महान्तमात्मानमप्येति । महान् आत्मा = समष्टिबुद्धिः। महानात्मा प्रतिभामप्येति । केयं प्रतिभा इति न ज्ञायते। सांख्यकारिकासु सा न दीयते । ' निमित्तानपेक्षं मनोमात्रजन्यमविसंवादकं द्राक् उत्पद्यमानं ज्ञानं प्रतिभा । विवेकात् पूर्वभावि ज्ञानं प्रातिभम् ' ( पातञ्जलयोगसूत्राणां भोजदेवविरचितवृत्तौ ३ । ३३ ) । द्वयोर्वस्तुनोः बहूनां वस्तूनां वा भेदज्ञानं विवेकः । तद्विरुद्धज्ञानं प्रातिभम् । एतद् ज्ञानं वस्तुनि नावलम्बते । इदं ज्ञानं न केनापि वस्तुना संवदति नापि विसंवदति । तन्मनस एव झटिति उत्पद्यते । तस्मात् तत् निर्विकल्पकज्ञानवत् सामान्यम् ।

१०

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १००८ | १० | प्रतिमा प्रकृतिमप्येति । ‘ प्रलयक्रमः—पृथिव्याः अप्सु । अपां तेजसि । तेजसो वायौ । वायोराकाशे । आकाशस्य जीवाहंकारे । जीवाहंकारस्य हिरण्यगर्भाहंकारे । हिरण्यगर्भाहंकारस्य अविद्यायाम्' ( वेदान्तपरिभाषायाम् ) । सा प्रकृतिः स्वपिति । ‘युगसहस्रं रात्रिः’ एतस्य प्राक् ‘युगसहस्रमहः’ इत्यवश्यम् । अह्नः अनन्तरं रात्रिः । रात्रेः अनन्तरमहः । एतादृशं भ्रमणम् । अत्र ‘ अहोरात्रः ’ इत्यवश्यम् । ‘ अहोरात्रौ ’ इति किमर्थम् । |
| | १०-११ | अजस्रं = अनवरतम् । परिवर्तेते = चक्रवत् भ्रमतः । |
| | ११ | स कालः अहोरात्ररूपः । युगसहस्रद्वयपरिमाणः । तदेतत् अहः = ब्रह्मणः अहः । अहोरात्रकालः अहःपरिमाणः कथं भवेत् । ‘ स कालः ० भवति ’ इदं वाक्यं किंचित् दुर्बोधम् । युगसहस्र० । ‘ यत् ’ इत्यस्य स्थाने ‘ ये ’ इत्यवश्यम् । ये जना ब्रह्मणः युगसहस्रपर्यन्तमहर्विदुः युगसहस्रान्तां च रात्रिं विदुः ते अहोरात्रविदः । भगवद्गीतायां ‘ सहस्रयुग ’ इति पाठः ( भ० गी० ८ । १७ ) । |
| | १४ | तं कालम् । अन्यः = जीवात्मा । जीवात्मा ब्रह्मणः अन्यः । अनुप्रवर्तते अह्नि चेष्टते । रात्रौ स्वपिति । हिरण्यगर्भोऽपि परिवर्तमानं कालमनु प्रवर्तते । अह्नि चेष्टते । रात्रौ स्वपिति । स्रष्टा सर्गकाले । ‘ बहु स्यां प्रजायेय ’ इति संकल्पं करोति । विभक्ता । ‘ तदनुप्रविश्य सच्च त्यच्चाभवत् ’ ( तै० उप० २ । ६ । १ ) अतिमात्रः = तन्मात्रेभ्यो भिन्नः । |
| | १५ | अहमिति गम्यते । अयमहंकारस्य निर्देशः । ‘ स मिथ्या० भूतेषु ’ इदमपूर्णमतीवाशुद्धमतिदुर्बोधं च । सः जीवात्मा मिथ्यादर्शनेन जगतः आत्मनि अध्यासं करोति । ‘ पावकं ’ इत्यस्य स्थाने ‘ पापकं ’ इति पाठो भवेत् । इदं पापकं शरीरम् । इदं शरीरं महाभूतपरिणामः । सः जीवात्मा ( भूतात्मा ) मिथ्यादर्शनेन पाञ्चभौतिकं शरीरमहं मम इति मन्यते । पूर्णं वाक्यमित्थं स्यात् । |

पृ॰ पङ्क्तिः

१८ १५ 'स मिथ्यादर्शनेन इदं पापकं शरीरं महाभूतेषु लभते'। चिरोण्वाकाशात्। किमिदं चिरोणु। 'अस्मिन् पञ्चात्मके शरीरे यत्कठिनं सा पृथिवी। यद् द्रवं ता आपः। यदुष्णं तत्तेजः। यत्संचरति स वायुः। यत्सुषिरं तदाकाशमिति। तत्र पृथिवी धारणे। आपः पिण्डीकरणे। तेजः प्रकाशने। वायुर्व्यूहने। आकाशमवकाशप्रदाने' (गर्भोपनिषदि)। चिरोणु = सुषिरम् (?)। अयं शब्दः कुत्रापि नोपलभ्यते।

१६ आकाशात् चिरोणु लभते। वायोः प्राणं लभते। तेजसः चक्षुश्च वक्तारं लभते। अद्भ्यः स्नेहं लभते। पृथिव्याः मूर्तिं लभते। 'मूर्तिः' इति अपपाठः। वक्तारं = जिह्वां वाचं वा। 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐ॰ उ॰ २।४)। 'वक्तारं' इत्यस्य स्थाने 'पक्तारं' इति पाठोऽवश्यः। यस्मात् वाग्भटकृते अष्टाङ्गहृदये शारीरस्थाने 'वह्नेः दृक्रूपपक्तयः' (३।३)। वह्नेः = तेजसः। दृक् = चक्षुः। पक्तिः = पक्ता। पक्ता = कोष्ठ्यः अग्निः। 'अन्नं पचत्यामाशयस्थितम्। औदर्योऽग्निः (वाग्भट–शारीर॰ ३।५५–५६)।

१७ विद्यात् = विन्दते लभते।

१८–१९ 'त्रीन् मातृतः॰ पितृतः'।

'अस्थि स्नायुश्च मज्जा च जानीमः पितृतो द्विज।
त्वङ्मांसशोणितश्चेति मातृजान्यपि शुश्रुम' (महाभा॰ शां॰ प॰ ३०५।६)। 'गर्भस्य केशश्मश्रुलोमास्थिनखदन्तसिरास्नायुधमनीरेतःप्रभृतीनि स्थिराणि पितृजानि। मांसशोणितमज्जाहृद्नाभियकृत्प्लीहान्त्रगुदप्रभृतीनि मृदूनि मातृजानि' (सुश्रुते)। मज्जा मातृतः इति चरकसुश्रुतौ। पितृतः इति निरुक्तम्।

१९ सर्वमयः = सर्वाणि महाभूतानि तस्मिन् वर्तन्ते। क्लृप्तः = रचितः। स्वरूपेण आत्मा सर्वज्ञः। तथाऽपि मायया (अविद्यया) सः जगत् आत्मनि अध्यास्ते। तेन सर्वस्मात् भिन्नोऽपि सर्वमयो भवति।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १००८ | २१ | 'यदि' इत्यस्य स्थाने 'यत्' इत्यवश्यम्। स भूतात्मा यत् अनुरुध्यते तत् भवति।<br>'यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम्।<br>तं तमेवैति कौन्तेय सदा तद्भावभावितः' (भ० गी० ८।६)।<br>'अनो रुध् कामे' (धा० ४।६८)। अनुरुध्यते = कामयते। यदि धर्म०। धर्मः अनुरुध्यते पुरुषेण। 'धर्मः' इत्यस्य स्थाने 'धर्मं' इत्यवश्यम्। |
| | २२ | संच्यवते = पतति। 'सं' अनवश्यम्। |
| | २३ | संदध्यात्। इमा मानवयोनिं संदध्यात् संकल्पयेत्। मतम्। मतं शरीररचनामन्तरेण । कस्य इदं मतम्। गर्भोपनिषदि 'श्लेष्मा रेतसः संभवति। श्लेष्मणो रसः' इति न विद्यते। नापि सुश्रुतचरकयोः। |
| | २५ | गर्भोपनिषदि 'रेतः' इत्यस्य स्थाने शुक्रम्। |
| | २५-२६ | तदिदं० संभवति। 'शुक्रशोणितसंयोगादावर्तते गर्भः' इति गर्भोपनिषदि। |
| | २६ | पुरुषः = मानवदेहः। |
| १००९ | १ | 'समन' इत्यत्र 'समाभ्यां' इत्यवश्यम्। |
| | २ | यमो भवति। 'बीजेऽन्तर्वायुना भिन्ने द्वौ जीवौ कुक्षिमागतौ। ० ० ० ० यमौ इत्यभिधीयेते' (सुश्रुते)। शुक्रशोणित०। इदं वाक्यमशुद्धम्। शुक्रशोणितसंयोगः मातृपितृसंयोगात्' इत्यवश्यम्। इदं वाक्यं 'पुरुषः संभवति' (१००८।२) इत्यस्य अनन्तरं भवितुमर्हति। रेतःशब्दस्थाने शुक्रशब्दादेशः किमर्थः। |
| | ३ | 'परं' इत्यस्य कोऽर्थः। संयम्यते = घनी भवति। 'संयम्यते' इत्यस्याः क्रियायाः 'परं' विशेषणं स्यात्। इदं घनीभूतं शरीरं कथमुत्पद्यते। सौम्यो भवति। अस्य कोऽर्थः। सुश्रुते इदं लिख्यते। स्त्रीपुंसयोः 'संयोगे वायुः शरीरात् तेजः उदीरयति। ततः |

पं० पङ्क्तिः

१००२ ३ तेजोऽनिलसंनिपातात् शुक्रं च्युतं सत् योनिमभिप्रतिपद्यते संसृज्यते चाऽऽर्तवेन। ततः अग्निसोमसंयोगात् संसृज्यमानः गर्भाशयमनुप्रतिपद्यते। क्षेत्रज्ञः वेदयिता स्प्रष्टा घ्राता द्रष्टा श्रोता रसयिता पुरुषः स्रष्टा गन्ता साक्षी धाता वक्ता योऽसावित्येवमादिभिः पर्यायवाचकैः नामभिः अभिधीयते। दैवसंयोगात् ( दैवं = प्राक्तनजन्मकर्म ) अक्षयः अचिन्त्यः भूतात्मना सह अन्वक्षं सत्त्वरजस्तमोभिः देवासुरैः अपरैश्च भावैः वायुना अभिप्रेर्यमाणो गर्भाशयमनुप्रविश्य अवतिष्ठते ' । सौम्यः = अग्निसोमसंयोगात् संसृज्यमानः देहः। ' सौम्यो भवति ' इदमपि ' पुरुषः संभवति ' ( १००८ । २६ ) इत्यस्यानन्तरं भवितुमर्हति । एकस्यां रात्रौ योनौ स्थितं रेतः कललमित्युच्यते । वाग्भटस्तु ' अव्यक्तः प्रथमे मासि सप्ताहात्कलली भवेत् ' इति।

३–९ पञ्चरात्रात्० कठिनो भवति । ' द्वितीये मासि कललात् घनः पेशी अथवा अर्बुदम् । पुंस्त्रीक्लीबाः क्रमात्तेभ्यः ' (वाग्भटः)। बुद्बुदरूपः रेतःपरिणामः कस्मिन् वैद्यकग्रन्थे उपलभ्यते। गर्भोपनिषदि ' सप्तरात्रोषितं बुद्बुदं भवति ' इति। ' पञ्चविंशतिरात्रः ' इत्यस्य स्थाने ' पञ्चविंशतिरात्रात् ' इत्यवश्यम्। गर्भोपनिषदः नारायणविरचितदीपिकायां यास्कमतं पठ्यते। तत्र ' बुद्बुदाः ' इत्यस्य स्थाने ' बुद्बुदः '। ' द्विसप्तरात्रात् ' इत्यस्य स्थाने ' द्विः सप्तरात्रात् ' इति। ( गुर्जरपाठोऽपि तथैव )। ' मासचतुष्केण ' इत्यस्य स्थाने ' मासचतुष्टयेन '। ' अध्यवस्यति ' इत्यस्य स्थाने ' व्यवस्यति '। गर्भोपनिषदि शरीरसंघातस्य इदं वर्णनम्। ' ऋतुकाले प्रयोगात् एकरात्रोषितं कलिलं भवति। सप्तरात्रोषितं बुद्बुदं भवति। अर्धमासाभ्यन्तरेण पिण्डो भवति । मासाभ्यन्तरेण कठिनो भवति। मासद्वयेन शिरः कुरुते। मासत्रयेण पादप्रदेशः भवति। अथ चतुर्थे मासि अङ्गुल्य(गुल्फ)जठरकटिप्रदेशो भवति ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १००९ | ३–९ | पञ्चमे मासे पृष्ठवंशो भवति । षष्ठे मासे नासाऽक्षिणी श्रोत्राणि भवन्ति । सप्तमे मासे जीवेन संयुक्तो भवति । अष्टमे मासे सर्वसंपूर्णो भवति ' । कपिलगीतायां ' कललं त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम् ' ( ८ । २ ) इत्युच्यते । ' प्रथमे मासि कललं ( सिङ्घाणं ) जायते । द्वितीये शीतोष्मानिलैः अभिप्रपच्यमानाना महाभूतानां संघातो घनः संजायते । यदि पिण्डः पुमान् । स्त्री चेत् पेशी । नपुंसकं चेत् अर्बुदमिति । तृतीये हस्तपादशिरसा पञ्च पिण्डका निर्वर्तन्ते । अङ्गप्रत्यङ्गविभागश्च सूक्ष्मो भवति । चतुर्थे सर्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरो भवति । गर्भहृदयप्रव्यक्तिभावात् चेतनाधातुः अभिव्यक्तो भवति । गर्भः चतुर्थे मासि अभिप्रायमिन्द्रियार्थेषु करोति । द्विहृदया च नारी दौहृदिनीमित्याचक्षते । पञ्चमे मनः प्रतिबुद्धतरं भवति । षष्ठे बुद्धिः । सप्तमे सर्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरः । अष्टमे अस्थिरी भवति ओजः । तत्र जातश्चेन्न जीवेत् निरोजस्त्वात् । नवमदशमैकादशद्वादशानां अन्यतमस्मिन् जायते ' ( सुश्रुते ) । |
| | ९ | द्विमासाभ्यन्तरे = द्विमासात् पूर्वम् । गर्भोपनिषदि ' मासद्वयेन ' । |
| | ६ | व्यादेशः = परिणामः । |
| | ९–१३ | मृतश्चाहं ००० पञ्चविंशकमिति । |

' नानायोनिसहस्राणि दृष्ट्वा चैव ततो मया ।
आहारा विविधा भुक्ताः पीताश्च विविधाः स्तनाः ॥ ५ ॥
मातरो विविधा दृष्टाः पितरः सुहृदस्तथा ।
अवाङ्मुखं पीड्यमानो जन्तुश्चैव समन्वितः ॥ ६ ॥
जातस्यैव मृतस्यैव जन्म चैव पुनः पुनः ।
अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम् ॥ ७ ॥
यन्मया परिजनस्यार्थे कृतं कर्म शुभाशुभम् ।
एकाकी तेन दह्यामि गतास्ते फलभोगिनः ॥ ८ ॥

पत्रं पङ्क्तिः

१००९ ९-१३ यदि योन्यां प्रमुञ्चामि सांख्यं योगं समभ्यसेत् ।
अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम् ॥ ९ ॥
यदि योन्यां प्रमुञ्चामि तं प्रपद्ये महेश्वरम् ।
अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम् ॥ १० ॥

( गर्भोपनिषदि ) ।

१२-१३ एव समन्वितः । अत्र ' एव ' इत्यस्य स्थाने ' एवं ' इत्यवश्यम् । समन्वितः प्राक्तनजन्मकर्मणा शरीरेण च ।

१३ ' समभ्यसेत् ' इत्यस्य ' जन्तुः ' कर्ता ' । सांख्यशास्त्रं योगशास्त्रं पञ्चविंशकं पुरुषं च समभ्यसेत् । पञ्चविंशकम् । ' मनो दशेन्द्रियाण्यर्थाः प्रकृतिश्चाष्टधातुकी ' ( चरक० ११९ ) । चतुर्विंशक इत्येष राशिः पुरुषसंज्ञकः ' । ( चरक० १३३ ) । आत्मा पञ्चविंशः । पञ्चविंश एव पञ्चविंशकः । पञ्चविंशकं पुरुषं समभ्यसेत् = पुरुषः आत्मा चतुर्विंशतितत्त्वेभ्यः भिन्नः इति मनसि निश्चिनुयात् । ' द्विर्द्वादशेभ्यस्तत्त्वेभ्यः ख्यातो यः पञ्चविंशकः । पुरुषो निष्क्रियश्चैव ज्ञानदृश्यश्च कथ्यते ' ( म० भा० शां० प० ३३९ । २४ ) । ' अहं हि पुरुषो ज्ञेयो निष्क्रियः पञ्चविंशकः । ' ( म० भा० शां० प० ३३२ । ४२ ) ।

१४ ' जातश्च० । ' जातमात्रस्तु वैष्णवेन वायुना संस्पृश्य तदा न स्मरति जन्ममरणं न च कर्म शुभाशुभम् ( गर्भोपनिषदि(१०)।

१५ ' जन्ममरणेऽन्ते ' अयं संधिः अशुद्धः । ' जन्ममरणे अन्ते ' इति शुद्धः । एतच्छरीरस्य प्रामाण्यम् । गर्भोपनिषदि वर्तमानं एतत् वर्णनं शरीरप्राप्तिं शरीररचनां च विवृणोति । गर्भोपनिषद् अत्र प्रमाणम् ।

१७ अष्टोत्तरं संधिशतम् । ' साशीतिकं संधिशतम् ' ( गर्भोपनिषत् ) । ' द्वे संधिशते ' ( चरकः ) । ' द्वे दशोत्तरे संधि-

| पत्रं | पङ्क्तिः |
|---|---|
| १००९ | १७ शते ' । ( सुश्रुतः ) । अष्टाकपालं शिरः । ' चतुष्कपालं शिरः ' ( गर्भोपनिषत् ). ' षोडश पलानि वपा ' इत्यन्वयः। वपा मांसजन्यस्नेहः । |
| | १८ नव स्नायुशतानि । ' सनवकं स्नायुशतं ' ( गर्भोपनिषत् ) । सप्तशतं पुरुषस्य मर्मणाम् । ' सप्तोत्तरं मर्मशतं ' इति चरकः गर्भोपनिषच्च । |
| | १९ हृदयं ह्यष्टकपालानि । ' हृदयं पलान्यष्टौ ' ( गर्भोपनिषत् ) द्वादश कपालानि जिह्वा । जिह्वायाः कपालानि कथं स्युः ' कफशोणितमांसाना सारो जिह्वा ' इति सुश्रुतः । ' द्वादश पलानि जिह्वा ' इति गर्भोपनिषत् । ' सुवर्णौ ' इत्यस्य स्थाने ' सुपर्णौ ' इति महाराष्ट्रपाठः अशुद्धः । |
| | २० ' उपस्थगुदपायु ' समाहारद्वंद्वः । गुदं = पायुः । ' गुदं त्वपानं पायुर्ना ' ( अमरः । २ । ६ । ७३ ) । पायुशब्दः अनवश्यः । उपस्थं = योनिः शिश्नं च । ' आहारपानासिक्त-त्वात् ' इति अशुद्धम् । ' आहारस्य पानसिक्तत्वात् ' इति शुद्धम् । आहारः = जडान्नम् । तत् पानेन पेयवस्तुना सिच्यते आर्द्रो भवति । जडान्नात् पुरीषं पानात् मूत्रम् । |

अत्र वाग्भटः किट्टं—' सारश्च तत्पक्वमन्नं संभवति द्विधा ।
तत्राच्छं किट्टमन्नस्य मूत्रं विद्यात् घनं शकृत् ' (वाग्भटः ३।६) ।

| | |
|---|---|
| | २०-२१ अनुपाचित० इति । इदं आकस्मिकं अतिदुर्बोधं च । इति-शब्देन अनुपचितेत्यादि आहारपानसिक्तत्वात् इत्यस्य कारणं भाति । ' अनुपचितकर्माणि ' इति स्यात् । यदा आहारः उप-चेतुं अशक्यो भवति तदा पुरीषं उद्भवति । मूत्रमपि तथैव । यदा शरीरे आहारः पानं वा पूर्णं भवति तदा मूत्रपुरीषे उद्भवतः इत्यर्थः स्यात् । अस्मिन् शरीरवर्णने शोणितं मांसं मेदः अस्थीनि किमर्थं न पठ्यन्ते । इदं वर्णनं त्रुटितं भाति । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १००९ | २१ | तं = जीवात्मानम् । विद्या अन्वेति कर्म च । पूर्वजन्मनः प्रज्ञा स्मरणं च । 'तं परलोकाय गच्छन्तमात्मानं विद्याकर्मणी । विद्या सर्वप्रकारा विहिता प्रतिषिद्धा च अविहिता अप्रतिषिद्धा । तथा कर्म । विहितं प्रतिषिद्धं च अविहितमप्रतिषिद्धं च । समन्वारभेते सम्यगन्वारभेते अनुगच्छतः । पूर्वप्रज्ञा च । पूर्वानुभूतविषया प्रज्ञा पूर्वप्रज्ञा । अतीतकर्मफलानुभववासना इत्यर्थः' (बृ० उ० शा० भा० ४ । ४ । २)। इदं पूर्वेण असंबद्धम् । |
| | २३ | द्वंद्वैः = चित्तक्षोभकारिभिः भावैः । अभिभूयमानः = पीड्यमानः । अस्मात् = शरीरात् । |
| १०१० | १ | आर्जवं० ... । इदमनवश्यमतीवाशुद्धं दुर्बोधं च । महाभूमिकावत् । यथा नरः महाभूमिका कस्यचित् महतः पुरुषस्य भूमिकां गृह्णाति अन्यभूमिकाग्रहणाय च तां त्यजति । तथा अयमात्मा इदं पापं शरीरं त्यक्त्वा तैजसं शरीरं गृह्णाति । |
| | २ | निमेषमात्रैः = अल्पेन कालेन । प्रक्रम्य = निष्क्रम्य । शरीरात् निष्क्रम्य = प्रकृतिं स्थूलदेहमधिपरीत्य त्यक्त्वा । 'प्रकृतिः' इति अशुद्धम् । 'प्रकृतिं' इत्यवश्यम् । तैजसं शरीरं = लिङ्गशरीरम् । |
| | ३ | अनुभूय परस्मिन् लोके । इमं लोकं = पृथिवीलोकम् । |
| | ६ | हिंसां = यज्ञकर्मसंबद्धां प्राणिहत्याम् । विद्या = ब्रह्मविद्याम् । तपः यत् कायं क्लिश्नाति । हठयोगात्मकं कर्म । 'तेपिरे' अत्र लिट् अनवश्यः । 'तपन्ति' इति इष्टम् । |
| | ७ | धूममभिसंभवन्ति = धूमाभिमानिनीं देवतां प्रतिपद्यन्ते । धूमरूपं गृह्णन्ति । |
| | ८ | अपक्षीयमाणपक्षं = कृष्णपक्षं यस्मिन् चन्द्रकला अपक्षीयन्ते । |
| | ९ | 'ओषधयः' इति अशुद्धम् । 'ओषधीः' इत्यवश्यम् । |
| | १० | एतद्भूत्वा = ओषधयो भूत्वा । तस्य संक्षये = कृतकर्मफलस्य |

पत्रं पङ्क्तिः

१०१० १० संक्षये। अत्र च्छान्दोग्यम्—'अथ ये ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति । धूमात् रात्रिम् । रात्रेः अपरपक्षम् । अपरपक्षात् यान् षट् दक्षिणा एति मासान् तान् एते संवत्सरं अभिप्राप्नुवन्ति ' ( ५ । १० । ३ )। ' मासेभ्यः पितृलोकम् । पितृलोकात् आकाशम् । आकाशाच्चन्द्रमसम् । एष सोमो राजा । तत् देवानामन्नम् । तं देवा भक्षयन्ति ' ( ४ )। ' तस्मिन् यावत्सपातमुषित्वा अथ एतमेवमध्वानं पुनर्निवर्तन्ते यथेतमाकाशम् । आकाशात् वायुम् । वायुर्भूत्वा धूमो भवति । धूमो भूत्वा अभ्रं भवति ' ( ५ )। ' अभ्रं भूत्वा मेघो भवति । मेघो भूत्वा प्रवर्षति । ते इह व्रीहियवा ओषधिवनस्पतयः तिलमाषा इति जायन्ते । अतो वै खलु दुर्निष्प्रपतरम् । यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति ' ( ६ )।

बृहदारण्यके च—' अथ ये यज्ञेन दानेन तपसा लोकान् जयन्ति ते धूममभिसंभवन्ति । धूमात् रात्रिम् । रात्रेः अपक्षीयमाणपक्षम्। अपक्षीयमाणपक्षात् यान् षण्मासान् दक्षिणा आदित्य एति । मासेभ्यः पितृलोकम् । पितृलोकात् चन्द्रम् । ते चन्द्रं प्राप्य अन्नं भवन्ति । तांस्तत्र देवा यथा सोमं राजानमाप्यायस्व अपक्षीयस्व इत्येवमेनांस्तत्र भक्षयन्ति । तेषां यदा तत्पर्यवैति अथ इममेव आकाशमभिनिष्पद्यन्ते । आकाशाद्वायुम् । वायोः वृष्टिम् । वृष्टेः पृथिवीम् । ते पृथिवीं प्राप्य अन्नं भवन्ति । ते पुनः पुरुषाग्नौ हूयन्ते । ततो योषाग्नौ जायन्ते । लोकान् प्रत्युत्थायिनः ते एवमेव अनुपरिवर्तन्ते । अथ ये एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गाः यदिदं दन्दशूकम् ' ( ६ । २ । १६ )। भगवद्गीतायामपि 'धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ' ( भ० गी० ८ । २५ )।

१२ महत्तपस्तेपिरे । येन ब्रह्म प्राप्येत तादृशं तपः । ' तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति ' (तै० उ० ३ ।२। १ )। 'सत्येन लभ्यस्तपसा हि एष आत्मा' इति ( मुण्ड० ३ । १ । ५)।

पत्रं पङ्क्तिः

१०१० १२-१६ ज्ञानोक्तानि । उपनिषत्सु अथवा ब्रह्मविद्यायामुक्तानि । श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादीनि । आपूर्यमाणपक्षम् । यस्मिन् चन्द्रकलानां वृद्धिर्भवति । अथ ये हिंसामुत्सृज्य० ० ० न पुनरावर्तन्ते ।

अत्र च्छान्दोग्यम्—'तद्य इत्थं विदुः ये चेमे अरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसंभवन्ति । अर्चिषो अहः । अह्नः आपूर्यमाणपक्षम् । आपूर्यमाणपक्षात् यान् षड् उदङ् एति मासाँस्तान्'(१)। 'मासेभ्यः संवत्सरम् । संवत्सरात् आदित्यम् । आदित्यात् चन्द्रमसम् । चन्द्रमसो विद्युतम् । तत्पुरुषो मानवः । स एनान् ब्रह्म गमयति । एष देवयानः पन्थाः इति ' ( ५ । १० ) । बृहदारण्यकं च—' ते ये एवं एतद् विदुः ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिः अभिसंभवन्ति । अर्चिषोऽहः अह्न. आपूर्यमाणपक्षम् । आपूर्यमाणपक्षात् यान् षण्मासान् उदङ् आदित्य एति । मासेभ्यो देवलोकम् । देवलोकात् आदित्यम् । आदित्यात् वैद्युतम् । तान् वैद्युतान् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति । तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति । तेषा न पुनरावृत्तिः ' ( ६ । २ । १५ ) । भगवद्गीतायामपि—

' अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ' ( ८ । २४ )।

छान्दोग्ये—' मानवः पुरुषः ' न तु ' मानसः पुरुषः ' । ' आदित्याच्चन्द्रमसम् । चन्द्रमसो विद्युतं ' इति च ।

१६ शिष्टा दन्दशूका इत्यादि । एताभ्यां द्वाभ्यामन्ये दन्दशूका भवन्ति । दन्दशूकाः = दंशमशकाः । अष्टमनवमखण्डौ कस्याश्चिदुपनिषदः उद्धृते अवतरणे भातः । बृहदारण्यके ' अथ ये हिंसां आश्रित्य ० ० ० कुर्वन्ति '। ' अथ ये हिंसामुत्सृज्य ० कुर्वन्ति ' इति च नास्ति ।

१६-१७ अत्र च्छान्दोग्यम्—' अथैतयोः पथोः न कतरेण चन तानीमानि क्षुद्राणि असकृदावर्तीनि भूतानि भवन्ति । जायस्व म्रियस्व इत्येतत्तृतीयं स्थानम् ' ( ८ ) । अत्र बृहदारण्यकं च—' अथ ये एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गाः

पत्रं पङ्क्तिः

१०१० १६–१७ यदिदं दन्दशूकम ’( ६ । २ । १६ ) । अष्टमनवमखण्डयोः बृहदारण्यकेन साम्यं स्पष्टम् ।

१७ इदं = ब्रह्म । अथाप्याह मन्त्रदृक् ।

१९ तं = विश्वकर्माणम । विदाथ = विदथ । यः = विश्वकर्मा । इमा = इमानि भुवनानि । जजान = जनयामास । अन्तरं = अन्तःकरणं मनः । युष्माकं मनः अन्यत् विश्वकर्मज्ञानाय अनुपयुक्तं बभूव भवति । यूयं विश्वकर्माणं ज्ञातुमसमर्थाः । यस्मात् युष्माकं ज्ञानमैहिकमेव ।

२० जल्प्या । इदं जल्पिशब्दस्य तृतीयैकवचनम् । जल्पिः = जल्पनं वावदूकत्वम् । ‘ मा नो निद्रा ईषत मोत जल्पिः ’ ( ऋ० मं० ८ । ४८ । १४ ) । वयं निद्रावशाः मा भूम नापि जल्पिवशाः । नीहारशब्दः सकृदेव ऋक्शाखायां वर्तते । ‘ अवश्यायस्तु नीहारः ’ इत्यमरः ( १ । २ । १९ ) । नीहारः = निद्रा ’ । नीहारेण निद्रया जल्प्या वावदूकत्वेन च प्रावृताः पूर्णाः जडा इत्यर्थः । उक्थशासः = ये केवल-मुक्थानि शासति पठन्ति । ये अर्थं न जानन्ति । असुतृपः । ‘उरूणसावसुतृपा उदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु ’ । ( ऋ० मं० १० । १४ । १२ ) । अत्र यमस्य दूतौ द्वौ श्वानौ । तौ असुतृपौ इति उच्येते । तौ असुभिः तृप्येते । जनानां मरणं ताभ्यां रोचते । इमे उक्थशासः जनानामसुभिः तृप्यन्ति । जनान् घातयन्ति इत्यर्थः । यस्मात् ते जडाः ।

२१ ‘ विद्यया विदुषः ’ अयं कस्य अर्थः ।

२१–२२ ‘ यं ० ब्रह्मणस्पति ’ इदं न केषामपि शब्दानां विवरणम् । ‘ विद्यया ’ इदमस्थाने स्यात् । ‘ एवं विद्वांसः ’ इत्यस्य प्राक् भवितुमर्हति । ‘ विदुषः ’ इदं विदथ इत्यस्य अपपा-ठः स्यात् । न तं विदथ यं ब्रह्मणस्पतिं विद्यया एवं विद्वांसः अक्षरं वदन्ति । युष्माकमविदुषां मनः अन्यत् बभूव भवति । एषां विदुषां तु अन्तरमन्यत् भवति । इतिशब्दः न तं विदथ इत्यस्य कारणं दर्शयति ।

पृ: पङ्क्तिः

१०१० २२ युष्माकं = अविदुषाम् । अन्तरं = मनः । एषां = विदुषाम् । नीहारेण = तमसा ।

२३ नीहारेण तमसा प्रावृताः यूयम् । तेन यूयं न किमपि जानीथ ।

२४ अविद्वांसः० । अविद्वांसः क्षेत्रज्ञं कथमनुप्रवदेयुः । 'अविद्वांस' इति अशुद्धं भाति । यस्मात् विद्वांसः एव क्षेत्रज्ञमनुप्रवदितुं समर्थाः । 'न अनुप्रवदन्ति' इति स्यात् । अविद्वांसः क्षेत्रज्ञं नानुप्रवदन्ति । अथाहो विद्वांस० । विद्वांसस्तु तत्कर्तुं समर्थाः । क्षेत्रज्ञः अनुकल्पते । इदं 'क्षेत्रज्ञमनुकल्पन्ते' इति स्यात् । अथ विद्वांसः क्षेत्रज्ञमनुकल्पन्ते । क्षेत्रज्ञं ज्ञातुं समर्थाः भवन्ति ।

१०११ १ 'तस्य' इत्यस्य स्थाने 'तं' स्यात् । विद्वान् तपसा सह तपःमाहात्म्येन अप्रमादं प्रमादं विना तं क्षेत्रज्ञमेति । उक्तं च मैत्र्युपनिषदि । यथा 'विद्यया तपसा चिन्तया वा उपलभ्यते ब्रह्म' ( ४ । ४ ) इति ।

१–२ क्षेत्रज्ञः आप्तव्यो भवति । 'असंततं' इति अशुद्धं भाति । 'संततं' इति स्यात् । संततं सख्यमिच्छेत् । तेन असंततमिच्छेत् इति अनवश्यम् ।

३ अत्र 'ज्ञातृ' शब्दः कुत्र वर्तते । ज्ञातृशब्दः जायतेः कथं स्यात् । 'जानतेः इत्यशुद्धम् । 'जानातेः' इत्यवश्यम् । सख्यधातुः धातुपाठे न वर्तते ।

३–४ स = सह + ख = भूतेन्द्रियैः । 'शेते' इति अध्याहृतम् । अथवा । स + ख = सेन्द्रियाणि महाभूतानि । 'प्रज्ञया कर्म कारयति' इति अध्याहृतम् ।

५ तस्य = क्षेत्रज्ञस्य । यदापः = यत् आपः । यत् आपः सा प्रतिष्ठा । क्षेत्रज्ञस्य प्रतिष्ठा स्थिरस्वरूपमप्सदृशमेव । 'तदापः' इति पाठे 'तत्' व्यर्थम् । क्षेत्रज्ञस्य शीलमुपशमः इत्यर्थः । यस्मात् आत्मा ब्रह्म तस्मात् स क्षेत्रज्ञः ब्रह्म भवति ।

पत्रं पङ्क्तिः

१०११ ६ अबन्धः = बन्धाभावः । स बन्धाभावः ज्ञानोत्पन्नः ।

७ भूतनामधेयानि । भूतानां नामधेयानि । एकादशखण्डे वर्तमानानि सर्वाणि नामानि न भूतनामधेयानि । यथा–विभुः प्रभुः यज्ञः । ' भूतनामधेयानि ' इदं ' भूतस्य नामधेयानि ' इति स्यात् । आत्मा महत् भूतम् । तस्य एतानि नामधेयानि ।

९ आत्मार्थे हंसशब्दः उपनिषत्सु बहुकृत्वः प्रयुज्यते । यथा ' एष हि खलु आत्मा हंसः ' ( मै० उ० ६ । ८ ) । ' हंसो लेलायते बहिः ' । ( श्वे० उ० ३ । १८ ) । ' घर्म ' शब्दः जेकबकृतोपनिषद्वाक्यकोशे न विद्यते । ' अजस्रो घर्मो हविरस्मि नाम ' ( निरु० १४ । २ ) । घर्मः = अग्निः । अथवा तप्त पयः । यज्ञः । ' त्वं ब्रह्म त्वं यज्ञस्त्वं लोकः ' ( बृ० उ० १ । ५ । १७ ) । वेनः । ' वेनस्तत्पश्यन् विश्वा भुवनानि विद्वान् ' ( महा० ना० उ० २ । ३ ) । भूमिः ।

' भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ' ( भ० गी० ७ । ८ ) । विभुः । ' आदिदेवमजं विभुम् ' ( भ० गी० १० । १२ ) । 'विभु'शब्दः उपनिषत्सु बहुकृत्वः ।

१० 'प्रभु'शब्दोऽपि तथैव । ' लोकस्य सृजति प्रभुः ' ( भ० गी० ५ । १४ ) ' महान् प्रभुर्वै पुरुषः ' ( श्वे० उ० ३ । १२ ) । शंभुः । ' एष हि खल्वात्मा शंभुः ' ( मै० उ० ६ । ८ ) ' राभु ' शब्दः कुत्रापि नोपलभ्यते । कदाचित् अयमाभुः इति स्यात् । शंभुः + आभुः = शंभुराभुः । प्रमादेन संधेः शंभुः राभुः इति विग्रहः कृतो भवेत् । आ सर्वत्र भवतीति आभुः । अग्रे आत्मैव सर्वत्र आसीत् । ' तुच्छेनाऽऽभ्वपिहितं यदासीत् ' ( ऋ० सं० १० । १२९ । ३ ) । वधकर्मा । अस्य अत्र न किमपि प्रयोजनम् । कश्चित् धातुः वधकर्मा वधार्थः

पृ० पङ्क्तिः

१०११ १० भवेत्। तस्यात्र किं प्रयोजनम्। सोमः। 'यास्ते सोम प्राणाःस्ताञ्जुहोमि। ये ब्राह्मणाः त्रिसुपर्णं पठन्ति। ते सोमं प्राप्नुवन्ति'। (म० ना० उ० १७। ६) 'यश्च सोमस्तस्मै वो नमो नमः' (नृ० पू० ता० उ० ४।३।२९)। भूतम्। 'विश्वं भूतं भुवनम्' (म० ना० उ० २४)। 'स एव सर्वं यद्भूतम्' (कै० उ० १।९)। 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्' (ऋ० सं०१०।९०।२)।

११ भुवनम्। 'विश्वं भूतं भुवनम्' (म० ना० उ० २४)। आपः। 'भूमिराप.०' (भ० गी० ७।८)। 'एष ब्रह्म० आपो ज्योतींषि इत्येतानीमानि च क्षुद्रमिश्राणीव' (ऐ० उ० ५।३)। महत्। 'अस्य महतो भूतस्य निःश्वसितम्' (बृ० उ० २।४।१०)। आत्मार्थे महच्छब्दः उपनिषत्सु बहुकृत्वः। व्योम। 'तदक्षरे परमे व्योमन्' (म० ना० उ० १।२)। यशः। 'यशोऽहं भवामि ब्राह्मणानां०' (छा० उ० ८।१४।१)। 'संज्ञानं० यशः इति। सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति' (ऐ० उ० ५।२)। महः। 'मह इति ब्रह्म' (तै० उ० १।३)।

१२–१३ गहनम्-गभीरम्। 'अचिन्त्योऽमूर्तो गभीरो गुप्तोऽनवद्यो घनो गहनो निर्गुणः' (मै० उ० ७।१।)

१३ कम्। 'कस्मै देवाय हविषा विधेम' (ऋ० सं० १०।१२१।१)। अन्नम्। 'अहमन्नम्' (तै० ब्रा० २।८।८)। हविः। 'हविरस्मि नाम' (निरु० १४।२)। सद्म। विवृतं सद्म नचिकेतसं मन्ये' (कठो० २।१३)।

१४ ऋतम्। 'ऋतं सत्यं परं ब्रह्म' (म० ना० उ० ५६)। 'अहमस्मि प्रथमजा ऋता३स्य' (निरु० १४।२)। योनिः। 'मम योनिर्महद्ब्रह्म' (भ० गी० १४।३)। 'शिवं प्रशान्तं ब्रह्म योनिम्' (कै० उप० ६)। ऋतस्य

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १०११ | १४ | योनिः । ऋतस्य योनिः—योनि—योनौ इति प्रयोगः अग्निसंबंधेन सोमसंबन्धेन च बहुकृत्वः । ऊनविंशतिप्रयोगेषु नैकदाऽपि आत्मार्थे अस्ति । सत्यम् । 'तत्सत्यं स आत्मा' ( छा० उ० ६ । ८ । ७ ) । 'सत्यं त्वेव विजिज्ञासितव्यमिति' ( छा० उ० ७ । १६ । १ ) । 'ब्रह्मणो नाम सत्यमिति' ( छा० उ० ८ । ३ । ४ ) । 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै० उ० २ । १ । १ ) । सत्यशब्दः आत्मार्थे उपनिषत्सु बहुकृत्वः । |
| | १५ | हविः । हविः केषुचित् पुस्तकेषु नास्ति । अयं शब्दः अत्र पुनरुक्तः । रयिः । 'एष वै रयिरात्मा' ( छा० उ० ५ । १६ । १ ) । सत् । 'द्वे वाव ब्रह्मणो रूपे सच्च त्यच्च । न विदुः सति सपद्यामहे' ( बृ० उ० २ । ३ । १ ) । आत्मार्थे सच्छब्दः बहुकृत्वः । पूर्णम् । 'ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' ( ई० उ० ) । सर्वम् । 'सर्वाय स्वाहा' ( बृ० उ० ६ । ३ । ३ ) । 'सर्वः कश्चित् प्रभुः साक्षी' ( मै० उ० ६ । १६ ) । 'यो वै नृसिंहः यच्च सर्वं तस्मै नमो नमः' । ( नृ० उ० ता० उ० ९ ) । अक्षितम् । 'अक्षितमसि अच्युतमसि' ( छा० उ० ७ । १ । ४ ) । |
| | १६ | अपः । कर्मार्थे अप्शब्दः उपनिषत्सु नास्ति । आपः प्रथमाबहुवचनम् । अपः द्वितीयाबहुवचनम् । 'अप्शब्दः पूर्वं ( पङ्क्तिः ११ ) उक्त एव । पवित्रम् । 'पवित्रं परमं भवान्' ( भ० गी० १० । १२ ) । 'पवित्रमहम्' । ( अथर्वशीर्षो० १ ) । अमृतम् । 'एतदमृतमभयमेतद्ब्रह्म' ( छा० उ० ४ । १५ । १ ) । उपनिषत्सु बहुकृत्वः । इन्दुः । 'एष हि खल्वात्मा इन्दुः' ( मै० उ० ६ । ८ ) । |
| | १७ | व्योम । अयं पूर्वं ( पङ्क्तिः ११ ) उक्त एव । |
| | १८ | आकाशम् । 'इमानि भूतानि आकाशादेव समुत्पद्यन्ते' । ( छा० उ० १ । ९ । १ ) । 'आकाश आत्मा' । |

| मंत्रं | पङ्क्तिः |
|---|---|
| १०११ | १८ ( तै० उप० १।७।१ )। आत्मार्थे आकाशः न तु आकाशम्। आपः। अयं शब्दः ( पूर्वं पङ्क्तिः ११ ) उक्त एव। पृथिवी। ' पृथिवी वायुराकाश इत्यादि ' ( ऐ०उप० ३।५।३ )। स्वयंभूः। ' पराञ्चि खानि व्यतृणत् स्वयंभूः '। ( कठो० ४।१ )। ' परिभूः स्वयंभूः ' ( ईशा० उप० ८ )। |
| | १९ पुष्करम्। 'क्षरमहं पुष्करमहम् पवित्रमहं' ( अथर्वशीर्ष० १ )। समुद्रः। ' अपरिमितानन्दसमुद्रः स तत्पदार्थः परमात्मा परं ब्रह्म ' ( सर्वोपनिषत् ४ )। तपः। ' तपो ब्रह्म ' ( तै० उप० ३।२।१ )। ' यद्धि परं तपस्तद्दुर्धर्षं तस्मात्तपसि रमन्ते ' ( म० नारा० उप० २१।२ )। तेजः। ' अयमशरीरः प्राणो ब्रह्मैव तेज एव ' ( बृह० उप० ४।४।७ ' ' यस्तेजो ब्रह्मेत्युपास्ते ' ( छा० उप० ६।८।७ )। तेजसा हि तदा संपन्नो भवति ' ( छा० उप० ८।६।३ )। |
| | २० नाभिः। ' अमृतस्य नाभिः ' ( निरु० १४।२ )। तत्। ' तत्त्वमसि श्वेतकेतो ' ( छा० उप० ६।८।७ )। ब्रह्म। उपनिषत्सु अनेकशः। वरेण्यम्। ' एतज्जानथ सदसद्वरेण्यम् ' ( मुण्ड० उप० २।२।१ )। |
| | २१ हंसः। पूर्वं ( पङ्क्तिः ९ ) उक्त एव। आत्मा। उपनिषत्सु अनेकशः। |
| | २२ अव्ययम्। उपनिषत्सु अव्ययमनेकशः। ' अव्ययं च संस्कुरुते ' इति नोपलभ्यते। यज्ञः। पूर्वं ( पङ्क्तिः ९ ) उक्त एव। आत्मा। पूर्वं ( पङ्क्तिः २१ ) उक्त एव। अस्मिन्नामधेयगणे कानि चिन्नामानि पुनरुक्तानि। कानि चित् क्रियापदानि। कानि चिद् वाक्यानि। क्रियापदानि वाक्यानि च आत्मनः नामधेयानि कथं स्युः। तथैव ' शरीराणि ' (पङ्क्तिः २२) इति शब्दः। 'यद्वाहिष्या' (पङ्क्तिः २१) इदं कस्याश्चित् ऋचः प्रारम्भ इव भाति। अयं खण्डः केषां |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १०११ | २२ | चिद् वाक्यानां पृथक्करणं स्यात् । तानि वाक्यानि मया नोपलब्धानि । एतानि नामधेयानि 'भूतनामधेयानि' इति किमर्थमुच्यन्ते । हंसः विभुः प्रभुः महत् सत्यम् सत् अमृतम् ब्रह्म आत्मा अव्ययम् एतानि आत्मार्थे अनेकशः उपनिषत्सु प्रयुज्यन्ते । मेधः कृमिः भविष्यत् गह्वरम् सदमनम् ऋतस्य योनिः नीरं बर्हिः सर्पिः अपः हेम स्वः सर्गाः शम्बरम् अम्बरम् वियत् धन्व अन्तरिक्षम् भूः अध्वा सगरः सिन्धुः अर्णवः वृक्षः ऊर्ध्वः यत् किम् भवति वधन्त्यध्वानम् यद्वाहिष्या शरीराणि अव्ययं च संस्कुरुते यदेनं तन्वते एतानि आत्मार्थे प्रयुज्यमानानि न मया क्वापि दृष्टानि । राभुः स्वर्णीकम् स्मृतीकम् स्मृतीकम् सतीनम् एते शब्दाः अत्यन्तमपरिचिताः । मया न कदा श्रुताः । हंसः यज्ञः आपः व्योम हविः बर्हिः भवति आत्मा एतानि द्विः पठ्यन्ते । सत् भूः तत् यत् किं येदन तन्वते इमानि किमर्थं स्वरसहितानि । कदाचित् 'हंस आत्मा भवति' 'शरीराणि अव्ययं च संस्कुरुते' 'यज्ञ आत्मा भवति' एतादृशानि इमानि वाक्यानि स्युः । |
| १०१२ | १–२ | एतानि सूक्तानि । अतः परमृचः एव पठ्यन्ते न सूक्तानि । |
| | ६ | सोम =सूर्यः । 'सूर्यः सर्तेर्वा सुवतेर्वा स्वीर्यतेर्वा' (निरु० १२।१४) यस्मात् सूर्यः सर्वं जगत् प्रसूते । 'सोम'शब्दः सूतेः धातोः व्युत्पादितः । सू + म = सोमः । 'सोमः सुनोतेः । यदेनमभिषुण्वन्ति' ( निरु० ११।२ ) । |
| | ७ | जनिता = जनयिता । मतीना = प्रकाशकर्मणामादित्यरश्मीनाम् । रश्मीनां कर्म प्रकाशः । 'रश्मयः' मतयः इत्युच्यन्ते । यस्मात्ते मन्यन्ते प्रकाशयन्ति । द्यौः द्योततेः । |
| | ८ | पृथिवी प्रथयतेः । अग्निः गच्छतेः । 'अग्निशब्दः' (निरु० ७।१४ ) इत्यत्र व्युत्पादितः । यथा अग्रणीर्भवतीत्यादि । |
| | ९ | सूर्यः स्वीकरोति सर्वमात्मसात्करोति । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १०१२ | १० | इन्द्रः इन्दतेः ऐश्वर्यकर्मणः ( निरु० १०'८ ) । विष् व्यापने । ' अथ यद्विषितो भवति तद्विष्णुर्भवति । विष्णुः विशतेर्वा व्यश्नोतेर्वा ' ( निरु० १२।१८ ) । |
| | ११ | अधिदैवतम् । अस्याः ऋचः देवतापरत्वे सोमः सूर्यः । तस्य रश्मयः प्रकाशयन्ति द्योतयन्ति प्रथयन्ति गच्छन्ति स्वीकुर्वन्ति ईशते व्याप्नुवन्ति च । अध्यात्मम् । ऋचः आत्मपरत्वे सोमः आत्मा । तस्य इन्द्रियाणि अर्थान् प्रकाशयन्ति द्योतयन्ति प्रथयन्ति गच्छन्ति स्वीकुर्वन्ति व्याप्नुवन्ति तेषामीशते च । अयं द्विविधः अर्थः क्लिष्टः । सोमः सोम एव । सः न केवलं जनानां मतीः जनयति किंतु सर्वाः देवताः अपि जनयति । |
| | १२ | ' इत्यर्थः ' इदं ' इत्यादीति ' स्यात् । पृथिव्यादयः सर्वाः आत्मनः एव विभूतयः । ' विभूततः ' अयं शब्दः दुर्बोधः । कदाचित् कस्यचित् क्रियारूपस्य अपभ्रंशः स्यात । कदाचित् ' स्तूयते ' इति स्यात् । |
| | १७ | ब्रह्मा = वर्धयिता नेता वा । ' बृह वृद्धौ ' ( धा० १ । ७३७ ) । |
| | १८ | देवनं = द्योतनम् । ' दिवु द्युतौ ' ( धा० ४ । १ ) । |
| | १९ | पदवी. = पदं वेत्ति । ' वी गतिव्याप्त्यादिषु ' ( धा० २ । ३८ ) । पदं वेति अग्र्यं स्थान गच्छति । कविः कवते वर्णयति । ' कुङ् शब्दे ' ( धा० १ । २७६ ) । ' कवीय ' इति नामधातुः । कवीयमानानां = गच्छताम् । |
| | २० | ऋषिणः = द्रष्टा । ' ऋषी गतौ ' ( धा० ६ । ७ ) । ( निरु० १० । २६ ) इत्यत्र ' ऋषीणानि ' इति रूपम् । विप्राणां = व्यापनकर्मणाम् । |
| | २१ | महिषः = महान् । वस्तुतः महिषः कश्चित् हिंस्रः प्राणी । मृगाणां = मार्गणकर्मणाम । मृगाः हिंस्राः पशवः । |
| | २२ | गृध्राणाम् । ' गृधु अभिकाङ्क्षायाम् ' ( धा० ४ । ३७ ) । अत्र गृध्यतिः स्थानार्थः । यस्मात् एतस्मिन् आदित्ये तिष्ठति । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १०१२ | २२ | यदि श्येनः आदित्यः गृध्रोऽपि आदित्यः तर्हि श्येनो गृध्राणामित्यस्य आदित्यः आदित्यानामित्यर्थः स्यात्। कोऽर्थः। |
| १०१३ | १–२ | 'गृध्र आदित्यो० तिष्ठति' अयमपपाठः स्यात्। गृध्राणां गर्धनकर्मणां (गतिकर्मणाम्) आदित्यरश्मीनामिति पाठः अवश्यः। 'यतः एतस्मिन् तिष्ठति' इत्यत्र 'एतस्मिन्' इत्यस्य स्थाने 'एतेषु' इत्यवश्यम्। श्येनः आदित्यः। एतेषु आदित्यरश्मिषु तिष्ठति। |
| | २ | स्वधितिः = स्व + धितिः। स्व = स्वयम् + धितिः = धत्ते (कर्माणि)। स्वधितिः परशुः 'द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः' (अमरः २।८।९३)। |
| | ३ | वनाना = वननकर्मणाम्। वनानां = वृक्षसमूहानाम्। |
| | ४–५ | 'एष हि पवित्रं रश्मीनामत्येति स्तूयमानः' इत्यस्य कोऽर्थः। पवित्रं = रश्मीन्। 'रश्मीनां' इत्यस्य स्थाने 'रश्मीन्' इत्यवश्यम्। यथा आत्मपरे अर्थे 'पवित्रामिन्द्रियाणि' (१४) इत्युच्यते। आदित्यः स्वरश्मिभ्यः अधिकः। रेभन् = स्तूयमानः। |
| | ९ | अक्षरम्। देवतापरे अर्थे आदित्यः अक्षरं ब्रह्म कथं स्यात्। |
| | ११ | 'शीङ् गतौ' (धा० १।९६३)। 'यतः एतस्मिन् तिष्ठति' इत्यस्य पूर्वेण कः संबन्धः। एतस्मिन् कस्मिन्। एतस्मिन् ज्ञाने इति स्यात्। 'एतेषु' इत्यवश्यम्। एतेषु इन्द्रियेषु आत्मा तिष्ठति। |
| | १२ | 'आत्मनि धत्ते' 'आत्मनि' इत्यस्य स्थाने 'आत्मा' इति स्यात्। यथा पूर्वं 'एष हि स्वयं कर्माणि आदित्यो धत्ते' (पङ्क्ति. २–३) इत्युक्तम्। |
| | १३–१४ | अयमपि आत्मा स्वयमिन्द्रियेषु कर्माणि धत्ते। पवित्रम् = इन्द्रियाणि। आत्मा इन्द्रियेभ्यः अधिकः। इन्द्रियाणि केवलं ज्ञानसाधनानि। आत्मा ज्ञानमेव। अयमेव आत्मा एतत्सर्वमनुभवति। सर्वज्ञः अयमित्यर्थः। |

पत्रं पङ्क्तिः

१०१३ १५ आत्मगतिं ' इत्यस्य प्राक् ' इति ' शब्दः अवश्यः ।
ऋचः देवतापरत्वे अयमर्थः । आदित्यः स्वरश्मीन् वर्धयति ।
गमनकर्मणः तान् जानाति । व्याप्नुवतः तान् पश्यति ।
तेभ्यः महत्तरो भवति । तेषु तिष्ठति । तेषु कर्माणि आधत्ते ।
तेभ्यः अयमतिशयेन अधिकः। तस्मात् आदित्यः स्तुतिमर्हति।
आत्मा इन्द्रियाणि वर्धयति । अर्थेषु संचरन्ति तानि जानाति ।
व्याप्नुवन्ति तानि पश्यति । तेभ्यः महत्तरो भवति । ज्ञान-
साधनानि तानि जानाति । तेषु च विषयज्ञानार्थं तिष्ठति ।
सर्वथा आत्मा इन्द्रियेभ्योऽधिकः । तस्मात् स स्तुतिमर्हति ।
एतौ द्वावपि अर्थौ क्लिष्टौ । केवलेयं सोमस्तुतिः । यथा
देवानां ब्रह्मा श्रेष्ठः कवीना अग्निः श्रेष्ठः विप्राणा ( ज्ञानिनां )
ऋषिः श्रेष्ठः मृ गाणां (हिंस्रपशूनां) महिषः ( कश्चित् हिंस्रतमः
पशुः ) श्रेष्ठः गृध्राणां श्येनः श्रेष्ठः वनानां
छेत्ता स्वधितिः श्रेष्ठः एवं सोमः श्रेष्ठः । रेभ् धातुः
ऋक्शाखायां स्तवने वर्तते । ' कविर्गीर्भिः काव्येना कविः
सन्त्सोम. पवित्रमत्येति रेभन् ' ( ऋ० सं० ९ । ९६ ।
१७ )। अत्र सोमः कविः । सः देवान् गीर्भिः काव्येन
च रेभति स्तौति । ' महान् कविर्निर्वचनानि शंसन् ' ( ऋ०
सं० ९ । ९७ । ९ ) । अत्रापि महान् कविः सोमः
निर्वचनानि स्तुतीः शंसति । अतः रेभन् = शंसन् । क्वचित्
प्रकाशनेऽपि । रेभः = स्तोता । सोमः बहुकृत्वः रेभः
इत्युच्यते । पवित्रं = सोमरसपावनं साधनम् । सोमः पवि-
त्रमत्येति = पवित्रे सोमरसः गाल्यते । तेन शुद्धिः भवति
प्रकाशते च ।

२१ धीतिं = कर्माणि । मनीषां = मतानि ।

२२–२३ विद्यामतिबुद्धिमताम् = विद्यावतां मतिमतां बुद्धिमतामेतेषां
त्रयाणां तिस्रो वाचः । विद्यावतां वाग् भिन्ना । तथा मति-
मताम् । तथैव बुद्धिमताम् । ते विद्यावन्तः ये श्रुतिं जानन्ति ।
ते मतिमन्तः ये तर्केण अर्थान् निश्चिन्वन्ति । ते बुद्धिमन्तः ये

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १०१३ | २२–२३ | ब्रह्म जानन्ति। ( निरु० ३१। १३ ) इत्यत्र 'मेयं विद्या-श्रुतिमतिबुद्धिः' इत्युच्यते। श्रुतिरूपा विद्या प्रथमा। मतिरूपा ऊहरूपा वा अस्याः उच्चतरा। बुद्धिरूपा सर्वासा-मुत्तमा। 'विद्यामतिबुद्धिमता' इत्यत्र विद्याशब्दस्य 'श्रुतिः' इत्यर्थः स्यात्। |
| | २४ | 'आत्मगतिं' इत्यस्य प्राक् इति शब्दः अवश्यः। अस्यामृचि आदित्यस्य आत्मनोऽपि न किमपि प्रयोजनम्। अत्र वह्निः सोम एव। सर्वेषां देवाना कर्माणि शक्तयश्च सोमे स्तुत्यर्थमा-रोप्यन्ते। वह्निः सोमः तिसृणां वाचां प्रेरकः अग्निः। अत्र सोमः मनुष्यपशुपक्षिणां तिस्रो वाचः प्रेरयति। ऋतस्य यज्ञस्य धीतिं स्तुतिं ब्राह्मणश्च मनीषां स्तुतिं प्रेरयति। यथा गावः गोपतिं ( गोस्वामिनं न तु वृषभं ) पृच्छमानाः अन्वेषयन्त्यः तमेव यन्ति तथा वावशानाः सोमं कामयमानाः मतयः स्तुतयः सोममेव यन्ति। |
| १०१४ | १–२ | गावः धेनवः = रश्मयः। वावशानाः=वावश्यमानाः कामयमानाः सोमं = आदित्यम्। 'यन्ति' एतत् पदमभ्याहृतम्। |
| | ३ | विप्राः=रश्मयः। पृच्छमानाः = कामयमानाः। |
| | ४ | सुतः = प्रेरितः। अज्यमानः = गच्छन्। एतम् = आदित्यम्। |
| | ५ | संनवन्ते = एकी भवन्ति। ते एते सर्वे रश्मयः एतस्मिन् सोमे आदित्ये एकी भवन्ति। |
| | ६ | गावः धेनवः = इन्द्रियाणि। वावशानाः = वावश्यमानानि कामयमानानि। |
| | ७ | विप्राः = इन्द्रियाणि। |
| | ८ | पृच्छमानाः = पृच्छमानानि। कामयमानानि सोमम् = आत्मानम्। |
| | ९ | अज्यमानः = इन्द्रियेषु प्रचरन्। 'इमम' इत्यस्य कः संबन्धः इमम् = आत्मानम्। अर्काः त्रिष्टुभः = आत्मा च सप्त ऋषयश्च। आत्मा = बुद्धिः। सप्त ऋषयः = इन्द्रियाणि। तानि इमानि इन्द्रियाणि। |

पत्रं पङ्क्तिः

१०१४ ९ अत्रापि सोमपरः एव अर्थः । गावः धेनवः = पयः । पयः सोमेन मिश्र्यते । तेन पयः सोमं कामयते इत्युच्यते । विप्राः स्तोतारः मतिभिः स्तुतिभिः पृच्छमानाः अन्वेषयन्तः सोममेव यन्ति । सोमः प्रथमं सूयते पश्चाज्जलेन मिश्र्यते । अर्काः स्तुतयः त्रिष्टुभः त्रिष्टुप् छन्दसि विरचिताः स्तुतयः सोमे संमिलन्ति । अर्काः= स्तुतयः त्रिष्टुप् छन्दसि वर्तमानाः ।

१४ अक्रान् = अति+अक्रमीत् । समुद्रः = आदित्यः ।

१५ प्रथमे = परमे व्यवने । विधर्मन् = वर्षकर्मणा । भुवनस्य = सर्वस्य ।

१८ समुद्रः = आत्मा ।

१९ विधर्मन् = ज्ञानकर्मणा ।

देवतापरत्वे अयमर्थः । समुद्रः आदित्यः प्रथमे परमे व्यवने उच्चतमं स्वर्गं लोकमक्रान् अतिक्रामति । विधर्मन् वर्षकर्मणा भुवनस्य सर्वस्य राजा सन् प्रजाः जनयति । वृषा वर्षस्य कर्ता सोमः आदित्यः पवित्रे स्वर्गलोके अधि मानो उच्चतमे अव्ये अव्यये सुवानः गच्छन् बृहत् वावृधे अतिशयेन वर्धते । ऋचः आत्मपरत्वे अयमर्थः । आत्मा उच्चतमायामवस्थायां विधर्मन् ज्ञानकर्मणा प्रजाः ज्ञानिनः जनयति । ऋचः द्वितीयस्य अर्धस्य अर्थः यास्केन न दीयते । अत्रापि सोमः सोम एव । ' अक्रान् ' इदं न क्रियापदम् । किन्तु विशेषणम् । तस्य ' सर्वव्यापी विस्तृतः ' अर्थः स्यात् । सोमः अत्र विस्तृतः समुद्रः इत्युच्यते । ' त्वं समुद्रो असि विश्ववित् ' ( ऋ० सं० ९ । ८६ । २९ ) । ' अक्रान् देवो न सूर्यः ' ( ऋ० सं० ९ । ६४ । ९ ) । अत्र सोमः । देवः सूर्यः इव अक्रान् । विधर्मन् = विधर्माणि । ' हिन्वानो वाचमिष्यासि पवमान विधर्मणि ' ( ऋ० सं० ९ । ६४ । ९ ) । ' विधर्मा ' इति स्वर्गस्य नाम । यथा तिस्रो द्यावः त्रीणि रोचनानि तथा त्रयो विधर्माणः आसन् इति भाति । अत्र विधर्मा पवित्रम् । ' त्वं पवित्रे रजसो विधर्मणि देवेभ्यः

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १०१४ | १९ | सोम पवमान पूयसे ' ( ऋ० सं० ९ । ८६ । ३० ) । ' त्वां रिहन्ति मातरो हरिं पवित्रे अद्रुहः । वत्सं जातं न धेनवः पवमान विधर्मणि ' ( ऋ० सं० ९ । १०० । ७ ) । अनयोः द्वयोः ऋचोः ' पवित्रं ' ' विधर्मा ' इत्युच्यते । जनयन् प्रजाः यथा सूर्यादयः प्रजाः जनयन्ति तथा सोमः । इन्द्रादिवत् सोमः भुवनस्य विश्वस्य राजा । यथा इन्द्रादयः वृषपः वृषभाः उच्यन्ते तथा सोमः वृषा उच्यते । सानो = सानौ श्रेष्ठे स्थाने । पवित्रं श्रेष्ठं स्थानम् । ' अव्ये ' शब्दे परे ' सानौ ' इत्यस्य ' सानो ' भवति । अव्यमवयः मेषाः तेषां बालाः । तन्मयमव्यम् । पवित्राणि अविरोम्णामक्रियन्त । अत एव पवित्रमव्यमिति उच्यते । यथा ' सुताः पवित्रमति यन्ति अव्यम् ' ( ऋ० सं० ९ । ६९ । ९ ) । पवित्रं ' सानु ' इत्युच्यते । यथा ' यदव्य एषि सानवि ' ( ऋ० सं० ९ । ९० । २ ) । ' दश क्षिपो अव्यत सानो अव्ये ' (ऋ० सं० ९ । ९७ ।१२ ) । अव्ये सानौ पवित्रे अधि सुवानः सूयमानः इन्दुः सोमः बृहत् महत् वावृधे वर्धते । |
| १०१४<br>१०१५ | २४<br>१ | ' देवानामाधिपत्यमदधात् ' इदं केषां शब्दानां विवरणम् । देवतापरत्वे इन्दुः आदित्यः । सः अपां गर्भः सन् ( समुद्रात् ) उद्यन् देवानामाधिपत्यमिन्द्रे अदधात् । आत्मपरत्वे इन्दुः आत्मा । देवानामिन्द्रियाणामाधिपत्यमिन्द्रे आत्मन्येव अदधात् । भाष्ये यास्कः ' इन्दुरादित्य इन्दुरात्मा ' इत्येव ब्रवीति । देवतापरमात्मपरं वा अर्थं न ददाति । महिषः = कश्चित् हिंस्रतमः महान् पशुः । तेन सोमः उपमीयते । महिषः इव उग्रः अथवा निर्भीकः । सोमः अपां गर्भः यस्मात् सोमलतावर्धनार्थं जलमवश्यम् । अथवा । यस्मात् अद्भिः संमिश्र्यते तस्मात् सोमः पानार्थं देवान् अवृणीत । देवाः सोमरसं पिबन्तु इति ऐच्छन् । एतत् सोमस्य महत् कर्म । |

पत्रं पङ्क्तिः

१०१९ १ पवमानः पूयमानः सोमः इन्द्रे ओजः बलमदधात् । बलार्थमिन्द्रः सोममपात् । तस्य मदे च वृत्रवमधीत् इति बहुकृत्वः उच्यते । इन्द्रः वृत्रेण प्रावृतं सूर्यं ज्योतिः तमसः निरमुञ्चत् । तत् सूर्यस्य जननमित्युच्यते । इदं सोमे आरोप्यते । बह्वीषु ऋक्षु सोमस्य इन्द्रेण तदात्म्यं दृश्यते ।

६ विधुं = विधमनशीलम् ' दद्राणं = दमनशीलम् ।

७ युवानं = चन्द्रमसम् । पलितः = आदित्यः । जगार = गिरति । अद्या = सद्यः । ममार = म्रियते । स चन्द्रमाः दिवा समुदितः सन् । ' समुदिता ' इत्यस्य स्थाने ' समुदितः ' इत्यवश्यम् । सूर्यतेजसा छन्नः चन्द्रमाः दिवा न दृश्यते । अयं देवतापरः अर्थः ।

९ युवानं = महान्तम् । पलितः = आत्मा । अद्या = रात्रौ ।

९–१० ' रात्रिः समुदिता ' इत्यस्य कोऽर्थः । आत्मा महान्तमात्मानं हिरण्यगर्भस्य बुद्धिं प्रलयकाले गिलति । प्रलये आत्मा एव अवशिष्यते । एवमात्मपरोऽर्थः । ऋच आभ्यामर्थाभ्यां भिन्नः अर्थः । ' पलितो धूमकेतुः ' ( ऋ० मं० १०।४।९ ) इत्यत्र अग्निः पलितः इत्युच्यते । ' दिवा न नक्तं पलितो युवाजनि ' ( ऋ० सं० १।१४४।४ ) । ' नि वेवेति पलितो इत आसु ' ( ऋ० सं० ३।५५।९ ) इत्यत्रापि तथैव । ' विधुं दद्राणं ' इति ऋक् इन्द्रसूक्ते विद्यते । तेन पलितः इन्द्रः । बहूनां तारकाणां समने संगतौ दद्राणं गच्छन्तं विधुं चन्द्रमसं युवानं सन्तमपि पलितः इन्द्रः जगार निगीर्णवान् । देवस्य इन्द्रस्य काव्यं कृतिं पश्य । तस्य महित्वा महत्त्वेन विधुः अद्य ममार । स एव विधुः ह्यः समान सजीवः आसीत् । इन्द्रः सर्वेभ्यः अधिकः सन् उषआदीन् सर्वान् हिनस्ति । ' समान ' इत्येतत् ' अन प्राणने ' ( धा० २।६० ) इत्यस्य लिटि रूपम् । विधुशब्दः अत्रैव प्रयुज्यते । तस्य वृत्रः इत्यपि अर्थः स्यात् । इन्द्रः वृत्रं युवानमपि सन्तं मिलति । वृत्रः इन्द्रेण आल्पायुः कृतः । इदमिन्द्रस्य काव्यम् ।

| पत्र | पङ्क्तिः | |
|---|---|---|
| १०१९ | १४ | साकंजानां = साकं सह जानां जातानाम् । 'षण्णां ऋषीणाम्' इति अध्याहृतम् । एकजः = आदित्यः । तं विद्वांसः सप्तथं सप्तममाहुः । |
| | १५–१६ | इष्टानि = कान्तानि । अथवा । कान्तानि गतानि मतानि नतानि । |
| | १६-२१ | 'अद्भिः इह० एकं भवन्ति' अत्र कस्य अर्थः । 'तेषामिष्टानि० एकं भवन्ति' इदं सर्वं (निरु० १० । २६) इत्यत्र वर्तते । तत्र तत् अवश्यं न अत्र । |
| | १८ | साकंजानां = सह जातानां षण्णामिन्द्रियाणाम् । एकजः = आत्मा । आभ्यां द्वाभ्यामर्थाभ्यामृगर्थो भिन्नः । |

अत्र सायणभाष्यम्—'साकंजानामेकस्मादादित्यात् सहोत्पन्नानां सत्यानामृतूनां मध्ये सप्तथं सप्तममृतुम् । एकजमेकेनोत्पन्नमाहुः कालतत्त्वविदः । चैत्रादीनां द्वादशानां मासानां द्वयमेलनेन वसन्ताद्याः षड् ऋतवो भवन्ति । अधिकमासेनैक उत्पद्यते सप्तमर्तुः । न च तादृशो नास्तीति मन्तव्यम् । अस्ति त्रयोदशो मास इत्याहुः (तै० सं० ६ । ५ । ३ । ४) इति श्रुतेः । तदेवोच्यते—'षडिद्यमाः' इच्छब्द एवकारार्थः । षडेव ऋतवो मासद्वयरूपाः 'ऋषयः' गन्तारः । ते च 'देवजाः' देवादादित्यात् जाता इत्येवमाहुः । सप्तमाधारस्य त्रयोदशस्य मासस्य देवाभावः । 'नि.सूर्योऽधिकमासो मण्डलं तपते रवेः' इत्यादि स्मृतेः । तस्मात् षडेव देवजाः । अदेवजः एकः । 'तेषाम्' ऋतूनां स्वरूपाणि 'इष्टानि' सर्वलोकाभिमतानि 'धामशः' तत्तत्स्थाने 'विहितानि' पृथक् पृथक् स्थापितानि । 'रूपशः' रूपभेदेन विकृतानि विविधाकृतियुक्तानि । स च रूपभेदस्तैत्तिरीयैराम्नातः 'स रसमह वसन्ताय प्रायच्छत् यवं ग्रीष्माय' (तै० सं० ७ । २ । १० । १) इत्यादि । 'स्थात्रे' अधिष्ठात्रे । तदर्थाय 'रेजन्ते' चलन्ति जगद्व्यवहाराय पुनः पुनरावर्तन्त इत्यर्थः । ऋगर्थः सायणभाष्यादपि भिन्नः । साकंजाताः मरुतः । एकजः

पत्रं पङ्क्तिः

१०१५ १८ इन्द्रः । ऋष्यः सहथमेकजमाहुः । षड् यमाः देवजाः इति च आहुः । तेषां मरुतामिष्टानि कर्माणि धामशः तत् तत् प्रभावानुरूपं विहितानि इन्द्रेण । यथा इन्द्रः तान् आज्ञापयति तथा ते कुर्वन्ति । स्थात्रे = इन्द्राय । इन्द्रः सर्वेषामुपरि तिष्ठति तस्मात् सः स्थाता । रेजन्ते = भयेन कम्पन्ते । विकृतानि = कृत्रिमाणि । रूपशः = स्वभावानुरूप्येण । यदा मरुतः इन्द्राज्ञप्ताः स्वकर्माणि कुर्वन्ति तदा सर्वं जगत् भयेन कम्पते । षड् यमाः के इति न ज्ञायते । ' स हि द्युना विद्युता वेति साम पृथुं योनिमसुरत्वा ससाद । स सनीळेभिः प्रसहानो अस्य भ्रातुर्न ऋते सप्तथस्य मायाः ' ( ऋ० सं० १० । ९९ । २ ) । अस्यामृचि ' सप्तथः ' इति कस्य चित् इन्द्रस्य शत्रोः नाम । सरस्वती सप्तथी इत्युच्यते ( ऋ० सं ७ । ४६ । ६ ) ।

१०१६ ३-४ शब्दस्पर्शरूपरसगन्धहारिण्यः इन्द्रियमात्राः । ताः आत्मने प्राणाय वा शब्दस्पर्शरूपरसगन्धान् आहरन्ति । किंतु आत्मा प्राणो वा निराहारः शब्दादीन् नेच्छति ।

४ अमुं प्राणमित्यर्थः । ताः अमुं पुंशब्देन पश्यन् = इन्द्रियमात्राः प्राणः एव इति विद्वान् पश्यति । स च प्राणः पुमान् ।

५ अन्धः एतत् न विजानाति यस्मात् तत् ज्ञानं कष्टं कठिनम् । ईमाः = इमाः । इदं सूक्तं कूटार्थपरिपूर्णम् । तस्यार्थः अतीव दुर्बोधः । यास्कभाष्यस्य कश्चित् भागः गलितः इति भाति । अत्र सायणभाष्यम् । मे मदीया या दीधितयः स्त्रियः संस्त्यानवत्यो योषितः सतीः सत्यः । योषिद्वत् उदकरूपगर्भधारणात् स्त्रीत्वम् । एषां रश्मीनामाविष्टलिङ्गत्वात् स्त्रीलिङ्गता । तान् उ तान् रश्मीनेव पुंसः आहुः प्रभूतवृष्ट्युदकसेक्तॄन् पुरुषानाहुः । प्रतिनिर्देशापेक्षया पुंलिङ्गता । अमुमर्थमत्यन्तनिगूढमक्षण्वान् ज्ञानदृष्ट्युपेतः कश्चित् महान् पश्यत् जानाति । अन्धः अतथारूपः स्थूलदृष्टिः न विचेतत् न विचेतयति न जानाति । किंच यः कविः क्रान्तदर्शी पुत्रः स्त्रीपुरुषरूपाणां रश्मीनां पुत्रस्थानीयः । पुरु जगतां त्राता वृष्ट्युदकलक्षणोऽस्ति । सः ईं स एव पुत्रः ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १०१६ | ९ | यद्वा । ईमेनमर्थं स्त्रीणा सतीनां पश्चात् पुरुषभावमा चिकेत सर्वतो जानाति । पित्रोः स्थितिं पुत्र एव जानाति न अन्यः। यः कश्चित् ता तानि विजानात् स्त्रीपुरुषपुत्ररूपाणि जानीयात् । सः पितुः पिता असत् । पिता वृष्ट्या जगत्पालको रश्मिसमूहः । तस्यापि पिता आदित्यः स भवति । आदित्य एव भवतीत्यर्थः । यद्वा । लौकिकोक्तिरियम् । यस्तानि जानाति स एवं भवति । स्वयं पितुः पुत्रः सन्नपि स्वपुत्रापेक्षया पिता च भवति । पुत्रपौत्रादिसहितश्चिरकालं जीवी भवति । इत्याधिदैवतम् । अथाध्यात्मम् । या इदानीं स्त्रियः सतीः स्त्रीत्वं प्राप्ताः आहुः लौकिकाः तानु तानेव मे मह्यं पुंसः पुरुषान् आहुः प्रतिपादयन्ति तत्त्वज्ञाः । कथमन्यस्य अन्यभावः उच्यते । एकस्यैव निरस्तसमस्तोपाधिकस्याऽऽत्मनस्तद्देहावस्थानमात्रेण तत्तद्व्यपदेशोपपत्तेः । द्वितीयः पादः पूर्ववत् । किंच पुत्रो वयसाऽल्पोऽपि यः कविः क्रान्तप्रज्ञः ज्ञानी स्यात् ईमिममर्थं स विचिकेत जानाति । एवमुक्तलक्षणस्य परमात्मनः ता तानि स्त्रीपुंस्त्वादीनि यो विजानात् औपाधिकानि जानीयात् । सः पितुः स्वोत्पादकस्यापि ज्ञानरहितस्य पिता असत पितृवत् पूज्यो भवति ।<br><br>वस्तुतः एताः स्त्रियः किंतु अज्ञाः एताः पुमांसः इति वदन्ति । अक्षण्वान् यस्य ज्ञानचक्षुः वर्तते सः एव तत्त्वं पश्यन् पश्यति। अन्धः तत्तत्त्वं न विचेतत् जानाति । कविः बुधः पुत्रोऽपि सन् ईमेताः स्त्रियः आचिकेत । तस्य पिता एतत् न विजानाति। तस्मात् ज्ञानेन स्वपितुः पिता असत् अस्ति । अज्ञाः इन्द्रियाण्येव आत्मा इत्याहुः । वस्तुतः इन्द्रियाणि स्त्रीसदृशानि एव । उपभोगसाधनानि इत्यर्थः । तानि पुमान् आत्मा उपभुङ्क्ते । वयसा वृद्धाः अपि एतन्न जानीयुः । अल्पवयस्कोऽपि कश्चित् तत् जानीयात् । तस्मात् वृद्धादपि सः प्रशस्यतरः । |
| | १० | सप्त आदित्यरश्मयः तान् आदित्यः गिरति इति ऋचः संक्षेपार्थः । |

पत्रं पङ्क्तिः

१०१६ ११ 'मध्यस्थानोर्ध्वशब्दः' इदं दुर्बोधम्। मध्यस्थानश्च ऊर्ध्वशब्दश्च इति विग्रहः। आदित्यः ऊर्ध्वशब्दमर्हति। किंतु वर्षणार्थं स मध्यमे स्थाने तिष्ठति।

१२ तानि = ये रश्मयः अस्मिन् आदित्ये तिष्ठन्ति तानि। ते धीतिभिश्च मनसा च स्तुतिभिः वि–परि–अयन्ति। पृथिव्यां वर्षन्ति। परिभुवः पृथिवीं व्याप्नुवन्तः प्राणिमात्राणां सर्वाणि कर्माणि वर्षकर्मणा परिभवन्ति व्याप्नुवन्ति। सर्वं प्राणिकर्म वर्षायत्तम्। वर्षाभावे प्राणिनः न किमपि कर्तुं शक्नुयुः।

१३ सप्त इन्द्रियाणि। तानि आत्मा गिरति इति मथितार्थः। आत्मा ऊर्ध्वशब्दमर्हति। किंतु शरीरमध्ये अन्तःकरणे तिष्ठति। यानि याः शक्तयः अस्मिन् आत्मनि तिष्ठन्ति तानि ताः धीतिभिश्च मनसा च चेतनत्वेन च विपर्ययन्ति संसारविपरीतं कर्म कुर्वन्ति। सर्वं व्याप्नुवत्यः ज्ञानकर्मणा सर्वाणि इन्द्रियाणि परिभवन्ति। ज्ञानदशायामिन्द्रियाणि निष्क्रियाणि भवन्ति। सप्त = सप्त मातरः आपः। अर्धे स्थाने उदरे गर्भः यासां ता अर्धगर्भाः। ताः भुवनस्य रेतः आत्मनि गर्भत्वेन धारयन्ति। ताः विष्णोः प्रदिशा सूर्यस्य आज्ञया विधर्मणि नाके तिष्ठन्ति। विपश्चितः बुद्धियुक्ताः मन्तः देवाः विश्वतः सर्वत्र परिभुवः वर्तमानाः परिभवन्ति जानन्ति धीतिभिः मनसा च।

अत्र सायणभाष्यम्। सप्त सर्पणस्वभावाः सप्तसंख्या वा रश्मयः अर्धगर्भाः संवत्सरस्यार्धे गर्भं गर्भस्थानीयमुदकं धारयमाणाः। यद्वा। ब्रह्माण्डस्यार्धे मध्येऽन्तरिक्षे गर्भवर्द्धमानाः। भुवनस्य लोकस्य रेतः सारं वृष्टिप्रदत्वेन रेतोभूताः तादृशा रश्मयः विष्णोः व्यापकस्याऽऽदित्यस्य विधर्मणि जगद्धारणव्यापारे प्रदिशा प्रदेशेन तिष्ठन्ति वर्तन्ते। किंच ते धीतिभिः प्रज्ञाभिः मनसा जगदुपकारः कर्तव्य इति बुद्ध्या च विश्वतः सर्वतः। द्वितीयार्थे तसिः। विश्वं परिभवन्ति परितो भावयन्ति। कृत्स्नं जगद् व्याप्नुवन्ति इत्यर्थः। यस्मादेवं तस्मात् ते एव विपश्चितः बुद्धियुक्ताः परिभुवः सर्वत्र व्याप्ताश्च। यद्वा। सप्तार्धगर्भाः। 'सप्त महदहंकारौ पञ्च तन्मात्राणीति मिलित्व

पत्रं पङ्क्तिः

१०९ ११ सप्तसंख्याकानि तत्त्वानि । अर्धगर्भाः अविकृतिरूपाः । विकाराश्रयाया मूलप्रकृतेः प्रकृतिविकृतेः उदासीनस्य आत्मनश्चोत्पन्नत्वात् अर्धांशेन प्रपञ्चाकारेण परिणामादर्धगर्भाः । पुरुषांशस्याविक्रियत्वात् इत्यभिप्रायः । अत एव तेषां प्रकृतिविकृतित्वम् । यस्मादेवं तस्मात् भुवनस्य रेतः कारणम् । कारणभूतानि तान्येव विष्णोः व्याप्तस्य पुरुषस्य विधर्मणि प्रदिशा प्रदेशेन तिष्ठन्ति । इतरत् समानम् ।

१८–१९ इयमृक् यास्केन ( निरु० ७।३ ) इत्यत्र पठिता ।

११०.१७ १ 'न हि० परिवेदयन्ते' अयं कस्य अर्थः । इदं वाक्यमशुद्धं दुर्बोधं च । अत्र दुर्गवृत्तिः ( ६२२ ) इत्यत्र द्रष्टव्या ।

२ अयमादित्योऽयमात्मा = अस्याः ऋचः आदित्यपरः आत्मपरः इति द्वावर्थौ । किंतु एतौ द्वावर्थौ अत्र न दीयेते । आदित्यपरः कः अर्थः ।

अत्र सायणभाष्यम् । 'अहं यद् इव इदं यदपीदं विश्वं अस्मि कृत्स्नः प्रपञ्च्योऽप्यहमेवास्मि । नामरूपांशं परमार्थं त्यक्त्वा सर्वत्रानुगतोऽस्मि । योऽयं सच्चिदानन्दाकारोऽस्ति सोहमस्मीति न विजानामि । विविच्य नाज्ञासिषम् । परं शास्त्रजनितमिदमहमस्मीति ज्ञानं न जातम् । अविवेकी अहमित्यर्थः । कार्यकारणयोरभेदात् । कृत्स्नप्रपञ्चस्यापि ब्रह्मानन्यत्वेन ब्रह्मैकत्वावगमे प्रपञ्चजातमपि स्वरूपमेव भवति । 'इदं सर्वं यदयमात्मा' 'ब्रह्मैवेदं सर्वं' 'आत्मैवेदं सर्वं' 'स ईक्षत बहु स्यां प्रजायेय' इत्यादिश्रुतिभ्यः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् । 'तदनन्यत्वमारम्भणशब्दादिभ्यः' ( वेदान्त० २ । १ । ४ ) इत्याद्युपपत्तिभिश्च प्रपञ्चस्य ब्रह्मानन्यत्वं सिद्धम् । यद्वा । इव शब्द उपमार्थः । यदिव परोक्षज्ञानं सर्वैकात्म्यरूपमानुभाविकमस्ति तदिव तद्वदेवाहमस्मि । इदं सर्वमहमस्मीति ज्ञानं मे जातम् । अपि त्वेतद् दार्ष्टान्तिकभूतम् । आनुभाविकं सार्वात्म्यं यदस्ति तत् न विजानामि न प्राप्तोऽस्मि । शास्त्रजनितं सार्वात्म्यं जातं न त्वानुभाविकमि-

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १०१७ | २ | त्यर्थः । तत्र कारणमाह- यतोऽहं निण्यः । अन्तर्हितनामैतत् । अन्तर्हितः मूढचित्तः चित्तप्रत्यक्प्रवणताभावेन परिच्छिन्न इत्यर्थः । तत्रोपपत्तिमाह—संनद्धः अविद्याकामकर्मभिः सम्यक् बद्धो वेष्टितः । अत एव मनसा युक्तः भावनासहिष्णुना बहिर्मुखेण विक्षिप्तेन चेतसा युक्तः संचरामि संसारे । अथवा । मनसा संनद्धः चरामि । इन्द्रियपरवश एव सन् संसारे दुःखमनुभवामि । न सार्वात्म्यं जानामि इति परिदेवते । यास्कोऽपि इमं परिदेवनार्थत्वेन उदाजहार ' अथापि परिदेवना कस्माचित् भावात् न वि जानामि यदिवेदमस्मि ' ( निरु० ६ । १८ । १९–२१ ) । बहिर्मुखचेतसः स्वरूपापरिज्ञानजनितं दुःखमन्यत्र श्रूयते । ' पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात् पराङ् पश्यति नान्तरात्मन् ' ( कठो० ४ । १ ) इति । तर्हि कदैतद् भवति इत्याह । यदा माऽऽगन् आगमिष्यति तदा । किं तत् इति उच्यते । ऋतस्य परमार्थस्य परस्य ब्रह्मणः प्रथमजाः प्रथमोन्मेषः प्रथमोत्पन्नः चित्तप्रत्यक्प्रवणजानितोऽनुभवः । स यदा मा मां प्राप्नोति आदित् अनन्तरमेव अव्यवधानेन अस्याः वाचः ऐकात्म्यप्रतिपादिकायाः उपनिषद्वाचो यदिवेदमस्मीत्युक्ताया वा । भागं भजनीयं शब्दब्रह्मणा व्याहर्तव्यं परं ब्रह्मपदं अश्नुवे प्राप्नोमि । चित्तस्य बहिर्मुखतां परित्यज्य अन्तर्मुखतैव दुःसंपादा । सा यदा स्यात् तदानीमेव स्वरूपं द्रष्टुं सुशकं भवति पश्चात् विलम्बाभावात् । यथा गिरिशिखरात् पतन् पाषाणोऽविलम्बेन पतति तद्वत् । चित्तप्रत्यङ्मुखत्वस्य दुःशकत्वमपि तत्रैव श्रूयते । ' कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् '(कठो० ४ । १ )' इति । इदं = शरीरम् । किमहमिदं शरीरमस्मि अथवा अशरीरः आत्मा अस्मि इति न विजानामि निण्यः = शरीरे अन्तर्हितः । संनद्धः शरीरेण । मनसा चरामि = मनोव्यापारान् अनुसरामि । किंतु आत्मज्ञानाय मनोव्यापारः अकिंचित्करः । यदा ऋतस्य परमात्मनः प्रथमजाः बुद्धिः मां आगन् आगच्छत् । आत् इत् |

पत्रं पङ्क्तिः

१०१७ २ तदनन्तरमेव अस्याः वाचः आत्मतत्त्वस्य भागमश्नुवे आत्मतत्त्वं जानामि । आत्मज्ञानाय महत्तत्त्वं बुद्धिः अवश्या ।

६ अपाङ् एति = अपाञ्चयति = अपगच्छति । प्राङ् एति = प्राञ्चयति = प्रगच्छति । चुरादिगणस्थस्य अञ्चधातोः इमे रूपे । 'अपाञ्चयति प्राञ्चयति' इत्यनयोः कोऽर्थः ।

७ स्वधया = जलरूपेण अन्नेन । गृभीतः = गृहीतः । अमर्त्यः = आदित्यः । मर्त्येन = चन्द्रमसा । सयोनिः = सह ।

७–८ शश्वन्ता = शश्वद्गामिनौ । विषूचीना = विश्वगामिनौ । वियन्ता = बहुगामिनौ । 'वा' शब्दो ऋचि नास्ति । नि अन्यं चिक्युः = आदित्यं पश्यति । न नि चिक्युरन्यं = चन्द्रमसं न पश्यति । आदित्यः जलं गृहीत्वा चन्द्रमसा सह उदेति अस्तं च गच्छति । तौ सर्वदा सह वर्तेते । जनाः दिवा आदित्यमेव पश्यन्ति न चन्द्रमसम् ।

१० अमर्त्यः = आत्मा । मर्त्येन = मनसा ।

११ 'नि अन्यं चिक्युः' अत्र अन्यम् = आत्मानम् । 'न नि चिक्युः अन्यम्' अत्र अन्यं = मनः । आत्मा ज्ञानं गृहीत्वा मनसा सह जगति आविर्भवति तिरोगच्छति च । आत्मा मनश्च सर्वदा सह वर्तेते । ज्ञानी आत्मानं पश्यति न मनः ।

अत्र सायणभाष्यम् । अमर्त्यः अमरणधर्मा अयमात्मा मर्त्येन मरणधर्मणा भूतात्मना देहेन सयोनिः समानस्थानः । यत्र परिच्छेदको देहोऽस्ति तत्र सर्वत्र सोऽयमपि तिष्ठन्नित्यर्थः । यद्वा । समानोत्पत्तिः सहवासेन स्वस्मिन्नप्युत्पत्तिरुपचर्यते । एवंभूतः सन् स्वधया अन्नोपलक्षिततद्भोगेन गृभीतः । यद्वा । स्वधाशब्देन अन्नमयं शरीरं लक्ष्यते । तेन गृहीतः सन् अपाङ् एति । अशुभं कर्म कृत्वा अधो गच्छति । प्राङ् एति । स्वर्गादिलोकं प्राप्नोति । परमात्मैव सूक्ष्मशरीरोपाधिकः सन् नानाविधं कर्म कृत्वा तद्भोगाय जीवसंज्ञां लब्ध्वा शरीरत्रयेण संबद्धो लोकान्तरेषु संचरति । स्थूलसूक्ष्मोभयशरीरपरिग्रहेण

पत्रं पङ्क्तिः

१०१७ ११ लोके गुणत्रयान्वितः सन् परिभ्रमति। तथा च श्रूयते—
'गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता।
स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः संचरति स्वकर्मभिः'
( श्वे० उ० ५। ७ ) इति। इदानीमुभयप्राधान्येन आह—ता तौ भूतात्मकर्त्रात्मानौ शश्वन्ता अविभागेन सर्वदा वर्तमानौ। यद्वा। सूक्ष्मशरीरपक्षे सर्वदा सहवास उपपद्यते। स्थूलशरीरपक्षेऽपि सात्त्विकजातेः। तत्कारणानां भूतसूक्ष्माणां सद्भावात् तत्र शरीरसंबन्धः उपपद्यते। विषूचीना इह लोके सर्वत्रगमनौ वियन्ता तत्फलोपभोगाय सर्वत्र लोकान्तरेषु गच्छन्तौ वर्तते। तत्र नराः अन्यं भूतात्मानं नि चिक्युः। नितरां विशेषेण पश्यन्ति जानन्ति। अन्यमपरं देहवच्छायातिरिक्तं न नि चिक्युः न जानन्ति। केचन पामरा देहव्यतिरिक्तं न जानन्ति। केचन विवेकिनः कर्तृत्वभोक्तृत्वोपेतः देहातिरिक्तः कश्चिदस्ति इति अनुमिमते। न केऽपि देहत्रयव्यतिरिक्तमात्मानं जानन्ति। अतो दुर्लभमात्मज्ञानमित्यर्थः। अमर्त्यः आत्मा मर्त्येन देहेन सयोनिः समानस्थानः स्वधया अन्नेन गृभीतः गृहीतः सांसारिकैः कर्मभिः परिवेष्टितः अपाङ् एति नीचानि जन्मानि प्राप्नोति। प्राङ् एति उत्तमानि जन्मानि प्राप्नोति। ता तौ देहात्मानौ शश्वन्ता शश्वन्तौ द्वे भिन्ने व्यक्ती। विषूचीना विषूचीनौ विरुद्धस्वभावौ न सध्रीचीनौ। वियन्ता वियन्तौ भिन्नमार्गौ। देहात्मानौ भिन्नौ एव। प्राकृताः तयोः देहात्मनोः अन्यं देहं नि चिक्युः निश्चयेन जानन्ति। अन्यमात्मानं न जानन्ति।

१५ आस = भवति। भुवनेषु = भूतेषु। ज्येष्ठं = आदित्यम्।

१६ त्वेषनृम्णः = दीप्तिनृम्णः।

१८ ज्येष्ठम् = अव्यक्तम्।

१९ त्वेषनृम्णः = ज्ञाननृम्णः।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १०१७ | २१ | विश्वे = सर्वे । देवतापरेऽर्थे ' जज्ञे ' इत्यस्य जायते ' विश्वे ' इत्यस्य सर्वे इत्यर्थौ किमिति न दीयेते । आदित्यमित्यस्य स्थाने आदित्य इत्यवश्यम् । सर्वेषु भूतेषु आदित्यः ज्येष्ठः । तस्मात् आदित्यात् दीप्तिरूपमुग्रं बलं जायते । जातमेव शत्रून् देवानां शत्रून् निरिणाति हिनस्ति । अत्र निरिणातिः प्रीतिकर्मा दीप्तिकर्मा वा कथं स्यात् । इममादित्यं विश्वे सर्वे ऊमाः अवितारः देवाः अनुमदन्ति अनुहृष्यन्ति । आदित्यं दृष्ट्वा सर्वे प्राणिनः हृष्यन्ति । अयं देवतापरः अर्थः । सर्वेषु भूतेषु किंचित् अव्यक्तमात्मरूपं तत्त्वमस्ति । तस्मात् आत्मनः ज्ञानरूपमुग्रं बलं जायते । जातं च शत्रून् अनात्मवस्तूनि निरिणाति हिनस्ति । अत्रापि निरिणातिः प्रीतिकर्मा दीप्तिकर्मा वा नास्ति । इममात्मानं दृष्ट्वा इतरे सर्वे आत्मानः हृष्यन्ति । अयमात्मपरोऽर्थः । अत्र सायणभाष्यम् । तत् जगत्कारणत्वेन सर्ववेदान्तप्रसिद्धम् । इत् शब्दोऽवधारणे । भुवनेषु । भू सत्तायाम् । सत्सु पृथिव्यादिषु लोकेषु मध्ये जगत्कारणं ब्रह्मैव ज्येष्ठं प्रशस्ततममास बभूव । तस्य परमार्थत्वात् तद्व्यतिरिक्तानां व्यावहारिकत्वाच्च । यद्वा । ज्येष्ठं वृद्धतमं जगत्कारणत्वेन सर्वेषामादिभूतं बभूव । यद्वा । वृद्धं तदेव ब्रह्म स्वप्रकाशतया आस दिदीपे । यतः उपादानभूतात् यस्मात् ब्रह्मणः उग्रः उद्गूर्णः त्वेषनृम्णः प्रदीप्तबलः सूर्यात्मकः इन्द्रः जज्ञे जातो बभूव । श्रूयते हि— ' चक्षोः सूर्यो अजायत ' ( ऋ० सं० १० । १९० । ३ ) इति । ' सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ' ( ऋ० सं० १० । १९० । ३ ) इति च । स च जज्ञानः जायमानः एव सद्यः शीघ्रं शत्रून् शातयितृन् मन्देहादीन् राक्षसान् निरिणाति निहिनस्ति । यद्वा । उपासकानां पापरूपान् शत्रून् निहन्ति । तथा च ब्राह्मणम् ' सद्यो ह्येष जातः पाप्मानमपाहत ' ( ऐ० आ० १ । ३ । ४ ) इति । विश्वे सर्वे ऊमाः अवन्ति रक्षन्ति इति ऊमाः प्राणिनः । सर्वे प्राणिनो यं सूर्यात्मकमुद्यन्तमिन्द्रमनुलक्ष्य मदर्थमुदगात् मदर्थमुदगात् इति मदन्ति हृष्यन्ति । तथा च ब्राह्मणम् ' भूतानि वै विश्व ऊमास्त |

पत्रं पङ्क्तिः

१०१७ २० एतमनुमदन्ति उदगादुदगात्' (ऐ० आ० १।३।४) इति। तैत्तिरीयकं च 'तस्मात्सर्वे एव मन्यन्ते मां प्रत्युदगादिति' इति। यद्वा। यं स्तुत्यादिभिर्माद्यन्तमनु पश्चात् सर्वे प्राणिनोऽभीष्टप्राप्त्या हृष्यन्ति स इन्द्रो यज्ञे इत्यन्वयः।

सूक्तमिन्द्रपरम्। ऋगपि इन्द्रपरैव। यतः यदा त्वेषनृम्णः महावीर्यः उग्रः भयंकरः इन्द्रः जज्ञे अजायत तदा इन्द्ररूपं तत् एव सर्वेषु भूतेषु ज्येष्ठमास आसीत्। इन्द्रः एव सर्वेषां ज्येष्ठः। सद्यो जज्ञानः जायमानः एव शत्रून् वृत्रादीन् निरिणाति हिनस्ति। यमिन्द्रं दृष्ट्वा ऊमाः अवितारः सर्वे मरुतः हृष्यन्ति।

१०१८ ३ कः = आदित्यः।

४ गाः = रश्मीन्। शिमीवतः = कर्मवतः। भामिनः = भानुमतः। दुर्हृणायून् = दुराधर्षान्। आसन् = असून् = असुनवन्ति।

४–५ इषून् = इषुणवन्ति। मयोभून् = मयोभूनि = सुखभूनि। एषामिमम्।

५ भृत्यां = संभृतम्। ऋणधत् = वेद। स जीवात् = कथं स जीवति। अत्र 'कथं' कस्यार्थः। आत्मपरे अर्थे 'चिरं' शब्दः प्रयुज्यते। 'असुनवन्ति' 'इषुणवन्ति' इत्यनयोः कोऽर्थः। असुनवन्ति इषुणवन्ति मयोभूनि एतानि कस्य विशेषणानि। असुमतः इषुमतः मयोभून् इति पुंलिङ्गानि एव विशेषणानि। तेषां रश्मीन् इति विशेष्यम्। एवं गुणयुक्तान् रश्मीन् आदित्यः धुरि नियुङ्क्ते। यः मनुष्यः इममादित्यमेव जानाति स कथं जीवेत्।

६ कः = आत्मा। गाः = इन्द्रियाणि।

७ शिमीवतः = कर्मवन्ति। भामिनः = भानुमन्ति। दुर्हृणायून् = दुराधर्षान्। 'दुराधर्षाणि' इत्यवश्यम्। आसन् = असून् = असुनवन्ति। 'असुमन्ति' इत्यवश्यम्। इषून् = इषुण-

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १०१८ | ७ | वन्ति । 'इषुमन्ति' इत्यवश्यम्। आत्मा एवंगुणयुक्तानि इन्द्रियाणि ज्ञानाय उपयुङ्क्ते। यः ज्ञाता संभृतानि एवंगुणयुक्तानि इन्द्रियाणि वेद स चिरं जीवति। |

अत्र सायणभाष्यम्। अद्य अस्मिन् कर्मणि ऋतस्य गच्छतः इन्द्रसंबन्धिनो रथस्य धुरि अश्ववहनप्रदेशे गाः गतिमन्तोऽश्वान् कः युङ्क्ते। को नाम नियोक्तुं शक्नोति। न कोऽपीत्यर्थः। कीदृशान् अश्वान्। शिमीवतः वीर्यकर्मोपेतान् भामिनः तेजसा युक्तान् दुर्हृणायून् परैर्दुःसहेन क्रोधेन युक्तान्। आसन्निषून् येषामासनि आस्ये मुखप्रदेशे शत्रूणां प्रहरणार्थमिषवः बाणाः बद्धाः तान्। हृत्स्वसः हृत्सु शत्रूणां हृदयेषु अस्यन्ति स्वकीयं पादं क्षिपन्तीति हृत्स्वसः। 'मयोभून्' मयसः सुखस्य भावयितॄन्। स्वकीयानां सुखप्रदान् इत्यर्थः। यः यजमानः एषामीदृशानामश्वानां भृत्यां भरणक्रियां रथवाहनक्रियां ऋणधत् समर्धयति। स्तौतीति यावत्। सः यजमानः जीवात् जीवनवान् भवेत्। यद्वा। क इति प्रजापतिरुच्यते। 'को ह वै नाम प्रजापतिः' इति श्रुतेः। ऋतस्य यज्ञस्य धुरि निर्वाहे गाः वेदरूपान् वाग्विशेषान् अद्य इदानीं 'युङ्क्ते' संयोजयति। कीदृशान् शिमीवतः प्रतिपाद्यैः कर्मभिः युक्तान् भामिनः उज्ज्वलान् दुर्हृणायून्। हृणीयतिर्हानिकर्मा। हातुमशक्यान्। वेदाध्ययनस्य नित्यत्वात्। आसन्निषून् आसनि आस्ये इषुः एषणं गमनमुच्चारणं येषां तान्। हृत्स्वसः हृत्सु हृदयेषु दीप्यमानान्। प्रकाशमानान् इत्यर्थः। मयोभून् मयसः अध्ययनप्रभवस्य सुखसाधनस्य अदृष्टस्य भावयितॄन्। यः यजमानः एषां वचसां भृत्यां भरणक्रियामृणधत् ऋद्धिमतीं करोति स जीवात् स एव जीवति। अन्ये जीवन्मृताः इत्यर्थः। सूक्तमिन्द्रपरम। ऋगपि इन्द्रपरा। कः युङ्क्ते। अस्योत्तरमिन्द्रः एव युङ्क्ते इति। कान् युङ्क्ते। गाः वृषभान्। के ते वृषभाः। मरुतः। शिमीवतः बलिनः। भामिनः बलिनः। दुर्हृणायून् शत्रुनाशकान्। आसन्निषून्। आसनि इषवः येषां तान्। हृत्स्वसः हृत्सु हृदयेषु (इषून्) अस्यन्ति

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १०१८ | ७ | ते हृत्स्वसः । मरुतः अतिशयेन बलवन्तः । आस्येषु इषून् धारयन्ति । शत्रूणां हृदयेषु च तान् अस्यन्ति । एवं कृत्वा तान् नाशयन्ति । यज्वनां च मयः सुखं भावयन्ति । इन्द्रः एतान् मरुतः ऋतस्य यज्ञस्य धुरि नियुङ्क्ते । अत एव सः नियुत्वान् इत्युच्यते । यस्मात्ते इन्द्रमेव बिभ्रति तस्मात् सः एव एषां मरुतां भृत्यां सेवां ऋणधत् समर्धयति सफली करोति । सोमपानेन तान् तर्पयति । तस्मात् सः एव इन्द्रः सत्यं जीवति । मरुद्रूपाः वृषभाः यस्य स एव जीवितुमर्हति । |
| | १२ | कः = कः एव । ईषते = गच्छति । तुज्यते = ददाति । |
| | १३ | बिभाय = बिभेति । तोकाय = अपत्याय । इभाय = महते । |
| | १३–१४ | ' नो रणाय ' इदमृचि नास्ति । अस्याः ऋचः = भाष्यमपूर्णम् । अत्र देवतापरः आत्मपरश्च अर्थौ न दीयेते ।<br>अत्र सायणभाष्यम् । अनुग्रहीतारि इन्द्रे आगते सति कः ईषते । शत्रोः भीतः सन् को निर्गच्छति । न कोऽपीत्यर्थः । कः तुज्यते को हिंस्यते । शत्रुहिंस्योऽपि कश्चिन्नास्तीत्यर्थः । कः यजमानः बिभाय बिभेति । इन्द्रे रक्षके सति भयमपि नोपपद्यते । दूरे तस्य शत्रुकृता हिंसा । अन्ति अन्तिके समीपे सन्तमस्माकं रक्षकत्वेन वर्तमानमिन्द्रं कः पुरुषः मंसते जानाति । वयमेव जानीमः न अन्यः इत्यर्थः । एकः कः पूरकः । युद्धे सहायार्थमिन्द्रे आगते सति कः यजमानः तोकाय पुत्राय अधिब्रवत् । हे इन्द्र, अस्मदीयं पुत्रं रक्षेत्येवंरूपमधिवचनं पक्षपातेन वचनं ब्राह्मणायाधिब्रूयादिति यथा एवंरूपमधिवचनं को यजमानः कुर्यात् । स्वयमेवेन्द्रो रक्षतीति भावः । इभाय गजाय कः अधि ब्रवत् । उत अपि च राये शत्रुभिरपह्रियमाणाय धनाय कः अधि ब्रवत् । अपह्रियमाणमस्मदीयं धनं रक्षेत्यधिवचनमपि को यजमानः कुर्यात् । न कोऽपीत्यर्थः । अपि च तन्वे स्वकीयाय शरीराय जनाय परिजनाय च कः अधि |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १०१८ | १३–१४ | ब्रवत् । स्वशरीररक्षार्थं परिजनरक्षार्थं च इन्द्रस्याधिवचनं नापक्षितम् । स्तुत्या प्रीत इन्द्रः स्वयमेव रक्षतीत्यर्थः । यदा तु कशब्दाभिधेयस्य प्रजापतेः संबन्धिनि कर्मणि विनियोगः तदानीं परमैश्वर्ययोगात् इन्द्रशब्देन प्रजापतिरेवाभिधीयते । यथा 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इतिविनियोगानुसारेण कदाचन इत्यस्यामृचि विद्यमान इन्द्रः गार्हपत्यपरतया नीयते तद्वत् ।<br>ईषते = पलायते । तुज्यते = कम्पते । इभाय = राये । इन्द्रमान्ति मन्तमिन्द्रे अन्तिके सति कः ईषते पलायते । तुज्यते कः । कः कम्पते । बिभाय कः । कः बिभेति । मंसते कः । शत्रुणा आत्मानं हतं कः मन्यते । इन्द्रात् अन्यः कः तोकाय तनयाय इभाय धनाय राये धनाय तन्वे शरीराय जनाय भृत्यादिभ्यः अधि ब्रवत् अधिब्रूयात् नः । इन्द्रात् अन्यः कः अस्मभ्यं तनयं धनं भृत्यान् सुखमयशरीरं च दद्यात् । |
| | १८ | अग्निम् = आदित्यम् । ईट्टे = पूजयति । |
| | २० | होम = अर्थान् । सुदेव = कल्याणदेव. । |
| | २१ | अग्निम् = आत्मानम् । |
| १०१९ | १ | सुदेव. = सुप्रज्ञः कल्याणप्रज्ञः । 'सुप्रज्ञः' इत्यस्य स्थाने 'सुदेव.' इत्यवश्यम् ।<br>अत्र सायणभाष्यम् । कः यजमानः अग्निमीट्टे इन्द्रार्थं हविर्निरुप्य अग्निं स्तौति । इन्द्राय हविर्निर्वापोऽपि सम्यक् कर्तुं न शक्यते । इन्द्रस्य दुर्विज्ञानत्वात् । को वा इन्द्रयागार्थमग्निं स्रुचा जुह्वा ध्रुवेभिः ध्रुवैः नित्यैः ऋतुभिः वसन्तादिकालैरुपलक्षितेन घृतेन हविषा यजाते यजेत् । यद्वा । ऋतवः प्रयाजदेवताः 'ऋतवो वै प्रयाजाः' इति श्रुतेः । ताभिः ध्रुवैः प्रकृतौ विकृतौ च अनुष्ठेयतया निश्चलैः ऋतुभिः सह अग्निमाज्यभागदेवतां घृतेन हविषा को यजेत् । न कोऽपीत्यर्थः। कस्मै यजमानाय होम ह्वातव्यं प्रशस्यं धनमाशु शीघ्रं देवाः |

पत्रं पङ्क्तिः

१०१९ १ आ वहान् आवहन्ति प्रयच्छन्ति । न कस्मै अपि इत्यर्थः । इन्द्र एव धनस्य दाता नान्ये देवा इति इन्द्रः स्तूयते । वीति-होत्रः प्राज्ञयज्ञः सुदेवः शोभनदेवताव. कः यजमानः मंसते इन्द्रं सम्यक् जानाति । न कोऽपीत्यर्थः । बहुविधेन स्तोत्रेण चिरकालोपासनेन च इन्द्रः प्रत्यक्षो भवति । नान्येन प्रकारेण इति तात्पर्यार्थः ।

इन्द्रसूक्ते इयमेव एका अग्निपरा ऋक् । अस्यामिन्द्रस्य नाम अपि नास्ति । हविषा = घृतेन । इदं घृतरूपं हविः स्रुचि दर्व्यां गृह्यते । अग्नौ च तत् देवानां कृते प्रक्षिप्यते । अग्निः ऋतुभिः सह हविः पिबति । ' नेष्ट्रात्सोमं द्रविणोदः पिब ऋतुभि. ' ( ऋ० सं० २ । ३७ । ३ ) । अथवा । ऋतुभिः = ऋतुनामकैः पात्रैः । ध्रुवेभि = ध्रुवाभिः । यजाते = यजते । एतेषु पात्रेषु सोमं गृहीत्वा अग्नौ प्रक्षिपन्ति । सः तेन कर्मणा देवान् प्रीणयति । अग्निं घृतेन सोमेन च कः प्रीणयति । अग्निः देवान् आशु त्वरितमध्वरस्य होम ( गृहं ) यज्ञभूमिमावहति । अग्निं पुनः के देवाः यज्ञगृहमावहन्ति । वीतये होत्रं यस्य सः वीतिहोत्रः । अग्नि. होत्राणि हवींषि देवानां वीतये भक्षणाय गृह्णाति । एवं कृत्वा देवान् मंसते देवान् तर्पयति । अग्न्यर्थं होत्राणि कः नयाति । तत् कृत्वा च अग्निः कः मंसते तर्पयाति । ईट्टे = यजते = मंसते । अग्निः देवानां दूतः । न कोऽपि देवः अग्नेः दूतः ।

५–७ मर्डिता = पाता वा पालयिता वा जेता वा सुखयिता वा । मर्डिता=पालयिता एव । ' न ह्यन्यं बळाकरं मर्डितारं शतक्रतो । त्वं न इन्द्र मृळय' ( ऋ० सं० ८ । ८० । १ ) । हे शविष्ठ इन्द्र त्वमङ्ग एव मर्त्यं प्रशंसिषः । साधुः अयं मर्त्यः इति प्रशंससे । हे मघवन् इन्द्र त्वत्तः अन्य मर्डिता रक्षिता नास्ति। इदं सत्यं स्तुतियुक्तं वचः ते तुभ्यं ब्रवीमि ।

६ प्र शंसिषः = प्र शंसीत् । तृतीयपुरुषविपरिणामः किमर्थः । 'प्रशंससि' इत्यवश्यम् ।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १० ९ | १०-११ | अस्या ऋचः भाष्यमतीवाशुद्धं दुर्बोधतमं च। |
| | १२ | हंसः = हंसाः = सूर्यरश्मयः। हंस = परमात्मा परं ज्योतिः। |
| | १३ | शुचिः = पृथिवी। सा सूर्यरश्मिभिः व्याप्ता। सर्वं जगत् वननकर्मणा आदित्यमण्डलेन व्याप्तम्। द्वितीयं 'व्याप्तं' पदं किमर्थम्। 'अनभ्यासेन' इत्यस्य कोऽर्थः। |
| | १४ | 'त्ययतीति लोको त्ययतीति हंसयन्त्ययतीति' अयं कस्यार्थः। कश्चासौ अर्थः। 'त्ययति' अत्र कः धातुः। गुर्जरपाठः 'त्यजतीति लोकस्त्यजतीति हंसस्त्यजतीति' इति। लोकः हंसो वा किं त्यजति। हंस = हंसाः = परमहंसाः। |
| | १५ | हंसः = परमात्मा। 'सूर्यरश्मिभि ००० कुटन्ता भिन्ता' अयं कस्यार्थः। कश्चासौ अर्थः। वसतीतिवसु। सः रश्मिरूपेण वह्निरूपेण सुवर्णरूपेण च त्रिभिः त्रिधा वसति। |
| | १७-१८ | अन्तरिक्षसत् = अन्तरिक्षा अन्तरिक्षेण पथा चरन् चरति। |
| | १८ | अन्तरिक्षा चरत् = अन्तरिक्षयो = दिवि भुवि। चरन् = गमनम्। 'वा'शब्दः किमर्थः। |
| | १८-१९ | 'सुभानु० गता भवन्ति' अयं कस्य अर्थः को वा अर्थः। |
| | १९ | 'सर्वे दुरोणमत् द्रवं'। कोऽर्थः। 'सर्वे रसाः' इत्यस्य स्थाने 'सर्वान् रसान्' इत्यवश्यम्। |
| १०२० | १ | आदित्यः सर्वान् रसान् विकर्षयति। तथैव रश्मिः। तथैव वह्निः। 'विकर्षयति' इति अशुद्धम्। 'विकर्षति' इति शुद्धम्। 'वननं भवति'। कस्य अर्थः को वा अर्थः। |
| | १-२ | अब्जाः = अश्वगोजाः। |
| | २ | अद्रिजाः = अद्रिगोजाः = श्वगित्रिगोजाः। सर्वे गोजाः ऋतजाः। ऋतजाः = बहुशब्दाः। के सर्वे गोजाः। 'गोजाः' इत्येकवचनं न बहुवचनम्। |
| | ३ | 'निगमो निगमव्यति' कोऽर्थः। 'निगमव्यति' इति किं रूपम्। 'भवत्येष निर्वचनाय'। निर्वचनाय किं भवति। अथवा। एषः उत्तरः मन्त्रः निर्वचनाय भवति। |

पत्रं पङ्क्तिः

१०-१९-२०.. ३. अत्र सायणभाष्यम् "अनया सौर्यर्चा य एषोऽन्तरादित्ये हिरण्मयः पुरुषः दृश्यते हिरण्यश्मश्रुरित्यादि श्रुत्युक्तो मण्डलाभिमानी देवोऽस्ति यश्च सर्वप्राणिचित्तरूपस्थितः परमात्मा यश्च निरस्तसमस्तोपाधिकं परं ब्रह्म तत् सर्वमेकमेव इति प्रतिपाद्यते । हंसः हन्तिर्गत्यर्थः । सर्वत्र सर्वदा गन्ता योऽहं सोऽसावित्यादिश्रुत्युक्तप्रकारेण एकीकृत्य उपास्यपरमात्ममन्त्रप्रतिपाद्यः आदित्यः । स च शुचौ दीप्ते द्युलोके सीदतीति शुचिषत् । अथ यदतः परो दिवो ज्योतिर्दीप्यते इत्यादिश्रुतेः । अनेन द्युस्थान आदित्यः प्रतिपादितः । स एव मध्यस्थानो वायुः इत्याह । वसुः सर्वस्य वासयिता वायुः । स च अन्तरिक्षसत् । अन्तरिक्षसंचारी । अथ तस्यैव स्थितिस्थानवेदिकाग्निरूपतामाह—होता देवानामाह्वाता होमनिष्पादको वा । वेदिषत् वेद्यां गार्हपत्यादिरूपेण स्थितः । अतिथिः अतिथिवत् सर्वदा पूज्योऽग्निः । दुरोणसत् । दुरोणं गृहनाम । तत्र पाकादिसाधनत्वेन स्थितः । अनेन लौकिकाग्न्यात्मकत्वमुक्तम् । नृषत् । नृषु मनुष्येषु सीदतीति नृषत् । अनेन परमात्मरूपत्वमुक्तम् । पुनरप्यादित्यात्मतामाह । वरसत् । वरे वरणीये मण्डले सीदतीति वरसदादित्यः । वरं वा एतत् सद्म यस्मिन्नेष आसन्नः तपतीति हि श्रूयते । ऋतं सत्यं ब्रह्म यज्ञो वा । तत्र सीदति इति ऋतसद् अग्निः । व्योमान्तरिक्षम् । तत्र सीदति इति व्योमसत् वायुः । इदानीमादित्यतोच्यते । अब्जा उदकेषु जातः । उदकमध्ये खल्वयं जायते । गोजा गोषु रश्मिषु जातः । ऋतं सत्यम् । सर्वैः दृश्यत्वेन सत्यजातः । न ह्यसौ इन्द्रादिवत् परोक्षो भवति । यद्वा । उदकेषु वैद्युतरूपेण वाडवरूपेण वा जातः । अद्रिजा अद्रौ उदयाचले जातः । एवं महानुभाव आदित्यः ऋतं सत्यमबाध्यं सर्वाधिष्ठानं ब्रह्मतत्त्वम् । तद्रूपो ह्यसौ एव । आदित्यस्य उक्तरूपत्वं 'हंसः शुचिषत् इत्येष वै हंसः शुचिषत्' इत्यादिना ब्राह्मणे ( ऐ० ब्रा० ४ । ३ । ९ ) समाम्नातम् "।

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १०२० | ३ | दधिक्राव्णः सूक्ते इयमृक् अस्थाने यस्मात् अस्याः अर्थः आत्मपरः । आत्मा हंसः इन्द्रः अग्निः इत्युच्यते । शुचिषत् अन्तरिक्षसत् इत्यादयः शब्दाः अस्यामेव ऋचि उपलभ्यन्ते । उपनिषत्कालीना इयमृक् स्यात् । यथा हंसः शुचौ जले सीदति तथा सोमः शुचौ प्रदेशे वर्तते । वसुः इन्द्रः अन्तरिक्षे सीदति । होता अग्निः वेद्या सीदति । अतिथिः अग्निः दुरोणे यजमानगृहे सीदति । तथा सोमः सर्वत्र वर्तते । सः नृणां मध्ये सीदति । वरे श्रेष्ठे स्थाने सीदति । ऋते यज्ञे जले वा सीदति । व्योम्नि सीदति । जलमिश्रणात् सोमः अब्जाः ऋतजाश्च । क्षीरमिश्रणात् गोजाः । ग्रावभिः सवनात् अद्रिजा इत्युच्यते । तथा च सः ऋतं ब्रह्माण्डतत्त्वमुच्यते । सोमस्य सर्वैः देवैः तादात्म्यं वर्तते । तस्मात् आत्मा वेदान्तिभिः ' सोमः ' इति निरूप्यते । इयमृक् कठोपनिषदि ( ५ । २ ) महानारायणोपनिषदि (९ । ३ । १७ । ८) नृसिंहपूर्वतापन्युपनिषदि च ( ३ । १ ) वर्तते । |
| | ७ | ' द्वौ द्वौ ' इयं द्विरुक्तिः किमर्था । सुकृतौ = धर्मकर्तारौ । ' प्रतिष्ठितौ सुकृतौ ' इदमृचि न वर्तते । |
| | ८ | परिसारकम् = यत् अमृतत्वात् अथवा देवयानपितृयाणाभ्यां परिसारयति बहिष्करोति । अतः पापं परिसारकमित्याचक्षते विद्वांसः । यदि ' सुकृत् ' विरुद्धः ' दुष्कृत् ' शब्दः तर्हि दुष्कृत् दुष्टस्य कर्मणः कर्ता पापः परिसारकः । सः दुर्मार्गेण देवयानपितृयाणाभ्यामन्येन पथा याति । |
| | ८–९ | आत्मानं = दुरात्मानं ( जीवात्मानं ) परमात्मानं च । एवं द्वौ आत्मानौ इयमृक् कथयति । तत् आत्मद्वयं प्रत्युत्तिष्ठति सजीवे शरीरे एव जायते । द्वावप्यात्मानौ शरीरे तिष्ठतः । |
| | ९ | ' वृक्षं वृक्षं ' इति कस्यार्थः । शरीरं = शरीररूपं वृक्षम् । |

पत्रं पङ्क्तिः

१०२० १० ' पक्षी ' इत्यस्य केनान्वयः । कश्च प्रतिष्ठापयति । ऋचि ' तयोः अन्यः ' । भाष्ये ' तयोः अन्यत् ' । अन्नं भुक्त्वा किं करोति । ऋचि ' अनश्नन्नन्यो ' । भाष्ये ' अनश्नन्नन्यां ' । अत्र सायणभाष्यम् ' अत्र लौकिकपक्षिद्वयदृष्टान्तेन जीवपरमात्मानौ स्तूयेते । यथा लोके द्वौ सुपर्णौ सुपतनौ शोभनगमनौ सयुजा समानयोगौ । सखाया समानख्यानौ समानं वृक्षं परि षस्वजाते । एकमेव वृक्षं परिषस्वजाते आश्रयतः । तयोरन्य एकः पिप्पलं पक्कं स्वादुतरमत्ति । अपरोऽनश्नन् अभि चाकशीति अभिपश्यति । तद्वत् द्वौ सुपर्णस्थानीयौ क्षेत्रज्ञपरमात्मानौ । सयुजा समानयोगौ । योगो नाम संबन्धः । स च तादात्म्यलक्षणः । स एवाऽऽत्मा जीवात्मनः स्वरूपं यस्य परमात्मनः स तदात्मा । एवमन्यस्यापि स एव आत्मा परमात्मनः स्वरूपं यस्य जीवात्मनः । एवमेकस्वरूपौ इत्यर्थः । अनेन भास्करमतानुसारिणः अतिरेकिनाम्नः जीवात्मा परमात्मनः नान्यः । स च परमात्मा जीवादन्यः नानाजीवाश्रयणात् इति मतं निरस्तं भवति । ननु संबन्धः द्विष्ठः । स च पक्षिणोरेव भेदमपेक्षते । अतः कथमैकात्म्यमिति । न । औपाधिकभेदं वास्तवाभेदं चापेक्ष्य प्रवृत्तः । अत एव सखायौ समानख्यानौ नान्यख्यानौ । ननु एकस्य यादृशं ख्यानं तादृशमेव अन्यस्य इति व्युत्पत्त्या भेदः स्फुटं प्रतिभाति । कथं तादात्म्यमुच्यते इति न वक्तव्यम् । नात्र परस्परं दृष्टान्तदार्ष्टान्तिकभावः । अपि तु यस्य यादृशं ख्यानं स्फुरणं परमात्मनस्तदेव ख्यानमितरस्यापि जीवात्मनः इति सखायौ इत्युच्यते । एकरूपप्रकाशौ इत्यर्थः । अतः उपपन्नमैकात्म्यम् । अनेन वास्तवभेदोऽपि निरस्तः । समानं वृक्षं परि षस्वजाते इत्यत्र यथा आश्रयान्तराभावात् उभयोः एकाश्रयत्वमभ्युपगन्तव्यं तद्वत् सयुजा सखायौ इति उभयत्रापि एकयोगस्थाने आश्रयणीये । वृश्च्यते इति वृक्षो देहः । स च उभयोः समानः एक एव । जीवस्य भोगार्थत्वात् परमात्मना सृष्टैः महाभूतैः आरब्धत्वात् तस्य उपलब्धिस्थानत्वाच्च उभयोः अपि समानः । तादृशं समानं वृक्षं परि षस्वजाते

पत्रं पङ्क्तिः

१०२० १० परिष्वजतः आश्रयतः। न च जीवस्य वस्तुतः ईश्वरत्वे कथं जीवबुद्ध्या संसारशोकौ इति वाच्यम्। तयोः मोहकृतत्वात्। तथा चाऽऽथर्वणिका अनुमन्त्रमाम्नाय अस्य संदेहनिवर्तकमुत्तरं मन्त्रमेवमामनन्ति—'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमामामिति वीतशोकः'। (मु० उ० ३।१।२) इति। अस्य अयमर्थः। एक एव शरीरे पूर्णः पुरुषः परमात्मा निमग्नो निगूढः सन् स्वयमपीश्वरोऽप्यनीशत्वबुद्ध्या मुह्यमानः मूढः सन् शोचति। संसारेऽहं कर्ता सुखी दुःखी इति जननमरणे अनुभवति। यदा तु जुष्टं नित्यतृप्तमन्यं संसारशोकातीतमीशं परमेश्वरं पश्यति स्वानन्यतया साक्षात्करोति तदा वीतशोकः देहात् व्यतिरिक्तः स्वस्वरूपसाक्षात्कारेण गततापत्रयः सन् अस्य महिमानमिति। निरस्तसमस्तोपाधिकस्य परमेश्वरस्य महिमानं सार्वात्म्यसर्वज्ञत्वादिमहिमानमिति एति प्राप्नोति। न च तद्भावनाप्तौ तन्महिमा प्राप्यते। अतस्तद्रूपो भवतीत्यर्थः। तस्मात् वस्तुत एक एव। भेदस्तु मोहकृतः इति प्रसिद्धम्। अनुभवदशायां लौकिकबुद्ध्या भेदमभ्युपेत्य उच्यते। तयोरन्यो जीवात्मा पिप्पलं कर्मफलं स्वादुभूतमत्ति भुङ्क्ते। यस्य यदुपार्जितं तत्तस्य स्वादु भवति। अन्यः परमात्मा अनश्नन् आप्तकामत्वेन अभुञ्जानः। स्पृहाया अभावात्। 'आप्तकामस्य का स्पृहा' इति स्मृतेः। तस्माद् वास्तवभेदमुपजीव्य तयोरन्य इत्युक्तम्। वस्तुतस्तु 'अनीशया शोचति मुह्यमानः' इत्युक्तत्वात् अभेद एव। तादृशः परमात्मा स्वात्मनि अध्यस्तं जगत् साक्षित्वेन ईक्षते। 'अत्र द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्तारौ' इत्यादि निरुक्ते (१४।३०) गतमस्य मन्त्रस्य व्याख्यानमनुसंधेयम्"।

इयमृक् मुण्डकोपनिषदि (३।१।१) श्वेताश्वतरोपनिषदि च (४।६) वर्तते। यथा द्वौ पक्षिणौ सह वर्तमानौ सखायौ सन्तौ एकस्मिन्नेव वृक्षे नैकट्येन वसेते यथा च तयोरेकः तस्य वृक्षस्य स्वादु फलमत्ति अन्यस्तु फलानि अनश्नन्नेव इतस्ततः पश्यति एवं संसारयात्रायां सह वर्तमानौ सखायौ

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १०२० | १० | बद्धात्ममुक्तात्मानौ वर्तेते । बद्धात्मा ससारं भुनक्ति । परमात्मा तु केवलं साक्षी भवति । अयमर्थः 'अजामेकां लोहित-शुक्लकृष्णां' इत्यत्र स्पष्टः । ऋग्भाष्यमतीवाशुद्धं दुर्बोधं च । |
| | १६ | आयाहि = आगमिष्यन्ति । इन्द्रः = शक्रो देवतास्ताः । पथिभिः ईळितेभिः = त्रिभिः तीर्थैभिः |
| | १७ | शक्रप्रतरैः ईळितेभिः = त्रिभिः तीर्थैः । भागधेयं = यज्ञभागम् = अग्नीषोमभागौ । |
| | १८ | 'इन्द्रो जुषस्व ० निदर्शनम्' अयं कस्यार्थः । कश्चार्थः । हे इन्द्र, इमं नः यज्ञमीळितेभिः पूज्यैः पथिभिः आयाहि । भागधेयं जुषस्व । उत्तरार्धः दुर्बोधः । |
| १०२१ | २–६ | 'विदुर्वेद ००० वदन्ति' अयं कस्य अर्थः । |
| | ७ | 'अग्निः सर्वा देवताः' इति (निरु० ७ । १७) । तस्य अग्नेः भूयसे निर्वचनाय उत्तरा ऋक् निरुच्यते । विप्रासः विप्राः मर्तासः मर्ताः ऊतये अवसे रक्षणाय गीर्भिः स्तुतिभिः विप्रं देवमग्निं हवामहे । |
| | ११ | जातवेदसे = जातमिदं सर्वं सचराचरं स्थित्युत्पत्तिप्रलयन्यायेन । इदं विवरणमपूर्णम् । 'यः वेद' इति अवश्यम् । यः जातमिदं सर्वं सचराचरं जगत् स्थितौ उत्पत्तौ प्रलये च वेद जानाति स जातवेदाः । उत्पत्तिस्थितिप्रलय० इति क्रमः अवश्यः । 'न्यायेन' इत्यस्य कोऽर्थः । इदं पदमनवश्यम् । |
| | १२ | 'अच्छाय' इत्यस्य कोऽर्थः । |
| | १२–१३ | 'प्रसवेनाभिषवाय सोमं राजानममृतमरातीयतो यज्ञार्थमिति स्मः' अयं कस्य अर्थः । कश्चार्थः । |
| | १३ | नि = निश्चये । |
| | १४ | दहाति = दहति भस्मी करोति । सोमः ददादित्यर्थः । अत्र 'ददत्' इति कस्यार्थः । दुर्गाणि = दुर्गमनानि स्थानानि । |

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १०२१ | १५ | ' सिन्धो. ' अयमपपाठः । ' सिन्धुः ' इत्यवश्यम् । ' सिन्धुः स्यन्दनात् ' ( निरु० ९ । २६ ) । |
| | १६ | सिन्धुं = नदीं जलदुर्गां महाकूलाम् । पर्षत् = तारयति । |
| | १७ | तस्य = अग्नेः । इयमृक् गुर्जरनिरुक्तमूले सप्तमाध्यायस्य एकोनत्रिंशत्खण्डस्य अनन्तरं दीयते । यास्कभाष्यं च तत्र वर्तते । द्वयोर्भाष्ययोः बहवः अपपाठाः । द्वयोः पाठभेदोऽपि । तद्भाष्यमालोचनीयं विद्यार्थिभिः । जातवेदसे सोमं सुनवाम । यस्मात्सः अरातीयतः शत्रुवत् आचरतः । वेदः धनं निदहाति निश्चयेन दहति । स अग्निः नः विश्वा विश्वानि दुर्गाणि नावेव सिन्धुमति पर्षत् अति पारयतु । दुरिता दुरितानि अति पर्षत् पारयतु । |
| १०२२ | ३ | ' असमानाभिः ' अयम् ' असमानमद्भिः ' इत्यस्य अपपाठः स्यात् । सिन्धुं प्रवहन्ति = सिन्धुं पतिं कृत्वा वहन्ति । |
| | ४ | जहाति = त्यजति । पापं त्यजन्ति । बहुवचनं किमर्थम् । |
| | ४-५ | ' आप आप्नोतेस्तासामेषा भवति ' इदं ( निरु० ९ । २६ ) इत्यत्र वर्तते । अत्र तत् अस्थाने एव । यस्मात् ' त्र्यम्बकं यजामहे ' इत्यस्यामृचि आपो न विद्यन्ते । याः काश्च सर्वाः नद्यः सिन्धुं समुद्रं प्रवहन्ति । हे नदि इदं ते जलमन्याभिः अद्भिः अन्यासां नदीनामद्भिः असमानम् । तव जले पाप-क्षालनसामर्थ्यमस्ति न तासाम् । यथा सशिरस्कः सर्पः जीर्णां त्वचमनायासेन जहाति तथा नरः तव जलमभि उप इत्य तव जलं स्पृष्ट्वैव पापं जहाति । अहो तव महिमा । एवं काचिन्नदी संबोध्यते । सशिरस्कः इत्यनेन शरीराच्छादिनी सर्वा त्वक् मुच्यते । |
| | ९ | त्र्यम्बकं = रुद्रम् । सुगन्धिं = सुष्ठुगन्धिम् । |
| | ९-१० | पुष्टिवर्धनं = पुष्टिकारकम् । |
| | १८ | ' पुष्टिकारकमिव ' अत्र ' इव 'शब्दः अनवश्यः । |

पत्रं पङ्क्तिः

१०२२ १० उर्वारुकम् = तन्नामकं फलम् । बन्धनात् = आरोधनात् । बन्धनं फलानि पतनात् ऋणद्धि ।

१०-११ मृत्योः = मृत्योः सकाशात् ।

११ मुक्षीय = मुञ्चस्व । 'मुक्षीय' इत्युत्तमपुरुषस्यैकवचनम् । मुच् धातुः । लेटः स. । ईय लिङः प्रत्ययः । मा = माम् = 'कस्मादित्येषामितरेषा' अस्य कोऽर्थः कश्च संबन्ध. ।

अत्र सायणभाष्यम् "अत्र शौनकः -'त्रिरात्रं नियतोऽपोष्य श्रपयेत् । पायसं चरुम् ; तेनाऽऽहुतिशतं पूर्णं जुहुयाच्छंसितव्रतः ॥ समुद्दिश्य महादेवं त्र्यम्बकं त्र्यम्बकेत्यृचा । एतत् पर्वशतं कृत्वा जीवेद्वर्षशतं सुखी' ( ऋग्विधानं २ । २७ ) । त्रयाणां ब्रह्मविष्णुरुद्राणामम्बकं पितरं यजामहे इति शिष्यसमाहितो वसिष्ठो ब्रवीति । किंविशिष्टमित्यत आह—सुगन्धिं प्रसारितपुण्यकीर्तिम् । पुनः किंविशिष्टम् । पुष्टिवर्धनं जगद्बीजम् । उरुशक्तिमित्यर्थः । उपासकस्य वर्धनमणिमादिशक्तिवर्धनम् । अतस्त्वत्प्रसादादेव मृत्योर्मरणात् संसाराद्वा मुक्षीय मोचय । यथा बन्धनादुर्वारुकं कर्कटीफलं मुच्यते तद्वत् मरणात् संसाराद्वा मोचय । किं मर्यादीकृत्य । आ मृतात् । सायुज्यतामोक्षपर्यन्तमित्यर्थः । अथ तैत्तिरीयभाष्ये ( तै० सं० १।८।६।२) 'शोभनः शरीरगन्धः पुण्यगन्धो वा यस्य असौ सुगन्धिः । यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वाति एवं पुण्यस्य कर्मणः दूराद्गन्धो वाति' इति श्रुतेः । पुष्टिं शरीरधनादिविषयां वर्धयतीति पुष्टिवर्धनः । तादृशं त्र्यम्बकं यजामहे पूजयामः । लोके यथा उर्वारुकफलानि बन्धनात् वृन्तात् स्वयमेव मुच्यन्ते तद्वदहं त्र्यम्बकप्रसादेन मृत्योः मुक्षीय मोचनयुक्तो भूयासम् । अमृतात् चिरजीवितात् स्वर्गादेर्वा मा मुक्षीय । चतुर्थपादार्थमत्रस्य तात्पर्यातिशयं दर्शयति 'त्र्यम्बकं यजामहे इत्याह । मृत्योर्मुक्षीय मामृतादिति वावैतदाहेति" ।

त्र्यम्बकं यजामहे पूजयामः । यथा सुगन्धि सुगन्धि पुष्टिवर्धन-

| पत्रं | पङ्क्तिः | |
|---|---|---|
| १०२२ | ११ | मत एव पिपतिषु उर्वारुकं बन्धनात् स्वयमेव मुच्यते तथा अहं मृत्योः मुक्षयि । अमृतात् ब्रह्मणः मा अहं हीये । |
| | १५–१६ | ' इत्यपि निगमो भवति ' । इदमनवश्यं यस्मादत्र सर्वा ऋक् पठ्यते । |
| | १६ | शतं = दीर्घमायुः । ' मरुत एनां वर्धयन्ति ' इदं 'मरुद्वृधा' इत्यस्य भाष्यं ( निरु० ९।२६ ) अत्र असंबद्धमेव । |
| | १६–१७ | ' शतमेनमेव ० ऐश्वर्यं भवति ' अयं कस्य अर्थः । |
| | १७ | ' शतान्मानं भवति ' इदमशुद्धम् । |
| | १७–१८ | ' शतमिति शतं दीर्घमायुः ' इदं पूर्वत्र कथितमेव । राजयक्ष्ममुक्तः अत एव शरीरेण वर्धमानः त्वं शतं शरदः शतं हेमन्तान् शतं उ च वसन्तान् जीव । इन्द्राग्नी सविता बृहस्पतिः शतायुषा दीर्घमायुः ददता हविषा इमं राजयक्ष्म-मुक्तं जनं शतं वर्षाणि जीवतु इत्यर्थमस्मभ्यं पुनः दुः अदुः अयच्छन् । |
| | २२ | राधांसि = धनानि । ' कदा च न. सरिषुः' अयं कस्य अर्थः । |
| १०२३ | १ | विश्वा = सर्वाणि । ' प्रज्ञानानि ' इति अध्याहृतम् । उपमि-मीहि = उपनामय । मानुष = मनुष्यहितः । 'अयमादित्योऽ-यमात्मा ' । अयमादित्यः इत्यधिदैवतम् । अयमात्मा इत्यध्या-त्मम् । इमौ द्वौ अर्थौ भाष्ये न दीयेते । |

अत्र सायणभाष्यम् ' हे वसो निवासयितरिन्द्र ते तव संब-न्धीनि राध्नोत्येभिरिति राधांसि भूतान्यस्मान् कदाचन कदाचि-दपि मा दभन् मा विनाशयन्तु । तथा ऊतयो गन्तारः । यद्वा । धूतयः इत्यत्र वर्णलोपः । धूतयः कम्पयितारस्ते त्वदीया मरुतश्च मा दभन् । हे मानुष मनुष्यहितेन्द्र चर्षणिभ्यो मन्त्रद्रष्टृभ्यो नो अस्मभ्यं विश्वा विश्वानि सर्वाणि वसूनि धनानि च आ उपमिमीहि सर्वत आहृत्य अस्मत्समीपे कुरु । सर्वत्र वर्तमानं धनमस्मभ्यं प्रयच्छ इत्यर्थः " ।

मंत्र पङ्क्तिः

१०२३ १ हे वसो इन्द्र ते राधांसि धनानि ऊतयः रक्षणानि कदाचन कदापि अस्मान् मा दभन् हिंसन्तु। हे मानुष मनुष्यहित नः अस्मभ्यं चर्षणिभ्यः जनेभ्यः आ(=च) वसूनि धनानि उपामिमीहि देहि।

१–२ 'अथैतदनुप्रवदति ० प्रवदति' इदं प्रथमखण्डे उक्तमेव।

२ 'वैश्वकर्मणे' इत्यस्य केनान्वयः। 'सूक्ते' इत्यध्याहृतस्य विशेष्यस्य इदं विशेषणं स्यात्। किंतु 'देवानां नु वयं जाना' 'नासदासीत्' इति च द्वे ऋचौ न विश्वकर्मपरे।

२ ३ 'देवानां नु वयं जाना न प्रवोचाम विपन्यया। उक्थेषु शस्यमानेषु यः पश्यादुत्तरे युगे' (ऋ० सं० १०।७२।१)। 'नासदासीत्' (ऋ० सं० १०।१२९।१) इति। जाना= जन्मानि। अस्मिन् सूक्ते देवानां जन्म वर्ण्यते। असतः सदजायत इत्यपि उच्यते। 'असतः सदजायत' इत्येतद्वर्जयित्वा अस्मिन् सूक्ते आत्मपरोऽर्थो नास्ति। अस्मिन् अध्याये आत्मा कीदृशः तस्मात् सर्वाणि भूतानि च कथं जायन्ते इत्येतत् निरूप्यते।

४ सारिष्टम। छान्दोग्ये (२।२०।२) महानारायणीये च (१२।३) 'सार्ष्टिता' इति विद्यते। 'रिष हिंसायाम्' (धा० ४।१२१८) इत्यस्य क्तान्तं रूपं 'रिष्टम्'। न रिष्टम् अरिष्टम। 'अरिष्टं' अत्र नामीभूतम्। अरिष्टम् = हिंसा-भावः=दुःखाभावः। ब्रह्म अरिष्टं दुःखरहितम्। समानम् अरिष्टं यस्य सः सारिष्टः। तस्य भावः सारिष्टता। एवं 'सारिष्टतां' इति भाववाचकं रूपमवश्यम्। यथा सरूपतां सलोकताम्। उपनिषदि 'सार्ष्टिता' शब्दः 'सारिष्टता' इत्यस्य अपभ्रंशो भाति। समानं रूपं यस्य सः सरूपः। तस्य भावः सरूपता। समानः लोकः यस्य सः सलोकः। तस्य भावः सलोकता। ब्रह्मज्ञः ब्रह्म-वत् दुःखरहितो भवति। ब्रह्मणः रूपं ब्रह्मणः लोकं च आप्नोति।

४–५ आत्मजिज्ञासा तं ब्रह्मज्ञं सारिष्टतां सरूपतां सलोकतां गमयति।

५ महते भूताय। इदं महद्भूतं ब्रह्म एव।

नमः पारस्कराय। अयमध्यायः पारस्करेण रचितः। तत्र च तेन यास्कानुकरणं कृतम्। तस्मात् यास्कायापि नमः। पारस्करः ऋचा-मध्यात्मार्थान् निरूपयति। तस्मात् सः यास्कात् पूज्यतरः।

६ कठोपनिषदि (६।१९) 'तच्छुक्रं पुरुषमलिङ्गम्' इति। 'असीय' इति अशुद्धम्। 'सीय' इति शुद्धम्। असीय=स्याम्।

समाप्तेयं टिप्पणी।

पत्रं पङ्क्तिः

## अनुपलब्धमूलानि

| | |
|---|---|
| ६१४ । १०--११ | इन्द्रे कामा अयंसत० । |
| ६२७ । १० | अत्र वै सर्वा वसति देवता । |
| ६२७ । १२ | अपरिग्रहे च श्रेष्ठगामीति न्यायः । |
| ६२९ । ८–९ | अपरिग्रहे च प्रधानगामीति न्यायः । |
| ६३१ । १७-१९ | अणिमा महिमा लघिमा प्राप्ति० । |
| ६३४ । १३ | कोष्ठचादर्शनाद इन्द्रो० । |
| ६३९ । ७-८ | आत्मैवषां रथो भवति० । |
| ६६० । ३ | ऋतुयाजेषु विनियोगः । |
| ६७३ । ९ | नाच्छन्दसि वागुच्चरति । |
| ६७३ । १०–११ | यदेभिरात्मानमच्छादयन्देवा० । |
| ६७४ । १२–१३ | गायत्रीमेव त्रिपदां सतीं० । |
| ६७९ । १ | शरा वेणु शृङ्ग शल्यमिति ह विज्ञायते । |
| ६७९ । १९–२० | जल्गल्यमानोऽसृजदिति च ब्राह्मणम् । |
| ६८२ । २ | शब्दब्रह्मणि निष्णातः परब्रह्माधिगच्छति । |
| ६८२ । ११ | अग्निर्वै देवानां सत्ता. । |
| ६८४ । ८–९ | आश्विने विनियोग । |
| ७१९ । ९ | प्रातरनुवाकाश्विनयो शस्यते । |
| ७१८ । १३--१४ | शश्वद्ध वा एष नोदियात० । |
| ७१९ । २ -३ | यदस्य दिवि तृतीयं तदसावादित्य इति ब्राह्मणम । |
| ७२३ । १० -११ | सामिधेनीष्वग्नयेऽन्नाद्यकामकर्मणि धाय्या । |
| ७२३ । १६ | अश्वं वाजस्य० । अत्र टिप्पणी द्रष्टव्या । |
| ७५० । १ | प्रागुत्स्वा बर्हिश्छिनत्ति । |
| ७५० । ३ | प्राचीन बर्हि स्तृणाति । |
| ७५० । २० | प्राञ्चमुद्धरन्ति । |
| ७५९ । ८ | नानग्निको यज्ञो स्ति । |
| ७६७ । १०- ११ | किञ्चिदाज्यस्य । तुभ्यमिदम । |
| ७६९ । २३ | आग्नेया वै प्रयाजा आग्नेया अनुयाजाः । |
| ७६९ । २३--२४ | छन्दांसि वै प्रयाजाश्छन्दांस्यनुयाजाः । |
| ७७० । १ | ऋतवो वै प्रयाजाः पशवोऽनुयाजा. ( अथवा ऋतवोऽनुयाजा ) पशवो वै प्रयाजाः पशवोऽनुयाजाः ( २४ ) । |

| पत्रं पङ्क्तिः | |
|---|---|
| ७७० । २–३ | प्राणा वै प्रयाजाः प्राणा अनुयाजाः ( २४ )। |
| ७७० । ४–५ | आत्मा वै प्रयाजा आत्मा वा अनुयाजाः ( २६ )। |
| ७७३ । ९ | आग्निकमुत्तमायां चितौ। |
| ७७३ । ११ | द्वादशाप्रीरप्येषु। |
| ७७३ । १३ | आप्रीभिर्हस्तं गृह्णाति। |
| ७७६ । १७ | पुरुषानन्तरजन्मेति हि विज्ञायते। |
| ७८९ । १७ | विकारपक्षेषु तदर्थान्यथातूपादानम। |
| ८०३ । ४ | सितासितौ यद्वृषौ। |
| ८०३ । ९–१० | वैदेहको नामाग्निः। स किल नदीरन्या निर्ददाह न ताम्। |
| ८०३ । १५ | पाशा अस्यां व्यपाश्यन्त वसिष्ठस्य मुमूर्षतः। |
| ८०३ । १८ | पूर्वमासीदुरुञ्जिरा। |
| ८०८ । १९ | नाश्रद्दधानाय हविर्जुषन्ति देवाः। |
| ८०९ । १ | अश्रद्धामनृते दधाच्छ्रद्धा सत्ये प्रजापतिः। |
| ८२१ । २४–२५ | वान्ति पर्णशुषो वाता.० । |
| ८२२ । २० २१ | आध्वर्यवे वायव्योपस्थाने विनियोग.। |
| ८२४ । १०–११ | निष्केवल्ये विनियोगात्। |
| ८२६ । २५–२६ | स किल पितरं प्रजापतिमिषुणा विध्यन्तमनुशोचन्नरुदत्तद्रुद्रस्य रुद्रत्वम्। |
| ८३९ । १३–१४ | विनियोगो महाव्रते। अदित्यै चतूरूपश्चतुस्तनग्रहः। तस्य तृतीयमनयर्चा गृह्यते। |
| ८४७ । १२ | प्रातरनुवाकाश्विनयोर्विनियोगः। |
| ८५० । ११–१२ | अववृष्टहोमे प्रायश्चित्तम्। |
| ८५१ । १३–१४ | प्रजापतिश्चरति गर्भे अन्तः। तयोपरिष्टादभिषेकस्य जुहुयात्। |
| ८५५ । २ | यद्यैन्द्री वैश्वकर्मणी विद्यात्तयैव गृह्णीयात्। |
| ८५८ । २१–२६ | स यत्सायं जुहोति०। |
| ८५९ । ७–९ | सर्वभूतानि विशेषान् सामान्यात्मनि जुहाव०। |
| ८६७ । १९ | वैश्वदेवे विनियोगः। |
| ८७३ । २१ | दर्शपूर्णमासादिषु हविषामभिमर्शने विनियुज्यते। |
| ८८७ । ८ | सोमो नूनमेष तद्देवानामन्नमिति ह विज्ञायते। ( 'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति' छा० उ० ५।१०।४)। |

| पत्रं पङ्क्तिः | |
|---|---|
| ८९२ । २० | आज्यहोमः । |
| ८९७ । १२–१३ | शुक्रज्योतिश्च चित्रज्योतिश्चेत्येवमाद्याः सप्तसप्तका मरुद्गणाः प्रसिद्धा अग्निपुराणे । |
| ८९९ । १२ | आग्निमारुते शस्यते । |
| ९०९ । १३ | वैश्वदेवे शस्यते । |
| ९३३ । ४–५ | पथ्यां स्वस्ति पूर्वां यजति । |
| ९३७ । १ | आग्निमारुते विनियोगः । |
| ९४० । ७–८ | तौ यौ प्रत्यक्षदैवतमश्विनाविमे एव ते द्यावापृथिव्यौ । |
| ९४८ । १७–१९ | सविता सूर्यां प्रायच्छत्सोमाय राज्ञे प्रजापतये वेति च ब्राह्मणम् । |
| ९५८ । ९ | एष वै विश्वेषां देवानां चक्षुः । |
| ९५९ । १८–१९ | पौष्णे हविषि पञ्चमेऽहनि व्यूढे विनियोगः । |
| ९६२ । १२ | निष्केवल्ये विनियोगः । |
| ९७० । ५ | एकं पादं नोत्खिदति० । |
| ९७१ । १ | वैश्वदेवे शस्त्रे विनियोगः । |
| ९७८ । १९–२० | आथर्वणे आत्मस्तुतौ विनियोगः । |
| ९८२ । १९ | प्रउगे ग्रहे विनियोगः । |
| ९८६ । ४-५ | अग्निः पशुरासीत्तमालभन्त तेनायजन्त । |
| ९८७ । १५-१६ | सुगा वो देवा० । |
| १००० । १५ | ॐकारमृते न ह्यर्चयन्ति । |
| १००० । २५ | ॐकार एवेदं सर्वम् । |
| १०२२ । १–२ | इद तेऽन्याभिरसमान० । |
| | **मुद्रणानन्तरमुपलब्धमूलम् ।** |
| ७४३ । १३-१४ | गौणमुख्ययोश्च मुख्ये संप्रत्ययः ( पा० ८ । ३ । ८२ व्याकरणमहाभाष्ये 'गौणमुख्ययोर्मुख्ये संप्रतिपत्तिः' ) । 'गौणमुख्ययोर्मुख्ये कार्ये संप्रत्ययः' (परि० शेखरः ३२) । |

# शुद्धिपत्रकम् ।

## विषयानुक्रमणी ।

| पत्रं | अर्ध | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १ । | १ । | १७ | अध्व | आध्व |
| ३ । | २ । | १६ | अग्नि | आग्ना |
| ४ । | १ । | २८ | केषां च्वि | केषांच्वि |
| ४ । | २ । | १६ | अग्निर्माळे | ‘ आग्निर्माळे ’ |
| ४ । | २ । | १७ | आग्नि: पूर्वेभि० | ‘ आग्नि: पूर्वेभि० ’ |
| ४ । | २ । | २१ | आभि० योषा | ‘ आभि० योषा ’ |
| ४ । | २ । | २४ | समुद्रादूर्मि: | ‘ समुद्रादूर्मि: ’ |
| ४ । | २ । | २८ | इन्द्रं मित्रं० | ‘ इन्द्रं मित्रं० ’ |
| ५ । | १ । | ८ | प्र० वेदसम् | ‘ प्र० वेदसम् ’ |
| ५ । | १ । | १० | दशाणां | दशानां |
| ५ । | १ । | १० | मन्त्रानां | मन्त्राणां |
| ५ । | १ । | १७ | वैश्वा० मतौ | ‘ वैश्वा० मतौ ’ |
| ५ । | १ । | २१ | प्र नू महित्वं० | ‘ प्र नू महित्वं० ’ |
| ५ । | २ । | २४ | कृष्णं नियानम् | ‘ कृष्णं नियानम् ’ |
| ६ । | २ । | १८ | यो | ‘ यो |
| ७ । | १ । | ४ | द्र्रा्य: | ‘ दा्र्य: |
| ८ । | २ । | ८ | ध्वरे | ध्वरे ’ |
| ९ । | १ । | ५ | पात्वन्वि | पात्वन्ति |
| १० । | १ । | ७ | पृतनाज्य | पृतनाज्य— |
| १० । | १ । | १४ | ष्ठा | ष्ठा ’ |
| १० । | १ । | २८ | मुपह्वये | मुप ह्वये |
| १० । | १ । | २४ | आसत्रा | असत्रा |
| ११ । | २ । | ८ | ७४३ | ८४३ |
| १२ । | २ । | २१ | एष | एषु |
| १३ । | १ । | १८ | अत्रा | अत्रा– |
| १३ । | १ । | २५ | वाद | पाद |

| पत्रं | अर्ध | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १३ । | १ । | २९ | प्रवो | प्र वो |
| १३ । | २ । | १६ | त्स्वमा | त्स्वम्मा |
| १५ । | १ । | १४ | उपह्वये | उप ह्वये |
| १५ । | १ । | २२ | पथ्ना | पथ्या |
| १५ । | १ । | २५ | अनस | अनसः |
| १५ । | २ । | ३ | द्युस्थाज | द्युस्थान |
| १५ । | २ । | ९ | .... | ... ” |
| १५ । | २ । | १० | कर्मणोः... | कर्मणोः |
| १५ । | २ । | २१ | प्रातर्यु | प्रातर्थ |
| १६ । | १ । | १९ | विश्वारू | विश्वा रू |
| १६ । | २ । | २७ | परिवाच | परि वाच |
| १६ । | २ । | २८ | उतनो | उत नो |

# शुद्धिपत्रकम् ।

| पत्रं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १११ | ८ | भवन्ति | भवन्ति । |
| ,, | ३० | °यंसतेति | ठ. ड. °यंसतेति |
| ,, | ३१ | व्यानि । स्तो | व्यानि । मा |
| ,, | ,, | °व्यानि॰ स्तो | °व्यानि॰ मा |
| ११२ | २३ | रेणो | रेणो° |
| ,, | ,, | ) | ). |
| ,, | २७ | श्रेष्टे, | श्रेष्टे. |
| ११३ | २९ | रेणो° | रेणोः |
| ११४ | ३२ | क्रियने. | ।क्रियते ). |
| ११५ | २१ | चिद | चिद्[१] |
| ,, | २६ | ह | हे |
| ,, | २७ | च | च. |
| ११६ | ५ | कीळॅ[५] | ' क्रीळॅ[५] |
| ,, | २७ | नास्ति | नास्ति. |
| ,, | ३० | ) | ). |
| ११७ | ,, | २ | ११ |
| ,, | ,, | ३ | १२ |
| ,, | ,, | ४ | १३ |
| ११९ | २७ | त्सू°, | त्सू°; |
| १२० | ६ | चँ[३] | चँ[४] |
| ,, | ,, | नापि[४] | नापि[५] |
| ,, | ७ | आसीत्[५] | आसीत्[६] |
| ,, | १० | ह्येते[६] | ह्येते[७] |
| ,, | १७ | दिति[७] | दिति[८] |
| ,, | २० | आँसीत् | ओँसीत् |
| ,, | ,, | गूह्ळ | गूह्ळँ |
| ,, | २७ | ३ | ४ |
| ,, | २८ | ४ | ५ |
| ,, | ,, | ५ | ६ |
| ,, | २९ | ६ | ७ |

| पत्रं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | ,, | ७ | ८ |
| ,, | ३० | ८ | ९ |
| ,, | ३१ | ९ | १० |
| ६२१ | २६ | त्वा°; म | त्वा° म. |
| ६२३ | २३ | त्वँबं | त्वँघ्रं |
| ,, | २६ | देवता | ' देवता |
| ,, | २७ | याश्वं | °याश्वं |
| ,, | ,, | मृसंज | संमृज |
| ६२४ | ,, | र्मादीव्य: | °र्मा दीव्य: |
| ६२६ | १५ | ऐन्द्र्रै | ऐन्द्रैः |
| ,, | २६ | कल्पेषु | °कल्पेषु |
| ६२७ | १० | °ता: ' ' अ० | °ता: ' ( का० सं० १० । १ ) । ' अ० |
| ६३१ | १९ | २९ | १९ |
| ६३३ | ४ | हि । ' स | हि ' स |
| ,, | २९ | प्रक्त°; °त्यु | प्रक्त°; स. °त्यु |
| ६३४ | २७ | आत्मनः | आत्मनः. |
| ६३५ | ९ | रथादिम° | रथादि स° |
| ,, | १२ | रथादिमा° | रथादि सा° |
| ,, | २९ | प्र°, ठ. | प्र°; ठ. |
| ,, | ,, | आदिना | आदितो |
| ६३७ | २३ | नि:श्रेणी | नि.श्रेणी°. |
| ,, | २४ | ठ ड | ठ. ड. |
| ,, | २५ | सेन | सेन° |
| ६३८ | २६ | बृह | बृह° |
| ,, | २७ | स्थानें तिस्त्र | स्थानेंस्तिस्त्र |
| ६४० | २५ | न स° | न स°. |
| ६४१ | ८ | पायि | पायि– |
| ,, | १३ | गुणयागे | गुणयोगे |
| ६४३ | २८ | भेदेद्द° | भेदे द्द° |
| ६४४ | ३ | तत्रत | तत्रैत |

